THE

# KÂSHI SANSKRIT SERIES

(HARIDAS SANSKRIT GRANTHAMÂLA)

## NO. 109.

(Nyâya Section No. 16.)

॥ श्रीः ॥

# शब्दशक्तिप्रकाशिका

महामहोपाध्याय-

श्रीमज्जगदीशतर्कालङ्कारभट्टाचार्यविरचिता।



PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA,

The Chowkhamba Sanskrit Series Office,

BENARES.

1934

THE
KASHI SANSKRIT SERIES
( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )
NO. 109.
( Nyâya Section, No. 16. )

# THE
# S'ABDA S'AKTI PRAKĀS'IKĀ

By
M. M. S'RĪ JAGADĪS'A TARKĀLANKĀRA

WITH TWO COMMENTARIES

*The Kris'nakânti by Krishnakânta Vidyâvâgis'a*
and
*The Prabodhini by Râmabhadra Siddhânta Vâgis'a*

Edited with foot-notes

*By*
PANDIT DHUNDHĪRÂJ S'ÂSTRI
Nyâyopâdhyâya Kâvyatirtha
Principal, Nityânanda Veda Vidyâlaya, Benares.

PUBLISHED & SOLD BY
JAI KRISHNADAS-HARIDAS GUPTA
*The Chowkhamba Sanskrit Series Office.*
*Benares City.*

1934.

हरिदाससंस्कृतग्रन्थमालासमाख्य—
काशीसंस्कृतसीरिज़पुस्तकमालायाः
१०९
न्यायविभागे (१६) षोडशं पुष्पम् ।

# शब्दशक्तिप्रकाशिका

महामहोपाध्याय—
श्रीमज्जगदीशतर्कालङ्कारभट्टाचार्यविरचिता ।
पण्डितधुरीणश्रीकृष्णकान्तविद्यावागीशविनिर्मितया कृष्णकान्तीटीकया
नवद्वीपीय नैयायिकश्रीमद्रामभद्रसिद्धान्तवागीशविरचितया
बहुव्रीहिसमासान्तया प्रबोधिन्याख्यव्याख्यया
न्यायोपाध्याय पण्डितढुण्ढिराजशास्त्रिणा कृतया
विषमस्थलटिप्पण्या च समलङ्कृता,
तेनैव संशोधिता च ।

प्रकाशकः—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।
१९९१

## शब्दशक्तिप्रकाशिकाया

# उपोद्घातः ।

अथेयं प्रकाश्यते सटिप्पणटीकाद्वयोपेता शब्दशक्तिप्रकाशिका । एतस्याः खलु निर्माताऽऽन्वीक्षिक्याभ्यन्तरविषयनिमग्नकर्कशप्रज्ञाप्रभावविरचितानेकन्यायदर्शननिबन्धो बङ्गदेशीयान्तिमवर्णाविहितपादपीठपूजस्तार्किककुलनिकरवैरवकलाकरोऽतिमेधावी तर्कालङ्कारबिरुदावलीसमलङ्कृतः श्रीमान् महामहोपाध्यायो जगदीशभट्टाचार्यः । (१)तत्त्वचिन्तामणिदीधितिप्रकाश (२)चिन्तामणिमयूख (३)न्यायादर्श (४)पदार्थतत्त्वनिर्णयादिटीकानिबन्धान् विरचयताऽमुना तार्किकप्रवरेण 'तर्कामृतम्' 'शब्दशक्तिप्रकाशिका' चेति मूलग्रन्थद्वयमपि निर्माय या तार्किकभुवने प्रख्यातिरधिगता सा नैव तिरोहिता नैयायिकानां वैयाकरणानां च विदुषाम् । यतोऽयं जगदीशसर्वस्वभूतो शब्दशक्तिप्रकाशिकाख्यो महानिबन्ध उभयेषामपि शब्दखण्डेऽद्भुतां व्युत्पत्तिमादधातुं क्षम इति तदध्येतृभिः स्वयमेवावधारयिष्यते ।

## विषयसमालोचना ।

तत्र च प्रारम्भ एव प्रथमे नामप्रकरणे जातिशक्तिवादिनां भट्टानां लक्षणया जातिविशिष्टव्यक्तिबोधं स्वीकुर्वतां मण्डनमिश्राणां प्राभाकराणां च मतानि निबन्धकारेणाऽगाधप्रौढपाण्डित्यप्रबोधकलेखशैल्या खण्डितानि । एवमेवात्रालङ्कारिकाभिमतव्यञ्जनावृत्तिखण्डनं, पङ्कजादियोगरूढनामविचारे मीमांसकवैयाकरणमतयोर्निरसनं चिन्तामणिकृन्मतेऽस्वरसप्रदर्शनं चातीवचमत्कारमावहति । यद्यपि भवानन्दसिद्धान्तवागीशजयरामपञ्चाननादिभिः समासवादे षट्कारकविवेचनादौ च समासनिरूपणं कारकविवेचनं च यथावद्विहितन्तथापि समासशक्त्यादिवैयाकरणमतखण्डनादिपुरस्सरमुदाहरणविवेचनपूर्वकं प्राचीनार्वाचीनमतप्रदर्शनं विदधता जगदीशतर्कालङ्कारेण सविस्तरमुभयनिरूपणे यत्सामर्थ्यं न्यायव्याकरणयोरगाधपाण्डित्यं च प्रदर्शितन्तदन्यत्र दुर्लभमिति ब्रूमः । समासकारकप्रकरणयोर्मध्ये सुब्विभक्तिप्रकरणं च व्याकरणानुशासनप्रदर्शनद्वारा छात्राणामुपकाराय संक्षेपतो यथाऽत्र निबद्धं न तथाऽन्यत्रेति तर्कयामः । जगदीशतर्कालङ्कारविरचितश्चतुर्थः कारकप्रकरणमहासागरस्तु सर्वान्वैयाकरणमहानिबन्धानप्यतिशेत इत्यत्र न कश्चित्सन्देहः । तत्र चोदाहरणनिकरविवेचनसहितम्प्रथममपादानादिभेदेन षड्विधकारकसुब्विभक्तिनिरूपणम्(१) उक्तताउक्ततानियामकप्रदर्शनपूर्वकमुक्तानुक्तकारकवर्णनम्(२) विशेषविधिवर्णनपुरस्सरं भर्तृहर्यादिप्राचीनसंवादेन कर्तृत्वकर्मत्वयोरनुक्तविधयाऽन्वयबोधोपयुक्तविभक्तिकथनम् (३) निष्ठादिविवरणम्(४) उपपदविभक्तिवर्णनम्(५) चोदाहरणनिकुरम्बविवेचनपूर्वकं म-

इताऽऽडम्बरेण, जगदीशभट्टाचार्येण विहितम् । एवमेवाख्यातप्रकरणे लडादिदशविधति-ङ्लक्षणानि मीमांसकवैयाकरणमतखण्डनपूर्वकमाख्यातार्थविवेचनम् रत्नकोषकारादि-मतविवेचनपूर्वकं विध्यर्थविचारश्च यया प्रौढविद्वत्तासूचकलेखशैल्या निबद्धः स नान्य-त्र कुत्रचिदुपलभ्यते एकत्र वैयाकरणादिमहानिबन्धेषु । उदाहरणविवेचनसहितस्सवि-भागो धात्वंशप्रत्यय(नामधातु)विचारश्चास्य प्रकरणस्यान्ते भागुरिप्रणीतानुशासन-कारिकोल्लेखपूर्वकं सम्यङ्निरूपितः ।

अन्ते चातिविस्तृततद्धितप्रकरणस्थापत्याधिकारीयाणां चातुरर्थिकानां शैषिकाणां च प्रत्ययानामुदाहरणवैशद्यनिबन्धनपूर्वकं सङ्ग्रहो विहितस्तद्धिताख्ये प्रकरणे । एक-श्चायं निबन्धस्सर्वेषां व्याकरणपदार्थानां व्युत्पत्तिमादधानस्सर्वथैभयत्र शास्त्रेऽनुराग-वद्भिर्विद्वद्भिरवश्यमध्येतुमर्ह इति जगदीशभट्टाचार्येण महता श्रमेण निबद्ध इत्यत्र नास्ति संशयः ।

## जगदीशतर्कालङ्कारजीवनवृत्तम् ।

सोऽयं जगदीशभट्टाचार्यः जगद्विख्यातस्य चैतन्यमहाप्रभोः श्वशुराणां सनातनमि-श्राणामात्मजस्य प्रपौत्रो मैथिलमिश्रवंशे यादवचन्द्रविद्यावागीशात्समजनि । यादवच-न्द्रविद्यावागीशस्य तु पञ्च पुत्रा अभूवंस्तेषु जगदीशस्तृतीयः। यदा जगदीशः पञ्चवर्षदे-शीय आसीत्तदैवास्य पिता स्वर्गमारूढो येनाग्रजषष्ठीदासस्यैव लालनपोषणादिप्रबन्धे स्थितस्य जगदीशस्यातिमात्रं दुर्ललितं दौर्वृत्यं च पराकाष्ठामारुरोह । एवं गच्छता कालेन कदाचिदष्टादशवर्षदेशीयोऽसौ पक्षिशावकानाहर्तुं दुरारूढं तालतरुं यावदारुह्य कुलाये हस्तं निवेशयति तावद्दैववशात्पक्षिशावकानत्तुं दुर्विषहेण तत्रस्थेन विषधरे-णैकेनात्युग्रहालाहलज्वालाजालकरालकालकवलेन कृष्णसर्पेण फणामातत्य दष्टुमुपक्रा-न्तम्, दृष्ट्वैव तमुत्पन्नप्रतीकारबुद्धिर्निर्भीको जगदीशो द्रागेव दृढमुष्ट्या सर्पग्रीवामा-क्रम्य क्रकचायमानायां तालदण्डधारायां निघृष्य छित्वा च सुदूरं चिक्षेपेति वदन्ति वङ्गदेशीयेतिवृत्तज्ञाः । एतदेवास्य भाविमङ्गलवर्धकं बभूव यतस्तत्र समासन्नेन केन-चिद यतिनोक्तसर्पमारणकृत्यान्निर्भीकत्वं प्रत्युत्पन्नमतिं चावलोक्य तरोरवारूढस्य जग-दीशस्य तथोपदिष्टम् यथोज्झितसकलदुर्वृत्तव्यवहारेण जगदीशेन तत्कालमारभ्य तस्मा-देव संन्यासिनोऽध्येतुं प्रारेभे । पञ्चाशद्वर्णलिपिमात्रसंस्तवोऽप्यसौ सततं केवलं विद्या-भ्यास एव तत्परोऽभूत् । किमधिकं रात्रावध्ययनान्तरायां निद्रां विद्रावयितुं कुटीर-स्तम्भे शिखानिबद्धरज्जुको यदैवायं निद्रयाभिभूतः शिखाविकर्षमपतत् तदैव विहाय निद्रां तारस्वरेण पठितपाठमावर्तयत् । निर्धनतया तैलं क्रेतुमनीशेनानेन शुष्कवंशप-त्राणां दिने पुञ्जीकृतानामेकैकेन प्रज्वालितोऽनलः पुस्तकवाचनप्रदीपार्थमकल्प्यत । इत्थं द्वित्रैरेव हायनैर्व्याकरणं काव्यं कोशं च समापयता दुर्वृत्तदशायां नवद्वीपवासि-स्थापितनिकर्षसूचकाऽपभ्रष्ट'जगाजगा' इति नामधारिणा जगदीशेनाचिरादेव विद्याव्य-

सभितयोत्कर्षसूचकं प्रेम्णा सादरसंभाषितं 'जगु जगु' इति नाम प्रतिपेदे । अथ न्याय-शास्त्रमध्येतुं स तदानीमसत्प्रतिपक्षस्य विद्वत्तिलकायमानस्य भवानन्दसिद्धान्तवागी-शस्य चतुष्पाठ्यां प्रविश्य न्यायशास्त्रमधीतवान् । यद्यपि छात्रबाहुल्यात् सर्वान्स्वय-मध्यापयितुमनर्हेण भवानन्देनाधस्तनपाठा विद्यार्थिनस्समुन्नतपाठैः शिष्यैरध्यापिता अभूवन्, येन जगदीशो द्रुतं नातिपरिचितोऽभूत्तथापि स्वकीयया तर्कशक्त्यैवाहोभिः कैश्चित्सम्यक् संस्तुतोऽभूज्जगदीशभट्टाचार्यो भवानदसिद्धान्तवागीशेन । कदाचिदन्त-र्वाटिकायामलिन्दे संध्योपासनायामासीनेन सिद्धान्तवागीशमहोदयेन मिथः शास्त्रार्थं प्रकुर्वतां छात्राणां मध्ये पूर्वपक्षवादिन एकमात्रस्य जगदीशस्योच्चैस्तरं स्वरमाकर्ण्य भार्यां प्रति पृष्टम्—'कस्यायं कलगम्भीरः कण्ठराव' इति । यः खलु वैदिकपोतकः पूर्वं नवद्वीपे 'जगा' इति अधुना च 'जगु' इत्याहूयते तस्यैवाऽयं स्वर इति भार्ययोत्तरिते आनन्दनिर्भरेण भवानन्देनोक्तम्—धन्योऽहं, यस्य ममान्तेवासी—

आदौ जगा जगुः पश्चात् जगाजगुरतः परम् ।
अधुना ज्ञानसम्पत्त्या जगदीशायते जगा ॥ इति ।

स न्नाल्पदिनेनैव पाठं समाप्य गुरोर्लब्धतर्कालङ्कारोपाधिकश्छात्रानध्यापयितुमारेभे । अध्यापनागुणगणाकृष्टेभ्यश्च भूरिशश्छात्रेभ्यः पाठयन् रघुनाथशिरोमणिकृतस्य दीधितिग्र-न्थस्यान्यैर्नैयायिकैर्निबद्धा अपि व्याख्या अपव्याख्या इत्याकलय्यान्तःपरिदूनमान-सस्तट्टीकां विरचयितुमारब्धवांस्तर्कालङ्कारमहोदयः । यतस्तेनैवोक्तं व्याख्यादौ—

प्राच्यैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना ।
दीधितियुतमणिरेष श्रीजगदीशकृतः स्फुरतु ॥ इति चातुर्वङ्गीयाः ।

यद्यप्यनेन भवानन्दसिद्धान्तवागीशचतुष्पाठ्यामधीतं किन्तु—

श्रीसार्वभौमस्य गुरोः पदाब्जं विद्यार्थिनां कल्पतरोः प्रणम्य ।
विनिर्मितः श्रीजगदीशशर्म्णा विविच्यतेतामाद्यमणेर्मयूखः ॥

इत्याद्युक्त्या सार्वभौमान्तेवासिनमेवात्मानं मन्यते स्म जगदीश इति च केषा-ञ्चिद्विदुषां मतम् ।

ग्रन्थविरचने प्रवृत्तोऽप्यसौ गार्हस्थ्यवृत्तेरसम्यक्तया निराकुलं न तन्निष्पादयितुमश-क्यदा तदाऽनन्यगत्या विद्याव्यसनेन चाभिभूयमानो शूद्राग्धनिकान् तान्त्रिकीं शिक्षां उपदिश्य तेभ्यः प्राप्तसमुचितधनो गार्हस्थ्यमनाकुलं साधयन्नपेतान्तरायो निरन्तरं ग्रन्थ-रचनातत्परः क्रमेण शिरोमणिकृतचिन्तामणिव्याख्यानस्य दीधितेरनुमित्यादिबाधान्त-प्रकरणानां जागदीशव्याख्यां टिप्पणीं चिन्तामणिमयूखादिकं च विरच्याद्भुतविचार-शक्त्या विद्वन्मण्डलं मोहयन् स्वसर्वस्वभूतां शब्दशक्तिप्रकाशिकामपि व्यरचयत् । अत एवाऽऽभाणिका—'जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिके'ति । तदीयसर्वनिब-न्धेषु शब्दसंक्षेपेऽपि यदर्थगांभीर्यं तन्नाव्यक्तं नव्यनैयायिकनाम् । ई. पञ्चत्रिंशाधि-कशोडषेऽब्दे शब्दशक्तिप्रकाशिकां निबद्धवान् स इत्यैतिह्यविदां निर्णयः ।

## ( टीकाकर्तृपरिचयः )

अद्ययावत् शब्दशक्तिप्रकाशिकायाः कृष्णकान्तविद्यावागीशकृता टीकैकैवोपलब्धा बभूव, यस्या विद्वद्वरेण काशीवास्तव्येन भूतपूर्वजयचन्द्रसिद्धान्तभूषणमहोदयेन ई. १९०७ वर्षे प्रकाशनं विहितम् । कृष्णकान्तविद्यावागीशः खलु रामनारायणतर्कपञ्चाननस्यान्तेवासी वैदिको ब्राह्मणः । अद्याप्येतद्वंशीया नवद्वीपगंगापरपारे पूर्वस्थल्यां निवसन्तीति श्रूयते । द्वात्रिंशदधिकसप्तदशशाकेऽब्दे शब्दशक्तिटीकां व्यरचयदसाविति तट्टीकाशेषभागस्थेन—

शाके रामाक्षिशैलक्षितिपरिगणिते ( १७३२ ) कर्कटे याति भानौ
विंशाहे विश्वनाथार्चितपदयुगलं श्यामलं मोक्षबीजम् ।
ध्यायन्नध्यापकानां निखिलपदपदार्थादिचिन्तापहन्त्रीं
तेने श्रीकृष्णकान्ताह्वय इह सुकृती टिप्पणीं गूढभावाम् ॥ (पृ० ४५१)

इति श्लोकेन बुध्यते । पण्डितप्रवरोऽयं शब्दशक्तिटीकायाः(१) शिरोमणिकृतपदार्थतत्त्वटीकाया (२)न्यायरत्नावल्या (३)जीमूतवाहनकृतदायभागटीकाया(४)श्च विरचयिता न्यायशास्त्रे स्मृतिशास्त्रे चासाधारणः पण्डितोऽभूत् इति कतिपयवंगीयविदुषां निर्णयः। न्यायसूत्राणां सौत्रसन्दीपन्याख्या व्याख्यैकाऽस्मत्सन्निधौ कृष्णकान्तकृतैव वर्तते,यत्र विलक्षणसूत्रार्थकरणेनासाधारणं पाण्डित्यं प्रकाशितं कर्त्रा । तदन्ते समुल्लिखितेन

शाके नभोवेदमुनीन्दु( १७४० )माने पक्षेऽवलक्षे शुचिसंज्ञमासे ।
टीकाकृता गौतमसूत्रसन्दी—पनी मया धीरहितेन काचित् ।।

इति पद्येनोभयोर्निबन्धयोस्समसमयत्वात्कृष्णकान्तविदुषा पञ्चमी न्यायसूत्राटीकापि विरचितेति निर्धार्यते । आशास्यते यदियं सौत्रसन्दीपन्यपि नैयायिकानामग्रेऽचिरादेव मुद्रयित्वोपस्थापयिष्यत इति ।

काव्येपि 'गोपाललीलामृतम्' 'चैतन्यचंद्रामृतं' 'कामिनीकौतुकं' चेति त्रीणि काव्यानि रचयताऽनेन तत्कालीनवंगीयबुधेषु पाण्डित्यप्रकर्षो लेभे इति तत्काव्यपठनेनैवाध्येतॄणां विदितं भविष्यति । एवं सत्यपि यत्र कुत्रचिद् व्याख्यास्थलविशेषेषु मान्द्यमवलोक्य भूतपूर्वैराधुनिकनव्यनैयायिकशिरोमणिभी राखालदासन्यायरत्नमहोदयैः कृष्णकान्तः 'हेपी'—अतिमन्दबुद्धिर्न टीकाकरणयोग्य इति प्रतिक्षिप्यते स्म, किन्तु तस्येदृशं छात्रोपकारकमायासं दृष्ट्वा नास्माभिस्तत्र किंचिदपि वक्तुं पार्यत इति महत्सु तूष्णींभाव एव श्रेयान् । पाण्डित्यविरुद्धमहंयुत्वमस्य बभूवेति वदन्तो जयचन्द्रसिद्धान्तभूषणा अपि स्वकृतभूमिकायां साधारणव्याकरणप्रयोगाशुद्धिं विदधतः कथं न व्रीडिता इति महदाश्चर्यम् ।

अपराप्यस्याः प्राचीना व्याख्या नवद्वीपीयरामभद्रसिद्धान्तवागीशकृताऽस्माभिर्महता श्रमेणाऽऽसादिता, यामादौ रामभद्रसार्वभौमकृतेति मत्वैतत्संस्करणप्रारंभे 'रा-

मभट्टसार्वभौमकृता रामभद्री टीका' इति प्रमादात् प्रथमं प्रतीकं मुद्रापितम्, अनन्तरं महामहोपाध्यायफणिभूषणतर्कवागीशमहोदयैर्गुरुकल्पैर्नैवमिति प्रबोधितोऽहं व्याख्यान्तिमभागस्थां 'रामभद्रसिद्धान्तवागीशकृता सुबोधिनीव्याख्या समाप्ते'ति पंक्तिमवलोक्य पश्चात्तापप्लुतोऽन्ते तथैव न्यवेशयम्। टीकाद्वययोः का पराचीना इति विप्रतिपत्तौ च रामभद्रकृतामतिसंक्षिप्तव्याख्यामवलम्ब्यैव सर्वत्र पल्लवितं श्रीकृष्णकान्तेन, 'केचित्' इत्यादिना च तस्यैव मतं प्रदर्श्य कुत्रचिन्निरस्तमित्यपि स्वयमवधारयिष्यन्त्यध्येतारः। एवं च सप्तदशशकशताब्द्यामासन् रामभद्रसिद्धान्तवागीशमहोदया इत्यत्र न कश्चिद्विवादः।

## कृतज्ञताप्रकाशनम्।

तदेवं टीकाद्वयसमलंकृतशब्दशक्तिप्रकाशिकायाः प्रथमेऽस्मिन् संस्करणे फणिभूषणतर्कवागीशमहोदयैः वैयाकरणप्रवरेणास्मन्मित्रवरेण काशीस्थराजकीयसंस्कृतपाठशालाध्यापकेन हारानचंद्रशास्त्रिणा च बहुमूल्यं समयं दत्वा विषमस्थलेषु व्याकरणानभिज्ञस्य मम ग्रंथसंयोजनादिना यत्साहाय्यं विदधे तदनया कृतज्ञतया सुचिरं निबद्धोऽस्मि तेषामहम्। अपि च न्यायाचार्य पं० हरिरामशुक्लमहोदयेन यद् रामभद्रीटीकायाः द्वितीयादर्शलिपिप्रदानेनोपकृतं, प्रदर्शितं च सौहार्दं यच्च भूतपूर्व पं० हरिहरशास्त्रिमहोदयानां कनिष्ठभ्रातृभिः उपेन्द्रकविराजमहोदयैः स्थलविशेषे रामभद्रीटीकायास्त्रुटितपाठपूरणार्थमादर्शपुस्तकप्रदर्शनेन, तेन चोभयोरपि कृतज्ञोऽहम्।

## उपसंहारः।

एवमेतत्प्रकाशकस्य चौखम्बा–बनारस–काशी–हरिदास–संस्कृतग्रन्थमालानां सम्पादकस्य विद्याविलासयंत्राध्यक्षश्रेष्ठिकुलावतंस–जयकृष्णदासगुप्त महोदयस्य साहाय्येन सम्पादिते काशीस्थराजकीयपरीक्षास्वाचार्यपरीक्षायां तीर्थाद्यन्यप्रसिद्धपरीक्षासु च संस्थापितस्योत्कटकोटिविद्वन्निकषायमाणस्याऽस्य शब्दशक्तिप्रकाशिकाख्यनिबन्धस्य मुद्रणे दुरूहतया मन्मतिमान्द्यात्प्रमादादिना यंत्रालयदोषाद्वा जाता अशुद्धीः शुद्धिपत्रेण स्वयं संशोध्याऽध्येष्यन्ति विद्वांसश्छात्राश्चेति सम्प्रार्थयन् कृतमेतद्विषयश्रमं सफलयन्तु अध्यापकाश्छात्राश्चेति भूयो भूयः परमात्मानं प्रार्थयते—

अगस्त्याश्रमः
नागपञ्चमी
१९९१

विदुषां विधेयः
ढुण्ढिराजशास्त्री।

सटीकशब्दशक्तिप्रकाशिकायाः

# विषयसूचीपत्रम् ।

## (१) नामप्रकरणे—

## (२) समासप्रकरणे—



## (३) सुब्विभक्तिप्रकरणे



## (४) कारकप्रकरणे

## (५) आख्यातप्रकरणे



## (६) तद्धितप्रकरणे—





॥ श्रीश्रीगणेशायनमः ॥

श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता

# शब्दशक्तिप्रकाशिका।

(१)तर्के तन्त्रेश्च विदुषा विदुषां तोषकारिका।
क्रियते जगदीशेन शब्दशक्तिप्रकाशिका ॥ १ ॥

---

## श्रीकृष्णकान्तविद्यावागीशकृता कृष्णकान्तटीका।

योगेश ! क गतं चिरं हिमगिरेः शृङ्गे कुटीरे प्रिये !
योगार्थं किमुतास्ति कोऽत्ररमणी तत्रेति सम्भाषणम् ।
श्रुत्वा हाससमन्वितं गिरिसुता-गौरीशयोर्मेनका
तत्रास्तीति वदन् सलज्जहृदयो मामपातु लम्बोदरः ॥ १ ॥
न्यायालङ्कारयुक्तं त्रिभुवनजनकं श्रीपतीशेन जुष्टं,
तुष्टं धीरेषु रुष्टं सततमविदुषां श्यामलं सामगीतम् ।
ख्यातं तातं नितान्तं सदयमसदृशं मादृशां साधुसंज्ञं,
श्रीयुक्तं चात्र कालीचरणमरचयं ग्रन्थमादौ प्रणम्य ॥ २ ॥

## श्रीमद्रामभद्रसार्वभौमविरचिता रामभद्रीटीका।

विश्वतात ! जगन्मातरेवं गौरीगिरीशयोः ।
मिथःसंभाषया स्मारं हेरम्बं समुपास्महे ॥ १ ॥
गुरुमिव गुरुमिह नत्वा तत्कृतशब्दशक्तिप्रकाशिकायाः ।
श्रीरामभद्रकृती कुरुते टीकां मुदे सुधियः ॥ २ ॥

---

(१) नत्वा गुरूंश्च पितरौ विदधामि यथामति।
छात्राणामुपकारार्थं टिप्पणीं कारिकासु च ॥

तर्केमिति। न्यायशास्त्रं कातन्त्रव्याकरणादिकं च जानता न्यायव्याकरणशास्त्रयोर्व्युत्पन्नेन जगदीशेन, विदुषामुक्तशास्त्रद्वये व्युत्पन्नानां पंडितानां शब्दखण्डे व्युत्पत्तिपटुताहेतुत्वात्संतोषजनिका, शब्दशक्तेर्बोधसामर्थ्यस्य प्रकाशकत्वात् शब्दशक्तिप्रकाशिका--तदाख्यग्रन्थो विरच्यते इति कारिकार्थः। आसां पठनाच्छिष्याणां विदुषां च शब्दखण्डे व्युत्पत्तिलाभः प्रयोजनं, शब्दशक्तिरूपमभिधेयं, शब्दशक्तिग्रन्थयोः प्रतिपाद्यप्रतिपादकभावरूपः सम्बन्धः, व्याकरणन्याययोः प्रविष्टश्छात्रश्चाधिकारीति अनुबन्धचतुष्टयप्रदर्शनं प्रेक्षावत्प्रवृत्त्यङ्गमनया कारिकया प्रदर्शितं जगदीशतर्कालङ्कारेण।

कृष्णकान्तीटीका ।

ब्रह्म-श्रीकृष्णकान्तात्मकछतयजन-प्रोल्लसत्पादपद्मा,
सानन्दानन्दमन्दस्मितमिलितवचोभाषणा ध्वस्तपापा ।
किञ्चित्क्रोधोत्थतापाहतरिपुकलितानिष्टचेष्टादिदोषा,
शिष्टा खर्वा विशिष्टा प्रभवतु जननी तारिणी मे नमस्या ॥ ३ ॥
न्यायार्थ-स्थितिसृष्टिसंहृतिविधेर्हेतुं स्वकृत्या युतान्,
धीरानुच्चपदं नयन्तमयुतान् दुर्बुद्धिकान् सूचताम् ।
वेदाख्यानसमुद्धृताखिलधरादित्यं महान्तं मुदा,
श्रीलश्रीजगदीशमत्र कमलाधीनं नमस्याम्यहम् ॥ ४ ॥

न्यायसंसारपाथोधिमग्नोपासकतारकम् ।
रामनारायणं वन्दे तर्कपञ्चाननं गुरुम् ॥ ५ ॥
धीरश्रीकृष्णकान्तेन विद्यावागीशसंज्ञिना ।
व्याख्यायते सतां तुष्ट्यै शब्दशक्तिप्रकाशिका ॥ ६ ॥
प्रणम्य भूयो विनयेन मान्यान् धीरान् समस्तानिति वेदयामि ।
अशेषमात्सर्यमिदं विहाय प्रदर्शनीयं सुविभाव्य दूष्यम् ॥ ७ ॥

मंगलाचरणपूर्विका निजकृतकारिकावलीर्व्याख्यातुं प्रेक्षावत्-प्रवृत्तये शिष्यशिक्षायै च प्रयोजनाभिधेयसम्बन्धप्रतिपादकं पद्यमादौ निबध्नाति तर्कमित्यादि । तर्को वितर्क आपत्तिरिति यावत्, तन्त्रं सिद्धान्तः, तथा च पूर्वपक्षं सिद्धान्तञ्च जानता इत्यर्थः । अथवा तर्कं तर्कशास्त्रं व्याकरणादिकातन्त्रं वा जानता इत्यर्थः । केचित्तु तर्कमित्यस्य तर्कसम्बन्धीत्यर्थः वृद्धेरनित्यत्वात्, तथाच तर्कशास्त्रसम्बन्धिनं सिद्धान्तं जानता इत्यर्थ इत्याहुः । तन्मन्दम्, तथा सति समुच्चायकचकारासंगतेः वृद्ध्यभावस्य महाजनप्रयोगानुसारित्वाच्च । इदमपि स्वकर्तव्यग्रन्थप्रामाण्यसूचकतया परम्परया ग्रन्थाध्ययने शिष्यप्रवृत्त्युपयोगि, अन्यथा ग्रन्थकर्तुर्वैदुष्यसन्देहे तद्ग्रन्थेऽपि अप्रामाण्यसंशयात्तदध्ययने शिष्याणां प्रवृत्तिरेव नोत्पद्यत इति भावः । ग्रन्थविशेषणमाह विदुषामिति । विदुषां मुमुक्षूणां तोषकारिका तत्त्वज्ञानप्रयोजिका । एतेन प्रयोजनमभिहितम् । यथाश्रुतन्तु न संगच्छते, तथा सति प्रयोजनानभिधाने ग्रन्थकर्तुर्न्यूनतापत्तेः । सन्तोषविशेषस्य प्रयोजनत्वसम्भवेऽपि प्रेक्षावत्प्रवृत्त्यनुद्देश्यत्वात्, "न तत् शास्त्रं, यस्य पाठे प्रेक्षावान् न प्रवर्तत" इति निन्दाश्रुतेः शिष्यप्रवृत्त्यनुपपत्तेश्च, सम्वादिप्रवृत्तौ इष्टसाधनत्वनिश्चयस्यैव हेतुत्वात् । शब्दशक्तिप्रकाशिकेति । शब्दस्य या शक्तिर्बोधसामर्थ्यं, तत्प्रकाशिकेत्यर्थः । तेनैतद्ग्रन्थस्य लक्षणादिप्रकाशकत्वेऽपि न क्षतिः ।

रामभद्रीटीका ।

**शब्दशक्तीति** । शब्दस्य शक्तिर्बोधसामर्थ्यं तत्प्रकाशिकेत्यर्थः । तेन ग्रन्थस्य

ग्रन्थारम्भे विघ्नविघाताय समुचितां शब्दमयीं देवतां ग्रन्थकृत् स्मरति स्म—

(१)अनुभवहेतुः सकले सद्यः समुपासिता मनुजे ।
साकांक्षाऽऽसन्ना च स्वार्थे योग्या सरस्वती देवी ॥२॥

कृष्णकान्तीटीका ।

एतेन शब्दशक्तेरभिधेयत्वं शब्दशक्तिग्रन्थयोः प्रतिपाद्यप्रतिपादकभावरूपसम्बन्धश्चाभिहितम् ॥ १ ॥

ग्रन्थारम्भ इति । वाक्यसमूहस्य आनुपूर्वीविशेषावच्छिन्नस्य वा ग्रन्थस्याद्यकृतिदशायामित्यर्थः । विघ्नविघातायेति । ग्रन्थसमाप्तिप्रतिबन्धकदुरदृष्टनाशायेत्यर्थः । एतेन विघ्नध्वंस एव मङ्गलस्य फलं, न तु समाप्तिरिति व्यञ्जितम् । न च समाप्तिरेव तत्फलमिति किं नोपेयते ? मङ्गलं विनापि नास्तिकादिग्रन्थसमाप्तिदर्शनात्, कृतमङ्गलाचरणस्यापि ग्रन्थस्य क्वचित् समाप्त्यदर्शनात् व्यभिचारात् समाप्तिं प्रति तस्य हेतुत्वासम्भव इति चेन्न, यत्र हि कृतेऽपि मङ्गले न समाप्तिस्तत्रागत्या विघ्नप्राचुर्यं कल्प्यते, यत्र च मङ्गलं विनापि समाप्तिस्तत्र जन्मान्तरीयमेव मङ्गलं कल्प्यत इति वाच्यम् । विघ्नध्वंसद्वारा मङ्गलस्य समाप्तिं प्रति हेतुत्वकल्पनामपेक्ष्य विजातीयविघ्नध्वंसं प्रत्येव तस्य हेतुत्वकल्पनाया लाघवादावश्यकत्वात् न्याय्यत्वाच्च । यत्र दुरदृष्टमेव नास्ति तत्र मङ्गलस्यादृष्टजनकस्यैव स्वीकारात् । भवन्मतेऽपि विघ्नध्वंसद्वारा तत्र तस्य हेतुत्वासम्भवाच्च । आशुविनाशिनो मङ्गलस्य समाप्तिं प्रति साक्षाद्धेतुत्वासम्भवेन विनिगमनाविरहस्यासम्भवाच्च । कृतमङ्गलस्य ग्रन्थस्य क्वचिदसमाप्तिश्च बुद्धिप्रतिभादिरूपकारणान्तरविरहादेव । नास्तिकादीनाञ्च समाप्तिप्रतिबन्धकीभूतदुरदृष्टमेव न कल्प्यत इति सर्वं सुस्थमधिकमन्यत्रानुसन्धेयम् । समुचितशब्दोपस्थितिं विना शब्दविवेचनैव न सम्भवतीति भावः ॥

रामभद्रीटीका ।

लक्षणादिप्रकाशकत्वेपि न क्षतिः ॥ १ ॥

ग्रन्थारम्भे ग्रन्थस्यारंभदशायाम् । वाक्यसमूहो ग्रन्थः, आनुपूर्वीविशेषो वा । विघ्नविघातायेति । समाप्तौ मंगलस्य व्यभिचारादिति भावः । समुचितामिति । शब्दविवेचने देवतान्तरमपेक्ष्य शब्दस्य प्रथमोपदिष्टत्वादभ्यर्हितत्वाच्चेति भावः । स्मरति स्मेति । सस्मारेत्यर्थः । स्मेनातीत इति अतीते लट्विधानात् ।

(१) अनुभवहेतुरिति । यथा सम्यगाराधिता वाङ्मयाधिष्ठात्री सरस्वती देवी उपासितुर्मनोरथप्रपूरणं कर्तुमभिलषन्ती तत्र समर्था च सती सन्निहिता भूत्वा सकलोपासकेभ्यो फलप्रदाने वैषम्यबुद्धिं परिहरन्ती सती प्रत्यक्षा जायते, तथा वाक्यरूपापि साऽऽकांक्षासत्तियोग्यताविशिष्टा गृहीता ज्ञाता सती शब्दखण्डे न्यायव्याकरणोभयमतेन व्युत्पत्तिद्वारा प्रवेशमिच्छति सर्वस्मिन् उपासके पाठके स्वयमेवानुभवं शाब्दबोधात्मकं जनयतीत्यर्थः । एवं चात्र देवतान्तरापेक्षया वाग्देव्या उत्कर्षप्रतिपादनाद्व्यतिरेकालंकारध्वनिर्बाध्यः ॥ २ ॥

इतरा तावद्देवता सम्यगुपासिताप्युपासके न साकांक्षा, साकांक्षापि वा नाऽऽसन्ना, आसन्नापि वा न स्वस्योपासितुरभिलषितार्थे योग्या, योग्यापि वा न समस्तोपासकेऽनुभवस्य जनिका, जनिकापि वा न सद्यः किन्तु कालक्रमेणैव, सरस्वती तु देवी सकलमनुज एव साकांक्षा आसन्ना

---

कृष्णकान्तीटीका ।

देवीपक्षे तु देवतान्तरापेक्षयाऽभ्यर्हितत्वादुत्कर्षवत्त्वाच्च समुचितत्वं बोध्यमित्यग्रे व्यक्तीभविष्यति। पुरुषान्तरीयमङ्गलस्य ग्रन्थकर्तुर्विघ्नध्वंसाहेतुत्वादिति। केचित्तु ग्रन्थकृदित्यनेनाभ्रान्तत्वं सूचितमित्याहुः। तन्न । तर्कं तन्त्रञ्च विदुषा इत्यनेनैव तल्लाभात् । **स्मरतिस्मेति ।** सस्मारेत्यर्थः । स्मेनातीत इत्यनेनातीतकाले लटो विधानात् ।।

स्मरणप्रकारमाह—**अनुभवेत्यादिना।** सरस्वती वाक्यरूपा, वाक्यं देवीत्वकथनादेव देवतान्तरापेक्षया उत्कर्षो वाक्यस्य प्रतीयते, तदेव स्फुटीकरोति—**इतरा तावदिति ।** सम्यगिति संशब्दस्य विवरणं, सम्यगाराधितापीत्यर्थः । न साकांक्षा नार्द्रहृदया, नासन्ना न निकटवर्त्तिनी ।**स्वस्येति ।** स्वपदमात्मीयात्मोभयपरमिति भावः । **अभिलषितार्थ इति ।** इच्छाविषयीभूतमोक्षरूप इत्यर्थः । तथाचार्थपदमप्युभयतात्पर्यकमिति भावः । योग्या समर्था, उपासकाभिलषितार्थे इत्यनुषज्यते । **न समस्तोपासकेऽनुभवस्य जनिकेति ।** स्वीयसमस्तोपासकवृत्तिस्वविषयकदर्शनजनिकेत्यर्थः । सद्यःपदस्य व्यतिरेकार्थमाह—**जनिकापि वेति ।** अनुभवस्येत्यनुषज्यते । न सद्यस्तत्क्षणात्। एकविशेषनिषेधस्य विशेषान्तरविधायकत्वं व्युत्पत्तिसिद्धमतस्तदाह **किन्त्विति ।** मनुज इत्यस्य उपासके इत्यादिः । उपासिता गृहीता इत्यर्थः । आकांक्षादिवैशिष्ट्यञ्च

रामभद्रीटीका ।

स्मरणाकारमाहा**नुभवेत्यादिना ।** सरस्वती वाग्रूपा ।

देव्यादिपदसाहश्येन लब्धस्य देवतान्तरे व्यतिरेकालङ्कारस्य व्यंग्यत्वं स्फुटीकरोति **इतरा तावदिति ।** इतरा सरस्वतीभिन्ना, न साकांक्षा नार्द्रहृदया, नासन्ना न निकटवर्तिनी। स्वार्थे योग्या इत्यत्र स्वपदस्य स्वकीयस्यार्थे योग्या इत्यर्थमनुरुध्य स्वकीयत्वं विवृणोति **स्वस्योपासितुरिति ।** स्वस्योपासकस्येत्यर्थः । अर्थेन समं स्वकीयस्य सम्बन्धं स्फुटीकुर्वन्नाह **अभिलषितेति ।** योग्या समर्था, स्वोपासितुरभिलषितार्थे इत्यनुषज्यते। सकलपदस्य व्यतिरेकार्थमाह **न समस्तोपासके इति ।** अनुभवस्य—स्वगोचरदर्शनादिरूपस्य । सद्यःपदस्य व्यतिरेकार्थमाह **जनिकाऽपि वेति ।** अनुभवस्येत्यनुषज्यते, न सद्यो—न तत्क्षणात । एकविशेषनिषेधस्य विशेषान्तरविधायकत्वं व्युत्पत्तिसिद्धमतस्तदाह **किन्त्विति ।** मनुज इत्यस्य उपासक इत्यादिः । **साकां-**

योग्या चोपासिता सती सद्य एवानुभवं तनुते, अतो देवतान्तरमपेक्ष्योत्कर्षवतीयमवश्यमुपास्येत्यत्र तात्पर्य्यम् ॥ २ ॥

अथ शब्दो यदि स्वार्थानुभवे भवेद्धेतुः प्रात्यक्षिक एवौपना-

---

कृष्णकान्तीटीका ।

स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन, शाब्दबोधे स्वरूपसदाकांक्षाया अनुपयोगित्वात् । यद्यप्यव्यवधानेनोपस्थितिरूपासत्तेः स्वरूपसत्या एव हेतुत्वात् तज्ज्ञानं तत्र नोपयोगि, तथापि विषयतासम्बन्धेन तद्वैशिष्ट्यं बोध्यम् । अथवा आसन्ना वृत्तिमती, वृत्तिज्ञानस्यावश्यकत्वात् । आकांक्षासत्तियोग्यत्वैर्गृहीतेति–समुदितार्थ इत्यपि कश्चित् । ननु ग्रन्थकृता सरस्वती स्मर्यतां, तथापि तत्स्मरणात्मकस्योपासनस्य ग्रन्थादौ उपनिबन्धो व्यर्थ इत्यत आह अत इति । उपास्या शिष्टैरिति शेषः । अनुभवः स्मृत्यन्यज्ञानम्, ज्ञानसामान्यपरत्वे "न चासौ स्मृतिरित्युद्दीच्यवितर्कासङ्गतेः स्मृतिरूपत्वेऽपि पूर्वकारिकार्थाबाधात् ॥ २ ॥

पूर्वकारिकोपोद्घातसङ्गत्या कारिकान्तरमवतारयति–शब्दो यदीति । स्वार्थेत्यस्य वृत्त्या स्वोपस्थाप्यस्वार्थस्यानुभवे स्मृत्यन्यज्ञाने हेतुरित्यर्थः । साकांक्षादिशब्दश्रवणोत्तरं तदर्थसंसर्गाग्रहसहितं तदर्थोपस्थितिमात्रं न तु विशिष्टानुभवः । न च तदुत्तरमस्तित्वेन गां शृणोमीत्यनुव्यवसायानुपपत्तिरिति वाच्यम् । तत्र तस्यैव विवादास्पदत्वादित्याशयेन यदीत्युक्तम् । प्रात्यक्षिक एवौपनायिक इति । तत्रेत्यादिः । एवमग्रेऽपि । लौकिकप्रत्यक्षे शब्दस्यानुपयोगित्वात्, अतीन्द्रियस्थले तदसम्भवाच्च । औपनायिक इति । उपनयात्मकसन्निकर्षजन्य इत्यर्थः । शाब्दबोधात् पूर्वं पदज्ञानजन्यपदार्थोपस्थितेरावश्यकतया तस्या एवोपनयसन्निकर्षत्वेन तत्रोपनीतभानस्वीकारे बाधकाभावा-

रामभद्रीटीका ।

क्षेत्यादि । शाब्दबोधानुकूलैः साकांक्षत्वासन्नत्वयोग्यत्वैरुपासिता गृहीतेत्यर्थः । अत्रासन्नत्वं वृत्तिमत्त्वमेकवाक्यतापन्नत्वं वा । वृत्त्या पदार्थस्मृतिरूपासत्तेः स्वरूपसत्त्या एवान्वयानुभवं प्रति हेतुताया अग्रे वक्तव्यत्वात् इति ध्येयम् । अनुभवं–स्मृत्यन्यज्ञानम् । ननु ग्रन्थकृता सरस्वती स्मर्यतां, तथापि तत्स्मरणात्मकस्योपासनस्य ग्रन्थादावुपनिबन्धो व्यर्थ इत्यत आह अत इति । उपास्या शिष्टैरिति शेषः ॥ २ ॥

पूर्वकारिकोपोद्घातसङ्गत्या कारिकान्तरमवतारयति शब्दो यदीति । स्वार्थस्य स्ववृत्त्या स्वोपस्थाप्यस्य(१)। साकांक्षशब्दानां श्रवणोत्तरं तदुपस्थाप्यानामर्थानामससंसर्गाग्रहमात्रं न तु विशिष्टानुभव इत्याशयेनोक्तं यदीति । प्रात्यक्षिक एवेति । तदेत्यादिः । स्वार्थस्य लौकिकप्रत्यक्षे शब्दानामनुपयुक्तत्वादाह औपनायिक इति । ननु स्वार्थस्यौ-

---

(१) एतन्मतेनात्र "स्वार्थस्यानुभवे" इति प्र० पाठो बोध्यः ।

यिके, तत्र नाकांक्षाद्युपयोगः, तद्भिन्नेऽपि चेदानुमानिक एव, न च तत्र सद्यः साकांक्षत्वादिधीसामग्रीमात्रेण, व्याप्तिबुद्ध्यादेरप्यधिकस्यापेक्षणात्, इत्याशङ्कामपनेतुमन्वयबोधनामकमनुभवान्तरं दर्शयति—

**(१)साकांक्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः ।**

कृष्णकान्तीटीका ।

दिति भावः । नन्वेतावता शाब्दप्रमितिखण्डनेऽपि न पूर्वकारिकार्थायोग्यत्वं, पदार्थोपस्थितिद्वारा शब्दस्योपनीतप्रत्यक्षं प्रति हेतुत्वसत्त्वेऽपि उक्तकारिकार्थसङ्गतेरित्यत उक्तकारिकार्थायोग्यत्वं व्यञ्जयति तत्र नेति । तत्र उपनीतप्रत्यक्षे, नाकांक्षायोग्यतासत्तीनामुपयोगः, तथाचाकांक्षादिमच्छब्दस्य स्वार्थानुभवं प्रति हेतुत्वाभिधानमसङ्गतमिति भावः । ननु तस्य प्रत्यक्षत्वे गौरस्तितावानितिवत् अस्तित्वं गवीयमित्यपि प्रत्यक्षं स्यात्, उपनीतयोर्विशेषणविशेष्यभावस्य कामचारादित्यत आह—तद्भिन्नेऽपि चेदिति । ननु तत्रत्यबोधस्यानुमितित्वेऽपि न पूर्वकारिकार्थासङ्गतिः, तत्राकांक्षादिमत्पदज्ञानस्य हेतुज्ञानविधयैव हेतुत्वसम्भवादतः पूर्वकारिकार्थायोग्यत्वं व्यञ्जयति—न च तत्रेति । तत्रानुमितौ । सद्य इत्यस्य विवरणमाह—साकांक्षत्वादीति । मात्रार्थसत्त्वे हेतुमाह व्याप्तिबुद्धयादेरधिकस्येति । अनुमितौ व्याप्तिज्ञानादेर्हेतुत्वादिति भावः । अन्वयबोधनामकमिति । उपमितेरप्रामाणिकत्वात्, तथात्वेऽपि तत्र शब्दस्य हेतुत्वसम्भवादन्वयबोधासत्त्वे पूर्वोक्तकारिकार्थस्य बाधितत्वादिति भावः ।

साकांक्षशब्दैरिति । आकांक्षादिमत्पदप्रयोज्यतत्तदर्थसंसर्गावगाही यो बोधः स

रामभद्रीटीका ।

पनायिकप्रत्यक्षमादायैवानुभवहेतुत्वस्य शब्दे संभवात् नोक्तकारिकार्थस्यायोग्यत्वमत आह न च तत्रेति(२) । स्वार्थस्योपनीतप्रत्यक्षे स्वार्थोपस्थितिद्वारा शब्दस्य हेतुतायां मानाभावादन्यथासिद्धेश्चाह तद्भिन्नेऽपि चेदिति । प्रत्यक्षभिन्नेऽपि यदीत्यर्थः । स्वार्थस्यानुभवे भवेद्धेतुरित्यषनुज्यते । नच तत्रेति । तत्र स्वार्थस्यानुमाने सद्यो न हेतुरित्यर्थः । सद्य इत्यस्य विवरणं साकाङ्क्षत्वादिधीमात्रेणेति । व्याप्तिबुद्ध्यादेरिति । व्याप्त्यादिबुद्धेरनुमितिहेतुत्वादिति भावः । तथा च सरस्वती साकाङ्क्षत्वादिप्रकारेणोपासिता सद्योऽनुभवं तनुत इति प्रागुक्तकारिकार्थस्य बाध इति भावः । उपमित्यात्मकस्यानुभवान्तरस्य हेतुत्वं शब्दे बाधितमत उक्तमन्वयबोधनामकमिति ।

तदर्थान्वयगोचर इति । साकाङ्क्षशब्दोपस्थाप्यार्थस्यान्वयग्राहीत्यर्थः ।

---

(१) प्रत्यक्षानुमानभिन्नं शब्दाख्यं तृतीयं प्रमाणं साधयितुमन्वयबोधनामकमनुभवान्तरं प्रमेयमाह साकांक्षशब्दैरिति । आकांक्षासत्तियोग्यताविशिष्टपदप्रयोज्यः यः तत्तदर्थसंसर्गावगाही बोधोऽनुभवो जायते, स चायं बोधस्तादृशपदोपस्थाप्यस्यैवार्थस्यावगाहित्वान्न प्रत्यक्षानुमित्योरन्तर्भवितुमर्हतीति कारिकार्थः । (२) अत्र 'न च तत्राकांक्षे'त्यादिरेतन्मतेन प्र० पाठो बोध्यः ।

**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा ॥ ३ ॥**

अस्ति तावद्गौरस्ति गामानयेत्यादिसाकांक्षशब्देभ्यः स्वस्ववृत्त्या पदार्थानामुपस्थित्युत्तरं गवादावस्तित्वादेरन्वयावगाही विलक्षणो बोधो, यत्रान्वयव्यतिरेकाभ्यामाकांक्षादिमत्तया शब्दस्यावगमो हेतुः, न तु पदार्थानामुपस्थितिमात्रं विशिष्टमतेरानुभविकत्वादन्यथाऽनुमितेरप्यपलापापत्तेः ।

---

कृष्णकान्तीटीका ।

नियन्त्रितार्थकत्वात् तादृशपदोपस्थाप्यस्यैवार्थस्यावगाहित्वात् न प्रत्यक्षो नानुमितिरित्यर्थः । न प्रत्यक्षमिति पाठः प्रामादिकः प्रत्यक्षशब्दस्य वाच्यलिङ्गत्वात् । प्रत्यक्षं ज्ञानमित्यपि कश्चित् । यत्तु प्रत्यक्षशब्दस्य ज्ञानविशेषबोधने वाच्यलिङ्गत्वं ज्ञानमात्रबोधने नपुंसकत्वमिति मतम् । तन्न,

प्रत्यक्षा मितिरेवात्र, नानुमा न च शब्दजा ।
योग्यसम्बन्धवत्त्वाच्च, बलवत्त्वाच्च सर्वतः ॥

इति लीलावतीप्रयोगदर्शनात् ।

साकांक्षपदजन्यपदार्थोपस्थित्युत्तरं विशिष्टबोधं व्यवस्थापयन् प्रत्यक्षत्वादिविरुद्धं शाब्दत्वं व्यवस्थापयितुं भूमिकामारचयन्नाह—**अस्ति तावदिति** । अर्थवादस्याप्रामाण्यवादिगुरुमते गौरस्तीत्यादितो नान्वयबोधोऽतो गामित्यादिना आनयेत्युपग्रहः । विलक्षणः पदानुपस्थाप्यार्थानवगाहीत्यर्थः । ननु तदानीं तादृशबोधस्य प्रामाणिकत्वेऽपि यादृशबोधे शब्दस्य हेतुत्वं भवतोक्तं, तादृशबोधो न प्रामाणिक इत्यत आह—यत्रेति । तथाच तादृशबोध एव शब्दस्य हेतुत्वं मयोक्तमिति भावः । न त्विति । असंसर्गाग्रहसहितमित्यर्थः । विशिष्टमतेरानुभविकत्वात्—अस्तित्वेन गां जानामीत्यनुव्यवसायसाक्षिकत्वादित्यर्थः । अन्यथा—विशिष्टज्ञानानुभवस्यास्वीकारे । **अनुमितेरपीति**। तथाच पर्वतो वह्निमानित्यनुमितिस्थलेऽपि वह्निं जानामि पर्वतं जानामीत्येवा-

रामभद्रीटीका ।

सोयं—बोधः नियन्त्रितार्थस्यैवावगाहित्वात् न प्रत्यक्षं, ज्ञानमिति शेषः । न प्रत्यक्षो न चानुमेत्येव वा पाठः ।

अर्थवादस्याप्रमाणत्ववादिनो गुरूणां मते गौरस्तीत्यादितो नान्वयबोधः इत्यतः स्थलान्तरमाह **गामिति** । आदिना गामानयेदित्यादेः परिग्रहः । विलक्षणः—शाब्दत्वाख्यवैजात्यवान् । कार्यमात्रवृत्तिशब्दत्वजातेरतिप्रसक्तिवारणाय जन्यतावच्छेदकत्वमुपपादयन्नाह **यत्रेति** । विलक्षणबोध इत्यर्थः । उपस्थितिमात्रमित्यस्यागृहीतासंसर्गकमित्यादिः । **आनुभविकत्वादिति** । गामस्तित्वेन शृणोमि—इत्यनुव्यवसायस्य सत्त्वादिति भावः । ननूक्तानुभवो विवादग्रस्त इत्यत आह **अन्यथेति** । तत्रापि पर्वतं वह्निमत्त-

न चासौ स्मृतिः, समानाकारसंस्काराप्रभवत्वात्। नापि साक्षात्कारः, साकांक्षपदेनैव प्रकारान्तरेणाप्युपस्थितार्थस्योपनयमर्य्यादयावगाहितापत्तेः। न चेष्टापत्तिरनुभवविरोधात्, तदुत्तरं तथाविधानुव्यवसायापत्तेश्च। तत्तदर्थविषयकशाब्दमतेरनुव्यवसायं प्रति तत्तदर्थसाकांक्षपदजन्यतद्गोचरशाब्दत्वेन विषयविधया हेतुत्वकल्पनायामतिगौरवात्। इतरबाधलब्धस्य छिद्रेतरत्वादेरपदार्थस्यापि अवगाहित्वेन शाब्दमतेरनुव्यवसीयमानत्वात्,

---

कृष्णकान्तीटीका।

नुभवो न तु वह्निमत्तया पर्वतं जानामीत्याद्यनुभव इत्यस्यापि सुवचत्वादिति भावः।

ननु विशिष्टमतेरानुभविकत्वेऽपि तत्र शब्दत्वजातौ किं मानं? स्मृतित्वमेव तत्रोपगम्यते, नच शृणोमीत्यनुव्यवसायस्तत्र मानं, तस्य विवादग्रस्तत्वात्, अतः पारिशेष्यात् तत्र शाब्दत्वं साधयितुं स्मृतित्वादिसिद्धौ बाधकमभिधातुमाकांक्षते—नचेति। समानेति। तद्धर्मिकतद्वत्तास्मरणं प्रति तद्धर्मिकतद्वत्तासंस्कारस्य हेतुत्वात्, तस्य च तादृशबोधात् पूर्वं नियमतोऽसत्त्वादिति भावः।

नन्वौपनायिकप्रत्यक्षत्वमेव तत्रोपगम्यते, तथा सत्यपि न पूर्वोक्तकारिकार्थबाध इत्यत आह नापीति। साक्षात्कार इति। औपनायिक इत्यादिः। प्रकारान्तरेणानुमित्यादिना। अनुभवविरोधादिति। पदोपस्थाप्यार्थावगाहिताया एवानुभवसिद्धत्वादिति भावः। अनुभवविरोधे विप्रतिपन्नं प्रत्याह—तदुत्तरमिति। इदञ्च वस्तुगतिमनुरुध्योक्तम्, अन्यथा तत्पूर्वमनुव्यवसायसामग्रीविरहादेव सुतरां तदुत्तरमित्यस्य लाभात्तत्कथनवैयर्थ्यापत्तेः। लौकिकप्रत्यक्षविषययोः कार्यकारणभावसंकोचेन तदनुव्यवसायं वारयन्नाह—तत्तदर्थविषयकत्वेनेति। गौरवादिति। ननु फलमुखगौरवं न दोषायेत्यत आह—इतरबाधलभ्यस्येति। जलाहरणं न सछिद्रघटकरणकं इतीतर-

रामभद्रीटीका।

यानुमिनोमीत्यनुव्यवसायस्यापह्नोतुं शक्यत्वादिति भावः।

ननु साकांक्षशब्देभ्यस्तदर्थानां विशिष्टबुद्धिर्भवत्येव परन्तु सा स्मृतिरित्यतः स्वार्थानुभवहेतुत्वं शब्दस्य बाधितमित्याशंकते न चासाविति। असावन्वयबोधः। निराचष्टे समानेति। यद्धर्मिकयद्वत्तासंस्कारः पूर्वं नास्ति तद्धर्मिकतद्वत्तान्वयबोधस्य कारणबाधेन स्मृतित्वासम्भवादिति भावः। नापीति। असावित्यनुषज्यते। प्रकारान्तरेणानुमानादिना। ननु प्रकारान्तरेणोपस्थितस्यार्थस्य शाब्दधीविषयत्वेऽपि न तदर्थविषयकत्वेन शाब्दबोधस्यानुव्यवसायस्तदर्थविषयकत्वेन शाब्दबोधस्यानुव्यवसायं प्रति तदर्थपदजन्यतद्गोचरशाब्दत्वेन हेतुत्वान्तरस्य वाच्यत्वादत आह तत्तदिति। ननु प्रामाणिकत्वान्नोक्तगौरवं दूषणमतो व्यभिचारेण प्रामाणिकत्वं खण्डयति इतरबाधेति। जलाहरणं न छिद्रघटकरणकमित्ये-

गवादावस्तित्वादेरिवास्तित्वादावपि गवादेर्भानप्रसङ्गस्य तावताप्यनुद्धाराच्च । अत एवासौ नानुमितिरपि, पूर्वपरामृष्टस्य वस्तुमात्रस्यैवासति बाधके शाब्दधीविषयतापत्तेः । न च तत्तदर्थगोचरशाब्दधियं प्रति साकांक्षपदजन्या-

---

कृष्णकान्तीटीका ।

बाधलब्धस्येत्यर्थः, तथाच व्यभिचारात् नोक्तकार्यकारणभावो वक्तुं शक्यत इति भावः।

ननूक्तस्थले छिद्रेतरत्वज्ञानं विवादग्रस्तं, प्राचीनैः पदोपस्थाप्यस्यैव शाब्दधीविषयत्वोपगमात् , परन्तु इतरबाधवशात् घटत्वेन वस्तुगत्या छिद्रेतरघट एव भासते, अतो दूषणान्तरमाह—गवादाविति । तावतापीति । तद्विषयकत्वेन शाब्दानुव्यवसायं प्रति तदर्थकपदजन्यतद्गोचरशाब्दत्वेन हेतुत्वोपगमेऽपीत्यर्थः । उपनीतयोः प्रत्यक्षे विशेषणतया भानस्य बाधादिप्रतिबन्धकाभावमात्रनियम्यत्वादिति भावः । अतएव—नियन्त्रितविषयत्वादेव । असौ—उक्तलक्षणो बोधः । पूर्वेति । तादृशबोधात् पूर्वं स्वव्याप्यवत्पक्षकत्वेन निश्चयविषयस्य वस्तुसामान्यस्येत्यर्थः । बाधकसत्त्वे तत एव प्रतिबन्धकात्तादृशस्य वस्त्वन्तरस्य तत्र भानं न सम्भवतीत्यत आह—असतीति । बाधके प्रतिबन्धके परामर्शातिरिक्तकारणाभावे चेत्यर्थः । अतः पक्षताद्यसत्त्वदशायां तद्भानासम्भवेऽपि न क्षतिः । शाब्दधीति । यद्यपि वैशेषिकैस्तत्र शाब्दत्वानभ्युपगमात् तन्मतदूषणस्य तन्मतानुसारेणैव दातुमुचितत्वाच्छाब्देत्यसङ्गतम्;, तथापि वस्तुगतिमनुरुद्ध्यैव तत्कीर्त्तनात् । न चानुमितित्वव्याप्यमेव शाब्दत्वमिति शाब्देति यथाश्रुतमेव सङ्गच्छत इति वाच्यम् । तथा सति न चेत्यादिना पदार्थोपस्थितिकारणतासंकोचेन तद्वारणप्रयासस्यात्यन्तासङ्गतेः । न चेति । नैष दोष इति परेणान्वयः । तावतापि तादृशहेतुतास्वीकारेणापीत्यर्थः ।

रामभद्रीटीका ।

त्वमितरबाधदशायां घटेन जलमाहरेदित्यादिवाक्यजन्यस्य छिद्रान्यघटेन जलाहरणं कार्यमित्यन्वयबोधस्य छिद्रेतरत्वार्थकपदाजन्यत्वेऽपि छिद्रेतरत्वावगाहित्वेन तदनुव्यवसायोत्पत्त्या कथितहेतुतायां व्यभिचारादित्यर्थः । ननु प्राच्यैः पदोपस्थाप्यस्यैव शाब्दधीप्रकारत्वोपगमादुक्तक्रमेण छिद्रेतरत्वज्ञानं विवादग्रस्तम् , इतरबाधवशाद्वस्तुगत्या यः छिद्रेतरो घटस्तस्यैव घटत्वेन भानोपगमात् अत आह—गवादाविति । तावतापीति । तद्विषयकत्वेन शाब्दस्यानुव्यवसायं प्रति तदर्थकपदजन्यतद्गोचरशाब्दत्वेन हेतुत्वोपगमेऽपीत्यर्थः । उपनीतयोः प्रत्यक्षे विशेषणविशेष्यभावस्य कामचारादिति भावः । अतएव—नियन्त्रितविषयत्वादेव । असौ—गौरस्तीत्याद्यन्वयबोधः । पूर्वेति । पूर्वं स्वव्याप्यवत्पक्षत्वेन निश्चितस्येत्यर्थः । बाधकसत्त्वे तत एव परामृष्टस्य वस्त्वन्तरस्य तत्राभानसम्भवात् आह—असतीति । नचेति । नैष दोष इत्यग्रेऽन्वयः । घटः कर्मत्वमित्यादिनिराकाङ्क्षपदेनोपस्थाप्यस्यापि न शाब्दधीरत उक्तं साकाङ्क्षे-

यास्तत्तदर्थगोचरस्मृतेः कारणत्वकल्पनान्नैष दोषः, तावतापि पदार्थाना-मन्वयधीदशायामपदार्थानामपि स्वस्वसामग्रीबलेन प्रत्यक्षानुमित्योरन्यतर-प्रसङ्गस्य दुर्वारतापत्तेः । शाब्दधियः प्रत्यक्षत्वाभ्युपगमे प्रत्यक्षादिसामा-न्यं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वासम्भवात्, शाब्दान्यप्रत्यक्षत्व-वच्छिन्नं प्रति तस्यास्तथात्वमपेक्ष्य शाब्दधियः प्रत्यक्षादिभिन्नत्वकल्पनायामेव लाघवान्मानाभावाच्च ॥ ३ ॥

---

कृष्णकान्तीटीका ।

शाब्दत्वस्य प्रत्यक्षत्वादिव्याप्यत्वे पदोपस्थाप्यार्थावगाहिप्रत्यक्षादावेष्टापत्तिस-म्भवादपदार्थानामिति आपादकमाह **स्वस्वसामग्रीति** । प्रत्यक्षानुमितिसामग्रीत्यर्थः । उक्तमतयोः प्रत्येकमते प्रत्येकापत्तिरित्यावेदनायान्यतरेत्युक्तम् । ननु शाब्दबोधसाम-ग्र्याः प्रत्यक्षानुमितित्वावच्छिन्नप्रतिबन्धकत्वस्याभ्युपेयत्वान्न शाब्ददशायां प्रत्यक्षाप-त्तिरित्यत आह—**शाब्दधिय इति** । न च तादृशबोधे शाब्दत्वमेव न मन्यत इति वाच्यम् । तदुत्तरं शृणोमीत्यनुव्यवसायस्य सर्वसिद्धत्वात्, अन्यथाऽनुमित्यादेरप्यपला-पापत्तेः, तथाच तत्र शाब्दत्वजातिस्वीकारे तस्याश्च प्रत्यक्षत्वादिजातिविरुद्धत्वे जितं नैयायिकैरतः प्रत्यक्षत्वव्याप्यमेव शाब्दत्वमिति वक्तव्यमिति तादृशप्रतिबन्धकत्वक-ल्पनं न सम्भवतीति गूढाभिप्रायः ।

ननु शब्दाप्रयोज्यविषयताशालिप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वं वा-च्यमतो नोक्तदोष इत्याशङ्कते **शाब्दान्येति** । **लाघवादिति** । प्रतिबध्यतावच्छेद-कस्य गुरुशरीरत्वात्, पदार्थस्मृतेः स्वतन्त्रहेतुत्वकल्पनाच्चेति भावः । ननु प्रामाणि-कं गौरवं न दोषायेत्यत आह मानाभावादिति । न च तत्प्रकारकप्रत्यक्षहेतुरुपनय एव मानं, तस्य विशिष्टानुभवं प्रत्येव हेतुत्वात् ॥ ३ ॥

रामभद्रीटीका।

ति । प्रत्यक्षानुमित्योरित्यत्र प्रत्यक्षपदं पूर्वमतानुसारेण द्रष्टव्यम् । **स्वस्वसामग्रीति** । स्वोपनयस्वव्याप्यवत्ताज्ञानादिसत्त्वेनेत्यर्थः । ननु प्रत्यक्षत्वानुमितित्वाद्यवच्छिन्नं प्रति शाब्दसामग्रीत्वेन प्रतिबन्धकत्वस्य क्लृप्तत्वान्नोक्तदोष इत्यत आह—**शाब्दमते(१)रि-ति** । **असम्भवादिति** । शाब्दस्यापि प्रत्यक्षत्वेन स्वं प्रति स्वसामग्र्याः प्रतिबन्धक-त्वायोगादिति भावः । ननु शाब्दान्यप्रत्यक्षत्वाद्यवच्छिन्नं प्रत्येव शाब्दसामग्र्याः प्रतिबन्ध-कत्वं वाच्यमतो नोक्तदोष इत्यत आह—**शाब्दान्येति** । तस्याः—शाब्दसामग्र्याः । **प्रत्यक्षादिभिन्नत्वेति** । न चास्तित्वादिप्रकारकप्रत्यक्षं प्रत्यास्तित्वाद्युपनयत्वेन हेतु-त्वात् प्रत्यक्षसामग्र्येव शाब्दधियः प्रत्यक्षत्वे मानमिति वाच्यम् । तत्प्रकारकानुभवत्वाव-च्छिन्नं प्रत्येव तज्ज्ञानत्वेन हेतुत्वादिति भावः ॥ ३ ॥

---

(१) अत्र मूले 'शाब्दमते'रिति पाठान्तरं बोध्यम् ।

अथ लिङ्गजत्वेनान्वयबुद्धेरनुमितित्वसिद्धावनायत्या शाब्दान्यानुमितौ तत्सामग्र्याः प्रतिबन्धकत्वं वाच्यमतो लिङ्गजत्वमेव शाब्दधियः खण्डयति—

(१)योग्यतार्थगताकाङ्क्षा शब्दनिष्ठानुभाविका ।
प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः ॥ ४ ॥

गवादावस्तित्वादेरनुभवार्थं न तावदस्तित्वादेर्बाधविरहित्वरूपं योग्यतामात्रं लिङ्गं, बाधनिश्चयाभावेनान्यथासिद्धस्य योग्यतानिश्चयस्याऽनावश्य-

कृष्णकान्तीटीका ।

कारिकान्तरस्यावतरणिकामाह—अथेति । अनायत्येति । तथा चान्यथानुपपत्तेरेव प्रमाणत्वात् प्रामाणिकतया गौरवस्याप्यदोषत्वमिति भावः ।

अर्थगता इति । अनुभाविकेति परेणान्वयः । एते योग्यताकाङ्क्षे ।

गौरस्तितावान् अस्तित्वयोग्यत्ववत्त्वादित्यनुमाने यद्येकपदार्थेऽपरपदार्थवत्त्वरूपयोग्यत्वं हेतुः क्रियते तदा साध्याविशेषः, तथासति नियमतः सिद्धिसत्त्वेन विनाऽनुमित्सामनुमित्यसम्भव इत्यन्यविधां योग्यतां निरूप्यासिद्धिं सम्पादयति बाधविरहित्वरूपमिति । तथाचास्तित्वाभावाभाव एव तत्र हेतुरिति भावः। बाधनिश्चयाभावेनेति । बाधनिश्चयदशायां शाब्दबोधवारणाय योग्यतानिश्चयस्य हेतुत्वं स्वीक्रियते, निरुक्तयोग्यतानिश्चयस्य बाधज्ञानप्रतिबन्धकत्वात् बाधनिश्चय एव शाब्दसामग्रीकाले न सम्भवतीति तादृशयोग्यतानिश्चयहेतुत्ववादिनामाशयः । स च न सङ्गच्छते, विशिष्टबुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकत्वात्तदभावरूपकारणविरहादेव तदानीं शाब्दवारणसम्भवात् , योग्यतानिश्चयस्य हेतुताकल्पने प्रयोजनाभावादिति भावः ।

ननु इच्छाया उत्तेजकत्वानुरोधेन विशिष्टबुद्धिसामान्यं प्रति बाधनिश्चयः प्रतिबन्धकः परोक्षज्ञानस्यानाहार्यत्वनियमेन तत्रेच्छाया अनुत्तेजकत्वात् , तथाच नानाप्र-

रामभद्रीटीका ।

अर्थगतेति । अनुभाविकेत्यग्रेऽन्वयः । एते—योग्यताकाङ्क्षे ।

एकपदार्थेऽपरपदार्थवत्त्वं यदि योग्यता तदा साध्याविशेषापत्तिः, अतोऽन्यविधां योग्यतामाह—अस्तित्वादेर्बाधविरहित्वरूपमिति । ननु योग्यताऽनिश्चयस्यानावश्यकत्वेऽप्याचार्यमते ज्ञायमानलिङ्गस्यानुमितिकरणत्वात् योग्यतामात्रं लिङ्गमस्तीत्यत आह योग्य-

(१) ननु योग्यताकाङ्क्षयोः शाब्दबोधसामग्र्योर्लिङ्गत्वसम्भवेन शाब्दबुद्धेरनुमितित्वमेवास्तामित्याशङ्कामुत्तरयति योग्यतेति । अर्थगता बाधाभावरूपा योग्यता तथा शब्दनिष्ठाऽन्वयबोधानुकूलापूर्वोरूपाऽऽकाङ्क्षा च शाब्दबोधजनिका भवति, किन्तु प्रत्येकमेकैकशो मिलित्वा सम्भूय वैते योग्यताकाङ्क्षे स्वयमसिद्धत्वाद्धेतोर्न लिङ्गं भवितुमर्हत इति कारिकार्थः ।

कत्वात् । योग्यतामात्रलिङ्गकसंसर्गानुमानस्यान्वयबुद्धित्वे घटः कर्म्मत्व-मित्यादिस्थलीयस्यापि तस्य तथात्वापातात्, योग्यतायाः संशयस्थलेऽप्य-न्वयबुद्धेरानुभविकत्वाच्च । गवादावस्तित्वादेरन्वयबोधानुकूलानुपूर्वीपर्यव-सिता त्वाकङ्क्षा स्वयमसिद्धा कथमस्तित्वादेरन्वयबोधं साधयेत्? अत

कृष्णकान्तीटीका ।

तिबध्यप्रतिबन्धकभावकल्पनस्याऽऽवश्यकत्वे शाब्दं प्रति तस्य प्रतिबन्धकत्वमेव न क-ल्प्यत इति बाधनिश्चयाभावेन न तदन्यथासिद्धिरित्यत आह—योग्यतामात्रेति । केचित्तु योग्यतानिश्चयस्य शाब्दाहेतुत्वेऽपि ज्ञायमानलिङ्गस्य करणत्वस्वीकारे योग्यता-हेतुकानुमितिसम्भव इत्यतो दोषान्तरमाह—योग्यतामात्रेत्याहुः । तन्न । लिङ्गस्य करण-त्वपक्षेऽपि परामर्शस्य हेतुताया आवश्यकतया योग्यताया अनिश्चयस्थले परामर्शविरहेणैव योग्यतालिङ्गकानुमित्यसम्भवात् । तस्य—योग्यतालिङ्गकसंसर्गानुमानस्य । तथात्वापा-तादन्वयबुद्धित्वापातादित्यर्थः । यद्यपि अनुमितित्वस्य शाब्दत्वव्यापकत्वादुक्ता-पत्तिर्न सम्भवति, न हि व्यापकसत्त्वेन व्याप्यापत्तिसम्भवः व्यभिचारात्, तथापि व-स्तुगतिमनुरुध्य इदमुक्तमेवमग्रेऽपि ।

केचित्तु स्वरूपसद्व्यभिचारस्याकिञ्चित्करत्वादेकविधव्यभिचारग्रहसत्त्वेऽपि अन्य-विधव्याप्तिज्ञानसम्भवाच्च तेन हेतुना तदापत्तिसम्भव इत्याहुः । तन्न । तथासति अनुमानस्येत्यपहाय योग्यतालिङ्गकसंसर्गानुमानस्येत्युक्तेः सन्दर्भविरुद्धत्वापत्तेः, अ-स्माकन्तु अनुमितित्वस्य शाब्दत्वाव्याप्यत्वेऽपि योग्यतालिङ्गकसंसर्गानुमानस्य तद्-व्याप्यत्वात्सङ्गतिरिति ध्येयम् ।

ननु तद्विषयकानुमितौ निराकाङ्क्षतद्बोधकपदजन्यपदार्थोपस्थितेः स्वातन्त्र्येण प्र-तिबन्धकत्वकल्पनात् नैष दोष इत्यत आह—योग्यतायाः संशयस्थल इति । तथाच शाब्दबुद्धौ योग्यताज्ञानत्वेनैव हेतुत्वादनुमितौ तु हेतुमत्तानिश्चयस्यैव हेतुत्वाद्योग्यतासं-शयस्थलीयान्वयबुद्धौ अनुमितित्वकल्पनासम्भवादिति भावः ।

नन्वाकाङ्क्षैव तत्र हेतुरस्तु, तथा च गौरस्तितावान् तत्रतद्बोधकानुकूलाकाङ्क्षावत्त्वा-दिति प्रयोगः, अतस्तस्य पक्षासत्त्वमाह—गवादावस्तित्वादेरिति । आकाङ्क्षाया अ-न्यविधत्वे कदाचित् पक्षसत्त्वं सम्भावनाविषय इत्यत आनुपूर्वीपर्यवसिता त्विति ।

रामभद्रीटीका ।

तेति । तस्य—संसर्गानुमानस्य । तथात्वापातात्—अन्वयबुद्धित्वापातात् । ननु अन्वयबुद्धौ निराकाङ्क्षपदत्वेनापि स्वातन्त्र्येण विरोधित्वं वाच्यम्, अत आह योग्यताया इति । तथाच योग्यतायाः संशयसाधारणज्ञानसत्त्वेऽपि शाब्दबुद्धेरुदयात् तस्याश्चानुमितित्वे निश्चयत्वेनैव हेतुत्वं वाच्यं, योग्यताया न तथेत्यतोऽपि योग्यता नानुमापिकेति भावः । नन्वाकाङ्क्षा-हेतुनैव तत् साधनीयमत आह—गवादाविति । तथाच गौरस्तितावान् आकाङ्क्षावत्त्वा-

एवास्तित्वादेर्योग्यताविशिष्टमप्याकाङ्क्षावत्त्वं गवादौ न तदन्वयस्यानुमापकमप्रसिद्धेः ।

(१)अथ गौरस्तितावान् स्वधर्मिकास्तित्वान्वयबोधानुकूलाकाङ्क्षाश्रय-

---

कृष्णकान्तीटीका ।

तथाचाकांक्षा न हेतुः, स्वरूपासिद्धत्वादिति भावः । अत एव केवलयोर्योग्यताकाङ्क्षयोरहेतुत्वादेव । आकाङ्क्षावत्त्वमिति । इदमुपलक्षणम्, आकाङ्क्षाविशिष्टयोग्यत्वमपि बोध्यम्, असिद्धे हेतुतावच्छेदकविशिष्टस्य हेतोः पक्षेऽसत्त्वादित्यर्थः । विशेष्यस्य पक्षेऽसत्त्वात्तदुभयोः सामानाधिकरण्यासम्भवाच्चेति भावः । एतेन योग्यताविशिष्टाकाङ्क्षाहेतुत्वासम्भवेऽपि आकाङ्क्षाविशिष्टयोग्यताया हेतुत्वानिराकरणे ग्रन्थकृतोन्यूनत्वमित्यपि प्रत्युक्तम् ।

हेत्वन्तरवादिनव्यवैशिषकमतमाशङ्क्य निषेधति-अथेति । स्मारितत्वहेतोर्व्यभिचारात् पदान्तमुक्तम् । आकाङ्क्षाश्रयपदस्मारितत्वस्यापि हेतुत्वे तद्दोषतादवस्थ्यात् अनुकूलत्वमाकाङ्क्षाविशेषणम् । अत्रापि स्वधर्मिकत्वानिवेशे अतीतघटादौ व्यभिचारः, अतःस्वधर्मिकेति बोधविशेषणम् । यद्यपि तदुपादानेऽपि भ्रमात्मकबोधमादाय तद्दोषतादवस्थ्यम्, तथापि तद्दोषस्य स्वयमाशङ्कनीयत्वात् । वस्तुतः पदस्मारितत्वमेव हेतुरन्यत् परिचायकम्, अतएव पदस्मारितत्वाद्यभावग्रहदशायामिति दूषणग्रन्थोऽपि यथाश्रुत एव सङ्गच्छते, व्यभिचारस्य तु स्वयमाशङ्कनीयत्वात् । अत एव तादृशबोधानुकूलपदस्मारितत्वस्यैव हेतुत्वसम्भवादाकाङ्क्षाश्रयत्वमनतिप्रयो-

रामभद्रीटीका ।

त् इत्यनुमाने तत्तदानुपूर्वीपर्यवसितस्य आकाङ्क्षावत्त्वहेतोः पदार्थपक्षे स्वरूपासिद्धत्वान्नानुमापकत्वमिति भावः । अतएव-आकाङ्क्षावत्त्वहेतोः स्वरूपासिद्धत्वादेव । अप्रसिद्धेरिति । तथाच विशेष्यविशेषणोभयस्वरूपस्य विशिष्टस्य विशेष्याद्यसत्त्वेऽसत्त्वात् विशेषणविशेष्ययोः सामानाधिकरण्याभावाच्चेति भावः ।

असिद्धिं परिहरन्वैशेषिकः शङ्कते अथेति । पदस्मारितत्वहेतोर्व्यभिचारित्वादाह

---

(१) "अथेत्यादि, नव्यवैशेषिका" इत्यन्तमनुमाने एव शब्दस्यान्तर्भावमङ्गीकुर्वतां व्योमशिवाचार्यातिरिक्तानां नवीनानां भाष्यकारादीनां च सर्वेषां मतं प्रदर्शितम् । तेषामयमभिप्रायः । यथा हि गृहीतसम्बन्धस्य लिङ्गदर्शनानन्तरं व्याप्त्यनुस्मरणन्ताभ्यामतीन्द्रियेऽर्थेऽनुमानं (परामर्शज्ञानं) जायते, तथा शब्दश्रवणात्समयानुस्मरणे सति परामर्शज्ञानं तस्मात्परोक्षार्थप्रतिपत्तिरिति । तथाचायं गौरित्याद्यर्थपत्त्यकानुमानेनैवान्वयधियः सम्भवे किं शब्दाख्यप्रमाणेनातिरिक्तेनेति । एतच्च व्योमशिवाचार्यैर्वैशेषिकभाष्यं टीकयद्भिरपि खण्डितम् । तेषामयमाशयः । धूमवच्छब्दोऽर्थज्ञाने न स्वाभाविकं सम्बन्धमपेक्षते किन्तु पुरुषेच्छासम्पादितसमयापेक्ष एवार्थप्रतिपादकः, स्वाभाविकसम्बन्धे हि विनापि सङ्केतं म्लेच्छादिशब्दश्रवणादर्थप्रतिपत्तिः स्यात् । संकेतापेक्षस्य त्वर्थप्रतिपादकत्वे स एवास्त्वलं नित्यसम्बन्धेन, तथाच शब्दानां समयवशेनार्थप्रतिपादकत्वादुपपन्नमनुमानादर्थान्तरत्वमिति संक्षेपः ।

पदस्मारितत्वात् घटवत्, अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वाद्वा, चक्षुर्वदित्याद्यनुमानत एवाऽस्त्वन्वयधियोऽन्यथासिद्धिः। पदानामेकवाक्यतापन्नत्वरूपसमभिव्याहृतत्वनिश्चयं विना न्यायनयेऽप्यन्वयबोधस्यानुत्पत्त्या पूर्वं तस्याऽऽवश्यकत्वात्। न च विनष्टे भाविनि वा घटे चक्षुरादौ व्यभिचारः, स्वार्थानुमाने स्वरूपसतस्तस्याकिञ्चित्करत्वात्, एकविधव्यभिचारज्ञानसत्त्वेऽप्यन्यविधव्याप्तिनिश्चयस्य सम्भवाच्च, समानाकारस्यैव व्यभिचारग्रहस्य व्याप्तिधीविरोधित्वात् इति नव्यवैशेषिकाः।

---

कृष्णकान्तटीका।

जनकमित्यपि प्रत्युक्तम्। तथा च यः स्वधर्मिकास्तित्वान्वयबोधानुकूलपदस्मारितः सोऽस्तितावान्, इतिसामान्यव्याप्तिमुक्त्वा विशेषव्याप्तिमप्याह—अस्तीति। एतद्विशेषव्याप्तौ दृष्टान्तसम्भवात् न सामान्यव्याप्त्यपेक्षया जघन्यत्वमिति भावः। अत्रापि गौःपदस्मारितत्वमेव हेतुरन्यत् परिचायकम्। तथा च गौरस्तितावान् अस्तिपदसमभिव्याहृतगौःपदस्मारितत्वात् चक्षुर्वदिति प्रयोगः। "दिङ्नेत्रघृणिभूजल" इतिकोषतश्चक्षुषोऽपि गोपदस्मारितत्वादिति भावः। अन्वयधियः—शाब्दबोधस्य। अन्यथासिद्धिरिति। इदञ्च प्रमितिखण्डनाभिप्रायेणोक्तम्। शाब्दत्वस्यानुमितित्वव्याप्यहेत्वन्वयधिय इत्यस्यानुमितित्वविरुद्धशाब्दत्ववतो ज्ञानस्य इत्यर्थो द्रष्टव्यः।

ननु यत्र समभिव्याहृतत्वज्ञानम् नास्ति, तत्रापि शाब्दबोधोत्पत्त्या तत्रानुमितित्वकल्पनासम्भवात् कुतः प्रमितिखण्डनम्, शाब्दत्वस्यानुमितित्वव्याप्यत्वम् वा इत्यत आह—पदानामिति। न च समभिव्याहृतान्तस्य परिचायकतया नैतद्दोषसम्भव इति वाच्यम्। समभिव्याहृतत्वस्य विनष्टत्वेऽपि नैतद्दोषः सम्भवतीत्यभिप्रायेणैतदुक्तिरिति भावः। अत एव एकवाक्यतापन्नत्वज्ञानहेतुत्वस्य सर्वसम्मतत्वाभावेऽपि न क्षतिः। वस्तुतः समभिव्याहृतत्वस्यैवानिवेशादिति ध्येयम्।

रामभद्रीटीका।

**स्वधर्मिकेत्यादि**। स्वपदस्य पक्षपरत्वे दृष्टान्तासिद्धिरत आह **अस्तिपदेति**। अत्रापि गौःपदस्मारितत्वं गौर्गच्छतीत्यादौ व्यभिचारीत्यतोऽस्तिपदेत्यादि। घटस्य गौःपदस्मारितत्वाभावात् दृष्टान्तान्तरमाह—**चक्षुर्वदिति**। "दिङ्नेत्रघृणिभूजले" इत्यादिकोषतस्तस्यापि गोपदस्मारितत्वादिति भावः। अन्वयधियः—शाब्दबुद्धेः। नन्वन्वयबोधस्यानुमितित्वेऽपि समभिव्याहृतत्वज्ञानं न कारणं, तथाच हेतुविशेषणासिद्धिरत आह **पदानामिति**। तस्य—समभिव्याहृतत्वनिश्चयस्य। अस्तित्वं विद्यमानत्वमित्यभिप्रेत्य शङ्कते **नचेति**। तस्य—व्यभिचारस्य। माभूत् स्वार्थानुमाने व्यभिचारो दोषस्तदग्रहदशायामेव व्याप्तिनिश्चयात्, परार्थानुमाने तु स्यादत आह—**एकविधेति**। नन्वेकविधव्यभिचारज्ञानसत्त्वे व्याप्तिनिश्चयाभावात् कथमेवमत आह—**समानेत्यादि**।

(१)तन्न, गवादेः पदस्मारितत्वाद्यभावग्रहदशायामुत्पन्नस्य गौरस्ती-त्याद्यन्वयबोधस्योक्तहेतुनाप्यनिष्पत्तेः, पदजन्या हि पदार्थस्मृतिः स्वरूपसत्ये-वान्वयबुद्धावुपयुज्यते, न तु ज्ञाता, प्रमाणाभावात्, पदैरस्मारितस्यापि तत्-

---

कृष्णकान्तीटीका ।

उक्तव्याप्तिसिद्धये व्यभिचारमाशङ्क्य निषेधति—नचेति । पूर्वव्याप्तौ घटेऽपि व्य-चारसम्भवे तदपहाय चक्षुः पर्यन्तानुसरणे न्यूनता स्यादतः प्रथमव्याप्त्यभिप्रायेण घट इत्युक्तम् । उभयव्याप्त्यभिप्रायेण चक्षुरादाविति । आदिना स्वर्गादिपरिग्रहः । व्यभिचारोऽस्तित्वस्य वर्तमानकालसम्बन्धित्वरूपत्वादिति भावः । नञर्थे हेतुमाह—स्वार्थानुमान इति । परार्थानुमानस्थले व्यभिचारसत्त्वे तदुद्भावनेन मध्यस्थानुमिति-प्रतिरोधः स्यादतः स्वार्थेत्युक्तम्, ज्ञायमानस्य व्यभिचारस्य तत्रापि प्रतिरोधकत्वात् । स्वरूपसत इति । अज्ञातस्येत्यर्थः । तस्य व्यभिचारस्याकिञ्चित्करत्वात् व्याप्ति-ग्रहप्रतिरोधाक्षमत्वात् । ननु व्यभिचारस्य सत्त्वे कदाचित्तज्ज्ञानस्यापि सम्भवात् व्यभिचारज्ञानकालीनान्वयबुद्धौ अनुमितित्वकल्पनमसम्भवि, इत्यत आह—एकवि-धेति । सर्वत्रैवैकविधव्यभिचारग्रहकालेऽन्यविधव्यभिचारग्रहकल्पने मानाभावादिति भावः । नव्यवैशेषिका वदन्तीति शेषः ।

उक्तहेतुना पदस्मारितत्वादिहेतुनेत्यर्थः । अनिष्पत्तेरिति । तथाच प्रकृतहेतोः पक्षधर्मत्वाभावनिश्चयदशायां परामर्शानुत्पादेन तदानीमुत्पन्नस्यान्वयबोधस्यानुमि-तित्वं दुर्घटमिति भावः । ननु शाब्दबुद्धौ पदजन्यपदार्थोपस्थितिज्ञानमेव हेतुरिति पद-जन्यस्मृतिविषयत्वरूपस्य पदस्मारितत्वस्याज्ञानदशायां शाब्द एव न जायते इत्यत आह—पदजन्या हीति । स्वरूपसत्येवाज्ञायमानैव । ननु अन्वयव्यतिरेकाभ्यां पदा-र्थोपस्थितिज्ञानं हेतुर्भविष्यतीत्यत आह—प्रमाणाभावादिति । तथाच तादृशान्व-यव्यतिरेकयोरेवासिद्धिरिति भावः । तत्र साधकाभावमुक्त्वा बाधकमप्याह—पदै-

रामभद्रीटीका ।

उक्तहेतुना—अस्ति—पदसमभिव्याहृतगोःपदस्मारितत्वहेतुना । अनिष्पत्तेरिति । तथाच प्रकृतहेतोः पक्षवृत्तित्वाभावग्रहदशायां परामर्शानुत्पादेन तदानीमुत्पन्नस्यान्वय बोधस्यानुमितित्वं दुर्घटमिति भावः । ननु गवादेः पदस्मारितत्वाभावग्रहदशायां शाब्द-बुद्धिरसिद्धेत्यत आह—पदजन्येति । ननु ज्ञाता, अनुमितौ व्याप्यवत्तानिश्चयस्यैव हेतुत्वादिति भावः । नन्वेवं बाधकाभाव एव तत्र मानं भविष्यतीत्यत आह—पदैरिति ।

---

(१) तन्नेति । पदस्मारित्वाभावग्रहकालेपि अस्ति गौरिति शाब्दजन्यस्यास्तितावती गौरिति शाब्दबोधस्यानुभवसिद्धत्वादुक्तहेतुपरामर्शासंभवेन कुतोऽनुमानेऽन्तर्भाव इति भावः । पदजन्यपदार्थ-स्मृतिज्ञानस्य हेतुत्वे दोषमप्याह पदैरिति । तथाच परमार्थतः पदैरस्मारितस्यापि पदस्मृतोऽयमर्थ इति भ्रमज्ञानविषयस्याप्यर्थस्य शाब्दबोधः स्यादिति भावः ।

स्मारितत्वग्रह(१)दशायामन्वयधीप्रसङ्गाच्च । एतेन गौःपदमस्तित्ववद्गोगोचरज्ञानपूर्वकम् अस्तिपदसाकाङ्क्षगौःपदत्वात्, यन्नैवं तन्नैवं, यथाऽऽकाशमित्येवं पदपक्षकमप्यनुमानं कणभक्षपक्षानुसारिणाम्(२) अपास्तम् । गवादिपदानां ज्ञानपूर्वकत्वाद्यभावनिश्चयदशोत्पन्नस्य गवादिमुख्यधर्म्मिकास्तित्वाद्यन्वयबोधस्य सर्वजनानुभवसिद्धस्योक्तलिङ्गादप्यनिष्पत्तेः, वाक्यार्थस्यापूर्वत्वेन तद्गर्भसाध्यस्य प्रायशः प्रागनुपस्थित्याऽनुमानायोगाच्च ।

कृष्णकान्तीटीका ।

रिति । वशेषिकस्यानुमानान्तरमपि दूषयति–एतेनेति । वक्ष्यमाणदोषेणेत्यर्थः । अपास्तमित्यन्वयः । अन्वयदृष्टान्तासम्भवात् यन्नैवमिति । जन्यवस्तुनः साध्यत्वं कदाचित्सम्भावनाविषय इत्याकाशमिति । ज्ञानपूर्वकत्वाद्यभावनिश्चयेति । तस्य सामान्याभावावगाहित्वेन साध्यवत्त्वाज्ञानविरोधित्वं बोध्यम् ॥

ननु तदानीं शाब्द एव न जायत इत्यत आह—सर्वजनानुभवेति । क्वचित्सार्वजनीनेतिपाठः, स च समानार्थकः । ननु तस्य सर्वजनानुभवसिद्धत्वमेवासिद्धमित्यतो दोषान्तरमाह–वाक्यार्थस्येति । अपूर्वत्वेन पूर्वागृहीतत्वेन, तद्गर्भ ाध्यस्य–तद्घटितसाध्यस्य । अनुवादकस्थले वाक्यार्थस्यापूर्वत्वाभावात, प्रायश इत्युक्तम् । केचित्तु प्रायश इत्यस्यानुमानायोगादित्यत्रान्वयः, तथाचानुमितेः पूर्वं वाक्यार्थस्यानुपस्थित्याऽपि, प्रत्येकपदार्थोपस्थित्या इतरबाधस्थल इव विशेष्ये विशेषणमितिन्यायेनैवानुमितिसम्भवादित्याहुः ॥

यद्येकपदार्थेऽपरपदार्थवत्त्वं योग्यता, तदाऽपूर्ववाक्यार्थस्थले नैयायिकैरपि शाब्दबोधानभ्युपगमात् दोषान्तरमाह-वस्तुत इति । ननु योग्यतासंशयोऽपि शाब्दहेतुरिति

रामभद्रीटीका ।

तत्स्मृतत्वग्रहादिति । पदजन्यपदार्थस्मृतत्वग्रहादित्यर्थः । एतेनेति । वक्ष्यमाणदोषेणेत्यर्थः । परास्तमित्यन्वयः । अन्वये दृष्टान्ताभावादाह–यन्नैवमिति । ज्ञानपूर्वकेति । अस्तित्ववद्गोविषयकेत्यादिः । सार्वजनीनं–सर्ववादिसिद्धम् । उक्तलिङ्गात्–अस्तिपदसाकाङ्क्षगोपदत्वलिङ्गज्ञानात् । अनिष्पत्तेरिति । तथाच बाधनिश्चयादनुमित्यसिद्धिरिति भावः । ननु तादृशज्ञानपूर्वकत्वाद्यभावनिश्चयदशायां गोविशेष्यकास्तित्वप्रकारकान्वयबोधस्य सार्वजनीनत्वमेवासिद्धमत आह—वाक्यार्थेति । प्रागनुपस्थित्या–प्रकृतानुमितेः पूर्वमनुपस्थित्या । वाक्यार्थस्यानुपस्थितावपि प्रत्येकपदार्थोपस्थित्या इतरबाधस्थलवत् विशेष्ये विशेषणमितिन्यायेनैवानुमितिसम्भवात् प्रायश इत्युक्तम् ।

ननु व्यतिरेकज्ञानादेव यत्रानुमितिर्भविता तत्र च न साध्यज्ञानाद्युपयोग इत्यत

(१) अत्र तत्स्मृतत्वग्रहादन्वय–इति पाठान्तरं रामभद्रस्याभिमतं बोध्यम् ।
(२) साध्यतावच्छेदकघटकविधया गवादावस्तित्वानुमाने पर्यवसानं कणादमतानुसारिणामित्यर्थः ।

(१)वस्तुतो वाक्यार्थबोधस्यानुमितित्वे सत्येव साकाङ्क्षपदत्वादिलिङ्गकत्वं कल्प्यं, तदेव त्वसिद्धं प्रमाणाभावात्, अस्तित्वेन गामनुमिनोमीत्यादेरनुव्यवसायस्य तत्रासत्त्वात्, प्रत्युत गौरस्तीतिवाक्यादस्तित्वेन गौः श्रुतो नत्वनुमित इत्यनुभवाच्च, "श्रोतव्यो मन्तव्य" इत्यादिप्रयोगदृष्ट्या शाब्दत्वस्यापि शृणोतेः शक्यतावच्छेदकत्वात् । न चासौ भ्रान्तिः, बाधकाभावात् । ( अन्यथा )न चेदेवमनुमितिमात्रस्य पदजन्यत्वं प्रक-

कृष्णकान्तीटीका ।

चेत्, योग्यतानिश्चय एव हेतुरिति यदि ब्रूते, तदा नैतद्दोषः सम्भवतीत्यभिप्रायेण वस्तुत इत्यादिना दोषान्तरदानम् । अनुमितित्वे सत्येवेति । अयमाशयः । अयं बोधः किञ्चिल्लिङ्गजन्योऽनुमितित्वादित्यनुमानाल्लिङ्गजन्यत्वं साधनीयम् । तथाच लाघवज्ञानादिवशात् पदस्मारितत्वादिलिङ्गजन्यत्वं सेत्स्यति, तच्च न सम्भवति अनुमितित्वहेतोः स्वरूपासिद्धत्वादिति । नन्वस्तित्वेन गामनुमिनोमीत्यनुव्यवसाय एव तत्र प्रमाणं भविष्यतीत्यत आह—अस्तित्वेनेति। तत्रासत्त्वात्तत्र सत्त्वस्यैवाप्रामाणिकत्वात् । साधकाभावमुक्त्वा बाधकमप्याह—अस्तित्वेन गौः श्रुतो नत्वनुमित इति ।

ननु मुख्यप्रयोगाभावात् शाब्दत्वस्य श्रुधातोः शक्यतानवच्छेदकत्वात्तादृशानुव्यवसाय एवासिद्ध इत्यत आह—श्रोतव्य इति । शाब्दविषयः कर्तव्य इति तदर्थः । असौ उक्तानुव्यवसायः, भ्रान्तिरिति शाब्दत्वांशे भ्रम इत्यर्थः । बाधकाभावात् प्रमात्वबाधकाभावादित्यर्थः । केचित्तु बाध एव बाधकः, स्वार्थे कप्रत्ययः, तथाच शाब्दत्वस्य तत्राबाधादित्यर्थः । भ्रमत्वस्य तदभावविशेष्यकत्वघटितत्वेन बाधनिश्चयत्वादिति भावः । एतेन साधकाभावसम्भवे तदपहाय बाधकाभावकथने ग्रन्थकृतो न्यूनत्वमित्यपि प्रत्युक्तमित्याहुः । ननूक्तानुव्यवसाय एव विवादग्रस्त इत्यत आहाऽन्यथेति । तादृशानुव्यवसायस्यापलाप इत्यर्थः । अनुमितिमात्रस्येति । वक्ष्यमाणानुमितेरपि वक्ष्यमाणानु-

रामभद्रीटीका ।

आह—वस्तुत इति । वस्तुतो वस्तुगत्या इत्यर्थः । निरुक्तानुव्यवसायासत्त्वमुक्त्वा विरुद्धानुव्यवसायमप्याह—प्रत्युतेति । तथाच विपरीतं उत स्मृतमिति (?) शेषः । ननु मुख्यप्रयोगाभावेन श्रुधातोः शाब्दत्वस्य शक्यतानवच्छेदकत्वात् उक्तानुव्यवसाय एवासिद्ध इत्यत आह—श्रोतव्य इति । असौ—गौरस्तीतिवाक्यात् अस्तित्वेन गौः श्रुतो न

(१) ज्ञानज्ञानस्यैव व्यवहारविषयसाधकत्वमभिप्रेत्याह वस्तुत इति । अयमभिप्रायः । पर्वते वह्निमनुमिनोतीतिवद्गौरस्तीतिवाक्यादस्तित्वेन श्रुतो गौरित्यनुव्यवसायसत्त्वाच्छब्दस्यापि अनुमानवत्प्रमाणमङ्गीकर्तव्यम्, अन्यथाऽनुमितिमात्रे परार्थानुमानवत्स्वार्थानुमानेऽपि पदजन्यत्वं प्रकल्प्य शाब्दबोधत्वमेव किं न स्यात् शब्दस्थले व्याप्त्यादिवदनुमानस्थले आकाङ्क्षादिकल्पनायुक्तेस्तौल्यात् इति ।

इत्यान्वयबोधत्वं किमिति न रोचयेः? अनुमिताविवान्वयमतावपि समानविषयकप्रत्यक्षसामग्र्यादेः प्रतिबन्धकतया तदभावजन्यत्वेनैकशेषस्य दुष्करत्वात्, पटादिपदैरर्थस्य पटादेः स्मरणे सति तदीयव्याप्तेरिव दहनाद्यर्थैस्तदर्थकवह्न्यादिपदस्य स्मरणोत्तरं तदीयाकाङ्क्षाद्यवगमस्य सुवचत्वात्, वाच्यतावद्वाचकत्वस्यापि सम्बन्धस्य स्मारकतायामविशिष्टत्वात् ।

---

कृष्णकान्तीटीका ।

मितिः वह्न्यादिपदजन्या वह्न्याद्यनुमितित्वात् इत्यनुमानेन पदजन्यत्वं प्रसाध्य तेनैव हेतुनान्वयबोधत्वं तव किं नेच्छाविषय इति समुदितार्थः। नन्वनुमितौ समानविषयकप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वात्तदभावजन्यत्वेन तत्र शाब्दान्यत्वं साधनीयमित्यत आह–अनुमिताविवेति। भिन्नविषये अनुमितिसामग्र्याः प्रतिबन्धकत्वात् समानेति। दुष्करत्वादिति। तथाच तदभावजन्यत्वेन शाब्देऽप्यनुमित्यन्यत्वसाधने बाधकाभावादिति भावः। केचित्तु तदभावजन्यत्वेन शाब्दान्यत्वसाधने व्यभिचारमाहानुमिताविवेति। तथाच शाब्दे व्यभिचार इत्याहुः। ननु पदज्ञानजन्यत्वेन शाब्दत्वसाधने निराकाङ्क्षवाक्यस्थलीयपदार्थोपस्थितिमूलकोपनीतभाने व्यभिचार इत्याकाङ्क्षादिमत्पदज्ञानजन्यत्वमेव हेतुः कार्यस्तथाच वह्न्याद्यनुमितौ पूर्वमाकाङ्क्षाज्ञानासम्भवात् तेन तत्र तत्साधनासम्भव इत्यतस्तत्रापि आकाङ्क्षाज्ञानं सम्पादयति–पटादिपदैरिति। अन्येतु ननु आकांक्षाज्ञानस्य शाब्दे हेतुत्वादाकांक्षाज्ञानानुत्तरत्वेन तत्र शाब्दान्यत्वं साधनीयमित्यतस्तत्राप्याकांक्षाज्ञानं सम्पादयति पटादिपदैरित्याहुः। पटादेः स्मरणे सतीति। न चानुपूर्वीरूपाकांक्षाज्ञानं पदज्ञानकाल एव सम्भवतीति वाच्यम्। पदज्ञानस्य पदार्थोपस्थितिद्वारैव शाब्दं प्रति हेतुतया शाब्दाव्यवहितपूर्वं तज्ज्ञानस्य नियमतोऽसत्त्वेनाकांक्षाज्ञानस्य स्वातन्त्र्येण हेतुत्वादेकपदस्मारितधर्मिकापरपदस्मारितसंसर्गबोधेच्छारूपाकांक्षायाश्च पदज्ञानकालेऽसम्भवाच्च । नन्वर्थज्ञानात् पदस्मरणमसम्भवीत्यत

रामभद्रीटीका ।

त्वनुमित इत्यनुभवः, भ्रान्तिर्भ्रमः। न रोचयेरिति। तत्रापि वह्न्याद्यनुमितिर्वह्न्यादिपदज्ञानजन्याऽनुमितित्वादित्यनुमानानन्तरं पदज्ञानजन्यत्वहेतुनाऽनुमितेः शाब्दत्वानुमानसम्भवात् इत्याशयः। ननु प्रत्यक्षसामग्र्यभावजन्यत्वेनैवानुमितेः शाब्दान्यत्वं साधनीयमत आह—अनुमिताविवेति । भिन्नविषयेऽनुमितिसामग्र्याः बलवत्त्वात्प्रतिबन्धकत्वासंभवात समानेति । दुष्करत्वादिति । तथाच शाब्दस्य प्रत्यक्षसामग्र्यभावजन्यत्वहेतुनाऽनुमित्यन्यत्वसाधने बाधकाभावः । नन्वनुमितेः पदजन्यत्वं प्रकल्प्याऽन्वयबोधत्वस्वीकारो दुर्घटः शाब्दबुद्धावपि आकाङ्क्षाद्यवगमस्य हेतुत्वात्, अन्यथा निराकाङ्क्षवाक्यादपि शाब्दापत्तेरत आकाङ्क्षादिज्ञानं तत्र सम्पादयति पटादीत्यादिना ।

न च ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितिस्थले पूर्वं साध्यस्यानुपस्थित्या तेन साध्यवाचकपदस्य स्मरणासम्भव इति वाच्यम् । तत्र साध्यज्ञानविरहेऽपि उद्बोधकान्तरात् साध्यवाचकपदस्मरणसम्भवात् ।

किञ्च घटादन्य इत्यादिवाक्याद्घटप्रतियोगिताकान्यत्वादिप्रकारेण निरवच्छिन्नविशेष्यताको घटान्यस्य बोधः सर्वजनसिद्धः, स चाऽस्माकं तादृशानुपूर्वीकपदज्ञानत्वेन तथाविधान्वयबोधं प्रति हेतुत्वादुपपद्यते, परेषान्तु भेदो घटप्रतियोगिताकस्तत्साकाङ्क्षान्यपदस्मारितत्वादित्यादिरीत्या अनुमित्या न तन्निर्वाहः, पक्षविधयाऽन्यत्वस्य भानेऽप्यन्यत्वप्रकारेणान्यस्य तत्राभानात् । न च तत्रान्यपदमेव घटान्यत्वप्रकारेण घटान्यस्य लक्षकम्,

---

कृष्णकान्तीटीका ।

आह—वाच्यतावदिति । तथाच सम्बन्धप्रकारकज्ञानमात्रस्योद्बोधकतया, निरूपकतासम्बन्धेन पदधर्मिकशक्तिरूपसम्बन्धप्रकारकज्ञानस्येव विशेष्यतासम्बन्धेन तत्प्रकारकज्ञानस्यापि उद्बोधकताया अविशेषादिति भावः । सम्बन्धनिष्ठस्मारकत्वन्तु स्मृतिजनकतावच्छेदकप्रकारकताश्रयत्वं, तादृशजनकताव्याप्यविषयिताकत्वमित्यन्यदेतत् ।

प्रतिवन्देरनुत्तरत्वादाह—किञ्चेति । परेतु ननु ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितेः पूर्वं धूमव्यापकीभूताभावप्रतियोगिवह्न्याद्यभाववान् ह्रद इति परामर्शस्य साध्यज्ञानं विनैव सम्भवात्तादृशानुमितावन्वयबुद्धिकल्पनासम्भव इत्यत आह—किञ्चेतीत्याहुः । (१)तत्तुच्छं, तथापि वह्न्याद्यनुमितावन्वयबुद्धित्वापत्तेरवारणात्, नह्यापत्तेरसार्वत्रिकत्वेन; न वादिनिग्रह इति ध्येयम् ।

ननु तादृशबोधो नैयायिकैरप्युपपादयितुं नैव शक्यत इत्यत आह—स चेति । अस्माकं नैयायिकानां, परेषां वैशेषिकाणाम् । तत्साकाङ्क्षेति । घटादिसाकांक्षेत्यर्थः । तत्राऽभानादिति । निर्धर्मितावच्छेदककानुमितेरनभ्युपगमात्, अन्यपक्षकानुमितेरसम्भवादिति भावः । नन्वेतादृशबोधः स्मरणरूपोऽन्यपदमेव तादृशभेदाश्रयलक्षकमिति नोक्त दोष इत्यत आह—नचेति । ननु घटादिति लक्षणासूचकमेवेति न वैयर्थ्य-

रामभद्रीटीका ।

ननु ह्रदे धूमाभाव इत्याद्यप्रसिद्धसाध्यकानुमितिस्थले पूर्वं साध्यस्यानुपस्थित्या तेन साध्यवाचकपदस्य स्मरणासंभवोऽत आह किञ्चेति । अस्माकं—नैयायिकानाम् । तथाविधान्वयेति । घटप्रतियोगिताको भेद इत्यन्वयेत्यर्थः । अभानादविषयीकरणात्, विशेष्यत्वेनैवान्यत्वस्य तत्र भानादिति भावः । ननु घटादित्यस्यान्यपदस्य घटान्यता-

---

(१) तत्तुच्छमित्यादिना रामभद्रस्यैव मतं खण्डितं कृष्णकान्तवागीशेनेति प्रतिभाति ।

घटादित्यस्य व्यर्थतापत्तेः, अन्यथा घटोऽस्तीत्यादावपि घटादिपदस्यैवास्तित्वादिविशिष्टघटादिलक्षकत्वसम्भवात्, तत्राप्यस्तित्वघटयोरन्वयबोधापलापापत्तेरित्यास्तां विस्तरः ॥ ४ ॥

साकाङ्क्षत्वादिधीरिव वाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वरूपस्याप्तोक्तत्वस्यापि निश्चयः शाब्दधीहेतुरतो नैकपदार्थधर्मिकोऽपरपदार्थस्यान्वयबोधोऽनुमितिः, सिद्धिसत्त्वे विनानुमित्सां तदसम्भवात्, परन्त्वनुमितेरन्य एव, किन्त्वसौ गृहीतग्राहित्वान्न प्रमा, यज्जातीयविशिष्टज्ञानत्वावच्छेदेन

कृष्णकान्तीटीका।

मित्यत आहान्यथेति। लक्षणासूचकतया तस्याऽवैयर्थ्यमित्यर्थः ॥ ४ ॥

वैशेषिकमतं स्वयं संदूष्य प्रकारान्तरेण तन्मतं दूषयतां जरन्मीमांसकानां मतमुपन्यस्य निरस्यति-साकांक्षत्वादिधीरिवेति। आदिना योग्यतादिपरिग्रहः। वाक्यार्थस्यैकपदार्थविशिष्टापरपदार्थेत्यर्थः। नच भ्रमसाधारण्याय निरूप्यनिरूपकभावापन्नविषयतानिवेशस्यावश्यकत्वात् कुतस्तत्र वाक्यार्थप्रवेश इति वाच्यम्। गृहीतग्राहित्वेन शब्दस्याप्रमात्ववादिना वाक्यार्थांशे प्रमात्मकज्ञानस्यैव हेतुतास्वीकारात्। नन्वेतावताऽनुमितित्वे किं बाधकमित्यत आह-सिद्धिसत्त्व इति। विनानुमित्सामिति। सिषाधयिषाविरहविशिष्टसिद्धेरनुमितिप्रतिबन्धकत्वादिति भावः। तथाचानुमित्सासमवधानकालीनान्वयबुद्धावनुमितित्वसम्भवेऽपि तदसमवधानकालीनान्वयबुद्धौ तदसम्भवात्। प्रमितिखण्डनं शाब्दत्वेऽनुमितित्वव्याप्यत्वं वा न सम्भवतीति भावः। तर्हि जितं नैयायिकैरित्यत आह-किन्त्विति। असावन्वयबोधः।

ननु किं नाम गृहीतग्राहित्वं, तस्याप्रामाण्यसाधकत्वं वा कुत ? इत्याकांक्षा-

रामभद्रटीका।

त्पर्यग्राहकत्वात् न वैयर्थ्यमत आह—अन्यथेति। घटादित्यस्य तात्पर्यग्राहकत्वे इत्यर्थः। तत्रापि—घटोस्तीत्यादावपि। अपलापापत्तेरिति। तथाच पदार्थद्वययोरन्वयबोधस्यानुभवसिद्धस्यापलापप्रसङ्गादित्यर्थः ॥ ४ ॥

जरन्ममिांसकं निरासितुं तन्मतेनावतारणिकामाह-साकाङ्क्षत्वादिधीरित्यादिना। आदिना योग्यतादेः परिग्रहः। वाक्यार्थगोचर(१)ज्ञानेति। एकपदार्थविशिष्टापरपदार्थगोचरज्ञानेत्यर्थस्तथैवाग्रिमग्रन्थसंगतेः। ननु शाब्दबोधस्यानुमितित्वे किं बाधकम्, अत आह—सिद्धिसत्त्वे इति। सिषाधयिषाविरहविशिष्टसाध्यनिश्चयस्य प्रतिबन्धकतया विनानुमित्सां तत्राप्यन्वयबोधो न स्यादिति भावः। तर्हि जितं नैयायिकैरत आह किन्त्विति। भ्रमात्मकप्रत्यक्षस्यापि तज्जातीयान्यज्ञानत्वात् प्रमात्वापत्तिरतो विशिष्टे-

(१) एतन्मते मूले 'यथार्थ' पदं नास्तीति द्रष्टव्यम्।

समानाकारनिश्चयोत्तरत्वं तज्जातीयान्ययथार्थज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वात्, अत एव धारावाहिकप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्त्तित्वे-

---

कृष्णकान्तीटीका ।

यां गृहीतग्राहित्वमभिदधान एव तत्राप्रामाण्यव्यभिचाराशंकानिवर्तकतर्कोपयोगि आपाद्यव्यतिरेकनिश्चायकं तद्भिन्नयथार्थज्ञानत्वस्य प्रमात्वव्याप्यत्वमाह—यज्जातीयेत्यादि । तथाच यज्जातीययथार्थज्ञानत्वव्यापकं समानाकारनिश्चयोत्तरत्वं तज्जातीयत्वमेव गृहीतग्राहित्वमित्यर्थः । धारावाहिकप्रत्यक्षस्थले द्वितीयादिप्रत्यक्षाणां गृहीतग्राहित्वापत्तिरतो यज्ज्ञानत्वव्यापकत्वमुपेक्ष्य यज्जातीयेत्युक्तम् । तद्विशेष्यकतत्प्रकारकज्ञानत्व इत्यर्थः । गृहीतग्राहित्वस्य भ्रमसाधारण्ये प्रयोजनाभावः, याथार्थ्याभावादेव तत्र प्रमात्वापत्त्यसम्भवादित्याशयेनाह—विशिष्टेति । निर्विकल्पकादिरूपनिश्चयोत्तरत्वमादाय प्रत्यक्षस्यापि गृहीतग्राहित्वापत्तिवारणाय समानाकारेति । अथ समानाकारत्वं नान्यूनानतिरिक्तविषयकत्वं; घटवद्भूतलमिति निश्चयोत्तरं भूतलाद्युद्बुद्धसंस्काराधीनघटमात्रस्मृतेरगृहीतग्राहित्वप्रसंगात्, किन्तु स्वान्यूनविषयकत्वमिति निर्विकल्पकाद्युत्तरत्वमादायोक्तदोषतादवस्थ्यमिति चेन्न । स्वविषयताव्यापकसंसर्गावच्छिन्नविषयताकत्वस्य स्वप्रकारताव्यापकप्रकारताकत्वस्य वा स्वसमानाकारत्वरूपत्वात् ।

ननूक्तानुमानमप्रयोजकमित्यत आह—तज्जातीयान्येति । तथाच गृहीतग्राहित्वं यद्यप्रामाण्यव्यभिचारि स्यात्, तदा प्रमावृत्त्यन्यन्न स्यादिति तर्क एव व्यभिचारशंकानिवर्तक इति भावः । गृहीतग्राहिभिन्नमात्रस्य प्रमात्वव्यभिचारित्वात् यथार्थेति । केचित्तु नन्वप्रामाण्यापरिचये तदभावानुमानमसम्भवीत्यतः प्रामाण्यमेव निर्वक्ति—यज्जातीयेति । एतद्व्यावृत्तिस्तु पूर्ववत् । न चाग्रिमयथार्थपदेनैव भ्रमवारणाद्विशिष्टेति व्यर्थं, भ्रमभेदनिवेशे प्रयोजनाभावाद्गौरवाच्च । एवञ्च भ्रमस्य वारणाय यथार्थेति । तद्वति तत्प्रकारकेत्यर्थः । अन्यत् स्वयमूह्यमित्याहुः ॥

क्वचिदत्रापि विशिष्टेति पाठः, स चैतदर्थक एव । उत्तरत्वं कथञ्चिदनुगतं निर्वाच्यं, तेन सम्बन्धेन वा निरुक्तनिश्चय एव व्यापकत्वं निवेशनीयमन्यथा तस्य नानात्वेन तद्विशेष्यकतत्प्रकारकज्ञानत्वव्यभिचारितयोक्तलक्षणासम्भवः स्यात् । इदमत्रावधेयम्, तादृशज्ञानोत्तरत्वे तादृशज्ञानत्वावच्छिन्ने वा व्यापकत्वनिवेशेनैवोपपत्तौ निश्चयत्वनिवेशो व्यर्थ इति नच व्यापकत्वशरीरे पर्याप्तिनिवेशस्यावश्यकतया तस्याश्च भिन्नभिन्नत्वेनाखण्डाभावघटकतया सार्थक्यमिति वाच्यम् । तथाप्यनतिप्रयोजनकत्वस्यावारणादिति । सामानाधि-

रामभद्रीटीका ।

ति । तद्वति तदवगाहीति तदर्थः । ननु यज्जातीयज्ञानस्य समानाकारनिश्चयोत्तरत्वं त-

ऽपि न तासां प्रमात्वहानिः, हानिस्तु समानाकारानुभवसमुत्थानां स्मृतीनामिति जरन्मीमांसकानां समाधानं निरस्यति—

**(१)नाप्तोक्तता तु वाक्यार्थगर्भा ज्ञातोपयुज्यते।**
**वाक्यार्थानामपूर्वत्वात्संशयेऽप्यन्वयोदयात् ॥ ५ ॥**

यद्येकपदार्थवदपरपदार्थपर्यवसन्नस्य वाक्यार्थस्य ज्ञानवदुक्तत्वरूपाया आप्तोक्ततायाा निश्चयः शाब्दमतेः कारणं स्यात्, स्यादपि तेनैव रूपेण साध्यनिश्चयेन प्रतिबन्धादेकपदार्थपक्षिकाया अपरपदार्थानुमितेरनुत्पादो, न चैवं, शाब्दधियः पूर्वं वाक्यार्थस्योपस्थित्यनियमेन तद्गर्भस्याप्तोक्तत्वस्यापि मतेरनावश्यकत्वात्, अन्यथा वेदस्याप्यनुवादकता-

कृष्णकान्तीटीका।

करण्यमात्रमपहाय व्यापकत्वनिवेशप्रयोजनमाह—अत एवेति। व्यापकत्वनिवेशादेव। न तासां प्रमात्वहानिरिति। प्राथमिकप्रत्यक्ष एव व्यभिचारादिति भावः। यथाश्रुतप्रमात्वमुपेक्ष्यैतादृशप्रमात्वनिर्वचनस्य विशेषप्रयोजनमाह—हानिस्त्विति। प्रमात्वस्येत्यनुषज्यते। अनुभवसमुत्थानामनुभवप्रयोज्यानाम्।

ज्ञाता निश्चिता। अपूर्वत्वात् शाब्दप्रागज्ञातत्वादित्यर्थः।

नचैवमिति विच्छेदः। अत्र तत् कारणमेव नेत्यर्थः। उपस्थित्यनियमेनेति। कदाचिदुपस्थितिसम्भवेऽपि शाब्दे तन्निश्चयस्य व्यभिचाराद्धेतुत्वासम्भव इति भावः। ननु पूर्ववाक्यार्थविषयकशाब्द एव न प्रामाणिक इति कुतो व्यभिचार? इत्यत आहाऽन्यथेति। सर्वत्रैव शाब्दबोधात् प्राक् तन्मतेरावश्यकत्व इत्यर्थः। तथाच

रामभद्रीटीका।

जातीयान्यज्ञानस्यैव प्रमात्वमुचितं किमवच्छेदान्तभागेनेत्यत आह—अत एवेति। अवच्छेदेनेत्यस्य प्रवेशादेवेत्यर्थः। तासाम्—अयं घट इत्यादिप्रत्यक्षव्यक्तीनाम्। अनुभवसमुत्थानाम्—अनुभवप्रयोज्यानाम्।

ज्ञाता निश्चिता, अपूर्वत्वात्—शाब्दबोधात् पूर्वमप्रतीतत्वात्।

तेनैव—आप्तोक्तत्वनिश्चयात्मकेनैव, नचैवमिति छेदः। तद्गर्भस्य—वाक्यार्थगर्भस्य। अन्यथा—शाब्दधियः पूर्वं वाक्यार्थगर्भाप्तोक्तत्वस्याऽऽवश्यकत्वे। ननु लौकिकवाक्य-

(१) वाक्यार्थविषयकयथार्थज्ञानवदुक्तत्वरूपस्याप्तोक्तत्वनिश्चयस्यापि आकाङ्क्षादिज्ञानवच्छाब्दबोधे हेतुत्वान्नैकपदार्थेऽपरपदार्थप्रकारकबोधोऽनुमितिरुक्ताप्तोक्तत्वरूपीसद्धिज्ञानस्य प्रतिबन्धकस्य सत्त्वात्किन्तु तद्भिन्नोऽपि गृहीतग्राहित्वादसौ स्मृतिवन्न प्रमेति जरन्मीमांसकाशयं निरस्यन्नाह नाप्तोक्ततेति। सर्वत्र वाक्यार्थानां शाब्दबोधात्पूर्वमप्रतीतत्वाद्धेतोः वाक्यार्थघटितोक्तत्वरूपाऽप्तोक्तता निश्चिता सती शाब्दबोधे नोपयुज्यते, तथा उक्तविधाप्तोक्तत्वस्य संशयेऽपि शाब्दमतेरुत्पादादपि तस्याः शाब्दबोधे नोपयोग इति कारिकार्थः॥

पत्तेः, ( न हि लौकिके(न) तत्त्वेन ज्ञातवाक्येन जनित एवान्वयबोधे तस्य हेतुत्वं गौरवात्, ) (१)एकपदार्थेऽपरपदार्थस्य शाब्दे वाक्यार्थज्ञानवदुक्तत्वस्य संशयेऽपि शाब्दमतेरुत्पादाच्च । अत एवाऽऽप्तोक्तत्वस्य संशये व्यतिरेकनिश्चये वाऽन्वयबुद्धेरनुत्पादादवश्यं तन्निश्चयस्तत्र हेतुरित्यपि प्रत्युक्तम्, असिद्धेः ।

कृष्णकान्तीटीका ।

वेदस्याप्रामाण्यापत्तेरित्यर्थः । लौकिके लौकिकशब्दप्रयोज्यबोधे, आप्तोक्तत्वनिश्चयः कारणमिति शेषः । गौरवात् कार्यतावच्छेदकगौरवात् । ननु प्रामाणिकं गौरवं न दोषाय इत्यत आह—एकपदार्थे इति । नहि लौकिके–गौरवादिति पाठः क्वाचित्कः । यत्रैतत्पाठो नास्ति तत्र 'यदि चैकपदार्थेऽपरपदार्थवत्त्वं योग्यता, तदा न्यायमतेऽपि नापूर्ववाक्यार्थस्य शाब्दबोधः । एवमनुवादकत्वमपि न वेदस्य, श्रुतार्थविषयकशाब्दजनकत्वस्यैवानुवादकत्वरूपत्वात्, वेदे प्रामाण्यव्यवहारस्तु यथार्थज्ञानाजनकत्वेनेत्यत आह—एकेति' इत्यवतारणिका बोध्या । शाब्दमतेरुत्पादाच्चेति । तथाच व्यभिचाराञ्च तन्निश्चयस्य हेतुत्वसम्भव इति भावः । नचाप्तोक्तत्वज्ञानत्वेनैव हेतुत्वं वाच्यमतो न व्यभिचार इति वाच्यम् । अस्तित्ववत्तदभाववत्तगोगोचरज्ञानवदुक्तत्वज्ञानदशायां गौरस्तितावानितिशाब्दबोधोत्पत्त्या तथापि व्यभिचारात् । तदंशेऽपि निश्चयत्वं न निवेशनीयं, तथासत्यपि यत्र तन्निश्चयोत्तरं शाब्दबोधस्तत्रैव सिद्धिसत्त्वे अनुमितित्वकल्पनासम्भवात् । प्रमितिखण्डनं शाब्दत्वेऽनुमितित्वव्याप्यत्वं वा न सम्भवतीति जरन्मीमांसकमतं सुस्थमित्याशङ्कनन्तु गृहीतग्राहित्वेन शाब्दप्रामाण्यवादिनामसम्भवि, तथासति शाब्दस्य प्रमात्वापत्तेरिति ध्येयम् । अत एवेति । आप्तोक्तत्वसंशयोत्तरं शाब्दमतेरुत्पादादेवेत्यर्थः । तन्निश्चय आप्तोक्तत्वनिश्चयः । तत्रान्वयबोधे । हेतुरिति । यो यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबध्यः स तन्निश्चयजन्य इति व्याप्तेरिति भावः । असिद्धेस्तादृशप्रतिबध्यत्वासिद्ध्या स्वरूपासिद्धेरित्यर्थः ।

रामभद्रीटीका ।

जन्यशाब्दं प्रति निरुक्ताप्तोक्तत्वनिश्चयत्वेन कारणत्वं वाच्यमतोऽपि वेदो नानुवादक इत्यतो दोषान्तरमाह—एकपदार्थ इति । तथा चाऽऽप्तोक्तत्वनिश्चयस्य व्यभिचारेण हेतुत्वं नेति भावः । अत एवेति । तत्र–शाब्दे । हेतुरिति । यत्संशयव्यतिरेकनिश्चयौ यदुत्पत्तिप्रतिबन्धकौ तत्तन्निश्चयजन्यमिति व्याप्तेः प्रामाणिकत्वादिति भावः । असिद्धेरिति । आप्तोक्तत्वसंशयादपि शाब्दोत्पादेन व्यभिचारात्तन्निश्चयस्य हेतुत्वासिद्धेः ।

(१) अयं पाठो रामभद्रस्य नेष्ट इति कुण्डलनान्तर्गतः कृतः ।

(१)ननु माभूदाप्तोक्तत्वस्य निश्चयानुरोधेन सिद्धसाधनं तात्पर्यस्य तु स्यात्, तन्निश्चयस्याऽन्वयधीहेतुत्वात्, अन्यथा घटकर्मत्वादिपरत्वाभावस्य घटकर्मत्वाद्यन्यमात्रपरत्वस्य वा निश्चयेऽपि घटमित्यादिवाक्यात् कर्मत्वं घटीयमित्याद्यन्वयबोधापत्तेरिति चेत्। न(२), कर्मताधर्मिकघटाद्यन्वयधीपरत्वाभावनिश्चयदशायां प्रमेयत्वादिप्रकारेण घटकर्मत्वादिपरत्वस्य निश्चयेऽपि, घटीयं कर्मत्वमित्यन्वयमतेरनुत्पत्त्या कर्मताधर्मिकघटान्वयबोध-

---

कृष्णकान्तीटीका।

मीमांसकः शङ्कते नन्विति। सिद्धसाधनमिति शाब्दाप्रमात्वं वेति शेषः। तात्पर्यस्य त्विति। निश्चयानुरोधेन सिद्धसाधनमित्यनुषज्यते। ननु तात्पर्यनिश्चयानुरोधः कुत इत्यत आह—तन्निश्चयस्येति। अन्यथा—तत्र तस्याहेतुत्वे। घटकर्मत्वादिपरत्वाभावस्येति। घटमिति वाक्यधर्मिकेत्यादिः। तथा च घटमितिवाक्यं कर्मताधर्मिकघटप्रकारकान्वयबोधेच्छयानुच्चरितमिति निश्चयेऽपीत्यर्थः। ननु तद्विषयकान्वयबुद्धौ तत्परत्वज्ञानं हेतुरित्युक्तनिश्चयदशायां न शाब्दापत्तिः कारणाभावात्, घटविषयकर्मत्वविषयकबोधेच्छयोच्चरितत्वनिश्चयस्य तदानीं सत्त्वे इष्टापत्तिरित्यत आह—घटकर्मत्वाद्यन्यमात्रेति। कर्मत्वं घटीयान्यदिति बोधेच्छयोच्चरितत्वनिश्चयेऽपीत्यर्थः। तथाच तादृशनिश्चयस्याप्युक्तकारणतावच्छेदकाक्रान्तत्वादापत्तिसङ्गत इति भावः। तथाच तद्विशेष्यकतत्प्रकारकान्वयबुद्धौ तत्पदार्थविशिष्टतज्ज्ञानेच्छयोच्चरितत्वज्ञानं हेतुर्वाच्यमिति मीमांसकाभिप्रायः। प्रमेयत्वादिप्रकारेणेति। प्रमेयं घटीयं, कर्मत्वं प्रमेयीयमित्यादिबोधेच्छयोच्चरितत्वनिश्चयेपीत्यर्थः। कर्मताधर्मि-

रामभद्रीटीका।

शंकते नन्विति। सिद्धसाधनं गृहीतग्राहित्वेनाप्रमात्वम्। तात्पर्यस्य त्विति। निश्चयानुरोधेनेति प्राक्तनेनान्वयः। अन्यथा—तात्पर्यज्ञानस्याहेतुत्वे। घटकर्मत्वादीति। घटमिति वाक्यधर्मिकेत्यादिः। कर्मताधार्मिकघटान्वयबोधेच्छयाऽनुच्चरितत्वस्येत्यर्थः। घटकर्मत्वाद्यन्येति। घटीयकर्मत्वान्यबोधेच्छया उच्चरितत्वस्येत्यर्थः। तस्यां—शाब्दबुद्धौ।

---

(१) घटमिति वाक्यं कर्मताधर्मिकाधेयतासम्बन्धेन घटप्रकारकप्रतीतिजनकत्वेनाभिप्रेतमित्यादितात्पर्यज्ञानस्य तादृशतात्पर्याभावनिश्चयदशायां तद्वाक्यात्कर्मत्वं घटीयमिति शाब्दबोधवारणायाऽवश्यं हेतुत्वं वाच्यन्तथा च तत्रैव वाक्यार्थस्य प्रवेशाच्छब्दोऽनुवादक इत्यत्र मीमांसकशङ्काभिप्रायो बोध्यः।

(२) नेति। तात्पर्यज्ञानस्य शाब्दबोधे हेतुत्वस्वीकारेऽपि तत्रैकपदार्थविशिष्टापरपदार्थवत्त्वरूपवाक्यार्थस्य न निवेशः किन्तु निरूप्यनिरूपकभावापन्नविषयताया एवेति नैयायिकसमाधानार्थः।

परत्वप्रकारकनिश्चयत्वेनैव तात्पर्य्यधियस्तस्यां कारणत्वेन वाक्यार्थस्य तत्रानिवेशात् ।

(१)वस्तुतः(स्तु) समानानुपूर्वीकस्यैव वाक्यान्तरस्य तस्यैव वा कालान्तरमन्तर्भाव्य घटीयकर्मत्वादिपरत्वनिश्चयसत्त्वेऽपि श्रूयमाणवाक्यव्यक्ताविदानीमन्तर्भावेण तत्परत्वस्यानिश्चयेऽभावानिश्चये वा, घटीयं कर्मत्वमित्याद्यन्वयमतेरनुत्पादाद्विशिष्यैव तत्तद्वाक्यव्यक्तिधर्मिकस्य घटकर्मत्वादि(२)-

कृष्णकान्तीटीका ।

केति । कर्मतात्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताशालिबोधप्रयोज्योच्चारणविषयत्वनिश्चयत्वेनैवेत्यर्थः । तत्रानिवेशादिति । तत्र तात्पर्यघटकत्वं सत्सस्यर्थः । तथाच तात्पर्यघटकतयैकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थज्ञानस्य कारणतावच्छेदकेऽनिवेशादित्यर्थः । निरूप्यनिरूपकभावापन्नविषयताया एव निवेशादिति भावः ।

ननु यत्र विषयविशेषे रूपान्तरेण तादृशज्ञानं न जायते, तत्र रूपनिवेशो व्यर्थं इति निरूप्यनिरूपकभावस्यापि तत्रानिवेशेन वाक्यार्थप्रवेशध्रौव्ये, तत्रैव सिद्धिसत्त्वेनानुमितित्वस्वीकारो दुर्घट इति प्रमितिखण्डनादिकं न सम्भवति, सम्भवति च शाब्दसामान्यस्याप्रमात्वमित्यत आह—वस्तुतस्त्विति । वाक्यान्तरस्य—अश्रूयमाणवाक्यस्य, घटीयकर्मत्वपरत्वनिश्चयेऽपि श्रूयमाणायां वाक्यव्यक्तौ तत्परत्वस्यानिश्चये, इत्येका योजना । ननु तद्वाक्यजन्यतदर्थविषयकशाब्दबोधे तद्वाक्यधर्मिकतत्परत्वज्ञानस्य हेतुत्वान्नैष दोष इत्यत आह—तस्यैव चेति । श्रूयमाणवाक्यस्येत्यर्थः । कालान्तरमन्तर्भाव्येति । कालान्तरीयघटमितिवाक्यं घटीयकर्मत्वपरमिति निश्चयेऽपीत्यर्थः । इदानीमन्तर्भावेणेति । इदानीं घटमिति वाक्यं घटीयकर्मत्वपरमिति निश्चयेऽपीत्यर्थः । विशिष्यैव तत्तत्कालमन्तर्भाव्यैव ।

रामभद्रीटीका ।

वाक्यार्थस्य—कर्मत्वमाधेयतासम्बन्धेन घटवत् इत्याकारकस्य । तत्र—तात्पर्ये ।

ननु घटमिति वाक्यं कर्मताधर्मिकाधेयतासम्बन्धेन घटप्रकारकप्रतीतिजनकत्वेनाभिप्रेतमित्यादितात्पर्यज्ञानस्य हेतुत्वं वाच्यम् , अन्यथा तादृशतात्पर्याभावनिश्चयदशायामपि कर्मत्वमाधेयतया घटीयमित्यादिशाब्दधीप्रसंगात्तथाच तत्र वाक्यार्थस्य निवेशावश्यकतया शाब्दोऽनुवादकः स्यादत आह—वस्तुत इति । वाक्यान्तरस्याश्रूयमाणस्य । ननु तत्तद्वाक्यव्यक्तिधर्मिकतत्परत्वनिश्चयस्य हेतुत्वं वाच्यमत आह तस्यैवेति । लाघवादाह

(१) तात्पर्यग्राहकप्रकरणादिनैवार्थविशेषबोधकत्वसम्भवान्न तात्पर्यज्ञानस्य हेतुत्वं सर्वत्र शाब्दबोधे नैयायिकैरंगीक्रियते इत्याशयेनाह वस्तुत इति । (२) कर्मतादीति पाठः रामभद्रस्येष्टः ।

परत्वनिश्चयस्य तत्तदन्वयबोधहेतुत्वमुपेयम्, तथाच तत्तद्धेतुभूतानां प्रकर. णज्ञानाभिधानामेव विज्ञानव्यक्तीनां तथात्वमुचितम् अवश्यक्लृप्तपूर्ववर्त्ति.

कृष्णकान्तीटीका।

उपेयमिति। तथाच तत्कालीनतद्वाक्यजन्यतत्तदर्थविषयकशाब्दबुद्धौ तत्कालीनतद्वा. क्यधर्मिकतत्तदर्थपरत्वज्ञानं हेतुरिति भावः। एतेन घटमित्यादिवाक्यधर्मिकनिरुक्तता- त्पर्यनिश्चयत्वेन न तादृशान्वयबोधहेतुत्वं, कलसमित्यादिवाक्यजन्यतादृशबोधे व्यभि- चारात्। नापि तद्वाक्यजन्यतादृशान्वयबोधे तद्वाक्यधर्मिकनिरुक्ततात्पर्यनिश्चयत्वेन, कालान्तरमन्तर्भाव्य तथाविधनिश्चयेऽपि तादृशबोधापत्तेरित्यादिकं समाहितम्। तथाच विशिष्य कार्यकारणभावस्वीकारे च इत्यर्थः। तत्तद्धेतुभूतानां–तात्पर्यहेतुभूतानां, प्रकरणज्ञानाभिधानां–प्रकरणज्ञानरूपाणां, तथात्वं–तादृशान्वयबुद्धिहेतुत्वम्। तथाच- तत्प्रकरणज्ञानोत्तरतादृशशाब्दबुद्धौ तत्प्रकरणज्ञानत्वेन हेतुत्वमिति भावः। उचित- मिति। कार्यकारणभावानन्त्यस्योभयत्रैव तुल्यत्वादिति भावः। ननु विनिग- मनाविरहात्तज्ज्ञानस्यापि हेतुत्वं स्थास्यतीत्यत आहावश्येति। तथाचान- न्यथासिद्धत्वस्योभयत्रैव कल्प्यत्वेऽपि नियतपूर्ववर्तितायाः क्लृप्तत्वेन कल्पना- लाघवमेव विनिगमकमिति भावः। एवं तद्धेतोरेव तत्सिद्धौ किमन्तर्गडुनेति न्यायो.

रामभद्रीटीका।

अभावनिश्चय इति। घटकर्मतादिपरत्वनिश्चयस्येति। तदानीन्तनस्येति शेषः। अन्यथा व्यभिचारतादवस्थ्यादिति भावः। हेतुत्वमुपेयमिति। अत्र यद्यपि कर्मताधर्मिकघटप्रकारकशाब्दबुद्धौ घटमित्यादिवाक्यधर्मिकनिरुक्ततात्पर्यनिश्चयत्वेन न हेतुत्वं कलशमित्यादिवाक्यजन्ये तादृशबोधे व्यभिचारात्, न च घटमित्यादिवाक्याजन्य- तादृशान्वयबोधं प्रत्येव तादृशवाक्यधर्मिकनिरुक्ततात्पर्यनिश्चयत्वेन हेतुत्वम्, घटमित्या- कारकवाक्यान्तरं तादृशप्रतीतिपरम्, इदं तु घटमित्याकारकवाक्यं न तथेति ग्रहेऽपि घट- मित्यादिवाक्यात्तादृशधीप्रसङ्गात्, तथापि घटमित्यादितत्तद्वाक्यजन्यकर्मताधर्मिकघटा- न्वयबोधत्वावच्छिन्नं प्रति घटमित्याकारकतत्तद्वाक्यधर्मिकतादृशप्रतीतिपरत्वनिश्चयत्वेनैव तथात्वम्। नचैवं घटमित्यतः कर्मत्वे घटान्वयबोधदशायां घटपदलक्षणया पटस्यापि कर्मतायामन्वधीप्रसङ्गस्तद्वाक्यव्यक्तिजन्यघटान्वयबोधाप्रसिद्ध्या तादृशबोधं प्रति तद्वा- क्यव्यक्तिधर्मिकघटान्वयप्रतीतिपरतानिश्चयत्वेन हेतुत्वस्यासम्भवादिति वाच्यम्। कर्म- ताधर्मिकपटप्रकारकान्वयबोधस्य वाक्यान्तरजन्यस्यैव पारमार्थिकतया तादृशबोधे वाक्यान्तरधर्मिकपटान्वयप्रतीतिपरतानिश्चयस्य हेतुतया तदभावादेव तदानीं पटकर्मत्व- प्रतीत्यसम्भवात् इति दिक्। तद्धेतुभूतानां–तात्पर्यहेतुभूतानां, प्रकरणज्ञानाभिधानां– प्रकरणज्ञानात्मकानां, विज्ञानं–विलक्षणज्ञानम्। तात्पर्यज्ञानापेक्षया लाघवासम्भवादाह– अवश्येति। तद्धेतोरेव तदस्तु किं तेनेति न्यायादिति भावः। तदङ्गत्वेन–तात्पर्यो-

ताकत्वात् । अत एव सैन्धवमानय इत्यादावपि लवणपरत्वधीर्न लवणाद्यन्वयबुद्धौ हेतुः, किन्तु तदर्जकत्वेनाभिमतं भोजनादिप्रकरणस्य प्रतिसन्धानमिति न्यायसिद्धान्तः ।

एवञ्च–वाक्यार्थप्रतीतिजनकतयाभिप्रेतत्वलक्षणस्य तात्पर्यस्य ज्ञानमवश्यं शाब्दसामान्ये हेतुः, तस्य संशये व्यतिरेकानिश्चये च तदनुत्पा-

---

कृष्णकान्तीटीका ।

ऽपि तत्साधक इत्यपि बोध्यम् । नच यत्र कारणान्तरविलम्बेन तात्पर्यज्ञानस्य द्वितीयक्षणे न शाब्दबोधः किन्तु तृतीयक्षणे, तत्र निरुक्तकारणविरहाच्छाब्दबोधानुपपत्तिरिति पूर्ववर्तित्वमपि भवतां कल्प्यमिति वाच्यम् । तत्रापि तात्पर्यानुमितिद्वितीयक्षणे विशेष्यतया प्रकरणज्ञानोत्पत्तौ बाधकाभावादुपनयसन्निकर्षस्य च नियमतः पूर्वं सत्वात्, लिङ्गोपहितलैङ्गिकभानस्वीकारे तात्पर्यानुमितेर्नियमतः प्रकरणरूपहेतुविषयकत्वेनोक्तानुपपत्त्यसम्भवाच्च । नन्विदं सिद्धान्तविरुद्धमित्यत आह–अत एवेति । तात्पर्यज्ञानस्य तत्र हेतुत्वादेवेत्यर्थः । तदर्जकत्वेन–तात्पर्यानुमापकत्वेन ।

एवञ्चेति । प्रभाकरमतमव्यनादेयमित्यन्वयि, प्रकरणज्ञानस्य हेतुत्वे चेत्यर्थः । नन्वसाधुत्वज्ञानप्रतिबध्ये साधुत्वज्ञानजन्यशाब्दे व्यभिचारात् निरु-

रामभद्रीटीका ।

नुमापकत्वेन । न्यायसिद्धान्त इति । तथाच सैन्धवमानयेत्यादौ सैन्धवपदजन्यलवणान्वयबुद्धौ तात्पर्यानुमापकतयाऽभिमततत्तत्प्रकरणज्ञानत्वेनैव विशेषतो हेतुत्वमिति भावः ।

नचैवं कार्यकारणभावानन्त्यम्, तात्पर्यज्ञानस्यापि तत्तद्वाक्यव्यक्तिधर्मिकत्वतदानीन्तनत्वादिनिवेशेन चास्य समानत्वात् । नचैवं दानदशोच्चरितसैन्धवपदजन्यलवणान्वयबुद्धौ व्यभिचारः, भोजनदशोच्चरितत्वरूपतत्तत्प्रकरणज्ञानस्य तदानीमसत्त्वादिति वाच्यम् । अव्यवहितोत्तरत्वान्तर्भावेण कार्यकारणभावस्य वक्तव्यत्वादिति ध्येयम् । यत्तु लवणाद्यन्वयबोधत्वावच्छिन्नं प्रति लवणादितात्पर्यव्याप्यविषयकज्ञानत्वेनानुगतरूपेण हेतुत्वमिति । तत्तुच्छम् । लवणतात्पर्याव्याप्यस्यापि लवणप्रकरणत्वभ्रमदशायां सैन्धवमानयेत्यादितो लवणस्यान्वयबोधे व्यभिचारात्, तदीयतात्पर्यव्याप्यस्यैव सामान्यतः प्रमेयत्वादिना ग्रहेऽपि तदन्वयबोधप्रसङ्गाच्च । नच तदन्वयबोधे तद्गोचरतात्पर्यव्याप्यत्वप्रकारकज्ञानत्वेनैव हेतुत्वमतो नोक्तदोष इति वाच्यम् । प्रथमं गृहीतुमशक्यत्वात् इत्युक्तदोषतादवस्थ्यात्, तात्पर्यव्याप्यत्वेनागृहीतस्यापि भोजनादिप्रकणस्य विशिष्योपस्थितौ लवणाद्यन्वयबोधस्यानुभविकत्वाच्च, तथासति लाघवेन तात्पर्यज्ञानस्यैव हेतुत्वौचित्याच्चेति दिक् ।

एवञ्चेति । प्रकरणज्ञानस्यैव हेतुत्वे चेत्यर्थः । अनादेयमिति परेणान्वयः । तस्य-

दात्, तन्निश्चयस्यैव युगपदनेकार्थोपस्थितावेकार्थमात्रान्वये विनिगमकत्वात्, लक्षणाकल्पकत्वात् मुख्यार्थबाधस्य सर्वत्र लक्षणाया असम्भवात्, तथा च तात्पर्य्यावच्छेदकतयैव सर्वत्र वाक्यार्थसिद्धेः प्रत्यक्षानुमितिभ्यां भिन्नमनुभवं भावयन्नपि शब्दो गृहीतग्राहित्वेनानुवाद-

---

कृष्णकान्तीटीका ।

कप्रतिबन्धकत्वासिद्ध्या स्वरूपासिद्धेश्च नोक्तानुमानं सम्भवतीत्यत आह—तन्निश्चयस्येति । तात्पर्यनिश्चयस्येत्यर्थः । **विनिगमकत्वादिति** । अन्यथा हर्यादिपदाद्विष्णुसिंहादीनां नियमत एवासति बाधके शाब्दधीविषयतापत्तेः । नचेष्टापत्तिरनुभवविरोधात्, विष्णुं शृणोमि न तु सिंहमित्यनुव्यवसायसम्भवाच्चेति भावः । ननु तत्प्रकरणज्ञानादिरेव तत्र विनिगमक इत्यत आह लक्षणेति । तथाच तीराशक्यगङ्गादिपदस्य तीरलक्षकत्वं विना तीरतात्पर्यकत्वमनुपपन्नमित्यन्यथानुपपत्तेरेव तत्कल्पकत्वादिति भावः । एतदशक्तमेतत्पदमेतल्लक्षकमेतत्प्रकरणोक्तत्वादित्यनुमानात् प्रकरणादिरेव स्वमते तत्कल्पकः । अथवा लक्षणानुमितिस्तु तच्छक्तित्वेनैव हेतुना भविष्यतीति हृदयमिति बोध्यम् । ननु मुख्यार्थबाध एव तत्कल्पक इत्यत आह—**मुख्यार्थेति** । **असम्भवादिति** । यष्टीः प्रवेशय इत्यादौ मुख्यार्थस्य यष्ट्यादेर्बाधाभावाद्यष्टिधरान्वयबोधो न स्यादिति तात्पर्यज्ञानस्य हेतुत्वमावश्यकमिति भावः । स्वमते तु प्रकरणादेरेव तत्कल्पकत्वाद्भोजनप्रकरणमेव तत्र तत्प्रयोजकमिति नानुपपत्तिः । उपसंहरति—तथाचेति । **तात्पर्यावच्छेदकतयैवेति** । तात्पर्यविषयीभूतज्ञानविषयतयेत्यर्थः । वाक्यार्थसिद्धेरिति पञ्चम्यर्थः प्रयोज्यत्वं, तच्चानुवादकत्वप्रयोजकगृहीतग्राहित्वेऽन्वेति । प्रत्यक्षानुमितिभ्यामित्यभेदे तृतीया, भावयन्—जनयन्, अपिशब्दोवार्थे, तथाच प्रत्यक्षात्मकमनुमित्यात्मकं वाऽनुभवं जनयन् शब्द इत्यर्थः । तादृशबोधस्य प्रत्यक्षत्वे पूर्वोक्तदोषाणां जागरूकत्वादनुमित्यात्मकत्वमुक्तम् । नच 'तथाचे'-त्यादिग्रन्थेन स्वयमेव सिद्धसाधनस्य दर्शितत्वात्तदात्मकत्वकथनमसङ्गतमिति वाच्यम् ।

रामभद्रीटीका ।

तात्पर्यस्य, तदनुत्पादात्—शाब्दबुद्ध्यनुत्पादात् । तन्निश्चयस्य—तात्पर्यनिश्चयस्य । ननु साधुत्वसंशयव्यतिरेकनिश्चयप्रतिबध्ये साधुत्वज्ञानजन्ये शाब्दबोधे उक्तव्याप्तेर्व्यभिचारादाह—**युगपदिति** । अनेकार्थोपस्थितौ—सैन्धवादिपदेन लवणघोटकादेः उपस्थितौ, एकार्थमात्रान्वये—लवणार्थमात्रान्वये । ननु प्रकरणादिरेव तत्र विनिगमकं वाच्यमत आह—**लक्षणेति** । तात्पर्यान्यथानुपपत्तेरेव लक्षणाकल्पकत्वादिति भावः । मुख्यार्थबाधवत्त्वेनैव सा कल्पनीयेत्यत आह **मुख्येति** । **सर्वत्रेति** । तथाच यष्टीः प्रवेशयेत्यत्र मुख्यार्थे यष्ट्यादौ तात्पर्यज्ञानाभावादेवास्मन्मते न तस्यान्वयबोधस्त्वन्मते लक्ष्यार्थस्य यष्टिधरादेरिव मुख्यार्थस्यापि यष्ट्यादेरन्वयबोधः स्यात् लक्षणाकल्पकस्य मुख्यार्थबाधस्या-

क—इति प्रभाकरमतमप्यनादेयम्, कविवाक्यनामन्यार्थमात्रपरत्वस्य शुकादिवाक्यानाञ्च स्वार्थपरत्वाभावस्य निश्चयेऽपि ततः सामाजिकादेरन्वयानुभावोत्पत्त्या व्यभिचारादित्यास्तां विस्तरः ॥ ५ ॥

ननु स्वार्थान्वयगोचरो बोधः साकाङ्क्षैरपि सार्थकैरेव शब्दैः सम्पादनीयो, न तु निरर्थकैस्तत्र कोऽसौ सार्थकः कतिविधश्च इत्याकाङ्क्षायामाह—

(१)शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत् ।
प्रकृतिः प्रत्ययश्चैव निपातश्चेति स त्रिधा ॥ ६ ॥

कृष्णकान्तीटीका ।

तत्कथने प्रभाकराणां न निर्भरः, किन्त्वनुवादकत्व एवेत्यनास्थया तुष्यतु दुर्जनन्यायेन तस्योक्तेः । केचित्तु विशेषणे तृतीया, अनुभवमनुव्यवसायं, तथाच प्रत्यक्षविषयकमनुमितिविषयकं वाऽनुभवं जनयन् शब्द इत्यर्थः । अन्यत्सर्वं पूर्ववदित्याहुः । प्रत्यक्षानुमितिभ्यां भिन्नमिति क्वचित् पाठः, स च यथाश्रुत एव सम्यक् । कविकाव्यादीनामित्यादिकः पाठस्तु क्वाचित्कः, तत्र च सव्यङ्ग्यकाव्यादीनामन्यार्थपरत्वनिश्चयेऽपि सामाजिकान्वयबोधस्यानुभवसिद्धत्वादिति भावः । ननु प्रकरणज्ञानस्य हेतुत्वेऽप्युक्तदोषसत्वादनुभवापलापस्य तुल्यत्वाच्च स्थलान्तरमाह—शुकादिवाक्यानामिति । प्रकरणज्ञानस्य तत्रापि सम्भवादिति भावः ॥ इति शाब्दप्रामाण्यव्याख्या समाप्ता ॥५॥

साकाङ्क्षशब्दैर्यो बोध इतिकारिकया पदार्थोपस्थितिद्वारा शाब्दबोधप्रयोजकत्वं साकाङ्क्षशब्दे उक्तं, तथाच सार्थकशब्द एव तत्प्रयोजक इति, स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या कारिकान्तरमवतारयति—नन्विति । ननु निरर्थकैरिति, बोधः सम्पादनीय इति पूर्वेणान्वयः ।

रामभद्रीटीका ।

सत्वात्, अतो यष्टिधरान्वयबोधार्थं तात्पर्यज्ञानस्य हेतुत्वमवश्यं वाच्यमिति गुरूणामाशयः । स्वमते तु मुख्यार्थबोधानुकूलप्रकरणविरहादेव न तस्याऽन्वयः भोजनोपयुक्तस्वरूपप्रकरणात् मुख्यार्थयष्ट्यन्वयबोधानुपपत्तेरिति भावः । वस्तुतो लक्षणाकल्पकत्वमनुमापकत्वं, तच्च व्यभिचारहेतुना तत्तद्व्यक्तित्वहेतुनापि सम्भवतीति हृदयम् ॥ ५ ॥

साकांक्षशब्दैर्यो बोध इति प्रागुक्तकारिकोपरि आशङ्कया कारिकान्तरमवतारयति नन्विति । न तु निरर्थकैरिति । बोधः सम्पादनीय इति पूर्वेणान्वयः ।

(१) सार्थकशब्दस्य स्वरूपं भेदञ्चाह शब्दान्तरेति । यः शब्दान्तरसहकारेण स्वस्वघटकान्यतरवृत्त्युपस्थाप्ययादृशार्थान्वयबोधजनकः स शब्दः सार्थकः, स च प्रकृतिप्रत्ययनिपातभेदेन त्रिविध इति कारिकार्थः ।

यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य वा वृत्त्युपस्थाप्ययादृशार्थावगाहिबोधं प्रत्यनुकूलः, स तथाविधार्थे सार्थकः। पटपाचकाद्याः प्रकृतयः सुप्तिङाद्याः प्रत्ययाश्चादयो निपाताश्च स्वोपस्थाप्यार्थस्य बोधं नियमतः(१) शब्दान्तरं सहकृत्य जनयन्ति, वाक्यानि पुनरसहकृत्यापि। शशविषाणादिकः शब्दोऽपि शशीयत्वादिना विषा-

कृष्णकान्तीटीका।

सहकृत्यैवेति अपेक्ष्यैवेत्यस्य विवरणम्। ननु स्वार्थपदस्य स्ववृत्त्युपस्थाप्यार्थपरत्वे वाचकादिशब्देऽतिव्याप्तिस्तस्य वृत्त्यप्रसिद्धेः, वृत्तिमनिवेश्य स्वोपस्थाप्यार्थपरत्वे घटपदादेरप्याकाशाद्युपस्थापकतया तद्बोधने तस्य सार्थकत्वापत्तेः, स्वघटकवृत्त्युपस्थाप्यार्थपरत्वे पाचकशब्दस्य पाकबोधने तथात्वापत्तिरतोऽस्य शब्दस्य स्वविषयिताव्यापकविषयिताकशब्दत्वरूपेणाजहत्स्वार्थलक्षणया तदुभयपरत्वमाह—स्वस्य स्वघटकस्य वेति। फलोपधायकत्वनिवेशे प्रयोजनविरहोऽव्याप्तिश्चेत्यत आह—अनुकूल इति। तथाच यादृशानुपूर्व्यवच्छिन्नः स्वेतरशब्दाप्रयोज्ययादृशार्थनिष्ठविषयत्वप्रयोजकत्वे सति यादृशार्थबोधस्वरूपयोग्यस्तादृशानुपूर्वीमान् शब्दस्तादृशार्थे सार्थक इति पर्यवसितार्थः। लक्ष्यं प्रदर्शयन् तत्र लक्षणं सङ्गमयति—पटेति। एवकारलभ्यसत्यन्तव्यावृत्तिमाह—वाक्यानीति। घटमित्यादिवाक्यानि आनयेत्यादिशब्दं सहकृत्य, क्वचिदसहकृत्यापि स्वोपस्थाप्यघटीयकर्मत्वादिबोधं जनयन्तीति सत्यन्ताभावान्न तत्र प्रसङ्ग इति भावः। ननु स्वार्थेत्यत्र स्वपदस्य निरुक्तार्थकत्वे शशविषाणादिशब्दस्यापि घटकार्थप्रसिद्ध्या सार्थकत्वापत्तिरतस्त

रामभद्रीटीका।

यौगिकस्य पाचकादिसार्थकशब्दस्य स्ववृत्त्युपस्थाप्याप्रसिद्धेराह स्वघटकस्य वेति। तथाच कारिकायां स्वार्थपदं स्वविषयताव्यापकविषयिताकशब्दस्य वृत्त्युपस्थाप्यपरमिति भावः। अनुकूलो—विषयविधया जनकतावच्छेदकः। पाचकाद्या इत्याद्यपदेन भूप्रभृतिधातोः परिग्रहः। सुबाद्या इत्याद्यपदेन कृत्तद्धिताख्यातप्रत्ययानां परिग्रहः। चादय इत्यादिपदेनैवतुप्रभृतेः परिग्रहः। अपेक्ष्येत्यस्य विवरणं सहकृत्येति। असहकृत्यापीति। शब्दान्तरमसहकृत्यापि स्वार्थस्यान्वयबोधं जनयन्तीति पूर्वेणान्वयः। घटमित्यादिवाक्यस्यानय इत्यादिसहकारेणेव तदसहकारेणापि स्वार्थस्य घटीयकर्मत्वादेर्बोधकत्वात्, तथाच स्वेतरशब्दानपेक्ष्यस्वार्थान्वयबोधजनकशब्दत्वमेव सार्थकशब्दत्वमिति भावः। ननु शशविषाणादिशब्दस्यार्थाप्रसिद्ध्या तदन्वयबोधकत्वगर्भलक्षणं तत्रा-

(१) घटमित्यादिवाक्यस्यानयनादिसहकारेणापि स्वार्थस्य घटकर्मत्वादेर्बोधकत्वात्तत्रातिप्रसङ्गवारणार्थं नियमत इत्युक्तम्। तथाच तदसहकारेणापि स्वार्थबोधकत्वान्न दोषः।

णादेरन्वयबोधमादधानस्तादृशविषयताकबोधने सार्थक एव, परन्त्वयोग्यः ।

स चायं त्रिविध एव–प्रकृतिः प्रत्ययो निपातश्चेति । शब्दस्य-

---

कृष्णकान्तीटीका ।

त्रेष्टापत्तिमाह शशविषाणादिक इति । नच शशीयविषाणादिरूपविशिष्टार्थाप्रसिद्धया यादृशार्थेत्यनेन तस्य धर्तुमशक्यत्वात्तादृशार्थबोधने कुतस्तस्य सार्थकत्वमितिवाच्यम् । वह्निमान् ह्रद इत्यादावव्याप्तिभिया यादृश विषयताशालिबोधानुकूलत्वस्यैव निवेश्यत्वात्, अत एव विवरणे यदर्थावगाहीत्यपहाय यादृशार्थावगाहीत्युक्तम् ।

केचित्तु लक्षणे विशिष्टार्थनिवेशे शशविषाणादिशब्देऽतिव्या- प्तिरित्यत आह–शशविषाणादिक इति । तथाच विशिष्टार्थाप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयताशालिबोधानुकूलत्वस्यैव निवेशान्नातिव्याप्तिरिति भाव इत्याहुः । अन्येतु ननु विवरणे यदर्थावगाहीत्यपहाय यादृशार्थावगाहीति कथमुक्तमित्यत आह–शशविषाणादिक इति । तथाचान्यथा तत्रैवाव्याप्तेरित्याहुः । एतन्मतद्वये सार्थक एव इत्येवकारसम्वलितलिखनासङ्गतेरेव नादरणीये । नच पाककर्तृरूपविशिष्टार्थे पचादेरपि सार्थकत्वापत्तिः, पाककर्तृविषयतायाः स्वेतरशब्दप्रयोज्यत्वेन सत्यन्तस्यापि सत्त्वादिति वाच्यम् । तादृशविषयताशालिबोधं प्रति पचेत्यस्याजनकत्वात्, पाचक इत्यानुपूर्वीप्रकारकज्ञानस्यैव तत्र हेतुत्वात, अन्यथा पचेतिशब्दात् पाककर्तुः प्रत्ययापत्तेः । नचोक्ताथ पाचकशब्दस्यापि सार्थकत्वं न स्यात् निर्धर्मितावच्छेदक शाब्दानभ्युपगमात्, शब्दान्तरसम्वलिततादृशानुपूर्वीप्रकारकज्ञानस्यैव तादृशविषयताशालिबोधहेतुत्वेन तत्रास्यायोग्यत्वादिति वाच्यम् । स्वघटकप्रत्येकपदार्थोपस्थितिद्वारा पाचकशब्दज्ञानस्य पदज्ञानविधया हेतुत्वसत्त्वात्, तदादायैव तत्र लक्षणसमन्वयात । वस्तुतस्तु तादृशार्थकः प्रकृत्याद्यन्यतम एव तादृशार्थे सार्थकः विभागग्रन्थस्य तत्रापि तात्पर्यादित्युक्तौ न कोऽपि दोष इति युक्तमुत्पश्यामः । ननु तस्य सार्थकत्वे प्रामाण्यं स्यादित्यत आह–परन्त्विवति । तथाच तज्जन्यबोधस्य भ्रमत्वेन तस्य तथात्वासम्भवादिति भावः ।

परप्रतीकार्थमाह–स चायमिति । ननु त्रिधा विभागोऽनुपपन्नो विकरणागमा-

रामभद्रीटीका ।

व्याप्तमत आह–शशविषाणादीति । तथाच शब्दान्तरसहकारेण स्वोपस्थाप्यार्थानां यादृशविषयिताकबोधजनकत्वं यस्य तस्य तादृशविषयिताकान्वयबोधने सार्थकत्वमिति भावः । नन्वेवं राजपुरुषादिशब्दतः शशविषाणादिशब्दस्य को भेदः सार्थकत्वस्याविशिष्टत्वादत आह परन्त्विवति ।

प्रकृतिः प्रत्ययश्चेत्यादि विभागं व्याचष्टे स चायमिति । कारिकास्थस्वार्थ-

नादिविकरणो नुमाद्यागमश्चाऽन्वयबोधने प्रकृत्यादीनां सहायोऽपि न स्वार्थोपस्थितिद्वारा, येन तमादाय चतुरादिविधः सार्थकः स्यात्। 'पुत्रो व' इत्यादावपि युष्मदादिसम्बन्धो न वसाद्यादेशस्यार्थः, किन्तु तदादेशिनो युष्माकमित्यादिवाक्यस्य, अतः पूर्वपदमपेक्ष्यैव तादृशसम्बन्धबोधानुकूले तत्र न प्रसङ्गः। सदृशाद्यर्थे प्रकृत्यादिभ्यो भिन्नेषु निभनीकाशादिशब्देष्वतिप्रसङ्गस्तु समासान्तर्गतत्वनियतस्वार्थबोधकताकान्यत्वेन विशेषणाद्वा-

---

कृष्णकान्तीटीका।

देरप्यधिकस्य सत्त्वादित्यत आह—शप्श्यनादीति। प्रकृत्यादीनां सहायोऽपि प्रकृत्यादिकं सहकृत्यैव, देवदत्तो भवतीत्यादौ उत्पत्त्याश्रयो देवदत्त इत्यादिबोधं प्रति स्वरूपयोग्योऽपीत्यर्थः। न स्वार्थोपस्थितिद्वारेति। तथाचोक्तलक्षणे स्वार्थोपस्थितिद्वारा जनकत्वस्य निवेशात् तस्य सार्थकत्वाभावेन न त्रिधाविभागव्याघात इति भावः। एतदभिप्रायेणैव कारिकायां स्वार्थपदमिति बोध्यम्। ननु तेषां सार्थकत्वाभावेऽपि युष्मदस्मदादिसम्बन्धार्थकवसाद्यादेशस्यैवाधिकस्य सत्त्वेन तद्दोषतादवस्थ्यम्, अतस्तस्यापि सार्थकत्वं नास्तीत्याह–पुत्रो व इत्यादिना। युष्माकमित्यादिवाक्यस्येति। युष्मदादिसम्बन्धोऽर्थ इत्यनुषज्यते, अनुकूल इत्यन्तमतिव्याप्तिसम्पादकम्, तत्र–वसादौ, न प्रसङ्गः–नातिव्याप्तिः। ननु सदृशाद्यर्थकनिभादिशब्देष्वतिव्याप्तिरित्यत आह—सदृशाद्यर्थ इति। प्रकृत्याद्यन्यतमस्यैव लक्ष्यत्वात्तेषां लक्ष्यत्वस्वीकारासम्भव इति सूचनाय प्रकृत्यादिभ्यो भिन्नेष्विति। अतिप्रसङ्गस्त्विति। तैः शब्दान्तरं सहकृत्यैवान्वयबोधजननात्।

वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्।
साधारणः समानश्च, स्युरुत्तरपदे त्वमी॥
निभसङ्काश-नीकाश-प्रतीकाशोपमादयः॥

इत्यमरसिंहेन तथैव नियमितत्वादिति भावः। समासान्तर्गतत्वे सति स्वघटितसमासान्तर्गतत्वनियतस्वार्थबोधकताकं यद्यत् स्वं, तदन्यत्वं सामानाधिकरण्यसम्ब-

रामभद्रीटीका।

पदं सफलीकुर्वन्नेवकारव्यवच्छेद्यमाह—शप्श्यनादीति। पचतीत्यादौ शप् दिव्यतीत्यादौ श्यन्, आदिना पच्यत इत्यादौ यकारादिर्ग्राह्यः। ननु 'पुत्रो व' इत्यादौ पुत्रशब्दसहकारेणैव युष्मदादिसम्बन्धस्य बोधके वसादौ अतिव्याप्तिरत आह–पुत्रो व इति। न प्रसङ्गो–नातिव्याप्तिः, तथाच तस्य स्वार्थाप्रसिद्ध्या तदनन्तर्भावादिति भावः। नन्वेवं चन्द्रनिभोयमित्यादौ निभादेः सदृशार्थकत्वात्तत्रातिव्याप्तिर्दुर्वारेत्यत आह–सदृशाद्यर्थ इति। समासान्तर्गतानिभादिभिन्नशब्दानां सार्थकत्वरक्षणाय नियते-

रणीयः ॥ ६ ॥

तत्र प्रथमोद्दिष्टां प्रकृतिं लक्षयति—

(१)स्वेतरार्थानवच्छिन्नयत्स्वार्थस्यावबोधने ।
यच्छब्दनिश्चयो हेतुः प्रकृतिः सा तदर्थिका ॥ ७ ॥

स्वेतरशब्दार्थाविशेषितस्य यादृशस्वार्थस्याऽन्वयबोधं प्रति स्वान्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय एव हेतुस्तादृशशब्द-

---

कृष्णकान्तीटीका ।

न्धेन लक्षणविशेषणमिति भावः । सामानाधिकरण्यमात्रनिवेशे चन्द्रनिभोऽयमित्यत्र चन्द्रादिशब्दस्यापि सार्थकत्वानुपपत्तिरित्यतो नियतेत्युक्तम् । चन्द्रस्य निभ इत्याद्यप्रयोगात् तेषु निरुक्तभेदासत्त्वेनातिव्याप्त्यसम्भवादिति भावः । नच प्रत्ययलक्षणवन्निभाद्यन्यत्वमेव किं न निवेश्यत इति वाच्यम् । अननुगतभेदनिवेशे गौरवात्, तन्नाव्यनेन रूपेण निभादिभेदनिवेशे तात्पर्याच्च तत्र गौरवमिति भावः ॥ ६ ॥

तत्र–तेषु प्रकृत्यादिषु मध्ये ।

अत्र स्वेतरशब्दवृत्तिज्ञानजन्योपस्थितिप्रयोज्यप्रकारतानिरूपितविशेष्यताभिन्नयादृशार्थनिष्ठविषयताशालिशाब्दबोधं प्रति अव्यवहितोत्तरत्वसंसर्गावच्छिन्नतादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चय एव हेतुः, तादृशानुपूर्वीमत्त्वं तथाविधार्थे प्रकृतित्वमिति पर्यवसितम् । पङ्कजादिशब्दस्य तादृशनिश्चयः स्वोपस्थाप्यपद्मत्वावच्छिन्ने स्वोपस्थाप्यपङ्कजनिकर्तृत्वप्रकारकान्वयबोधं प्रत्येव हेतुरिति तत्राव्याप्तिवारणाय स्वेतरपदं लक्ष्यत्वेनाभिमतभिन्नपरम् । पङ्कजनिकर्तुरपि कदाचित् स्वेतरार्थत्वसम्भवात् स्वेतरार्थत्वमपहाय प्रयोज्यान्तं प्रकारताविशेषणम् । नच पङ्कजपदभेदस्य पङ्कादिपदे सत्वात् उक्तदोषतादवस्थ्यमिति वाच्यम् । पाचकादिपदेऽव्याप्तिवारणाय स्वपदस्य स्व-स्वघटकोभयपरत्वस्याऽऽवश्यकत्वात् । तथा च समुदायभेदस्यैकदेशे सत्त्वेऽपि स्वभेदस्य स्वस्मिन्नसत्त्वात्, स्वमते अन्तरा भासमानपदार्थयोः प्रकारताविशेष्यतयोरैक्यात् प्रत्ययादौ नातिव्याप्तिरिति । शशविषाणादिशब्दस्य विशिष्टार्थाप्रसिद्ध्या तत्राव्याप्तिवारणाय यदर्थे इत्यपहाय यादृशार्थे इति । तथाच स्ववृत्तिज्ञानजन्योपस्थितिप्रयोज्ययादृशधर्मावच्छिन्नविषयताशालिबोधं प्रतीत्यर्थः ।

रामभद्रीटीका ।

त्युक्तम् ॥ ६ ॥

तत्र–प्रकृत्यादिषु मध्ये ।

---

( १ ) प्रकृतिलक्षणमाह स्वेतरेति । यच्छब्दस्य निश्चयो स्वभिन्नार्थासम्बद्धस्य स्वकीयार्थस्य बोधं प्रति कारणं स शब्दस्तदर्थे प्रकृतिरिति कारिकार्थः ।

स्तथाविधार्थे प्रकृतिः । पट-भूप्रभृतयो हि शब्दाः स्वोत्तरविभक्त्याद्यंशे निश्चिता एव स्वोपस्थाप्यस्य वसनजननादेरन्वयं प्रत्ययार्थे कर्मत्व-कर्तृ-

कृष्णकान्तीटीका ।

यादृशानुपूर्व्यवच्छिन्नाव्यवहितोत्तरत्वसम्बन्धावच्छिन्ननिश्चयवृत्तिविषयताव्यापकं यादृशनिरुक्तविषयताशाल्यन्वयबोधस्वरूपयोग्यत्वं तादृशानुपूर्वीमत्त्वं तादृशविषयताकबोधं प्रति प्रकृतित्वमिति समुदितवाक्यार्थः । शप्श्यनादावतिप्रसङ्गवारणाय प्रयोज्यान्तं विषयताविशेषणम् । सम्बन्धान्तरेण रूपान्तरेण वा स्वनिश्चयस्य हेतुत्वात् अवच्छिन्नत्वद्वयं विषयताविशेषणम् । स्वविषयकसंशयस्याहेतुत्वात् निश्चयवृत्तित्वमपि तथा । फलानुपधायके व्यभिचारवारणाय स्वरूपयोग्यत्वनिवेशः । एकार्थबोधकशब्दस्यान्यार्थे प्रकृतित्ववारणाय तादृशविषयताकबोधं प्रतीति । तादृशबोधनिष्ठजन्यतानिरूपितजनकतैव निविष्टा, जन्यतावच्छेदकरूपनिवेशे प्रयोजनाभावादसम्भवाद्वा इति तु नार्थः, तथा सति प्रत्ययातिव्याप्तिवारणासम्भवात्, किन्तु तादृशजनकताव्यापकं तथाविधनिश्चयत्वमित्येव वक्तव्यमिति । नचावच्छिन्नान्तद्वयोपादानं व्यर्थम्, अनतिप्रयोजकं वेति वाच्यम् । विशेष्यविधया सुबादिनिश्चयत्वस्य एकत्ववान् घट इत्यादिबोधजनकताव्यापकत्वात् प्रत्ययातिव्याप्तिवारणाय सम्बन्धावच्छिन्नत्वस्य निवेशात् । विषयितामनिवेश्य प्रकारतानिवेशे प्रयोजनाभावात्, घट इतिशब्दत्वेन पदार्थान्तराव गाहिज्ञानस्यापि तादृशबोधजनकतया व्यभिचारात् रूपनिवेशस्यावश्यकत्वाच्च ।

नामधातुभेदेन प्रकृतेर्द्वैविध्यात् उभयत्रैव लक्षणं सङ्गमयति—पटभूप्रभृतय इत्यादिना । विभक्त्यादीत्यादिना शप्श्यनादिपरिग्रहः । वसनजननादेरिति । पटमित्यादौ पटादिशब्दः सुबर्थकर्माद्यंशे स्वार्थस्य वस्त्रादेः, भवतीत्यादौ भूप्रभृतिस्तिवाद्यर्थाश्रयत्वादौ स्वार्थस्य जननादेरन्वयबोधजनक इति तत्र तत्र लक्षणं सङ्गच्छत इति भावः । अन्यथा—विभक्त्याद्यंशेऽनिश्चिता इत्यर्थः । नचैवं यादृशानुपूर्व्यवच्छिन्नोत्तरं कदाचिदमादिकं न जातं तत्रोक्तलक्षणमव्याप्तमिति वाच्यम् । तादृशवस्तुनि मानाभावात् ॥

नन्वत्र व्याप्यदिशि जन्यतायास्तादृशबोधनिष्ठत्वेन, तादृशबोधत्वावच्छिन्नत्वेन वा निवेशः ? आद्येऽसंभवः, घटीयं कर्मत्वमिति बोधजनकताया योग्यताज्ञानादौ निरुक्तनिश्चयत्वव्यभिचारित्वात् । द्वितीयेऽपि तथा, अखण्डधर्मिकनिश्चयजन्यतावच्छेदककोटौ इतरार्थानवच्छिन्नत्वादेरनिवेशेन उक्तान्वयबोधत्वस्य तत्कार्यतानवच्छेदकत्वात् ।

रामभद्रीटीका ।

नामधातुभेदेन प्रकृतेर्द्वैविध्यात् तत्र लक्षणं प्राहयति **पटभूप्रभृतय इति** । विभक्तीत्यादिना प्रत्ययान्तरस्योपग्रहः । **कर्मत्वकर्तृत्वादाविति** । पटमित्यादौ पटादिशब्दः सुबर्थकर्मत्वाद्यंशे स्वार्थस्य वस्त्रादेर्बोधजनकः, भवतीत्यादौ भूप्रभृतिधातुः

त्वादौ बोधयन्ति न त्वन्यथा । प्रत्ययास्तु पदार्थान्तरानवच्छिन्नस्यापि स्वार्थस्य सङ्ख्याकालेष्टसाधनत्वादेरन्वयबोधं प्रत्यनिश्चिता अप्युपयुज्यन्ते, चैत्रः पचति यजेतेत्यादौ शब्दान्तरधर्मिकसुबादिनिश्चयस्यासत्त्वेऽपि तदर्थस्यैकत्ववर्त्तमानत्वेष्टसाधनत्वादेश्चैत्र--पाक-यागादावन्वयात् । स्वाव्यवहि-

---

कृष्णकान्तीटीका ।

न च कर्मत्वनिष्ठविशेष्यत्वनिरूपित–घटत्वावच्छिन्नप्रकारतात्वेन इतरार्थानवच्छिन्नप्रकारताया अपि जन्यतावच्छेदकत्वासम्भव इति वाच्यम् । तथासति तादृशविशेषणस्याव्यावर्तकत्वापत्तेरुक्तरूपेण सम्भवापत्तेश्च । एतेन तादृशबोधत्वव्याप्यजन्यतानिवेशो निरस्तः, योग्यताज्ञानजन्यताया अपि तथात्वे नासम्भवापत्तेरिति चेन्न । किञ्चिदानुपूर्वीप्रकारकनिश्चयनिरूपिततादृशबोधत्वव्यापकजन्यताया एव निवेश्यत्वात् । यद्यपि त्वामित्यादौ त्वदीयकर्मत्वमित्यन्वयबुद्धौ अमूर्धर्मिकनिश्चयस्यैव हेतुत्वात् युष्मदादिप्रकृतिलक्षणमव्याप्तम् , त्वदादेः सार्थकत्वे तत्रातिव्याप्तमपि, तथापि युवां, युष्मानित्याद्यनुरोधेन लाघवाद् द्वितीयाधर्मिकयुष्मत्प्रकारकनिश्चयस्यैव अमूधर्मिकयुष्मत्प्रकारकान्वयबुद्धौ हेतुत्वकल्पनात्, तथाच त्वामित्याद्यानुपूर्वीप्रकारकज्ञानस्याहेतुत्वात् नाव्याप्त्यतिव्याप्ती इत्यलमधिकेन ।

एवकारान्तर्भावफलमाह—प्रत्ययास्त्विति । सुबादीत्यादिना तिबादिपरिग्रहः । वर्तमानत्वादेरित्यादिना इष्टसाधनत्वपरिग्रहः । तथा च चैत्र इत्यादौ इतरार्थानवच्छिन्नस्यैकत्वस्य, पचतीत्यादौ तादृशवर्तमानत्वस्य, यजेत इत्यादौ तादृशेष्टसाधनत्वस्य, चैत्र–पाकयागादावन्वयादित्यर्थः । ननु स्ववृत्तिज्ञानजन्य इत्यत्र स्वपदार्थस्य प्रकृतेत्वत्वेन निवेशे आत्माश्रयः, एवं पाकादिशब्दस्य वृत्त्यप्रसिद्ध्या तत्राव्याप्तिश्च इत्यत आह-स्वाव्यवहितोत्तरत्वसम्बन्धेनेति । तथाच लक्षणं यत्र सङ्गमनीयं

रामभद्रीटीका ।

कर्तृत्वादौ स्वार्थस्य जननादेर्बोधक इत्यर्थः । न त्वन्यथेति । ननु विभक्त्याद्यंशेऽनिश्चिताः सन्तः स्वार्थस्यान्वयबोधका इत्यर्थः । निश्चिता एवेत्येवकारान्तर्भावेण व्याख्यायाः फलमाह प्रत्ययास्त्विति । तदर्थेति । संख्याकालेष्टसाधनत्वादिसुबाद्यर्थेत्यर्थः । चैत्र इत्यत्र सुपो निश्चयविरहेपि तदर्थैकत्वस्य चैत्रः पचतीत्यत्र तिङो निर्णयविरहेऽपि तदर्थवर्तमानत्वस्य पाके तदनुकूलकृतौ वा यजेतेत्यत्र लिङो निश्चयासत्त्वेपि तदर्थेष्टसाधनत्वस्य यागेऽन्वयबोधादित्यर्थः । तथाच प्रत्ययकारणार्थमेव यादृशशब्दवत्ताया निश्चय एवेत्युक्तमिति भावः । ननु स्वार्थस्यान्वयबोधन इत्यत्र स्वार्थपदं यदि स्वशक्यार्थपरं तदा गङ्गादिपदं तीराद्यर्थे प्रकृतिर्न स्यात्, यदि च स्ववृत्त्युपस्थाप्यपरं तदा पाकादिशब्दः पचनाद्यर्थे प्रकृतिर्न स्यात् तादृशभागस्य वृत्तिविरहादतः स्वार्थपदं व्याचष्टे

तोत्तरत्वसंसर्गेण(१) यादृशशब्दवत्ताया निश्चय एव तदुपस्थाप्यया-दृशार्थप्रकारकान्वयबोधं प्रति हेतुस्तादृशस्यैव शब्दस्य प्रकृते तथाविधः स्वार्थः, स च पाकेत्यादेः शक्त्यादिविरहेऽपि पचनादिरूपः सुवच एव, पचनादेः कर्मत्वादावन्वयबोधं प्रत्यमादिधर्मिकतादृशशब्दवत्ताया निश्चयस्यैव हेतुत्वात् (२)।

बहुगुडो द्राक्षेत्यादावीषदसमाप्तत्वादिरूपस्य स्वार्थस्य द्राक्षादावन्वयबोधं प्रति गुडादिपदधर्मिकः स्वोत्तरत्वसम्बन्धेन बहुजादिप्रत्ययस्य निश्चय एव हेतुरपि न पदार्थान्तरानवच्छिन्नस्य तादृशस्वार्थस्य द्राक्षा-

---

कृष्णकान्तीटीका।

तस्य तद्व्यक्तित्वेन निवेश इति भावः। तदुपस्थाप्येति। स्वस्य स्वघटकस्य वा वृत्त्युपस्थाप्येत्यर्थः, तथा च स्ववृत्तीत्यस्य स्वविषयताव्यापकविषयताकशब्दवृत्तीत्यर्थः। स च–तादृशार्थश्च। पाकेत्यादेरिति। आदिपदात् पाचकादिपरिग्रहः, पचनादीत्यादिपदात् पाककर्तृपरिग्रहः, पचनादिरूप इति पाकं करोतीत्यादावित्यादिः। हेतुत्वादित्यनेन लक्षणगमनप्रकारोऽपि दर्शितः।

अनवच्छिन्नान्तव्यावृत्तिमाह–बहुगुडो द्राक्षेति। ईषदसमाप्तत्वादिरूपस्येति। "ईषदसमाप्तौ नाम्नः प्राग्बहुच्" इत्यनुशासनादिति भावः। अन्वयबोधं प्रतीति। तथा च गुडाल्पन्यूना द्राक्षा इत्यन्वयबोधजनकताव्यापकत्वस्य गुडधर्मिकबहुच्प्रत्ययनिश्चयत्वे सत्त्वात् तत्रातिव्याप्तिः स्यात् यदि स्वार्थविषयतायां भिन्नान्तविशेषणं न दीयत इति भावः। ननु बहुगुडो द्राक्षा इत्यादौ गुडादिपदार्थावच्छिन्नस्यैव स्वार्थस्या-

रामभद्रीटीका।

स्वाव्यवहितेत्यादिना। तदुपस्थाप्येति। यादृशशब्दोपस्थाप्येत्यर्थः। उपस्थाप्यत्वं तु स्वस्य स्वघटकस्य वा वृत्त्येति पूर्वकारिकायामेवोक्तमिति भावः। स चेति। तथाविधस्वार्थश्चेत्यर्थः। पाकेत्यादेः शब्दस्येत्यनुषज्यते।

स्वेतरार्थानवच्छिन्नपदस्य व्यावृत्तिमाह बहुगुड इत्यादिना। ईषदसमाप्तत्वम्–अल्पन्यूनत्वं, स्वार्थस्य–बहुच्प्रत्ययार्थस्य, 'ईषदसमाप्तौ नाम्नः प्राग् बहुच' इति सूत्रेण तादृशार्थे बहुचो विधानात् इति भावः। तादृशस्वार्थस्य–ईषदसमाप्तत्वादिरूपस्वार्थस्य।

---

(१) सम्बन्धेनेति पाठः कृष्णकान्तस्याभिमतो बोध्यः।

(२) सर्वपदार्थप्रधानस्य घटपटेत्यादिद्वन्द्वस्य कलशवसनादिः, पूर्वपदार्थप्रधानस्योपकुम्भाव्ययीभावस्य कुम्भसमीपादिः, तथाऽघटेत्यादिनञ्समासस्य घटाभिन्नत्वादिः, प्राप्तजायार्द्धपिप्पल्यादितत्पुरुषस्य पुरुषसिंहेत्यादिकर्मधारयस्य यथायथं जायाप्राप्त्याश्रयापिप्पल्यर्द्धसिंहसदृशपुरुषादिरारूढवानर इत्यादि बहुव्रीहेः स्वकर्मकारोहणकर्तृवानरसम्बन्ध्यादि विशेषतो ग्राह्यः। इत्येवं क्वचित्पुस्तकेऽतिरिक्तः पाठः।

दावन्वयबोधकः, प्रत्ययानां प्रकृत्यर्थावच्छिन्नस्यैव संख्यादिभिन्नस्वार्थस्य (१)कर्तृकृदादावन्वयबोधकत्वव्युत्पत्तेः, अतो नाम्नः प्राग्विहिते बहुचि न प्रसङ्गः, न वा चन्द्रनिभोऽयं कुम्भकारोऽयमित्यादौ सदृशकर्त्राद्यर्थके निभकारादौ, पूर्वपदार्थावच्छिन्नस्यैव सदृशाद्यर्थस्य बोधकतायास्तत्र व्युत्पन्नत्वात् ।

न चैवमेवकारादेरन्ययोगव्यवच्छेदाद्यर्थे प्रकृतित्वं न स्यात्, पार्थ एव धनुर्धर इत्यादौ पार्थादिपदार्थविशेषितस्यैव तादृशस्वार्थस्यान्वयबोधं प्रति

कृष्णकान्तीटीका ।

न्वयबोधकत्वं बहुच्प्रत्ययस्य इत्यत्र किं मानम्? इत्यत आह—प्रत्ययानामिति । घट इत्यादौ एकत्ववान् घट इति बोधस्य, हेचैत्र! इत्यादौ, सम्बोध्यतावांश्चैत्र इति बोधस्य सर्वसम्मतत्वान्नाक्तव्युत्पत्तिसंभव इत्यत आह संख्यादिभिन्नेति । आदिना सम्बोध्यत्वपरिग्रहः । ननु बहुगुड इत्यस्य प्रकृत्यन्तरत्वस्वीकारे नैष दोष इत्यत आह—कर्तृकृदादाविति । स्वोत्तरवर्तिछबादिधर्मिकस्वप्रकारकनिश्चयस्यैव तादृशबोधहेतुत्वादिति भावः । कृदादावित्येव पाठः, कर्तृकृदादाविति पाठः प्रामादिकः क्वाचित्क उक्तरीत्या भावकर्मविहितकृत्प्रत्ययेऽपि तत्सम्भवात् । केचित्तु आदिपदात् भावकर्मविहितकृत्प्रत्ययपरिग्रह इति वदन्ति । तन्न । सन्दर्भविरोधापत्तेः । ननु प्रत्ययान्यत्वमेव निवेश्यतां किमनवच्छिन्नान्तेन, एवकारान्तर्भावेण वा इत्यत आह—नवेति । निभकारादाविति । प्रसङ्ग इत्यनुषज्यते । पूर्वपदार्थावच्छिन्नस्यैवेति । तथाचानवच्छिन्नान्तेनैव तद्वारणसम्भवादिति भावः ।

शङ्कते नचैवमिति । वायुर्वात्येव इत्ययोगव्यवच्छेदस्थले, नीलं सरोजं भवत्येव इत्यत्यन्तायोगव्यवच्छेदस्थलेऽपि वायुत्वावच्छेदेन गतेः सरोजत्वसामानाधिकरण्येन नीलादेरन्वये तात्पर्यग्राहक एव एवकारो, नत्वयोगात्यन्तायोगव्यवच्छेदार्थक इति तादृशार्थे तस्य प्रकृतित्वं कैरपि न स्वीक्रियते अतोऽन्ययोगव्यवच्छेदार्थमात्रमुक्तम् । कथं न स्यादित्याकांक्षायामाह-पार्थ एवेति । तादृशस्वार्थस्येति । अन्ययोगव्यवच्छेदार्थरूपस्येत्यर्थः । वस्तुतस्तु अन्ययोगव्यवच्छेदघटकस्य भेदादिरूपस्येत्यर्थः, तादृशविशिष्टार्थाप्रसिद्ध्या खण्डशक्तेरेव दीधितिकृत्प्रभृतिभिः स्वीकारात् । इष्ट·

रामभद्रीटीका ।

चैत्र इत्यादौ प्रकृत्यर्थानवच्छिन्नस्याप्येकत्वादिस्वार्थस्य चैत्रादौ सुबादिना बोधात् संख्यादिभिन्नेत्युक्तम् । आदिना चैत्र! गच्छ इत्यादौ सुबर्थसम्बोध्यत्वाद्युपग्रहः । बहुगुड इत्यस्य प्रकृत्यन्तरत्वस्वीकारेऽपि दोषमाह कर्तृकृदिति ।

(१) अत्र धर्म्यन्तरे इति पाठो मु० पु० बोध्यः ।

हेतुत्वादिति वाच्यम् । इष्टत्वात् । प्रकृतेः स्वोत्तरविभक्तिसाकाङ्क्षसजातीयत्वनियमात् , एवकारादेश्च सविभक्तिकत्वे एव प्रमाणाभावात् ।

ये तु मन्यन्ते—पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्यैव तत्रैवकारार्थत्वं तादृशार्थबोधने तात्पर्य्यग्राहकत्वेन शबादिवदाकाङ्क्षासम्पादकत्वेनैव

---

कृष्णकान्तीटीका ।

त्वादिति । तथाचैवकारादेः प्रकृतित्वं नेष्यत एवेति भावः । एवकारादेः प्रकृतित्वे बाधकमप्याह—स्वोत्तरविभक्तीति । तथा चैवकारादिर्यदि प्रकृतिः स्यात् तदा स्वोत्तरविभक्तिसाकांक्षजातीयः स्यात् घटादिप्रकृतिवदिति नियमादित्यर्थः । दाक्षिः पाचक इत्यादौ दक्षपचादेरपि दक्षपाकाद्यर्थे प्रकृतित्वात् तदुत्तरं विभक्तेरभावात् व्यभिचारवारणाय सजातीयत्वानुसरणं तच्च स्वोत्तरविभक्तिसाकांक्षवृत्त्यानुपूर्वीमत्त्वरूपं, तथाच दक्षः पचति इत्यादिस्थलीयतत्तदानुपूर्वीमत्त्वस्य तत्रत्यदक्षपचादौ सत्वान्न व्यभिचार इति भावः । इष्टापत्तिं निरस्यति—एवकारादेश्चेति । प्रमाणाभावादिति । सविभक्तिकस्य कालादिघटितत्वेनातीन्द्रियत्वात् । सार्थकत्वादिहेतोरपि नञादौ व्यभिचारित्वात् तद्बोधकशब्दस्य प्रामाण्यसन्देहाक्रान्तत्वादिति भावः ।

एवकारादेः प्रकृतित्ववादिनां शाब्दिकानां मतं दूषयितुमुपन्यस्यति ये त्विति । एवकारेण पार्थविशेषितान्ययोगव्यवच्छेदः । तत्र—पार्थ एव धनुर्धर इतिस्थले । एवकारार्थत्वम्—एवकारशक्यत्वम् । तात्पर्य्यग्राहकत्वेनेति । तात्पर्यानुमापकत्वेनेत्यर्थः ।

अथायमेवकारः पार्थान्ययोगव्यवच्छेदपरः पार्थपदसमभिव्याहृतैवकारार्थत्वात् इत्यनुमापकहेतुघटकतया पार्थपदस्योपयोगित्वं वाच्यं, तच्च न सम्भवति पार्थपदस्य लक्षणास्थल एव व्यभिचारात् । न च पार्थार्थकपार्थपदसमभिव्याहृतेति वक्तव्यमिति वाच्यम् । तत्र पार्थपदस्य पार्थार्थकत्वाव्याघातात् , तत्तात्पर्यकत्वोक्तौ च स्वरूपासिद्धेः प्रकृतपार्थपदस्यापि तात्पर्यग्राहकतया तन्मतेत तात्पर्यकत्वाभावात् , एतत्पार्थ-

रामभद्रीटीका ।

पार्थोऽर्जुनः । एवकारादेः प्रकृतित्वे बाधकमाह—प्रकृतेरिति । एवकारादिर्यदि प्रकृतिः स्यात् स्वोत्तरविभक्तिसाकांक्षस्य सजातीयः स्यात् घटादिप्रकृतिवदित्यर्थः । "दाक्षिः पाचक" इत्यादौ दक्षपचादिस्वरूपप्रकृतेः स्वोत्तरविभक्तिसाकांक्षत्वाभावान्मूलशैथिल्यवारणाय सजातीयत्वानुसारणम् । तच्च समानानुपूर्वीकत्वेन ग्राह्यम् । इष्टापत्तिं निरस्यति एवकारादेश्चेति । सविभक्तिकत्व एवेति । तथाच सुतरां तत्साकांक्षत्वाभाव इति भावः ।

एवकारादेः प्रकृतित्ववादिनां शाब्दिकानां मतं निरसितुमुपन्यस्यति—ये त्विति । तत्र—पार्थ एवेत्यादौ । ननु पार्थान्ययोगव्यवच्छेदस्यैवकारेण बोधने पार्थादिपदवैयर्थ्यमत आह तादृशार्थेति । तात्पर्येति । पार्थपदसमभिव्याहृतैवकारत्वेनैव हेतुना

वा पार्थादिशब्दस्योपयोगादेवकारादिनिपातः प्रकृतिरेव, तस्य च लुप्तविभक्तिकत्वेन तादृशविभक्त्यंश एव तन्निश्चयस्य पार्थान्ययोगत्वाद्यवच्छिन्नव्यवच्छेदरूपस्वार्थान्वयबोधं प्रति हेतुत्वम्—इति ।

तेषां मते पार्थ एवेत्यत्र पार्थैवकारार्थयोर्भेदेनानुभाविकस्यान्वयबोधस्यापलापप्रसङ्गः, प्रसङ्गश्च तयोरभेदेनान्वयस्य, तथा व्यवच्छेद एवेत्या-

---

कृष्णकान्तीटीका ।

पदसमभिव्याहृतेत्युक्तौ च एतदेवकारत्वस्यैव हेतुत्वसम्भवे समभिव्याहृतान्तवैयर्थ्यापत्तेः, तन्मात्रोक्तौ च तात्पर्यग्राहकत्वानुपपत्तेः पार्थपदस्य हेत्वघटकत्वात् इत्यतआह—शबादीति । आकाङ्क्षाऽऽनुपूर्वी, तत्सम्पादकत्वं—तद्घटकत्वम्, तथाच भवतीत्यादौ शबादिघटितानुपूर्व्या एव प्रकारतया शाब्दबोधजनकतावच्छेदकत्ववत् अत्रापि तादृशानुपूर्व्या एव शाब्दजनकतावच्छेदकत्वादिति भावः । तन्मते उपसंहारमाह—प्रकृतिरेवेति । ननु अनवच्छिन्नान्तविशेषणस्य सत्त्वेऽपि तत्र प्रकृतिलक्षणमव्याप्तमित्यत आह—तस्येति । एवकारस्येत्यर्थः । तन्निश्चयस्य—एवकारनिश्चयस्यैव । हेतुत्वमितीति । तथाच शाब्दिकमते तत्र नाव्याप्तिरिति भावः ।

दूषयति—तेषामिति । शाब्दिकानामित्यर्थः । अपलापप्रसङ्ग इति । एवकारस्यैव पार्थोपस्थापकतया पार्थपदार्थस्य तत्राभानादित्यर्थः । ननु पार्थपदं नतात्पर्यग्राहकं, किन्तु अर्जुनार्थकं, तस्य च यथाकथञ्चित्सम्बन्धेन एवकारार्थतादृशव्यवच्छेदेऽन्वयबोधस्वीकारे नानुभवापलाप इत्यत आह—प्रसङ्गश्चेति । केचित्तु तादृशानुभवे विवादादाह—प्रसङ्गश्चेतीत्याहुः । तन्न । तथासति पार्थपदस्य तात्पर्यग्राहकत्वे तदर्थपार्थस्यैवकारार्थेऽभेदान्वयबोधप्रसङ्गासम्भवात् तादृशग्रन्थस्योन्मत्तप्रलपितत्वापत्तेः ।

नव्यास्तु धनुर्धरादिपदासमभिव्याहारस्थले पार्थ एवेत्यादौ पार्थपदस्यार्थाविवक्षायां शाब्दबोधानुपपत्तिः निर्धर्मितावच्छेदककशाब्दानभ्युपगमात्, अतस्तस्यार्जुनार्थकत्वमवश्यं वाच्यम् इत्याशयेनाह—प्रसङ्गश्चेति प्राहुः । ननु तादृशबोध इष्ट एव भवतापि वह्निना सिञ्चतीत्यादौ योग्यताभ्रमात् शाब्दभ्रमस्वीकारादित्यत आह—तथेति । अन्येतु योग्यताभ्रमस्यासार्वत्रिकत्वात् आह—तथेतीत्याहुः । तन्मन्दम् ।

रामभद्रीटीका ।

पार्थान्ययोगव्यवच्छेदपरत्वस्यैवकारेऽनुमानादिति भावः । घटादिलक्षकपार्थपदस्य समभिव्याहृतैवकारे कथितक्रमेण तात्पर्यानुमाने व्यभिचारादाह शबादिवदिति । पचतीत्यादौ निरर्थकशबादिविकरणवदित्यर्थः । ननु तथापि एवकारस्य कुतः प्रकृतित्वं पार्थ इत्यादावनिश्चितस्याप्येवकारस्य तादृशान्वयबोधकत्वादत आह तस्येति । एवकारस्येत्यर्थः । लुप्तेति । अव्ययाच्चेति सूत्रेण ततो विभक्तिलोपादिति भावः । तादृशेति । लुप्तेत्यर्थः । अनिश्चियमानैवकारस्य तादृशस्वार्थबोधकत्वाभावादिति भावः ।

दावपि, प्रातिपदिकार्थयोरभेदान्वये तन्त्रस्य नाम्नोः समानविभक्तिकत्व-स्यानपायादिति ।

यत्तु—उपसर्गाणामिवैवकारादिनिपातानामपि न प्रकृतित्वं निरर्थ-कत्वात्, परन्तु समभिव्याहृतपार्थादिपदानां तदन्ययोगव्यवच्छिन्नादिल-क्षणायां निरूढत्वसम्पादकत्वमात्रम्—इति मतम् । तच्चिन्त्यम् ॥ ७ ॥

---

## कृष्णकान्तीटीका ।

आपत्तेरसार्वत्रिकत्वेऽपि क्षत्यभावात् । तथा—तयोरभेदेनान्वयबोधप्रसङ्ग इत्यर्थः, तस्य व्यवच्छेद एवेत्यादावपीत्यत्रान्वयः । तथाच व्यवच्छेदे व्यवच्छेदान्ययोगव्यवच्छेदाभे-दस्य सत्त्वात् तादृशवाक्यस्य प्रामाण्यापत्तेर्दुर्वारत्वादिति भावः । अभेदान्वयबोध-नियामकत्वमाह—प्रातिपदिकार्थयोरिति । नामार्थयोरित्यर्थः । अभेदान्वये—ता-दात्म्यसम्बन्धेनान्वयबोधे । तन्त्रस्य—प्रयोजकस्य, अनपायात्—सत्त्वादित्यर्थः । तथा च तत्तद्विभक्त्यन्तनामोपस्थाप्यार्थधर्मिकाभेदान्वयबोधप्रकारतायाः प्रयोजकस्य तत्त-त्समजातीयविभक्त्यन्तनामोपस्थाप्यत्वस्य तत्र सत्त्वादिति भावः ।

एवकारादेः सविभक्तिकत्वेऽपि प्रकारान्तरेण प्रकृतित्वं वारयतां मतमाह—यत्त्वि-ति । निरर्थकत्वादिति । एतेन स्वार्थघटितप्रकृतिलक्षणस्य तत्रागमनं व्यञ्जितम् । ननु तेषां निरर्थकत्वे कथं तत्प्रयोगः जिज्ञासुं प्रति लोकानामित्यत आह—पर-न्त्विति । निरूढतासम्पादकतामात्रमित्यत्र एवकारनिपातानामित्यनुषज्यते । निरू-ढत्वम्—अनादितात्पर्यमूलकत्वम् । तच्चिन्त्यमिति । अत्रेदं चिन्ताबीजम्—एवकारादे-र्व्यवच्छेदादिवाचित्वस्याव्ययवर्गेऽमरसिंहैरभिहितत्वात् तत्र निरर्थकं कोषादेः शक्तिग्राहकत्वात्, अन्यथा घटादिशब्दस्यापि निरर्थकत्वापत्तेः तत्समभिव्याहृत-प्रत्ययादेरेव लक्षणासम्भवात् ॥ ७ ॥

## रामभद्रीटीका ।

अपलापप्रसङ्ग इति । एवकारस्यैव तादृशविशिष्टार्थस्मारकत्वादिति भावः । तत्रान्वयबोधस्यानुभवसिद्धत्वे । विवादादाह प्रसङ्गश्चेति । तयोः—पार्थैवकारार्थयोः । वह्निना सिञ्चति इत्यादाविव योग्यताभ्रमसंभवादिति भावः । पार्थ एवेत्यादावयोग्यताज्ञा-नदशायां तादृशान्वयबोधाप्रसंगादाह तथा व्यवच्छेद एवेति । तथा—ऽभेदान्वय-बोधप्रसंगादित्यर्थः ।

तच्चिन्त्यमिति । तत्रेदं चिन्ताबीजम्—अमरकोशादिनैवकारादेर्व्यवच्छे-दादिवाचित्वस्याव्ययवर्गे विधानान्न तेषां निरर्थकत्वम्, अन्यथा घटादिप्रकृतेरपि निरर्थकत्वापत्तेस्तत्समभिव्याहृतप्रत्ययानामेव तदर्थगर्भस्यार्थलक्षकत्वसंभवात्, "पाचक एवेत्यादौ" पाचक इत्यस्य वाक्यत्वेन लक्षणाऽसंभवाच्चेति ॥ ७ ॥

लाघवादन्यथा निर्वक्ति—

**(१)स्वोपस्थाप्ययदर्थस्य बोधने यस्य निश्चयः ।**
**तत्त्वेन हेतुरथवा प्रकृतिः सा तदर्थिका ॥ ८ ॥**

तत्त्वेन—यन्निश्चयत्वेन, स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति तु फलितार्थः । बहुगुडो द्राक्षेत्यादौ

---

कृष्णकान्तीटीका ।

ननु उक्तलक्षणे पचतिकल्पमित्यत्र कल्पभागेऽतिव्याप्तिः, पाकधर्मिकेषदसमाप्तत्वबोधजनकताव्यापकत्वस्य स्वबादिधर्मिककल्पनिश्चयत्वे सत्त्वात । न च यादृशानुपूर्वीपर्याप्त्यवच्छेदकताकप्रकारत्वशालिनिश्चयत्वे तादृशजनकताव्यापकत्वं निवेश्यम्.अतो नोक्तदोष इति वाच्यम् । तथापि सरसिजं पुष्पमित्यादौ सरसीतिभागेऽतिव्याप्तिः, जनधात्वंशे सरसीतिभागनिश्चयत्वस्य तादृशजनकताव्यापकत्वात्, तादृशजनकतावच्छेदकत्वस्यापि उक्तनिश्चयत्वे निवेशेऽनवच्छिन्नान्तविशेषणस्य व्यापकत्वनिवेशस्य च वैयर्थ्यं गौरवञ्चेति तदुभयविशेषणद्वयशून्यलक्षणान्तरस्यावतारणिकामाह—लाघवादिति ।

यदर्थस्य इत्यत्र यच्छब्दप्रतिपाद्यायाः प्रकृतेः तत्त्वेनेत्यत्र तच्छब्देन प्रतिपादनेऽसम्भवस्तं प्रति तादृशशाब्दत्वेन तस्या अहेतुत्वात् अतस्तत्त्वेनेत्यस्य विवरणमाह—तत्त्वेनेति । निर्गलितार्थमाह स्वोपस्थाप्येति । उत्तरत्वसम्बन्धादेः शब्दालभ्यत्वादाह—फलितार्थ इति । तथाच किञ्चिद्धर्मावच्छिन्नविशेष्यताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चयत्वं स्वोपस्थाप्ययादृशार्थविषयक-

रामभद्रीटीका ।

ननु सरसिजं पुष्पमित्यादौ शब्दान्तरार्थानवच्छिन्नस्य सरोवृत्तित्वादिरूपस्वार्थस्यान्वयबोधने सरसीत्यादिभागस्य जनधात्वंशे निश्चीयमानस्यैव हेतुत्वात्तस्यापि प्रकृतित्वापत्तिरतः स्वोपस्थाप्यार्थस्यान्वयबोधने यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वं तादृशशब्दस्यैव प्रकृतित्वं वाच्यं, तथाच डन्तजनधात्वर्थे सरोवृत्तित्वान्वयबोधं प्रति विभक्त्यंशे सरसिजशब्दनिश्चयत्वेनैव हेतुत्वात् यदि न तत्रातिव्याप्तिस्तदा "बहुगुडो द्राक्षा" इत्यादौ बहुजादिनिश्चयत्वेनाहेतुत्वात न तत्राप्यतिव्याप्तिः, अतस्तद्वारणार्थमुपात्तं स्वेतरार्थानवच्छिन्नत्वदलं व्यर्थमत आह लाघवादिति । केवला८—विभक्तिशून्यात् ॥ ८ ॥

---

(१) स्वेतरार्थानवच्छिन्नत्वनिवेशाभावप्रयुक्तलाघवेन लक्षणान्तरमाह स्वोपस्थाप्येति । प्रकृत्युपस्थाप्ययादृशार्थान्वयबोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन यादृशशब्दवत्तानिश्चयः तत्त्वेन—निश्चयत्वेन कारणं तादृश एव शब्दस्तदर्थे प्रकृतिरित्यर्थः। अमादिधर्मिकघटादिनिश्चयः घटीयं कर्मत्वमित्यन्वयबोधं प्रति कारणमिति घटार्थे घटशब्दः प्रकृतिरिति लक्षणसमन्वय इति कारिकार्थः ।

बहुजाद्यर्थस्यान्वयबोधं प्रति न गुडादिपदधर्मिकबहुजादिनिश्चयत्वेन हेतुत्वमपि तु सुबादिधर्मिकबहुगुडादिपदनिश्चयत्वेन, अन्यथा केवलादपि बहुगुडादिशब्दात् द्राक्षादौ बहुजाद्यर्थस्यान्वयबोधापत्तेरिति न तत्र प्रसङ्गः ॥८॥

---

कृष्णकान्तीटीका।

ताकान्वयबोधजनकतावच्छेदकतापर्याप्त्यधिकरणं तादृशानुपूर्वीमच्छब्द एव तथाविधार्थे प्रकृतिरिति पर्यवसितम्। अमादिधर्मिकघटादिनिश्चयत्वस्य घटीयं कर्मत्वमित्याद्यन्वयबोधजनकतावच्छेदकतापर्याप्त्यधिकरणत्वात् घटाद्यर्थे घटादेः प्रकृतित्वम्। कर्मताद्यन्वयबोधे तु अमादिनिश्चयत्वस्यातथात्वात् नाऽमादिप्रत्ययेऽतिव्याप्तिः।

अथ तादृशशब्दनिष्ठजन्यतानिरूपितजनकता इत्यत्र तादृशशाब्दनिष्ठजन्यता, तादृशशाब्दत्वावच्छिन्नजन्यता वा निवेश्यते? आद्ये समूहालम्बनबोधजन्यतामादाय घटादेरपि पटाद्यर्थे प्रकृतित्वं स्यात्। द्वितीये नीलघट इत्यादेरपि घटाद्यर्थे प्रकृतित्वं स्यात्। नापि स्वोपस्थाप्यार्थविषयकशाब्दत्वपर्याप्त्यवच्छेदकताकजन्यतानिवेशसम्भवः, प्रत्येकं पर्याप्तिसत्त्वेन तद्दोषतादवस्थ्यात्, कलसपदनिश्चयोत्तरतादृशशाब्दे व्यभिचारवारणायाव्यवहितोत्तरत्वस्यापि तत्कार्यतावच्छेदकत्वेन तथा विवक्षाया असम्भवाच्चेति चेन्न। तादृशशाब्दत्वव्यापकजन्यताया एव निवेश्यत्वात्। पचतिकल्पमित्यादौ कल्पप्रत्ययेऽतिव्याप्तिवारणाय जनकतावच्छेदकतायाः पर्याप्तिनिवेशः, तादृशज्ञानत्वस्यातथात्वान्निश्चयत्वनिवेशः, स्वनिष्ठविशेष्यताया जनकतानवच्छेदकत्वात् प्रकारतानिवेशः, प्रमेयत्वादिना घटादिनिश्चयत्वस्यातथात्वात् अवच्छिन्नत्वं प्रकारताविशेषणम्। अनयैव दिशा सम्बन्धनिवेशस्य किञ्चिद्धर्मावच्छिन्नविशेष्यताकत्वनिवेशस्य च व्यावृत्तिः स्वयमूह्या। निरुक्तशाब्दानुपधायकेऽपि शब्दे तादृशानुपूर्वीमत्त्वरूपस्वरूपयोग्यतासत्त्वान्नाव्याप्तिः। अन्यत् सर्वं पूर्वदिशाऽवसेयम्। इदं पुनरिहावधेयम्। तिबादिधर्मिकशबादिनिश्चयत्वस्यातथात्वात् तत्रातिव्याप्त्यसम्भवात् स्वोपस्थाप्यत्वस्य यादृशार्थविशेषणत्वमनुचितम्। नच पर्याप्तिरेव न निवेश्यते, तथाच तिबादिधर्मिकशबादिनिश्चयत्वस्यापि तादृशजनकतावच्छेदककोटिप्रविष्टत्वेन तत्रातिव्याप्तिसम्भव इति तद्वारणायैव तादृशविशेषणं सार्थकं भविष्यतीति वाच्यम्। पचतिकल्पमित्यादौ कल्पप्रत्ययेऽतिव्याप्तिवारणाय पर्याप्तेरावश्यकत्वादिति। जनकतावच्छेदकतापर्याप्तिनिवेशं व्यञ्जयन् बहुगुडो द्राक्षेत्यादावतिव्याप्तिमुद्धरति–बहुगुड इति। ननु गुडाल्पन्यूनत्वप्रकारकशाब्दबोधे गुडधर्मिकबहुच्प्रत्ययनिश्चयत्वेन हेतुत्वात् तादृशनिश्चयत्वे तत्पर्याप्तिरावश्यकीत्यत आह—अन्यथेति। गुडधर्मिकबहुच्प्रत्ययनिश्चयत्वेन तत्राहेतुत्व इत्यर्थः। केवलात्–सुबाद्यसमभिव्याहृतात्। तत्र–बहुच्प्रत्यये, प्रसङ्गो–ऽतिप्रसङ्गः ॥ ८ ॥

प्रत्ययं लक्षयति विभजते च---

**(१) यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान् ।**
**स तादृशार्थे शब्दः स्यात्प्रत्ययोऽसौ चतुर्विधः ॥९॥**

यादृशार्थे इति वृत्तावप्यन्वेति (२), तेन यादृशार्थकप्रकृतिनिपाताभ्यां भिन्नो यादृशार्थे शक्तिनिरूढलक्षणान्यतरात्मकप्रशस्तवृत्तिमान् यादृशः शब्दः, स तादृशार्थकप्रत्ययः, प्रशंसायां मतुपो विधानात् । शक्त्या निरूढलक्षणया च गुण-गुणिनोः स्थितिप्रस्थानयोश्च बोधका अपि

---

कृष्णकान्तीटीका ।

प्रत्ययमिति । क्रमप्राप्तमित्यादिः ।

परस्मैपदादेः कर्मताद्यर्थे प्रत्ययत्ववारणाय यादृशार्थे इतीति । यादृशार्थक इत्यर्थः, वृत्त्यर्थेऽपि अन्वेतीत्यर्थः । तेन शब्दस्य शब्दान्वयासम्भवेऽपि न क्षतिः । निर्गलितार्थमाह-तेनेति । ननु वृत्तिशब्दस्य शक्तिलक्षणान्यतरवाचित्वात् कुतो निरूढलक्षणाप्राप्तिः ? आधुनिकलक्षणया वृत्तिपदात् तल्लाभे तु उदक्षरत्वापत्तिरित्यत आह-प्रशंसायामिति ।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां मतुबाद्या भवन्त्यमी ॥

इत्यनुशासनादिति भावः । यादृशार्थकप्रकृत्यन्यत्वनिवेशव्यावृत्तिमभिदधान एव शुक्लादेः प्रशस्तवृत्तिमत्त्वमतिव्याप्तिसम्पत्त्यर्थमादावाह-शक्त्येति । नामधातुभेदेन

रामभद्रीटीका ।

प्रत्ययमित्यस्य क्रमप्राप्तमित्यादिः ।

परस्मैपदादेः कर्मत्वाद्यर्थे प्रत्ययत्ववारणार्थं व्याचष्टे यादृशार्थे इति । वृत्तिपदस्य शक्तिलक्षणान्यतरवाचिनः शक्तिनिरूढलक्षणान्यतरबोधकतायामुदक्षरत्वापत्तेराह—प्रशंसायामिति । "भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां मतुबाद्या भवन्त्यमी" इत्यनुशासनादिति भावः । प्रकृत्यन्यदलस्य व्यावृत्तिमाह शक्त्येत्यादिना । शुक्लं पदं शुक्लं रूपमित्यत्र शक्त्या गुणस्य शुक्लो घट इत्यत्र निरूढलक्ष-

---

(१) लक्षणविभागाभ्यां प्रत्ययं निरूपयति यादृशार्थे इति । यादृशार्थकप्रकृतिनिपातभिन्नः यादृशार्थे प्रशस्तशक्तिनिरूढलक्षणात्मकवृत्तिमांश्च यादृशः शब्दः स तादृशार्थबोधकः प्रत्ययो चतुर्विध इत्यर्थः ।

(२) स्वपरतायां सेः प्रकृत्यन्यत्वं नास्तीति यादृश इति प्रकृत्यन्यांशे, स्मृतमनुभूतञ्चेत्यत्र चकारस्य समुच्चयार्थे प्रकृत्यन्यत्वं स्वपरतायां निपातान्यत्वमस्तीति निपातान्यांशे, एकत्वाद्यर्थे घटशब्दस्य घटरूपार्थे च सेः प्रकृत्यन्यत्वञ्चास्तीत्यतिव्याप्तिवारणाय वृत्तिमानित्यंशे च विशेषणं बोध्यम् ।

शुक्ल-स्थाप्रभृतयः प्रकृतिभ्यो न भिन्नाः, तथा शक्तया समुच्चयादिप्रतिपादका अपि चादयो न निपातेभ्यः, सुबादयस्तु स्वपरतायामेव प्रकृ-

कृष्णकान्तीटीका।

प्रकृतेर्द्वैविध्यस्य वक्ष्यमाणत्वात् उक्तविशेषणादाने उभयत्रैवातिव्याप्तिः सम्भवतीति, सा च नामान्यत्वधात्वन्यत्वयोः प्रत्येकमात्रनिवेशेन वारयितुमशक्या(१), भेदद्वयनिवेशे च गौरवम्, इत्यावेदनायैवोभयोरुपादानम्। शुक्लादिशब्दाः शक्त्या गुणस्य निरूढलक्षणया च गुणिनो बोधकाः, स्थाधातुश्च शक्त्या स्थितेर्निरूढलक्षणया च प्रस्थानस्य बोधकः, गणकोशादीनां प्रशस्तवृत्तेरेव ग्राहकत्वात् इति तत्र तत्रातिव्याप्तिः स्यात् यदि प्रकृत्यन्यत्वनिवेशो न स्यात् इति भावः। शक्त्यसत्त्वे लक्षणाया असम्भवः शक्यसम्बन्धस्यैव लक्षणात्वात् इति शुक्लादेः शक्तिकथनम्। नच केवलशक्तिसत्त्वेऽपि अतिव्याप्तिसम्भवात् लक्षणाभिधानमसङ्गतमिति वाच्यम्। लक्षणाया असत्त्वे तादृशान्यतररूपप्रशस्तवृत्तिमत्ताप्रसिद्ध्याऽतिव्याप्तेरेवासम्भवात्। तदुपादानेऽतिव्याप्तिर्नास्तीत्याह—प्रकृतिभ्य इति। वस्तुतस्तादृशवृत्तिद्वयस्य नान्यतरत्वेन निवेशस्तथासति चादिनिपातानां निरूढलक्षणायाः कोशादावप्राप्तत्वात् तादृशान्यतराप्रसिद्ध्यातिव्याप्त्यसम्भवात् तद्वारणाय निपातान्यत्वनिवेशस्यासङ्गत्यापत्तेः।

नच यस्य निपातस्य निरूढलक्षणाप्रसिद्धिस्तत्रातिव्याप्तिवारणाय तदुपादानमिति वाच्यम्। तथासति शक्त्या समुच्चयादिप्रतिपादका अपि चादयो न निपातेभ्यो भिन्ना इत्यत्र चोपादानस्य शक्तिमात्राभिधानस्य च उन्मत्तप्रलपितत्वापत्तेः। परन्तु प्रशस्तत्वेनैव तयोर्निवेशः, तत्त्वञ्चायमस्मात् प्रशस्त इति साम्प्रदायिकव्यावहारिकविषयत्वम्, तथाच वृत्तिप्रतियोगिकप्रशस्तत्वेन तयोर्निवेशात् अशोकवनिकान्यायेनैव शुक्लादिशब्दस्य वृत्तिद्वयोपादानमिति पूर्वापरग्रन्थसङ्गतिः। एतेनान्यतरत्वेन तयोर्निवेशे यत्प्रत्ययस्य निरूढलक्षणाप्रसिद्धिस्तत्राव्याप्तिरित्यपि प्रत्युक्तमिति सूक्ष्ममीक्षामहे। निपातान्यत्वनिवेशव्यावृत्तिमाह—तथेति। प्रतिपादका इत्यन्तमतिव्याप्तिसम्पादकम्। केवलं प्रकृत्यन्यत्वमपहाय यादृशार्थकप्रकृत्यन्यत्वं यन्निवेशितं तस्य व्यावृत्तिमाह—सुबादयस्त्विति। स्वपरतायां—स्वात्मकवर्णपरतायां, तथाच

रामभद्रीटीका।

णया गुणिनो बोधकः, स्थाधातुस्तिष्ठतीत्यत्र शक्त्या स्थितेः प्रतिष्ठते इत्यत्र च निरूढलक्षणया प्रस्थानस्य बोधकोपि न तदर्थकप्रकृतिभ्यो भिन्न इत्यर्थः। प्रकृतेर्नामधातुभेदेन द्वैविध्यात् उभयोपादानम्। निपातान्य इत्यस्य व्यावृत्तिमाह तथेति। न निपातेभ्य इति भिन्ना इति पूर्वेणान्वयः। यादृशार्थकप्रकृत्यन्य इत्यत्र यादृशार्थकपदस्य व्यावृत्तिमाह सुबादयस्त्विति। तथा च "सुसमुच्चरति सुवदेत्या"दौ स्वपरतायां

(१) प्रत्येकभेदस्यैकैकत्र सत्त्वादतिव्याप्तितादवस्थ्यादिति भावः।

तयो न त्वेकत्वाद्यर्थे । तृतीयादौ कर्मत्वादेः सत्यपि लक्षणा न निरूढा, प्रायशः प्रयोगविरहात् । अत एव यत्रास्ति प्रयोगस्तत्र तृतीयादितोऽपि कर्मत्वादेरवगमः, यथा 'पशुना रुद्रं यजत' इत्यादौ । अत एव चान्वर्थ-

---

कृष्णकान्तीटीका ।

छ्वादीनां सामान्यतः प्रकृत्यन्यत्वाभावेऽपि एकत्वाद्यर्थे प्रकृत्यन्यत्वसत्त्वात् एकत्वाद्यर्थे प्रत्ययत्वमस्त्येवेति नाव्याप्तिः । निपातस्य कस्मिन्नप्यर्थे प्रत्ययत्वासम्भवात् तत्र यादृशार्थकत्वं न निविष्टं प्रयोजनाभावादित्यवधेयम् । निरूढलक्षणेत्यस्य व्यावृत्तिमाह—तृतीयादाविति । सत्यपि—विद्यमानापीत्यर्थः । तृतीयादिशक्यस्य करणत्वादेर्यथाकथञ्चित्सम्बन्धस्य कर्मत्वादावनपायादिति भावः । न निरूढा—अनादितात्पर्यमूलिका । तस्या अनादितात्पर्यमूलकत्वनियामकभूरिप्रयोगस्याभावमाह—प्रायश इति । न चाधुनिकलक्षणया यत्र तृतीयादितः कर्मत्वाद्यवगमः तत्र प्रकृतिनिपातभिन्ने तस्मिन् सार्थके प्रत्ययत्वमवश्यं स्वीकार्यमिति तत्राव्याप्तिरिति वाच्यम् । प्रत्ययानामानुशासनिकातिरिक्तलक्षणयाऽबोधकत्वनियमात्, तस्य तादृशार्थकत्वाभावात् । आनुशासनिकी च लक्षणा निरूढैव कोषव्याकरणादीनां प्रशस्तवृत्तिग्राहकत्वादिति भावः । अत एव—भूरिप्रयोगस्य तन्नियामकत्वादेवेत्यर्थः । तृतीयादित इति । निरूढलक्षणया इति शेषः । पशुना रुद्रं यजत इति । पशुं रुद्राय ददातीत्यर्थः । "सम्प्रदानं भवेत् कर्म, कर्म स्यात् करणं यजेः" इत्यनुशासनस्य निरूढलक्षणाग्राहकत्वादिति भावः ।

ननु पशुना इत्यादौ आधुनिकलक्षणया तृतीयादितः कर्मत्वबोधो नतु निरूढलक्षणया, प्रत्ययानां शक्तिनिरूढलक्षणान्यतरवृत्त्या बोधकत्वनियमस्याप्रामाणिकत्वादिति लक्षणे प्रशस्तवृत्तिनिवेशे प्रयोजनविरहोऽव्याप्तिश्च इति तादृशनियमं द्रढयति—अत

रामभद्रीटीका ।

सुप्रभृतेः प्रकृतित्वेऽप्येकत्वाद्यर्थकप्रकृतिभिन्नत्वान्न तादृशार्थकप्रत्ययलक्षणस्यासंभव इति भावः । निरूढलक्षणापर्यन्तानुसरणस्य व्यावृत्तिमाह सत्यपीति । तृतीयादिशक्यं यत्करणादिकं तत्सम्बन्धस्य कर्मत्वादावनपायादिति भावः । न निरूढा—न प्रसिद्धा, न कालत्वव्यापकस्वोपस्थाप्यतादृशार्थबोधजनिकेति यावत् । प्रयोगविरहात्—इत्यस्य कर्मत्वादौ तृतीयादेरित्यर्थः । प्रायश इत्यस्य व्यावृत्तिमाह अत एवेति । "पशुना रुद्रं यजत" इत्यस्य पशुं रुद्राय ददातीत्यर्थः । "सम्प्रदानं भवेत् कर्म कर्म स्यात्करणं यजेरि"त्यनुशासनात् । तत्र कर्मत्वादावेव तृतीयादिप्रयोगादिति भावः । यत एव प्रत्ययानां निरूढयैव लक्षणया बोधकत्वं न तु लक्षणामात्रेणात एव फणिभाष्यमपि संगच्छते इत्याह—अत एवेति । अन्वर्थबलादिति । एकमर्थं वक्तीत्यादि व्युत्पत्तिबलादित्यर्थः ।

बलादेवैकवचनादेरेकत्वादिबोधकत्वप्राप्तौ "द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनमिति" यत् पाणिनिः प्राह, तदिदं द्वित्वैकत्वादावेव द्विवचनैकवचनादिनियमार्थमिति फणिभाष्यकृतः, तेन द्वित्वादावपि नैकवचनादिप्रयोगः प्रमाणम् ।

तद्धिताख्यातकृतोऽप्येतेन व्याख्याताः । तत्रापि शक्तिवन्निरूढलक्षणाया एव प्रत्ययत्वसम्पादकत्वात्, नहि भक्षको दाक्षिः पक्ष्यतीत्यादौ भक्षणादेर्लक्षणया देशाद्यवगमः कृदादितः कस्यापि । स्वार्थिकप्रत्यय-

कृष्णकान्तीटीका ।

**एवेति** । प्रत्ययानां प्रशस्तवृत्त्यैव बोधकत्वनियमस्य प्रामाणिकत्वादेवेत्यर्थः । अन्वर्थबलात्–एकमर्थं वक्तीति योगबलात् । द्व्येकयोर्द्वित्वैकत्वयोर्भावप्रधाननिर्देशादिति भावः । एवमग्रेऽपि । **नियमार्थमिति** । तथा च तादृशनियमानभ्युपगमे द्विवचनादितोऽपि कदाचिदेकत्वादिबोधसम्भवेन तादृशनियमानुपपत्त्या भाष्यकृतां विवरणग्रन्थासङ्गतिरित्युपष्टम्भसङ्गतिरिति भावः ।

चातुर्विध्यं व्यञ्जयंस्तत्रापि लक्षणं सङ्गमयति–तद्धितेति । एतेन–प्रशस्तवृत्त्यैव बोधकत्वेनेत्यर्थः । एवकारेणाधुनिकलक्षणाया व्यवच्छेदः । ननु सुप्प्रत्यये तथानियमसम्भवेऽपि तद्धितादिप्रत्ययादिषु तथानियमासम्भव इत्यत आह–नहीति । भक्षक इत्यत्र कृता भोजनकर्ता प्रतीयते नतु तदधिकरणीभूतदेशः, दाक्षिरित्यादौ दक्षापत्यमेव नतु धनादिकं तद्धितेन, पक्ष्यतीत्यादौ पाकादिनिष्ठभविष्यत्वं नतु वर्त्तमानत्वं आख्यातेन प्रतीयत इति भावः । ननु सनादिस्वार्थिकप्रत्ययेऽव्याप्तिस्तेषां निरर्थकत्वात्, जुगुप्सत इत्यादौ धात्वर्थमात्रस्यैव(१) बोधात् धातुनैव तत्प्रत्यायनात् प्रत्ययस्याकांक्षासम्पादकत्वादित्यत आह–स्वार्थिकेति । जुगुप्सत इत्यादौ सनि, देवता इत्यादौ तलि नाव्याप्तिरित्यर्थः । आहार इत्यादौ कर्मविहितघञः सार्थकत्वा-

रामभद्रीटीका ।

एतेन–सुपां निरूढयैव लक्षणया बोधकत्वेन, व्याख्याताः–निरूढान्यलक्षणया बोधाजनकत्वेन व्याख्याता इत्यर्थः । **तत्रापीति** । तेष्वपीत्यर्थः । प्रत्ययत्वसंपादकत्वात्–प्रत्ययलक्षणघटकत्वात् । भक्षक इत्यत्र भोजनस्य कर्तैव कृदर्थो नतु लक्षणया देशः, दाक्षिः इत्यत्र दक्षस्यापत्यमेव तद्धितार्थो न त्वाधुनिकवृत्त्या देशो धनादिकं वा, पक्ष्यतीत्यत्र पाकस्य भविष्यत्वादिकमेवाख्यातस्यार्थो न तु वर्तमानत्वादिकं देशादिर्वा तत्र शक्तिनिरूढलक्षणयोरन्यतराभावात् । ननु जुगुप्सत इत्यादौ कुत्साद्यर्थस्य गुप्धातुप्रकृतेः पश्चाद्विहितस्य सनादिप्रत्ययस्य निरर्थकत्वात् तत्रोक्तलक्षणाव्याप्तिरत आह स्वा-

(१) कुत्सादेरित्यर्थः ।

मात्रस्य च स्वरूपमर्थः, तेन 'जुगुप्सते देवते'त्यादौ सन्तलादौ नाव्याप्तिः । भावविहितानामपि घञादीनामुक्तैव गतिः, तत्रापि भावपदार्थस्य धात्वर्थस्वरूपपरत्वात्, अन्यथा 'पाकं पश्ये'त्यादौ धात्वर्थस्य पचनादेः कर्मत्वाद्यावन्वयानुपपत्तेः(१), सुबर्थे धात्वर्थस्यान्वयस्याव्युत्पन्नत्वात् । इत्थमेव च 'स्तोकः पाक' इत्यादिप्रयोगस्य परिशिष्टाद्युक्तस्य प्रामाण्यम्,

कृष्णकान्तीटीका ।

दाह—भावविहितानामिति । उक्तैव गतिरिति । स्वरूपार्थकत्वमेव प्रत्ययत्वसम्पादकम्, तत्र "भावे घञ्" इति सूत्रे भावपदस्य स्वरूपपरत्वात् समभिव्याहृतधात्वर्थवृत्त्यसाधारणधर्मपरत्वादित्यर्थः । अन्यथा-घञादेर्निरुक्तार्थकत्वाभावे । अनन्वये बीजमाह—सुबर्थ इति । प्रकारतया इत्यादिः, तेन कर्मत्वादौ धात्वर्थस्य विशेष्यतयाऽन्वयेऽपि न क्षतिः । न च 'अपचमि'त्यत्र अमूरूपाख्यातप्रत्ययेन असात्मकछपोऽपि स्वरूपयोग्यत्वाद्व्यभिचार इति वाच्यम् । छपूजन्यार्थोपस्थितिसहकारेण इत्यस्यापि वक्तव्यत्वात्, तादृशनियमास्वीकारे"ऽपच"मित्यादितोऽपि तादृशबोधः स्यादिति भावः । ननु फलानुरोधान्निरर्थककृदसमभिव्याहृतधातुप्रतिपाद्यार्थप्रकारकसुबर्थविशेष्यकान्वयबोधस्यैवाव्युत्पन्नत्वान्नापत्त्यनुपपत्ती इत्यत आह—इत्थमेव चेति । घञादेः स्वरूपार्थकत्वेनैव चेत्यर्थः । अस्य प्रामाण्यमित्यग्रेऽन्वयः । तादृशप्रयोगेऽप्रामाण्यशङ्कानिरासार्थमाह—परिशिष्टाद्युक्तस्येति । ननु घञो निरर्थकत्वेऽ-

रामभद्रीटीका ।

र्थिकेति । स्वार्थे विहितप्रत्ययमात्रस्यैव चेत्यर्थः । नाव्याप्तिरिति । जुगुप्सत इत्यत्र निन्दास्वरूपकर्तृत्वस्य देवतेत्यत्र च देवतास्वरूपस्य क्रमेण सन्तलाभ्यां बोधनादिति भावः । स्वरूपत्वं चेह उभयावृत्तिधर्मवत्त्वमेव सनाद्यर्थतावच्छेदकं बोध्यम् । स्वार्थिकानामाख्याततद्धितानां प्रत्ययत्वमुपपाद्य तथाविधकृतामपि तदुपपादयति भावेति । आहारेत्यादावकर्तरि कर्मादिकारकविहितघञादेः सार्थकत्वात्तत्राव्याप्तेरयोगात् भावविहितानामित्युक्तम् । उक्तैव गतिरिति । स्वरूपार्थकत्वमेव प्रत्ययत्वसंपादकमित्यर्थः । तत्रापीति । भावे घञित्यादिविधावित्यर्थः । अन्यथा-घञादेः स्वरूपार्थकत्वाभावे । अनन्वयापत्तेरिति । सुबर्थे धात्वर्थान्वयस्याव्युत्पन्नत्वादन्यथा पाकमित्यादितोपि पचनकर्मत्वानुभवापत्तेरिति भावः । ननु सुबर्थकर्मत्वादौ धात्वर्थान्वये निरर्थककृदन्तधातूत्तरसुपस्तन्त्रत्वाद्योक्तातिप्रसंग इत्यत आह इत्थमेव चेति । घञादेः स्वरूपार्थकतायामेव चेत्यर्थः । प्रामाण्यमिति । कृदन्तलभ्ये पाकस्वरूप एव स्तोकपदार्थस्याभेदेनान्वयात्, नामार्थयोरभेदान्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः ।

(१) अनन्वयापत्तेरिति रामभद्रस्याभिमतः पाठोऽत्र द्रष्टव्यः ।

अन्यथा स्तोकादीनां धात्वर्थविशेषणत्वे नियमतो द्वितीयापत्तेः, अत एव "सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतम्" इत्यादिकं काव्यम्(१), "आगमो निष्फलस्तत्र भुक्तिः स्तोकापि यत्र नो" इत्यादिस्मृतिश्च (याज्ञ० स्मृ० व्यव० २७) सङ्गच्छत इति नव्याः।

स्वोत्तरप्रत्ययार्थसाकाङ्क्षस्यैव धातोरर्थे विशेषणतापन्नस्य बोधने तद-

---

कृष्णकान्तीटीका।

पि कथं न तादृशप्रयोग इत्यत आहान्यथेति। घञादीनां निरर्थकत्व इत्यर्थः। कदाचिद्द्वितीयादिसम्वलिततादृशप्रयोगस्य प्रामाण्यात् नियमत इति। द्वितीयापत्तेरिति। अभेदेन धात्वर्थान्वितविशेषणबोधकपदस्य द्वितीयान्तत्वनियमात्, "क्रियाविशेषणानामेकत्वं कर्मत्वं नपुंसकत्वञ्चे"त्यनुशासनादिति भावः। अस्मन्मते स्तोकादीनां यदा धात्वर्थविशेषणत्वे तात्पर्यं तदा स्तोकं पाक इत्येव प्रमाणं, यदा तु घञर्थविशेषणत्वे तात्पर्यं तदा स्तोकः पाक इत्येव प्रमाणमिति पर्यवसितम्। तात्पर्यभेदेन प्रयोगद्वैविध्ये साधकमाह—अत एवेति। उक्तरीत्या तादृशप्रयोगद्वैविध्यादेवेत्यर्थः, अस्य च सङ्गच्छत इत्यत्रान्वयः।

सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतं
हास्यञ्चाधरपल्लवावधि पदन्यासावधि प्रेक्षितम्।
चेतः कान्तसमीहितावधि महामानोऽपि मौनावधिः
सर्वं सावधि नावधिः कुलभुवां प्रेम्णः परं केवलम्॥

इतिसमुदितकाव्यमित्यस्य सङ्गच्छत इत्यत्रान्वयः। साधकान्तरमाह—आगम इति। अन्यथा अवधिशब्दोत्तरं यथा द्वितीया तथा स्तोकादिपदोत्तरमपि स्यात् क्रियाविशेषणत्वाविशेषादिति भावः।

प्राचीनशाब्दिकानां मतमाह—स्वोत्तरेति। स्वं धातुः, तथाच स्वार्थसाकांक्षत्व-

रामभद्रीटीका।

द्वितीयापत्तेरिति। "क्रियाविशेषणानां कर्मत्वमेकत्वं नपुंसकत्वं च" इत्यनुशासनात्, तथा च स्तोकं पाकः इत्येव नियमतः प्रयोगः स्यात् न तु स्तोकः पाक इत्यपीति भावः। यद्यपि पाचकं पश्येत्यादौ कृदन्तस्य पाककर्त्राद्यात्मकतया तदर्थे विशेषणत्वेन धात्वर्थपाकादेरन्यत्रान्वयायोगः इतरविशेषणत्वेन उपस्थितस्यान्यत्रान्वये निराकाङ्क्ष-

---

(१) तथाच 'सञ्चारो रतिमन्दिरावधी'त्यत्रावधिशब्दस्य घञ्प्रत्ययान्तचरधात्वर्थविशेषणत्वात् धात्वर्थविशेषणस्य कर्मत्वमेकत्वनपुंसकत्वञ्चेति नियमान्नपुंसकलिङ्गैकवचनमेकत्वञ्च सङ्गच्छते। एवं 'भुक्तिः स्तोकापी'त्यत्र स्तोकशब्दस्य प्रत्ययार्थविशेषणतया प्रथमापि सङ्गच्छत इति प्रत्ययार्थविशेषणस्य प्रथमान्तत्वं धात्वर्थविशेषणस्यैकत्व कर्मत्वं नपुंसकत्वमिति नियमस्य सर्वसम्मतत्वमिति तात्पर्यम्।

र्थकनाम्नो द्वितीयाद्यपेक्षा न तु धातुमात्रस्य, तथाच स्तोकः पाक इत्यादिरेव प्रमाणं न तु स्तोकं पाक इत्यादिः, 'अपृथग्रूपक्रियाया विशेषणं कर्मे'त्याद्यनुशिष्टेरपि तत्रैव तात्पर्य्यात् । अत एव 'स्तोकं स्थीयते, साधु गतं, चकितं द्रष्टव्यमि'त्यादौ धात्वर्थस्य तिङाद्यर्थकालादिसाकाङ्क्षत्वान्न तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति तु शाब्दिकसम्प्रदायः ।

यच्चु वाक्यपदीये भर्तृहरिणोक्तं—

य: स्वेतरस्य यस्यार्थे स्वार्थस्यान्वयबोधने ।

---

कृष्णकान्तीटीका ।

स्वाव्यवाहतपूर्ववर्तित्वोभयसम्बन्धेन किञ्चित्प्रत्ययविशिष्टस्य धातोरर्थे विशेषणतापन्नस्य बोधे तादृशविशेषणार्थकनामोत्तरं द्वितीया तन्त्रं, न तु धातुमात्रस्य । किञ्चित्प्रत्ययाविशेषितस्य धातोरर्थे इत्यादिकमनुषज्यते, तथाच स्तोकं पचतीत्यादौ पचधातोर्निरुक्तोभयसम्बन्धेनाख्यातविशिष्टत्वात् स्तोकादिशब्दोत्तरं द्वितीयापत्तिः । उपसंहरति—तथा चेति । एवकारव्यवच्छेद्यं स्वयमाह नत्विति । घञादीनामर्थाप्रसिद्ध्या तत्पूर्ववर्तिनः पचादिधातोर्निरुक्तोभयसम्बन्धेन प्रत्ययविशिष्टत्वाभावादिति भावः । ननु "अपृथग्रूपक्रियाविशेषणं कर्म" इत्यनुशासने अपृथग्रूपक्रियेत्यस्य भावविहितप्रत्ययान्तभिन्नधात्वर्थपरत्वेन तत एव स्तोकं पाक इति प्रयोगवारणसम्भवे कथं निरुक्तबोधं प्रति तादृशद्वितीयाया अपेक्षितत्वमुच्यते इत्यत आह—अपृथग्रूपेति । तथाच तादृशानुशासनबलादेव एतादृशापेक्ष्यापेक्षकभावलाभादिति भावः । अपृथग्रूपक्रियेत्यस्य निरुक्तार्थकत्वे दोषमाह—अत एवेति । निरुक्तानुशासनस्य स्वोत्तरप्रत्ययार्थसाकाङ्क्षधात्वर्थविशेषणं कर्मेत्यर्थे तात्पर्यादेवेत्यर्थः । तिङाद्यर्थे इत्यादिना क्त-तव्यादिभावविहितप्रत्ययान्तरपरिग्रहः, कालपदं वर्तमानकालपरम् , आदिनाऽतीतभविष्यत्कालपरिग्रहः, यथाश्रुते आदिपदासङ्गतेः, तथाच स्थीयत इत्यत्राख्यातेन, गतमित्यत्र क्तप्रत्ययेन, द्रष्टव्यमित्यत्र तव्यप्रत्ययेन, यथायथं वर्तमानातीतभविष्यत्कालानां प्रत्यायनादिति भावः । न तद्विशेषणस्य द्वितीयाद्यनुपपत्तिरिति । आदिना तादृशप्रयोगजन्यबोधपरिग्रहः । अन्यथा अपृथग्रूपक्रियेत्यस्य निरुक्तार्थकत्वे उक्तस्थानत्रये स्था-गमि-दृशीनां भावप्रत्ययान्तत्वात् तदर्थविशेषणबोधकस्तोकादिपदोत्तरं द्वितीयया तादृशवाक्यजन्यबोधोऽपि न स्यादिति भावः ।

भर्तृहरिमतं दूषयति—यत्त्विति । य इति । यः शब्दः स्वभिन्नयच्छब्दस्य यादृ-

रामभद्रीटीका ।

त्वात् । तथापि विभक्त्यर्थएकत्वादेरेव तत्र विशेषणतयाऽन्वयापत्तिरेवं पाकद्वयकर्तरि एकस्मिन् चैत्रपाचकौ पश्येत्यादिप्रयोगापत्तिश्च पाकद्वित्वस्याबाधितत्वादिति भावः ।

यदपेक्षस्तयोः पूर्वा प्रकृतिः, प्रत्ययः परः ॥

इति, तद्बहुजादावव्याप्त्यतिव्याप्तिप्रसङ्गादुपेक्षितम् ।

यदपि—

स्वेतरार्थानवच्छिन्नस्वार्थस्यान्वयबोधने ।

योऽसमर्थः सैष शब्दः प्रत्ययोऽयं चतुर्विधः ॥

---

कृष्णकान्तीटीका ।

शार्थधर्मिक-यादृशार्थप्रकारकान्वयबोधे यादृशशब्दसाकांक्षः तयोर्मध्ये पूर्वशब्दः तादृशार्थे प्रकृतिः, परशब्दः प्रत्यय इत्यर्थः । प्रथमं यत्पदं स्वपदञ्च प्रकृतित्वेनाभिमतपरम् , द्वितीयं यत्पदं प्रत्ययत्वेनाभिमतपरम् , तृतीयं यत्पदं प्रत्ययपरम् । केचित्तु एतद्वैपरीत्यमित्याहुः । घट इत्यादिवाक्यजन्यमेकत्ववान् घट इतिबोधमादाय लक्षणमपि सङ्गमयन्ति । तेषां धातौ लक्षणसङ्गमप्रकारः पुनः पर्यालोचनीय इति । बहुजादाविति । लक्षणे पूर्वत्व-परत्वयोरनिवेशे बहुजादावतिव्याप्तेरसम्भवादादिपदमुपात्तम् । आदिना पचतिकल्पमित्यादिस्थलीयकल्पादिपरिग्रहः, तत्रापि कल्पार्थे पचतीत्यस्य प्रकारतयाऽभानात् प्रत्यये प्रत्ययलक्षणस्य प्रकृतौ प्रकृतिलक्षणस्य चाव्याप्तिसम्भवात् । अव्याप्तिप्रसङ्गादिति । इदमुपलक्षणम् , बहुचि कल्पप्रत्यये च प्रकृतिलक्षणस्यातिव्याप्तिरपि बोध्या । केचित्तु गुडादौ प्रत्ययलक्षणातिव्याप्तेः प्रकृतिलक्षणस्य चाव्याप्तेः, बहुचि प्रकृतिलक्षणस्यातिव्याप्तेश्चोपलक्षकतया तादृशग्रन्थं वर्णयन्ति । तन्मन्दम् । प्रकृतिलक्षणे प्रकारताया निवेशितत्वात् तादृशदोषाणामसम्भवात् पूर्वत्वपरत्वनिवेशे गौरवमिति भावः । विषयतामात्रनिवेशे सर्वत्रैव प्रकृतिलक्षणस्य प्रत्यये प्रकृतौ च प्रत्ययलक्षणस्यातिव्याप्त्यापत्तेरिति ध्येयम् ॥

उमापतिसेनमतमुपन्यस्य निरस्यति—यदपीति । स्वेतरार्थानवच्छिन्नेति । तथाच यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वेतरशब्दवृत्तिज्ञानजन्यस्वार्थान्योपस्थितत्वंप्रयोज्ययादृशस्वार्थनिष्ठप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्नविशेष्यताशालिशाब्दत्वव्यापकजन्यतानिरूपितजनकतानवच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थकप्रत्ययत्वमिति । प्रत्येकपदव्यावृत्तिस्तु पूर्ववदवसेया । चतुर्विध इति । सुप्-तिङ्-

रामभद्रीटीका ।

य इत्यादि । यः शब्दः स्वभिन्नस्य यत्शब्दस्यार्थे धर्मिणि स्वार्थस्यान्वयबोधने कर्तव्ये स्वेतरयत्शब्दसापेक्षस्तयोः शब्दयोर्मध्ये पूर्वः शब्दः प्रकृतिः, परः शब्दः प्रत्यय इत्यर्थः । बहुजादाविति । 'बहुगुडो द्राक्षे'त्यादौ बहुचि प्रत्ययलक्षणस्याव्याप्तिरतिव्याप्तिश्च गुडादौ, एवं तत्रत्यगुडपदे प्रकृतिलक्षणस्याव्याप्तिरतिव्याप्तिश्च बहुचीत्यर्थः ।

शाब्दिकस्योमापतिसेनस्य मतमुपन्यस्यति यदपीति । शब्दान्तरार्थविशिष्टस्य स्वार्थस्य धर्म्यन्तरेऽन्वयबोधं प्रति य शब्दः स्वरूपायोग्यः स प्रत्ययः, एष च सुप्-

इत्युमापत्युक्तम् । तदप्ययुक्तम्, सुप्तिङोः पदार्थान्तरावच्छिन्नस्वार्थसंख्यादिप्रकारकबोधसमर्थत्वेन तयोस्तव्यादौ चाव्याप्तेः । 'सैष' इत्यत्र लुप्तविभक्तिकस्यापि सस्य पाद(१)पूरणे पुनः सन्धिः, 'सैष दाशरथी राम' इत्यादिवत् ॥ ९ ॥

लाघवादन्यथा निर्वक्ति--

**(२)इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः ।**
**तिङर्थस्य निभाद्यन्यः स वा प्रत्यय उच्यते ॥१०॥**

यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्मिणि तिङर्थस्यान्वयबोधने स्वरूपायोग्यः, स वा निभादिशब्देभ्यो भिन्नस्तादृशार्थे

कृष्णकान्तीटीका ।

कृत्तद्धितभेदादित्यादिः । सुप्तिङोरिति । बोधसमर्थत्वेनेति परेणान्वयः । संख्यादीत्यादिना वर्तमानभविष्यत्वादिपरिग्रहः । तव्यादीत्यादिना क-प्रकर्षार्थकतरतमादिपरिग्रहः । ननु "न विसर्जनीयलोपे पुनः सन्धिः" इतिसन्धिनिषेधात् कथं सैषेति प्रयोगः इत्यत आह—सैषेति । पुनः सन्धिरिति । "सस्य पादपूरणे" इतिपरिशिष्टानुशासनादिति भावः । दार्ढ्यार्थं प्रयोगान्तरमपि दर्शयति सैषेति ॥ ९ ॥

उक्तलक्षणे प्रकृतिभेदस्य निवेशात् प्रकृतित्वस्यातिगुरुत्वाच्चातो लाघवस्यैव लक्षणान्तरानुसरणबीजत्वमाह—लाघवादिति ।

इतरेति । तथाच यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वेतरशब्दवृत्तिज्ञानजन्योपस्थितिप्रयोज्यावच्छेदकत्वानिरूपक-यादृशस्वार्थनिष्ठविशेष्यतानिरूपिततिङर्थप्रकारताशालि शाब्दत्वव्यापकजन्यतानवच्छेदकं निभादिनिपातभिन्नत्वे सति तादृशानुपूर्वीमत्त्वं तादृशार्थकप्रत्ययत्वमिति पर्यवसितार्थः, स्वोक्तविवरणस्य एतादृशार्थ एव तात्पर्यात् । एतल्लक्षणे प्रकृत्यन्यत्वानिवेशात् प्रकृतावतिव्याप्तिरिति तद्वारणाय विशेषणान्तरदाने क्व लाघवम् ? इत्याशङ्क्या प्रथमत एव

रामभद्रीटीका ।

तिङ्कृत्ताद्धितभेदाच्चतुर्विध इत्यर्थः । तयोः—सुप्तिङोः । इदमुपलक्षणम्—पटुतर इत्यादौ तरप्प्रभृतितद्धितेऽप्यव्याप्तिर्बोध्या । स एष इत्यत्र विसर्जनीयलोपे पुनः संयोगादाह सैष इतीति । पादस्य—श्लोकचरणस्य । पुनरिति । 'सस्य पाद पूरण' इत्यनुशासनादिति भावः । इत्यादीत्यादिपदेन 'सैष राजा युधिष्ठिर' इत्याद्युपग्रहः ॥ ९ ॥

(१) अत्र 'पादस्य' इति रामभद्राभिमतः पाठो द्रष्टव्यः ।

(२) स्वेतरार्थाविशेषितस्वार्थबोधजनकस्वरूपयोग्यत्वाभाववान्निपाताद्यतिरिक्तः शब्दः प्रत्यय इति कारिकार्थः ।

प्रत्यय इत्यर्थः । 'चैत्रोऽस्ती'त्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम् । एवं 'यजेत स्थीयते'इत्यादौ यजादिधातूनाम् । 'पच-

कृष्णकान्तीटीका ।

तत्रातिव्याप्तिं निराकरोति-चैत्र इति । नाम्नामिति बोधकत्वमित्यत्रान्वयि । नामधातुभेदेन प्रकृतेर्द्वैविध्यात् नाम्नि अतिव्याप्तिं निरस्य धातौ तां निरस्यति–एवमिति । यजादिधातूनामिति । अर्थान्तरानवच्छिन्ने स्वार्थे तिङर्थान्वयबोधकत्वमित्यनुषज्यते, इति नातिप्रसङ्ग इत्यन्ते पूरणीयम् । तथाच चैत्रोऽस्तीत्यादितः वर्तमानकालसम्बन्धाश्रयतावांश्चैत्र इति बोधोदयात् आश्रयत्वरूपतिङर्थस्यार्थान्तरानवच्छिन्ने चैत्रे भानात्, यजेतेत्यादौ तिङर्थेष्टसाधनत्वादेस्तादृशि स्वार्थे यागादौ भानात्, स्थीयते इत्यादौ तिङर्थवर्तमानत्वादेस्तादृशि स्वार्थे स्थित्यादौ भानात्, तादृशतादृशानुपूर्वीप्रकारकनिश्चयत्वस्य तादृशतादृशबोधजनकतावच्छेदकत्वान्नातिप्रसङ्ग इति भावः । इष्टसाधनत्ववर्तमानत्वभेदेन तिङर्थस्य द्वैविध्येन स्थलद्वयोपादानम् । सकर्मकाकर्मकभेदेन धातोर्द्वैविध्यात् स्थलद्वयोपादानमित्यप्याहुः । नच तिष्ठतीत्यादावपि तादृशस्थितौ वर्तमानत्वभानात् भावविहितपर्यन्तानुधावनं व्यर्थं, तत्राख्याताश्रयत्वे तदन्वयस्वीकारे अतीतस्थितितात्पर्येणापि तिष्ठतीति प्रयोगापत्तेः आश्रयत्वस्याधिकरणतारूपस्य समवायरूपस्य वर्तमानत्वा'दिति वाच्यम् । तत्र हि वर्तमानत्वादेः कर्तर्येवान्वयेन धात्वर्थे तिङर्थान्वयबोधजनकत्वस्यासम्भवादिति तत्स्थलमुपेक्षितम् । अन्यथा कपाले घटस्तस्थौ इत्यत्र तिष्ठतीतिप्रयोगापत्तेः, समवायस्यैव तत्र स्थाधात्वर्थतया वर्तमानत्वाक्षतेः । एवमतीतकालवृत्ति-नाशतात्पर्येणापि नश्यतीति प्रयोगापत्तेः, अतीतकालवृत्तिनाशस्यापि वर्तमानकालवृत्तित्वात् । स्थीयत इत्यादौ च प्रत्ययार्नां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः आख्यातार्थनामार्थयोरन्वये प्रथमान्तपदजन्यनामोपस्थितेस्तन्त्रत्वाच्च वर्तमानत्वस्य स्थितावेवान्वयात्, अतीतकालवृत्तिस्थितितात्पर्येणापि कपाले स्थीयते इत्यप्रयोगस्येष्टत्वात् युक्तेस्तौल्यात्, अतीतघटतात्पर्येण कपाले घटेन स्थीयत इति प्रयोगस्य तादृशघटवृत्तित्वविशिष्टस्थितौ वर्तमानवृत्तित्वबोधेनाप्रामाण्यात् । न च 'स्थीयत' इत्यादौ घटेनेत्यध्याहारात् घटाद्यवच्छिन्नायामेव स्थितौ वर्तमानत्वान्वयात् कुतस्तादृशबोधजनकत्वमादायातिव्याप्तिवारणमिति वाच्यम् । अध्याहारस्य शाब्दानुपपत्तिप्रयोज्यत्वात्, तत्र स्थितिर्वर्तमाना इत्यन्वयबोधने बाधकाभावात् । अत एव स्थीयत इत्येवोक्तम्, इत्यलमधिकेन ॥ अनवच्छिन्नान्तव्यावृत्तिमभिदधान एव लक्ष्येषु लक्षणं सङ्गमयति–

रामभद्रीटीका ।

नाम्नामिति । नामधातुभेदेन प्रकृतिद्वैविध्यादाह–एवमिति । यजेतेत्यत्र याग इष्टसाधनमिति भावः । धातूनामिति । न प्रसङ्ग इति पूर्वेणान्वयः । लक्ष्ये

ती'त्यादौ तिङां 'पाचकोऽस्ती'त्यादौ कृतां 'काश्यपिरि'त्यादौ च तद्धितानाम् प्रकृत्यर्थावच्छिन्न एव स्वार्थे कृत्यादौ तिङर्थस्य वर्त्तमानत्वादेर्बोधकत्वं न तु तदनवच्छिन्न इति तेषु नाप्रसङ्गः । निभानिपातादिकस्तु शब्दान्तरार्थानवच्छिन्ने सदृशसमुच्चयादिस्वार्थे तिङर्थस्यान्वयबोधं प्रति स्वरूपायोग्योऽपि निभादिरेवेति न तत्र प्रसङ्गः ॥ १० ॥

निपातं लक्षयति—

(१)स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयाक्षमः ।
सुबाद्यन्यो निपातोऽसौ विविधश्चादिभेदतः ॥११॥

---

कृष्णकान्तीटीका ।

पचतीत्यादाविति । षष्ठ्यन्तपदोपस्थाप्यानां त्रयाणां प्रकृत्यर्थावच्छिन्नेत्यादिग्रन्थप्रतिपाद्यतादृशबोधकत्वेऽन्वयः । कृत्यादावित्यादिपदात् कर्त्रपत्ययोः परिग्रहः, तथाच पचतीत्यादौ तिङां पाकावच्छिन्न एव स्वार्थे यत्ने, पाचकोऽस्तीत्यादौ कृतां पाकावच्छिन्न एव स्वार्थे कर्तरि, काश्यपिरस्तीत्यादौ कश्यपावच्छिन्न एव स्वार्थेऽपत्ये तिङर्थस्य वर्तमानत्वाश्रयत्वादेर्बोधकत्वमित्यर्थः । नाप्रसङ्गो—नाव्याप्तिः । सुबादिप्रत्ययश्च इतरार्थविशेषितेऽपि स्वार्थे तिङर्थान्वयबोधाक्षम एवेति तत्र तद्व्यावृत्त्यसम्भवात् तन्नोक्तमिति । निभाद्यन्यत्वनिवेशप्रयोजनमाह—निभेति ॥ निभादिरेवेति । ननु निभादितो भिन्न इत्यर्थः । तादृशबोधे तिङर्थप्रकारत्वानिवेशे द्वितीयादिविभक्तेः स्वार्थधर्मिकघटाद्यन्वयबोधकत्वेनाव्याप्तिः,प्रत्ययार्थानिवेशे आत्माश्रयापत्तिः, प्रकृत्यन्यस्वार्थकत्वेन तन्निवेशे गौरवं, पाचकोऽस्तीत्यादौ कृदर्थे स्वार्थबोधकाख्याते अव्याप्तिरिति तिङर्थनिवेशः ॥ १० ॥

निपातमिति । क्रमप्राप्तमित्यादिः ।

रामभद्रीटीका ।

लक्षणं योजयन् इतरार्थाऽनवच्छिन्न इत्यस्य व्यावृत्तिमाह—पचतीत्यादावित्यादिना । तत्र पाकानुकूलकृतौ वर्तमानत्वस्य तिङर्थस्यान्वयादिति भावः । कृतीत्यादिना कर्त्रादेरुपग्रहः । वर्तमानत्वादिना आश्रयत्वादेः परिग्रहः । तदनवच्छिन्ने—प्रकृत्यर्थानवच्छिन्ने स्वार्थे ।नाप्रसङ्गो—नाव्याप्तिः । निभाद्यन्यत्वस्य फलमाह—निभेत्यादिना । निभादिरेवेति । तथाच तदन्यत्वविरहादेव तत्र निभादौ न प्रसङ्गो नातिव्याप्तिरित्यर्थः ॥१०॥

अन्वयः—सम्बन्धः ।

---

( १ ) यादृशार्थे शब्दान्तरार्थस्याभेदेनान्वयबोधजननायोग्यः सुबादिभिन्नो निपातश्चादिभेदेनानेकविध इति कारिकार्थः ।

यः शब्दः केवले यादृशस्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयबोधं प्रत्य-समर्थः सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नः स तादृशार्थे निपातः । चादयो नि-पाताः स्वार्थे समुच्चयादौ नामाद्यर्थस्याभेदेनान्वयबोधं प्रत्ययोग्याः, नहि स्मृ-तमनुभूतश्चेत्यादितः कस्यापि स्मृतः समुच्चय इत्यादिरनुभवः, किन्तु स्मृ-तानुभूतयोः समुच्चय इत्यादिरेव । स्तोकं पचतीत्यादौ धातुरपि स्वार्थे नामार्थ-

---

कृष्णकान्तीटीका ।

तात्पर्यार्थमाह—यः शब्द इति । केवले—इतरार्थानवच्छिन्ने, यादृशस्वार्थ इत्यस्य स्वोपस्थाप्य इत्यादिः, तथाच यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वेतरशब्दवृत्तिज्ञानजन्यो-पस्थितिप्रयोज्यावच्छेदकत्वानिरूपितस्ववृत्तिज्ञानजन्योपस्थितिप्रयोज्ययादृशार्थविशे-ष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारताशालिशाब्दत्वव्यापकजन्यतानिरूपित-जनकतावच्छेदकमेवंभूतं यद्रूपवत् स्वं, तादृशार्थकतत्तदन्यत्वे सति सुबादिभिन्नत्वे सति तदर्थसार्थकत्वं तादृशार्थकनिपातत्वम् इति पर्यवसितम् । अतः शपश्यनादीनां तादृश-भेदवत्त्वेऽपि न क्षतिः । एवंभूतं स्वं स्मृतः समुच्चय इत्यादिस्थलीयसमुच्चयेत्यानुपू-र्वीविशिष्टादिकं, तत्तदन्यत्वस्य चकारादौ सत्त्वाल्लक्षणलत्वम् । अनयैव दिशा योग्यताघटितलक्षणं परिष्कार्यम् । प्रत्ययलक्षणे निपातान्यत्वस्य निविष्टत्वात् नि-पातलक्षणे प्रत्ययत्वावच्छिन्नभेदनिवेशेऽन्योन्याश्रय इति सुप्तिङ्त्वादिप्रत्येकधर्माव-च्छिन्नप्रतियोगिताकभेदान् निवेशयति—प्रत्येकमिति । फलमुखगौरवस्यादोषत्वा-दिति भावः । लक्ष्ये लक्षणं सङ्गमयति—चादय इति । नामाद्यर्थस्येति । आ-दिना सार्थकान्तरपरिग्रहः । अयोग्या इति । तेषु लक्षणसमन्वय इति शेषः । तेषां तादृशबोधजनकत्वमेवानुभवेन द्रढयति-नहीति । अनुभव इत्यस्य लोकानामिति शेषः । इत्यादिरेवेति । अनुभव इत्यनुषज्यते । प्रकृत्यादावलक्ष्ये लक्षणागमनं व्यञ्जयति-स्तोकमिति । आदिपदात् नीलो घट,इत्यादिस्थलपरिग्रहः । अपिकारात घटादिनामप-रिग्रहः, तेन धातोरिव नाम्नोऽप्यलक्ष्यत्वाविशेषात् तदनुक्त्या न्यूनत्वेऽपि न क्षतिः ।

रामभद्रीटीका ।

तदक्षमत्वं प्रकृत्यादेरपीत्यत उक्तम्—अन्वयबोधं प्रतीति । सुबादीत्या-दिपदार्थं विवृणोति प्रत्ययेभ्यः इति । प्रकृतिनिपातान्यप्रशस्तवृत्तिमत्वलक्षण प्रागुक्तप्रत्ययत्वावच्छिन्नभेदस्य निवेशेऽन्योन्याश्रयः स्यात् अत उक्तं प्रत्येकमिति । सुप्तिङ्त्वादिप्रत्येकधर्मावच्छिन्नभिन्न इत्यर्थः । लक्ष्येषु लक्षणं योजयति चादयो ही-ति । नामादीत्यादिना धातुनामप्रत्ययानामुपग्रहः । इत्यादिरेवेति । अनुभव इति पूर्वेणान्वयः । आदिना स्मृतमनुभूतं समुच्चितमित्याकारकस्योपग्रहः । नन्विदं स्वार्थे तादात्म्येनार्थान्तरबोधासमर्थे धातौ गतमत आह—स्तोकमित्यादि । सुबाद्यन्य इत्य-

स्य तादात्म्यं बोधयंस्तत्समर्थ एव। प्रत्ययस्तु सुबादिरेव। चःशब्द इत्यादौ नामार्थस्याभेदसाकाङ्क्षश्चकारादिः स्वपरतायां न निपातः किन्तु नामैव (तथा सुबादिरपीति)। पुरन्दरप्रभृतौ तु नाम्नि निपातव्यपदेशः सूत्रानि-

कृष्णकान्तोटीका।

स्वार्थे-पाकघटादौ, नामार्थस्य-स्तोकनोलादेः। इदं वस्तुगतिमनुरुध्योक्तं लक्षणे नामार्थस्यानिवेशात्। तादात्म्यमिति। संसर्गतयेत्यादिः। सुबादिरेवेति। तथाच द्वितीयसत्यन्ताभावात् न तत्र लक्षणसमन्वय इति भावः। स्वार्थशब्दस्य यादृशस्वार्थपरतया व्याख्यानप्रयोजनमाह—चःशब्द इति। स्वपरतायां-स्वात्मकवर्णपरतायाम्। न निपातो-न निपातलक्षणलक्ष्यः। तथाच यादृश इत्यस्यानिवेशे उक्तरीत्या निपातमात्रेऽसम्भवः, तन्निवेशे च लक्ष्यलक्षणयोरर्थविशेषघटितत्वात् तादृशार्थे तेषामलक्ष्यत्वान्नासम्भवः, एकत्वार्थनिवेशस्याव्यावर्तकत्वादिति भावः। ननु किञ्चकारादिस्तादृशार्थे सार्थक एव न तदवान्तरधर्माभावात, अत आह—किन्त्विति। ननु सुप्शब्द इत्यादौ, सुबादेरपि तादृशबोधजनकत्वात् कुतस्तद्वारणाय सुबादिभेदनिवेश इत्यत आह—तथेति। स्वपरतायां न निपात इति तदर्थः। तथाचैकत्वादिपरसुबादिवारणार्थमेव तन्निवेश इति भावः। अयं पाठः क्वाचित्कः सन्दर्भविरुद्धश्च, निपातशब्दस्य निपातलक्षणलक्ष्यपरतया तदुत्तरतथाशब्देनापि तद्बोधस्यानुभविकत्वात् अतिव्याप्तेरलक्ष्यतया वारणस्यात्यन्तासम्भावितत्वाच्च तथेत्यस्य 'अगच्छन्निपातलक्षणक' इत्यर्थपरतायाः सन्दर्भविरुद्धत्वादिति ध्येयम्। तादृशबोधजनके पुरन्दरादिनिपातेऽव्याप्तिमलक्ष्यतया परिहरति-पुरन्दरेति। प्रभृतिपदात वाचंयम इत्याद्युपग्रहः। नामत्वज्ञापनाय नाम्नीत्युक्तम्। निपातव्यपदेशो-निपातपदप्रयोगः। सूत्रानिष्पाद्यत्वे प्रयोगप्रयोजकत्वं ज्ञानद्वारा बोध्यम्। वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वादिति भावः। तथाच निपातशब्दस्य सूत्रानिष्पाद्यत्वे लक्षणा। इदञ्च दुर्गसिंह-कुमरनन्दिमताभिप्रायेण, अन्यमते तेषां सूत्रनिष्पाद्यत्वात्। केवल इत्यस्य व्यावृत्तिमाह—

रामभद्रीटीका।

स्य व्यावृत्तिमाह—प्रत्ययस्त्विति। सुबादिरेवेति। तथाच तदन्यत्वविरहान्न तत्रातिव्याप्तिरिति भावः। स्वार्थशब्दस्य यादृशस्वार्थपर्यन्तपरतयाः प्रयोजनमाह चःशब्दः इत्यादाविति। ननु सुर्विभक्तिरित्यादौ स्वार्थे शब्दन्तरार्थस्य तादात्म्येनान्वयबोधक्षमत्वादेव प्रत्ययेऽतिव्याप्तिवारणात् सुबाद्यन्यत्वदलं व्यर्थमत आह तथा सुबादिरपीति। अयं पाठः क्वाचित्कः। सुबादिरपि स्वपरतायां न निपात इत्यर्थः। तथा चैकत्वादिपरतायामेव सुबादेर्निपातत्ववारणार्थं सुबाद्यन्यत्वमिति भावः। ननु पुरन्दरो देव इत्यादौ पुरन्दरादिशब्दस्य स्वार्थे देवतादेस्तादात्म्येनान्वयक्षमत्वात्तत्राव्याप्तिरतस्तस्य लक्ष्यतया निराकुरुते पुरन्दरप्रभृताविति। प्रभृतिपदाद्वाचंयमेत्याद्युप-

ष्पाद्यत्वप्रयुक्तो भाक्तः(१)। "कार्त्तिक्यादौ यन्न दानं तदत्यन्तविनिन्दित"-मित्यादौ न केवले नञर्थे यदर्थस्य तादात्म्येनाऽन्वयः, किन्तु दानाद्यवच्छिन्ने। स्वर्दिवा नक्तमाद्यव्ययमपि नामैव न तु निपातः, शोभनं स्वरित्यादौ तदर्थे नामार्थस्य तादात्म्येनान्वयात्। प्रादयस्तूपसर्गा न सार्थकाः, सार्थकाश्चेन्नि-

कृष्णकान्तीटीका।

कार्त्तिक्यादाविति। नञर्थेऽभावे, यदर्थस्य—दानाभावस्य। तादात्म्येनान्वय इति। कार्त्तिकीवृत्तिदानाभावरूपो यो दानाभावः सोऽत्यन्तविनिन्दित इत्यन्वयबोधादिति भावः। दानाद्यवच्छिन्न इति। नञर्थ इत्यनुषज्यते। इदमत्रावधेयम्। उद्देश्यविधेयभावे वैपरीत्ये न कोऽपि दोषः, यो यो धूमवान् इत्यादौ सर्वत्र यदर्थस्यैवोद्देश्यत्वात्। एवं यदर्थस्य विधेयत्वे उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्यात् तत्र न तथाविधशाब्दबोधोऽपि इति कुतस्तत्र तद्व्याप्तिः। न च लक्षणे स्वार्थनिष्ठविशेष्यता न विवक्ष्यते किन्तु विशेष्यतामात्रं, तथाचोक्तस्थले यदर्थे नञर्थस्यान्वयसम्भवः नञ्यैर्विधेयांशेऽधिकावगाहिनो दण्डवान् रक्तदण्डवानितिबोधस्य स्वीकारादिति तत्र तद्व्याप्तिसङ्गतिरिति वाच्यम्। तथासति नञर्थे यदर्थस्येति लिखनासङ्गतेः, एवं विशेष्यतानिवेशेनैव दोषवारणसम्भवे गुरुतरतादृशविशेषणस्य यथाश्रुतनिवेशेनावयव्यर्थेऽपि अनतिप्रयोजनकत्वस्य दुर्वारत्वाच्चेति। ननु शोभनं स्वरित्यादौ स्वरादिशब्दस्य तादृशान्वयबोधजनकत्वात्, तत्राव्याप्तिमलक्ष्यतया परिहरति—स्वर्दिवेत्यादि। नतु निपातलक्ष्यमित्यर्थः। तेषामलक्ष्यत्वे बीजमाह—शोभनमिति। अन्वयादिति। तथाच निरुक्तबोधाक्षमस्यैव तल्लक्षणलक्ष्यत्वमिति भावः। विशेष्यदलव्यावृत्तिमाह—प्रादयस्त्विति। न सार्थका इति। तथाच तत्र नातिव्याप्तिरिति भावः। यदि च प्रणमतीत्यादौ प्रादिशब्देनैव प्रकर्षादिप्रतीतिव्युत्पत्तिवैचित्र्याच्च नामार्थधात्वर्थयोर्भेदान्वयसम्भव इति मन्यते तदाऽप्याह—सार्थकाश्चेदिति।

रामभद्रीटीका।

प्रहः। इदन्तु दुर्गमते, जुमरनन्दिमते तेषां सूत्रानिष्पाद्यत्वाभावात् इति ध्येयम्(२)। केवले इत्यस्य व्यावृत्तिमाह कार्त्तिक्यादाविति। ननु शोभनं स्वरित्यादौ स्वार्थे स्वर्गादौ शोभनादेस्तादात्म्येनान्वयक्षमत्वात् स्वःप्रभृतिनिपाताव्याप्तिरतस्तस्याप्यलक्ष्यत्वमाह स्वर्दिवेत्यादिना। नन्विदं प्राद्युपसर्गेऽतिव्याप्तं तदर्थे तादात्म्येन कस्याप्यनन्वयात् अत आह प्रादयस्त्विति। न सार्थका इति। तथाच तदर्थाप्रसिद्ध्यैव न तत्रातिव्याप्तिरिति भावः। ननु प्रबलमधिज्यामित्यादौ प्रादितः प्रकर्षाद्यर्थबोधादवश्यं प्रादेः सार्थकत्वम् अत आह सार्थकाश्चेदिति। प्रादय इत्यनुषज्यते। तथाच प्रक-

(१) भाक्त इति। तथा च 'पुरन्दरः शक्र' इत्यादौ पुरन्दरार्थे शब्दान्तरार्थेन्द्रस्याभेदेनान्वयस्वीकारेपि तस्य निपातत्वाभावान्नाव्याप्तिरित्यर्थः।

(२) एतद्व्याख्यानमेव साधु न कृष्णकान्तस्य जुमरनन्दिमतेपि सूत्रोपलब्धेरिति।

पाता अपि । जातौ सत्ता नास्तीत्यत्र सत्तायां जातिवृत्तित्वस्य समवेतत्वनिरूपितस्वरूपसम्बन्धेनात्यन्ताभावो नञा प्रत्याय्यते, न तु सत्त्वस्याभावः प्रथमान्तपदानुपस्थाप्यत्वेन नञर्थे तत्रास्तित्वादिक्रियान्वयस्यायोगात्, जातौ जाती न स्त इत्यत्र जातिद्वयत्वावच्छिन्नाभावस्यैकत्वेन तत्र तिङर्थद्वित्वस्य पर्याप्तिबाधेनान्वयासम्भवाच्च । सत्ता

कृष्णकान्तीटीका ।

तथाच तेषां निपातत्वमिष्टमेवेति भावः । ये तु एतल्लक्षणे स्वत्वमनुयोगिनि निवेशयन्ति एतद्ग्रन्थमपि स्वार्थनिवेशव्यावृत्तिपरतया वर्णयन्ति । तेषां मते विशेष्यदलानिवेशप्रयुक्तलाघवस्य स्वत्वघटितत्वनिवेशनिबन्धनगौरवेण दूरीकृतत्वान्मदुक्तगतिरेव सम्यक्पदमादधातीति । ननु स्वरादिशब्दवत् नञादिर्नामैव, कथमन्यथा जातौ सत्ता नास्तीत्यादौ सत्ताभावे जातिवृत्तित्वाश्रयताबोधः नाम्नि आख्यातार्थद्वारा क्रियान्वये प्रथमान्तपदोपस्थाप्यत्वस्य तन्त्रत्वात्, प्रकृते सप्तम्यर्थनिरूपितत्वान्वितधात्वर्थवृत्तित्वान्विताख्यातार्थस्य नञर्थेऽन्वयासम्भव इति नञादेरलक्ष्यतया तन्नाव्याप्तिवारणायोपात्तस्य केवले इत्यस्य वयर्थ्यमित्यत आह—जाताविति । एकार्थसमवायसम्बन्धेन जातिवृत्तित्ववतां जातौ जातिवृत्तित्वसामान्यभावस्य सत्वात् तत्र तदवगाहने भ्रमत्वापत्तिरतः समवेतत्वेति । समवायसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । नत्विति । समवायेनेत्वादिः, नञा प्रत्याय्यते इत्यनुषज्यते । तत्र—सत्ताभावे । क्रियान्वयस्यायोगादिति । आख्यातार्थद्वारा इत्यादिः । तत्र प्रथमान्तपदोपस्थाप्यत्वस्य तन्त्रत्वादिति भावः । एतादृशबोधेऽनुभवदार्ढ्यार्थं विपरीतबोधे बाधकमाह—जाताविति । एकत्वेनेति । द्वित्वावच्छिन्नाभावस्यातिरिक्ततया मणिकृतैव व्यवस्थापितत्वात्, अ-

रामभद्रीटीका ।

र्थाद्यर्थे प्रादेर्निपातत्वमिष्टमेवेति भावः । ननु नञादिनिपातानां प्रकृत्यन्यत्वे विभक्त्यन्तत्वाभावात् जातौ सत्ता नास्ति इतिवाक्यात् सत्ताभावो जातिनिरूपिताधेयताश्रयतावान् इत्यन्वयबोधो न स्यात् नञः प्रथमान्तत्वाभावेन तदर्थे तिङर्थाश्रयत्वलक्षणभावनाया अन्वयायोगादत आह जातौ सत्तेत्यादि । जातिवृत्तित्वस्य—जातिनिरूपिताधेयताश्रयत्वस्य । एकार्थसमवायादिसम्बन्धेन जातिवृत्तित्वस्य सत्तायां सत्त्वादाह समवेतत्वनिरूपितेति । समवायसम्बन्धावच्छिन्नाधेयतानिरूपितस्वरूपसम्बन्धेनेत्यर्थः । न तु सत्त्वस्याभाव इति । नञा प्रत्याय्यत इत्यनुषज्यते । तत्र—सत्ताभावे, क्रियान्वयस्य—क्रियापदोपस्थाप्यार्थान्वयस्य । भावनासम्बन्धेन धात्वर्थस्यैव नामार्थेऽन्वय इति मतेनेदम् । ननूक्तवाक्यात् सत्त्वाभावो जातिवृत्तिताश्रयतावानित्यनुभवस्य सर्वसिद्धत्वात् तदनुरोधेनावश्यं नञः प्रथमान्तत्वं वाच्यम्, अतस्तादृशानुभवे बाधकान्तरमाह—जाता-

(१)समवायेन जातौ नास्तीत्यादौ तु समवेतत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वे समवायशब्दस्य लक्षणा(२), परेषामपि सत्ताभावस्य समवायावच्छिन्नत्वासम्भवेन समवायावच्छिन्नप्रतियोगिताकत्वे तल्लक्षणाया

कृष्णकान्तीटीका।

भावद्वयावगाहने प्रत्येकवति तादृशप्रतीतेर्भ्रमत्वापत्तिरिति भावः। तथाच प्रथमाद्विवचनप्रतिपाद्यद्वित्वस्यावच्छेदकतया भाने वर्तमानद्विवचनप्रतिपाद्यद्वित्वस्य पर्याप्तिसम्बन्धेन भानासम्भवात्, सम्बन्धान्तरेण तदन्वयस्वीकारे चातिप्रसङ्गादिति भावः। अस्माकन्तु प्रथमाद्विवचनान्तपदोपस्थाप्ये जातिद्वये निरुक्तसम्बन्धेन जातिवृत्तित्वाभावस्य तिङर्थद्वित्वस्य चान्वयबोधकत्वादिति भावः। इदं पुनरिहावधेयम्। एतन्मतेऽपि द्वित्वविशिष्टे द्वित्वभानासम्भवात् "सम्भेदे नान्यतरवैयर्थ्य"(३)मिति न्यायेन द्वित्वस्यैकदैव भानस्वीकारात् तन्मतेऽप्याख्यातार्थद्वित्वस्य तत्र भाने क्षतिविरह इति। ननु समवायेन जातौ सत्ता नास्तीत्यादौ तादृशसम्बधावच्छिन्नजातिवृत्तित्वस्याप्रसिद्ध्या भवदुक्तबोधानुपपत्तिः, अस्मन्मते च तत्र समवायावच्छिन्नसत्ताभावे जातिवृत्तित्वावगाहे नान्वयानुपपत्तिरत आह—सत्ता समवायेनेति। लक्षणेति। तथाच व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकजातिवृत्तित्वाभावावगाहितया तादृशबोधस्य प्रमात्वेन न तादृशवाक्यस्याप्रामाण्यमिति भावः। ननु समवायपदस्य लक्षणाया अग्रहकालेऽपि शाब्दस्यानुभविकत्वादिदमसङ्गतमित्यतो लक्षणाग्रहस्यावश्यकत्वमाह—परेषामिति। असम्भवेनेति। विशेषणे तृतीयया वैशिष्ट्यमात्रस्य बोधनात्, अवच्छिन्नप्रतियोगित्वस्य प्रतिपादने तृतीयाया असामर्थ्यात्, सुब्विभक्ते-

रामभद्रीटीका।

रित्यादिना। अन्वयासम्भवाच्चेति। अस्माकन्तु प्रथमाद्विवचनान्तजातिपदोपस्थाप्ये जातिवृत्तित्वस्य निरुक्तसम्बन्धेनाभावस्य तिङर्थद्वित्वस्य चान्वये बाधकाभावेन तदन्वयसम्भवादिति भावः।

ननु समवायेन जातौ सत्ता नास्तीति अत्र तत्सम्बन्धावच्छिन्नजातिवृत्तित्वस्याप्रसिध्या कथमुक्तक्रमेण नञाभावः प्रत्याय्यतामत आह—सत्तेति। स्वात्मकस्वरूपसम्बन्धेन सत्तायां जातिवृत्तित्वस्य सत्वादाह—समवेतत्वेति, प्रागुक्तार्थकम्। नन्वेवं त्वन्मते समवायशब्दलक्षणापत्तेरत आह—परेषामिति। अभावमात्रस्यैव विशेषण-

(१) अत्र तृतीयार्थोऽवच्छिन्नत्वं, तेनायमर्थः—समवेतत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताविशिष्टजातिवृत्तित्वाभाववती अस्तितावती च सत्तेति॥

(२) तथाच जातिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या समवायशब्दस्य तादृशप्रतियोगिताकत्वे लक्षणया समवायसम्बन्धावच्छिन्नाधेयत्वीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकजातिनिरूपितवृत्तित्वाभाववती सत्ता इत्यन्वयबोध इति भावः॥

(३) सम्भेदे एकार्थकपदद्वयसमवधाने अन्यतरस्य न वैयर्थ्यमिति न्यायार्थः।

आवश्यकत्वात । (१)प्रथमार्थप्रतियोगित्वे समवायावच्छिन्नत्वस्य तत्रान्वय इति तु साहसम् , प्रथमायाः प्रतियोगितार्थकत्वस्य क्वचिदप्यकल्पनात । विशिष्टसत्ता गुणे नास्तीत्यादिकस्तु प्रयोगो यदि प्रमाणं, तदाधेयत्वस्याव्याप्यवृत्तित्वेन(२) द्रव्यवृत्तित्वावच्छेदेन तस्यां गुणवृत्तित्वाभावसत्त्वाद् । विशिष्टस्यातिरिक्तत्वादित्यपि कश्चित् ।

---

कृष्णकान्तीटीका ।

शनुशासनिकातिरिक्ते लक्षणाभावादिति भावः । तल्लक्षणायाः-समवायपदलक्षणायाः । आवश्यकत्वादिति । भवन्मतेऽपीत्यादिः । शङ्कते प्रथमार्थ इति । तत्र-निरुक्तस्थले । शङ्कां निरस्यति-साहसमिति । सहसा उक्तमिति, अनवधानतया उक्तमिति यावत् । पञ्चम्यादेः कदाचित तदर्थकत्वसम्भवात् प्रथमाया इति । ननु विशिष्टसत्तायाः सत्तानतिरेकात तत्र गुणवृत्तित्वाभावासत्त्वाद्गुणे विशिष्टसत्ता नास्तीतिप्रमाणं न स्यादित्यत आह—विशिष्टसत्तेति । स्वमते विशिष्टसत्ता न गुणवृत्तिरितिवत् गुणे विशिष्टसत्ता नास्तीति वाक्यस्याप्रामाण्यमेव, परन्तु विशिष्टसत्ताभाववान् गुण इत्यादिरेव प्रमाणमित्याशयेन यदीत्युक्तम् । केचित्तु विशिष्टसत्तेति शुद्धसमवायेनेत्यादिः । तथाच तादृशसम्बन्धेन विशिष्टसत्तान गुणवृत्तिरितिवत् गुणे विशिष्टसत्ता नास्तीत्यादेरप्यप्रामाण्यं, किन्तु विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकसमवायसम्बन्धेनैव तत्प्रमाणमित्याशयेन यदीत्युक्तमित्याहुः । आधेयत्वस्याव्याप्यवृत्तित्वादिति । सत्तायां सत्तात्वेन गुणवृत्तित्वं, नतु विशिष्टसत्तात्वेनेत्यनुभवादिति भावः । अवच्छेदकभेदेनेति । विशिष्टसत्तात्वावच्छेदेनेत्यर्थः । तस्यां-सत्तायाम् । गुणवृत्तित्वाभावसत्त्वादिति । तथाचाधिकरणभेदेन अधिकरणताया भिन्नत्वात सत्तात्वे गुणनिष्ठाधिकरणतानिरूपकतावच्छेदकत्वस्य गुणो विशिष्टसत्तावानितिबुद्धेरप्रमात्वरक्षार्थं स्वीकारात प्रतियोगिमत्यपि अवच्छेदकभेदेनाव्याप्यवृत्तेरभावसत्त्वे बाधकाभावादिति भावः । विशिष्टसत्तात्वस्यावच्छेदकत्वाप्रतिसन्धानदशायां तादृशवाक्यस्याप्रामाण्यमिष्टमेव, भवतामपि विशिष्टसत्तात्वोपलक्षिताभावावगाहने तादृशवाक्यस्याप्रामाण्यस्येष्टत्वात । सार्वभौममतमाह-विशिष्टस्येति । तथाच तन्मते विशिष्टसत्ता न गुणवृत्तिरितिवत्

रामभद्रीटीका ।

तथा नान्वयनियमादिति भावः । सत्ताभावो जातिवृत्तिताश्रयतावानित्यर्थस्वीकर्तॄणामित्यर्थः । आवश्यकत्वादिति । तथा च तुल्योऽयमनुयोग इति भावः । शंकते प्रथमार्थेति । निराचष्टे प्रथमाया इति । विशिष्टसत्ता न गुणवृत्तिरित्यादेरप्रमाणत्वात्

---

(१) यदि च प्रथमार्थप्रतियोगित्वे समवायावच्छिन्नत्वस्यान्वयान्न परेषां लक्षणा तदाह प्रथमार्थेति ।

(२) व्याप्यवृत्तित्वादवच्छेदकभेदेनेति पाठः कृष्णकान्तसंमतः ।

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥

इत्यादावनेकनञामानर्थक्यप्रसङ्गस्तु —

न तं विरिञ्चिर्न भवो न श्रीर्नापि धनाधिपः ।
दातुमर्हन्ति विभवं विष्णोराराधनेन यः ॥

---

कृष्णकान्तीटीका।

गुणे विशिष्टसत्ता नास्तीतिवाक्यस्य प्रामाण्यं सहजत एव स्थास्यतीति भावः । कश्चिदित्यस्वरससूचनाय । स च उक्तरीत्यैवातिप्रसङ्गभङ्गे किमतिरिक्तस्वीकारेणेति । एवं विशिष्टस्यानतिरिक्तप्रतिपादकग्रन्थस्योन्मत्तप्रलपितत्वापत्तेरिति ।

ननु 'न क्रोधो न च मात्सर्यमि'त्यादौ क्रोधाभावो मात्सर्याभावोऽशुभमत्यभावश्च पुरुषोत्तमभक्तानां भवतीत्यन्वयबोधे नञां प्रथमान्तत्वाभावेन तदर्थे भाख्यातार्थद्वारा भवनक्रियान्वयायोगात् अवश्यं नञादिनिपातानां प्रकृतित्वं स्वीकार्यमित्याशङ्कां प्रतिबन्दिमुखेनोत्तरयति–न क्रोध इति । आनर्थक्यमिति । एकेनैव नञा क्रोधादौ भवनकर्तृत्वव्यवच्छेदबोधसम्भवादिति भावः । प्रसङ्गस्त्वति । समानः समानसमाधानश्चेति परेणान्वयः । समानमुदाहरति–न तमिति । विष्णोराराधनेन यो विभवो भवति तं विभवं विरिञ्चिर्ब्रह्मा भवः शिवः श्रीर्लक्ष्मीः धनाधिपः कुबेरः, एते दातुं नार्हन्ति इत्यन्वयबोधस्यैकेनैव नञा सम्भवात्, अनेकनञां वैयर्थ्यं नञर्थे तिङर्थान्वयवादिमतेऽपि संभवतीति भावः । नहि विरिञ्च्यादीनां प्रत्येकाभावे विभवदानयोग्यत्वान्वयः सम्भवति, अयोग्यत्वात् । ननु 'संभेदे नान्यतरवैयर्थ्यमि'तिन्यायेनानेकनञां प्रयोगोऽपि साधु-

रामभद्रीटीका ।

यदीत्युक्तम् । प्रत्येकनिरूपिताधिकरणतयैवातिप्रसङ्गनिरासस‌म्भवे व्यर्थं तदतिरिक्तत्वस्वीकारेण इत्याशयेन कश्चिदित्युक्तम् ।

ननु 'न क्रोधो न च मात्सर्यमित्यादौ क्रोधाभावो मात्सर्याभावो लोभाभावोऽशुभमत्यभावश्च पुरुषोत्तमभक्तानां भवतीत्यन्वयबोधे नञां प्रथमान्तत्वं विना तदर्थे भवन्तीति क्रियापदार्थस्यान्वयायोगादवश्यं नञादिनिपातस्य प्रकृतित्वम्, अन्यथा क्रोधो मात्सर्यं लोभोऽशुभमतिश्च न भवन्तीत्येवं क्रोधादौ भवनकर्तृत्वस्याभावबोधनेऽनेकनञां व्यर्थतापत्तेरिति दूषणं प्रतिबन्दिमुखेनोद्धरति न क्रोध इत्यादिना । अनेकेति । एकेनैव नञा क्रोधादौ भवनकर्तृत्वव्यवच्छेदसम्भवादिति भावः । प्रसङ्गस्त्विति । प्रकारान्तरवादिनामपि समान इत्यग्रेऽन्वयः । नञर्थे भावनान्वयवादिनामपि समान इति तदर्थः । यत्र साम्यं तदुदाहरति न तमित्यादिना । विष्णोराराधनेन यत्तं विभवं विरिञ्चिः श्रीर्धनाधिपश्च दातुं नार्हन्तीत्यन्वयबोधस्य एकेनैव नञा सम्भवादनेकनञां

इत्यादाविव प्रकारान्तरवादिनामपि समानः समानसमाधानश्च । पदात् परस्य युष्मदादेस्तेप्रभृत्यादेशविधौ च पदशब्दः साकाङ्क्षनिपातस्या-

कृष्णकान्तीटीका ।

रित्यत आह—समानसमाधानश्चेति । तथाच मयापि न क्रोध इत्यादौ तादृशसमाधानस्य वक्तुं शक्यत्वाच्च किञ्चिदेतदिति भावः । ननु नञादिनिपातानां विभक्त्यन्तत्वाभावेन "पूर्वंपरयोरर्थोपलब्धौ पदमि"त्यनुशासनोपदिष्टपदत्वासम्भवान्नञुत्तरयोर्युष्मदस्मदोस्ते मे प्रभृत्यादेशो न स्यादिति कथं 'न ते धनं धर्म्यंमि'त्यादिप्रयोग इत्याशङ्कया ते मे प्रभृत्यादेशविधायकसूत्रस्थपदपदस्य साकाङ्क्षनिपातस्याप्युपलक्षकपरतया "न ते धनमि"त्यादिप्रयोगमुपपादयति—पदात् परस्येति । आदेशविधौ विधायकसूत्र इत्यर्थः, आदेशस्य विधिर्यत्रेतिव्युत्पत्तेः । विधिशब्दस्यापि सूत्रवाचित्वात् यथाश्रुतमेव सम्यगित्यप्याहुः । आदेशविधौ आदेशविधानस्थल इत्यर्थ इत्यन्ये । सप्तम्यर्थो घटकत्वं, तच्च पदेऽन्वेति, तथाच तादृशसूत्रघटकपदशब्द इत्यर्थः । साकाङ्क्षनिपातस्यापीति । तथाच तत्रत्यपदपदं साक्षात्परम्परया वा युष्मदस्मदर्थसाकाङ्क्षशब्दमात्रपरम् । भिन्नवाक्यस्थपदवारणाय साकाङ्क्षत्वनिवेशः, अन्यथा 'भूतले घटोऽस्ति, तुभ्यं धनं ददामी'त्यादावपि तदादेशापत्तेः, नचेष्टापत्तिरनुभवविरोधात्, सर्वत्रैव युष्मदस्मदोः पदात् पूर्वमन्यपुरुषप्रयुक्तपदसम्भवात्, सूत्रे पदादित्यस्य वैयर्थ्यापत्तेश्च।केचित्तु साकाङ्क्षेति सम्पातायातमित्याहुः।तच्चिन्त्यम् । निपातसामान्यस्योपलक्षकत्वे 'भूतले घटो न, तुभ्यं धनं ददामी'त्यादावपि तदादेशापत्तेः, इष्टापत्तौ तदुपादानवैयर्थ्यापत्तेरित्युक्तमेव । तेन—तस्य तदुपलक्षकत्वेन, तस्य—ते मे प्रभृत्यादेशस्य।ननु

रामभद्रीटीका ।

व्यर्थत्वं तत्र दुर्वारम् । नहि विरिञ्चिविरहः श्रीविरहः धनाधिपविरहश्च तं विभवं दातुमर्हन्तीत्याकारक एवान्वयबोधः, तत्र विरिञ्चिविरहादेर्विभवदानस्वरूपायोग्यत्वेन उक्तवाक्यस्य बाधितार्थकत्वापत्तेः । नन्वेकेनैवानेकनञाप्युपस्थाप्यस्य तादृशविभवदानयोग्यत्वाभावस्य विरिञ्चिप्रभृतावन्वयः 'सम्भेदे नान्यतरवैयर्थ्य'मिति न्यायेनानेकनञामवैयर्थ्यात्, 'विषादे विस्मये हर्षे पौनरुक्त्यं न दुष्यती'त्यादिप्राचीनसिद्धान्ताच्चेत्यत आह समानसमाधानश्चेति । अनेकनञामानर्थक्यप्रसङ्गश्चेत्यनुषज्यते । तथा क्रोधो मात्सर्यं लोभोऽशुभमतिश्च न न न न भवन्तीत्यत्राप्येकेनैव नञा भवनकर्तृत्वे व्यवच्छेदबोधसम्भवेऽपि सम्भेदे नान्यतरवैयर्थ्यमित्यादिकं तुल्यमिति भावः । ननु नञादिनिपातस्य विभक्त्यन्तत्वाभाव 'न ते धनं धर्म्यमि'त्यादौ युष्मदस्मदोः स्थाने तेमेप्रभृत्यादेशो न स्यात्, पदात्परयोरेव तयोस्तदनुशासनात्, पदशब्दस्य विभक्त्यन्तपरत्वात्, अन्यथा शब्दमात्रपरत्वे ते धनम् इत्याद्यपि प्रयोगापत्तेरत आह पदात्परयोरिति(१) । तेप्रभृतीति ।

(१) एतन्मतेनात्र मूले पदात्परयोर्युष्मदस्मदोरिति पाठो द्रष्टव्यः ।

प्युपलक्षकस्तेन "न ते धनं धर्म्य"मित्यादौ न तस्यानुपपत्तिः । सदृशाद्यर्थे निभादेर्निपातत्वव्युदासस्तु प्रागुक्तदिशावसेयः ।

स चायं निपातश्चतुनञ्पुनरिवैवमास्मादिभेदाद्बहुविधः ॥ ११ ॥

ननु यदि प्रकृतिः प्रत्ययो निपातो वा स्वार्थोपस्थितिद्वाराऽन्वयबोधं कुर्य्यात्, प्रत्येकमात्रं निराकाङ्क्षशब्दसहकृतं वा किन्न कुर्य्यात्, मिलितानामेव तेषां तथात्वन्तु सर्वत्राऽसम्भवीत्यत आह—

---

कृष्णकान्तीटीका ।

निभादिशब्दानां स्वार्थे सदृशादौ शब्दान्तरार्थस्याभेदान्वयबोधाक्षमत्वात्तेष्वतिव्याप्तिरित्यत आह—सदृशाद्यर्थकनिभादेरिति । प्रागुक्तेति । तथा च प्रत्ययलक्षणवदत्रापि निभादिभिन्नत्वं निवेशनीयमिति न तत्रातिव्याप्तिरिति भावः । विविधश्चादिभेदत इति व्याकुरुते-स चायमिति ॥ ११ ॥

कारिकान्तरस्यावतारणिकामाह—नन्विति । प्रत्येकमात्रं किं न कुर्यादित्यन्वयः । ननु शब्दान्तरापेक्षयैव सार्थकस्य शाब्दजनकत्वादिदमसङ्गतमित्यत आह—निराकाङ्क्षेति । घटः कर्मत्वमित्यादितोऽपि घटनिष्ठकर्मताबोधः स्यादिति भावः। ननु स्वोत्तरप्रत्ययसाकाङ्क्षशब्द एव हेतुरित्यत आह—मिलितानामिति । स्वोत्तरप्रत्ययार्थसाकाङ्क्षाणामित्यर्थः। तेषां—प्रकृतिप्रत्ययनिपातानाम् । तथात्वं—शाब्दबोधजनकत्वम् । सर्वत्रेति । प्रकृतेस्तथात्वसम्भवेऽपि प्रत्ययनिपातयोस्तत्सम्भवायोगात् तदुत्तरं प्रत्ययाभावादिति भावः । केचित्तु ननु प्रकृतिप्रत्ययनिपातानां मिलनमेवान्वयबोधकं वाच्यमत आह—मिलितानामिति । सर्वत्रेति । प्रकृतिप्रत्यययोर्मिलनस्य सर्वत्रासम्भवादिति भाव इत्याहुः । तन्न, तथासति मिलितानां तथात्वोक्ता-

रामभद्रीटीका ।

प्रभृतिपदान्मेवानौवसूनसां परिग्रहः । विधौ—सूत्रे । साकाङ्क्षनिपातस्येत्यत्र साकाङ्क्षत्वं संपातायातम् । तस्य—तेप्रभृत्यादेशस्य । ननु निभादिशब्दानां स्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयबोधनात्तत्रातिव्याप्तिरत आह सदृशाद्यर्थ इति । प्रागुक्तेति । तथाच निभाद्यन्यत्वमिति लक्षणे निवेश्यमिति भावः ।

विविधश्चादिभेदत इत्यत्र निपातस्य यन्नानाविधत्वमुक्तं तद्विवृणोति स चायमिति । चत्वित्यादि । एतेषामर्थभेदो वाक्याधिकारे वक्ष्यते ॥ ११ ॥

प्रत्येकमात्रं किन्न कुर्यादित्यन्वयः । ननु शब्दान्तरमपेक्ष्यैव सार्थकस्य स्वार्थबोधकत्वस्योक्तत्वात् नेदं युक्तमत आह-निराकाङ्क्षशब्दसहकृतं वेति । ननु प्रकृतिप्रत्ययनिपातानां मिलनमेवान्वयबोधकं वाच्यमत आह मिलितानामिति । तथात्वं—अन्वयबोधकत्वम् । सर्वत्रेति । सर्वत्र वाक्ये निपातमिलनस्यासम्भवादिति भावः ।

(१)वाक्यभावमवाप्तस्य सार्थकस्यावबोधतः ।
सम्पद्यते शाब्दबोधो न तन्मात्रस्य बोधतः ॥१२॥

सार्थकस्य प्रकृत्यादेर्वाक्यतामापन्नस्यैव स्वार्थोपस्थितिद्वाराऽन्वयबोधकत्वं, न तु प्रत्येकस्य निराकाङ्क्षसहितस्य वा ॥ १२ ॥

वाक्यं यदि शब्दसमूहस्तदा मिथो निराकाङ्क्षस्यापि तस्याऽन्वयबोधकत्वापत्तिरतो वाक्यं लक्षयति—

(२)मिथःसाकाङ्क्षशब्दस्य व्यूहो वाक्यं चतुर्विधम् ।

कृष्णकान्तीटीका ।

वपि निराकाङ्क्षशब्दसहकृतानां तेषां तथात्वापत्तिवारणासम्भवात् पूर्वोक्तदोषावारककोट्यन्तरोद्भावनस्य सन्दर्भविरुद्धत्वात् । अन्ये तु मिलितानामित्यस्य साकाङ्क्षाणामित्यादिः, तथाच निराकाङ्क्षव्युदासः, अन्यत् सर्वं पूर्ववदित्याहुः । तन्न, तथासति साकाङ्क्षाणामित्यनेनैव निराकाङ्क्षवारणसम्भवे मिलितमित्यस्य वैयर्थ्यापत्तेः ।

न तन्मात्रस्य—वाक्यतानापन्नस्य सार्थकस्येत्यर्थः । न केवलस्य सार्थकस्य इति तु नार्थः, तथासति निराकाङ्क्षसहितस्य वेति तद्विवरणासङ्गतेः । केचित्तु न्यूनतापरिहाराय निराकाङ्क्षसहितस्येति पूरितमित्यभिप्रायेण विवरणग्रन्थं सङ्गमयन्ति । तन्न, तथासति मिलितस्येत्यस्यापि वक्तव्यतापत्तेरन्यथा तदनुक्त्यापि न्यूनतातादवस्थ्यात् ।

प्रकृत्यादेरित्यादिना प्रत्ययनिपातपरिग्रहः । एवकारेण तदनापन्नव्यवच्छेदः । विशेषेण एवकारव्यवच्छेद्यान् तदनापन्नानाह—नत्विति । वाकारस्य मिलितस्यापि समुच्चायकत्वं बोध्यम् । निराकाङ्क्षसहितस्य वेत्यनन्तरमिति तात्पर्यार्थ इति पूरणीयम् ॥ १२ ॥

कारिकान्तरस्यावतारणिकामाह—वाक्यं यदीति । तथा च वाक्यस्यैवान्वयबोधकत्वोक्त्यापि न निराकाङ्क्षवारणसम्भवः, शब्दसमूहत्वरूपस्य तस्य तत्राक्षतेरिति भावः । तस्य—शब्दसमूहस्य ।

रामभद्रीटीका ।

तन्मात्रस्य—सार्थकशब्दमात्रस्य ।

न्यूनतां परिहरति—निराकाङ्क्षेति ॥ १२ ॥

(१) वाक्येति । विशेषणविशेष्यभावेनैकवाक्यतापन्नस्यैव सार्थकस्य प्रकृतिप्रत्ययादेर्ज्ञानाच्छाब्दबोधो जायते न केवलादिति कारिकार्थः ।

(२) मिथ इति । परस्पराकाङ्क्षाविशिष्टशब्दसमुदायो वाक्यं तच्चतुर्विधम् । प्रत्येकसमुदायाभ्यामतिव्याप्त्यादिदोषात्सुबन्ततिङन्तचयो वाक्यं न भवितुमर्हमित्यर्थः ।

**सुप्तिङन्तचयो नैवमतिव्याप्त्यादिदोषतः(१) ॥ १३ ॥**

यादृशशब्दानां यादृशार्थविषयिताकान्वयबोधं प्रत्यनुकूला परस्परा-काङ्क्षा तादृशशब्दस्तोम एव तथाविधार्थे वाक्यम् । तच्च चतुर्विधं, चत-स्रश्च विधा वक्ष्यन्ते । वह्निना सेक इत्याद्यपि वाक्यमेव, परन्तु बाधितार्थे-

कृष्णकान्तीटीका ।

कारिकाविवरणमाह—यादृशेति । षष्ठ्यन्तस्याकाङ्क्षेत्यत्रान्वयः । स्तोम इति व्यूह इत्यस्य विवरणम्, तथा च यादृशानुपूर्वीमत्त्वं साक्षात्परम्परासाधारणनिरूप्यनि-रूपकभावापन्नयद्धर्मावच्छिन्नविषयताशालिशाब्दत्वव्यापकयत्किञ्चिज्जन्यतानिरूपित-जनकताया विषयतयावच्छेदकतायाः पर्याप्त्यधिकरणं तादृशानुपूर्वीमत्त्वं तद्धर्मावच्छि-न्नतादृशविषयताकबोधने वाक्यत्वमिति पर्यवसितम् । तेन ह्रदो वह्निमानित्यादौ वा-क्ये विशिष्टार्थाप्रसिद्धावपि नाव्याप्तिः, एवं परस्परत्वस्य दुर्वचत्वेऽपि न क्षतिः, न वा भूतलं घटवत् पटवच्च इति समुदायेऽतिव्याप्तिः । अत्र प्रत्येकविषयतानां निरूप्य-निरूपकभावानापन्नत्वात् तादृशशाब्दत्वे स्वरूपसम्बन्धरूपावच्छेदकत्वविरहाद्व्यापक-त्वनिवेशः । स्वोत्तरशाब्दत्वावच्छिन्नं प्रति तत्तदानुपूर्वीप्रकारकनिश्चयत्वेन हेतुत्वेन ता-दृशविषयतानां कार्यतानवच्छेदकत्वात् । एवं तत्तदानुपूर्वीप्रकारकनिश्चयः । घटवद्भूत-लमितिबोधेऽव्यवहितोत्तरत्वसंसर्गेण पूर्वपूर्ववर्णविशिष्टचरमवर्णत्वरूपानुपूर्व्या इव ता-दृशपूर्वत्वसंसर्गेण परपरवर्णविशिष्टपूर्वपूर्ववर्णत्वरूपानुपूर्व्यादीनामपि जनकतावच्छेद-कतया कस्या अपि आनुपूर्व्यास्तादृशशाब्दत्वव्यापकजन्यतानिरूपितजनकतावच्छेद-कतायाः पर्याप्त्यधिकरणत्वासम्भवात् यत्किञ्चिदिति जन्यताविशेषणम् । घटवत् भूत-लमिति बोधे घटवदितिभागस्य वाक्यत्ववारणाय पर्याप्तिनिवेशः । नच तन्निवेशे-ऽपि तादृशशाब्दत्वव्यापकयत्किञ्चिज्जन्यता इत्यनेनैकदेशजन्यतामादाय तद्दोषताद-वस्थ्यमिति वाच्यम् । व्यापकेत्यनेन तादृशशाब्दत्वनिष्ठन्यूनवृत्तित्वानिरूपकत्वस्य विवक्षितत्वात् ।

वस्तुतः स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसामानाधिकरण्योभयसम्ब-न्धेन स्वविशिष्टजन्यताकान्यतादृशशाब्दत्वकजन्यताया एव निवेश्यत्वात्, न कोऽपि दोष, इति युक्तमुत्पश्यामः । अन्यत् स्वयमूहनीयम् । वक्ष्यन्ते इति ।

रामभद्रीटीका ।

तस्य—शब्दसमूहस्य । नैवं—न वाक्यम् । मिथ इत्यस्य विवरणं परस्परेति । वक्ष्यन्त इति ।

सुबन्तं च तिङन्तं च सुबन्तैकसमन्वितम् ।
सुप्तिङन्तद्वयगर्भं वाक्यमेवं चतुर्विधम् ॥

(१) अतिव्याप्त्यादिदोषश्चाग्रे वक्ष्यते ।

कत्वादयोग्यम्। शाब्दमतेराहार्यत्वोपगमे 'निर्वह्निर्वह्निमान्' 'पचन्न पचती'-त्यादिकमपि वाक्यमेव, नो चेदपार्थकमेव, यादृशबोधत्वावच्छेदेनाहार्यत्वं

---

कृष्णकान्तीटीका।

सुबन्तं च तिङन्तं च सुबन्तैकसमन्वितम्।
सुसिङन्तद्वयीगर्भं वाक्यमेतच्चतुर्विधम्॥

इति पश्चाद्वक्ष्यते इत्यर्थः। यादृशार्थविषयकबोधं प्रतीति विवरणग्रन्थे यादृशत्वं विषयताविशेषणं न त्वर्थविशेषणम्। अर्थेति—स्वरूपकीर्तनम्, अन्यथा अयोग्यवाक्यासंग्रहापत्तेरिति व्यञ्जितुमयोग्यवाक्यस्य लक्षणमाह—वह्निना सेक इति॥ आदिना करकया सेको ह्रदो वह्निमानित्यादेः संग्रहः। वाक्यमेवेति। वाक्यलक्षणलक्ष्यमेवेत्यर्थः। तादृशानुपूर्व्या अपि निरुक्तजनकतावच्छेदकतापर्याप्त्यधिकरणत्वानपायादिति भावः। नन्वेवं पयसा सेक इत्यतो वह्निना सेक इत्यस्य को भेदो वाक्यत्वस्याविशेषादित्यत आह—परन्त्विति। नन्वयोग्यवाक्येनापि योग्यताभ्रमदशायां शाब्दबोधजनकत्वात् तस्य लक्ष्यत्वे निर्वह्निर्वह्निमान् इत्यादेरपि लक्ष्यत्वापत्तिरयोग्यत्वाविशेषादित्यत आह शाब्दमतेरिति। परोक्षज्ञानस्यानाहार्यत्वनिश्चयत्वनियमेनाहार्यत्वोपगमे इत्युक्तम्। तदनुपगमे तादृशवाक्यस्य शाब्दबोधस्वरूपयोग्यत्वस्याप्यसम्भवात् वाक्यत्वमसम्भवीत्युपष्टम्भसङ्गतिः। स्वविरोधिधर्मधर्मितावच्छेदककत्वप्रकारकज्ञानत्वमाहार्यत्वम्। तत्र विरोधित्वं च स्वप्रकारकज्ञानप्रतिबन्धकतावच्छेदकविषयितानिरूपकत्वमिति स्वाभावे स्वस्य विरोधित्वं स्वस्मिन्नपि स्वाभावविरोधित्वमित्यभावधर्मितावच्छेदककप्रतियोगिज्ञानमुक्त्वा, प्रतियोगिधर्मितावच्छेदककाभावज्ञानमाह—पचन्न पचतीति। आदिना वह्निमान् निर्वह्निरित्याद्युपग्रहः। उक्तनियममनुरुध्याह—नोचेदिति। अपार्थकं—शाब्दस्वरूपायोग्यम्। एवकारेण तत्स्वरूपयोग्यत्वव्यवच्छेदः। ननु शाब्दस्वरूपायोग्यत्वं यद्यपार्थकत्वं तदा घटः कर्मत्वमिति वाक्यस्यापि तथात्वापत्तिः, नचेष्टापत्तिरनुभवविरोधात्, न चाहार्यशाब्दजनकवाक्यत्वं तत्, तदनुपगमेऽसम्भवात्, तदुपगमे तु पर्वतो वह्निमानितिवाक्यजन्यबोधस्यापि कदाचिदाहार्यत्वस्य सम्भवात् वाक्यमात्रस्य प्रायशस्तथात्वापत्तेः, नापि आहार्यशाब्देच्छयोच्चरितत्वम्, इच्छा च विसंवादिन्यपि सम्भवतीति नाप्रसिद्धिः, अन्यार्थे तथात्वापत्तेर्दुर्वारत्वादित्यतोऽपार्थकत्वं निर्वक्ति—यादृशेति। तथाच यद्धर्मावच्छिन्नविशेष्यकयद्धर्मावच्छिन्नप्रकारकज्ञानत्वव्यापकमाहार्यत्वं तद्धर्मावच्छिन्नविशेष्यकतद्धर्मावच्छिन्नप्रकारकबोधेच्छयोच्चरितं यद्यत्पदं तादृशबोधं प्रति तत्पदमपार्थकमिति पर्यवसितम्। पर्वतो वह्निमानितिवाक्यजन्यबोधस्यापि कदाचिदाहार्यत्वसम्भवात् तथाविधेच्छयोच्चरितपदानां तथात्ववारणाय व्यापकत्वनिवेशः। निर्वह्निर्वह्निमानित्यादिवाक्यस्यापि आहार्यबोधेच्छयोच्चरितत्वेनापार्थकत्वमित्युच्चरितान्तं पदविशेषणम्। तादृ-

तादृशबुद्ध्यर्थं प्रयुक्तपदानामेव तथाविधार्थबोधं प्रत्यपार्थकत्वात् ।

यत्तु 'सुप्तिङन्तचयो वाक्यमि'(१)त्यमरसिंहैरुक्तम्, तन्न युक्तम्, सुबन्तादेः प्रत्येकसमुदायविकल्पेनातिव्याप्त्यव्याप्त्योः प्रसङ्गात्, (२)न हि घटं पटमित्याकारः पचति गच्छतीत्यानुपूर्वीको वा शब्दसमूहो वाक्यं, न वा घटः पचतीत्येतयोः प्रत्येकं न वाक्यम् । क्रियारहितन्न वाक्यमस्तीत्यादिकस्तु प्राचां प्रवादो निर्युक्तिकत्वादश्रद्धेयः ॥ १३ ॥

कृष्णकान्तीटीका ।

शबोधतात्पर्यकमपि पदमन्यविधबोधं प्रति न तथेति तथाविधार्थबोधं प्रतीति । आहार्यत्वं चात्र साक्षात्कारित्वानिरूपकविषयताशालिज्ञानाविरोधित्वम् ।

अमरसिंहोक्तं वाक्यलक्षणं दूषयन् कारिकापरार्द्धं व्याक्रियते—यत्त्विति । प्रत्येकसमुदायविकल्पेनेति । किं सुबन्तचयस्तिङन्तचयो वा वाक्यं, किं वा सुबन्ततिङन्तचयस्तथेति ? वितर्केणेत्यर्थः । अतिव्याप्त्यव्याप्त्योरिति कारिकास्थादिपदात् अव्याप्तिप्राप्तिरिति भावः । ननु प्रत्येकचयत्वस्य लक्षणत्वे कुत्रातिव्याप्तिः ? उभयचयत्वस्य लक्षणत्वे कुत्र वाऽव्याप्तिरित्याकाङ्क्षायां घटं पटमिति भागस्य, गच्छति पचतीति भागस्य चालक्ष्यत्वं, घटः पचतीत्येतयोः प्रत्येकस्य च लक्ष्यत्वमाह—नहीति । हेहेतुत्वमर्थः, स च प्रसङ्गान्वितः । अनयैव च वाचोभङ्ग्याऽतिव्याप्तिश्चाव्याप्तिश्चावहिता । उभयत्रैव वाक्यपदस्य वाक्यलक्षणलक्ष्यत्वमित्यर्थः । सङ्गतवाक्यलक्षणकमित्यर्थः स्यादिति शेष इत्यप्याहुः । ननु घट इति भागे कथमव्याप्तिस्तस्यालक्ष्यत्वात्, अन्यथा क्रियारहितं न वाक्यमिति प्राचीनप्रवादासङ्गतेरित्यत आह—क्रियारहितमिति । निर्युक्तिकत्वादिति । व्यवहारस्य सन्दिग्धत्वादिति भावः । इदमत्रावधेयम् । तिङ्सुबन्तचयो वाक्यमित्यस्य तिङन्तचयः सुबन्तचयश्च वाक्यमिति तु नार्थः, निराकाङ्क्षे घटं घटमित्यादौ अतिव्याप्तेः, किन्तु "समर्थः पदसमूहो वाक्यमि"-

रामभद्रीटीका ।

इति पश्चात् वक्ष्यत इत्यर्थः । अयोग्यस्यालक्ष्यत्वमाशङ्क्य निषेधति वह्निना सेक इत्यादीति । आदिना शशविषाणमित्याद्युपग्रहः । अपार्थकं-मिथोनिराकाङ्क्षम् ।

सुप्तिङन्तचयो नैवामित्यस्य विवरणमाह—पचति गच्छतीति । आदिपदलब्धामव्याप्तिमाह नवेति । सुबन्तचयस्याव्याप्तिस्थानं घटमिति, तिङन्तचयस्याव्याप्तिस्थानं पचतीति । ननु घटमित्येतावन्मात्रस्य क्रियापदरहितत्वेनावाक्यत्वात् कथं तत्राव्याप्तिरत आह क्रियारहितमिति । निर्युक्तिकत्वादिति । क्रियासहितादिव क्रिया-

(१) क्रिया वा कारिकान्वितेति द्वितीयपादः ।

(२) सुबन्ततिङन्तभेदेन प्रत्येकसमुदायेऽतिव्याप्तिं दर्शयति नहीति ।

कृष्णकान्तीटीका ।

ति परिशिष्टकृतोक्तम् । तत्र समर्थ इत्यस्य परस्परसाकाङ्क्ष इत्यर्थः, विशिष्टैकार्थप्रतिपादक इति यावत् । पदं विभक्त्यन्तम् । समूहत्वं चापेक्षाबुद्धिविशेषविषयत्वम् । तथा च साक्षात्परम्परासाधारणनिरूप्यनिरूपकभावापन्नविषयताशालिबोधजनकविभक्त्यन्तपर्याप्तापेक्षाबुद्धिविशेषविशेष्यत्वमिति पर्य्यवसितं सामान्यतो वाक्यलक्षणम् । तस्यैव लक्ष्यद्वैविध्यमभिदधान एव—तत्र पदपदस्य न्यायमतसिद्धः शक्तिमत्स्वरूपो नार्थः, अपि तु विभक्त्यन्तरूपः, सर्वत्र वैयाकरणैस्तथैवोक्तेः, अन्यथा शब्दत्वेनैवोल्लेखौचित्यापत्तेरित्यमरसिंहो व्यञ्जयति—"तिङ्सुबन्तचयः" इति। साकाङ्क्ष इत्यादिः, सामान्यस्य विशेषपरत्वाद्वा तथालाभः । नच घट इत्यादिसुबन्तमात्रेऽव्याप्तिस्तस्यालक्ष्यत्वात्, अत एव "नहि क्रियारहितं वाक्यमस्तीति" वैयाकरणा वदन्ति । नच तस्यावाक्यत्वे एकत्ववान् घट इत्यन्वयानुभावकत्वानुपपत्तिः,वाक्यस्यैव तथात्वनियमादिति वाच्यम् । तादृशनियमस्याप्रामाणिकत्वात् । प्रामाणिकत्वे तु तादृशशब्दात् पदार्थोपस्थितिरेव जायते, न त्वन्वयबोध इत्यस्यापि सुवचत्वाच्च । नच साकाङ्क्षसुबन्तचयस्तादृशतिङन्तचयश्चाप्रसिद्धः, घटं पटमिति भागस्य पचति गच्छतीति भागस्य च निराकाङ्क्षत्वादिति वाच्यम्। "ओदनं तेमनान्वितं"(१) इत्यस्य भुङ्क्ष्व इत्यादिक्रियाध्याहारेण शाब्दबोधजनकतया साकाङ्क्षत्वेन लक्ष्यत्वसम्भवात्, घटः कार्यं इत्यादेरपि सुलभत्वाच्च । एवं जानाति पचतीत्यादेरपि साकाङ्क्षतिङन्तचयत्वेन लक्ष्यत्वसम्भवात् । कृत्यवच्छिन्नविशेष्यककृतिप्रकारकान्वयबोधं प्रति तिङन्तपदजन्यकृत्युपस्थितेस्तन्त्रत्वेन पचति गच्छतीत्यादेरेव निराकाङ्क्षत्वात् आख्यातार्थोद्देश्यतावच्छेदकान्वयबोधस्याव्युत्पन्नत्वमिति तु नाशङ्कनीयम् । चिन्तामणिकृताऽपि यो यः पचति स चैत्र इति बोधस्य स्वीकृतत्वात् । यो यः शूद्रस्यान्नं पचति सोऽतिनिन्दित इति प्रयोगस्य स्वयमेव वक्ष्यमाणत्वात्, कुरु कुरु इत्यादेरतिसुलभत्वाच्च । ननु तादृशग्रन्थस्य लक्ष्यप्रदर्शनपरत्वे तिङन्तपदसमभिव्याहृतसुबन्तपदस्यापि लक्ष्यत्वादिति तदनुक्तौ अमरसिंहस्य न्यूनत्वम्, नच यावन्तो लक्ष्याः प्रदर्शयितव्या इति नियमः, तथासति सुबन्तचयतिङन्तचययोरेकतरोपादानस्यैव सम्यक्त्वे उभयोरुपादानस्य वैयर्थ्यापत्तिरित्यत उक्तं—क्रिया वा कारकान्वितेति । तत्र क्रियापदं धात्वर्थान्वितस्वार्थबोधकविभक्त्यन्तपदपरं, तिङन्तपरमिति यावत्, कारकपदं च सुब्विभक्त्यन्तपदपरं, तथाच सुबन्तपदसमभिव्याहृततिङन्तपदमित्यर्थः । यथाश्रुतन्तु न सङ्गच्छते, क्रियया वाक्यत्वासम्भवात्, कर्मत्वादिरूपकारकान्वितक्रियावाचकपदस्य तथात्वे घटं जानाति घटोऽस्तीत्यादेरसंग्रहापत्तेः, प्रत्युत ओदनं पचतीत्यादौ ओदनं पच इति भागस्यापि तथात्वापत्तेः, तादृशभागस्यैव तादृशक्रियाबोधकत्वात् इत्यमरसिंहानामाशय इति । लक्ष्यप्रदर्शकग्रन्थस्य लक्षणाभिधानपरत्वाभिधानदूषणं हास्यास्पदं । नहि शा-

(१) तेमनं व्यञ्जनं ।

प्रकृतिं विभजते—

(१)निरुक्ता प्रकृतिर्द्वेधा नाम-धातुप्रभेदतः ।
यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते ॥१३॥

निरुक्ता, न तु सांख्यानामिव जगदुपादानभूता(२)।

यच्च पाणिनिप्रभृतिभिः प्रातिपदिकं प्रकृतिरित्युक्तं, तदपि नाम्नो

कृष्णकान्तीटीका।

क्याभिधानप्रस्तावे लक्षणमभिधत्ते इति कैश्चित् श्रुतम् । इत्यलमधिकेन ग्रन्थगौरवभयस्य हृदये जागरूकत्वात् इति ॥ १३ ॥

पूर्वोक्तप्रकृतिविभागं प्रतिजानीते—प्रकृतिमिति । निरुक्ता निरुक्तलक्षणाक्रान्ता, प्रकृतिः प्रकृतिपदप्रतिपाद्याऽतो न पुनरुक्तिः । निरुक्तपदस्य व्यावृत्तिमाह निरुक्तेति । नत्विति । जगदुपादानभूता जन्यसामान्यप्रयोजिका । तथाच प्रकृतिपदप्रतिपाद्यत्वस्य सांख्यमतसिद्धप्रकृतावपि सत्त्वात् तद्व्यावर्तनाय निरुक्तेत्युक्तमिति भावः । अत्र यद्यपि "प्रकृतेर्महान् महतोऽहङ्कारः, अहङ्कारात् पञ्चतन्मात्राणि एकादशेन्द्रियाणि च षोडशविकाराः, पञ्चतन्मात्रेभ्यश्च पृथिव्यादीनि पञ्च इति चतुर्विंशतितत्त्वानि" इति सांख्यानामेव सिद्धान्तः, न्यायमते च तादृशप्रकृतेरलीकत्वात् कथं तद्व्यावर्तनाय निरुक्तेत्युक्तम् । तथापि तैः प्रकृतिपदेन यदुच्यते तच्चास्माभिरदृष्टपदेनाभिधीयते इति तद्वारणायैव तदुपादानम् । अत एवेवपदमपि सार्थकम् , अन्यथा "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः" इत्यादीश्वरवाक्यस्य न्यायमतेऽप्रामाण्यापत्तेरिति । इदन्तु बोध्यम् । सार्थकप्रस्तावेऽन्यविधप्रकृतेरनुपस्थितत्वात् तादृशप्रकृतिविषयकप्रकृतिः कतिविधा इति शिष्यजिज्ञासानुदयात् अवसरसङ्गत्या तद्विभागाभिधानासङ्गतेः, प्रकृतिर्द्वेधा इत्युक्तेरेवार्थतो निरुक्ता प्रकृतिर्लभ्यत इति निरुक्तेति सम्पासायातमिति ।

कारिकापरार्द्धं व्याकुरुते—यच्चेति । पाणिनिप्रभृतिभिः प्रकृतिस्त्रिविधा लाक्षणिक-प्रातिपदिक-धातुभेदात् इत्युच्यते । दाक्षिः पाचक इत्यादिकं लाक्षणिकं, घटादिकं प्रातिपदिकं, धातुश्च भू-पचादि । अस्माभिश्च नामत्वसामान्यधर्मेण विभज

रामभद्रीटीका।

रहितादपि घट इत्यादिशब्दात् घटादावेकत्वाद्यन्वयबोधस्यानुभविकत्वात् तस्यापि वाक्यत्वे क्षत्यभावादिति भावः ॥ १३ ॥

निरुक्तपदस्य व्यावृत्तिमाह नत्विति । जगदुपादानभूता प्रकृतिर्न द्वेधेत्यर्थः । वि-

(१) स्वेतरार्थानवच्छिन्नेत्यादिना लक्षिता प्रकृतिर्नामधातुभेदेन द्विविधेत्यर्थः । पाणिन्यादिभिर्यत्प्रातिपादिकं प्रकृतिरित्युक्तन्तदपि नाम्नो न भिन्नमिति न विभागव्याघात इति परार्धार्थः ।

(२) जगत्कारणीभूता प्रकृतिर्न त्वित्यर्थः ।

नातिरिच्यते, नातो विभाग(स्य)न्यूनता ॥ १४ ॥

तत्र प्रथमोद्दिष्टं नाम लक्षयति—

(१)येन सर्वाययदर्थस्य मुख्यतः प्रतिपादने ।
स्वोत्तरप्रथमापेक्ष्या तन्नाम स्यात्तदर्थकम् ॥ १५ ॥

यादृशशब्देन स्वोपस्थाप्ययदर्थमुख्यविशेष्यकान्वयबोधार्थं स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते तादृशः शब्द एव तदर्थकं नाम । घटादयो हि

कृष्णकान्ताटीका ।

नात्र द्विधाविभागव्याघातः, अन्यथा तेषामपि त्रिधाविभागानुपपत्तेः, नाम्नां चातुर्विध्याद्धातूनामनेकरूपत्वात् तेन रूपेणापि प्रकृतिविभागौचित्यापत्तेरित्याशयः । केचित्तु सार्थकस्य कथं त्रैविध्यमुक्तं प्रातिपदिकस्यैवाधिकस्य सत्त्वादित्याशङ्कानिराकरणपरतया कारिकापरार्द्धं व्याकुरुते—यच्चेति । तदपि—प्रातिपादिकमपि । नाम्नो नातिरिच्यत इति । तथाच तस्य नामतया प्रकृतित्वरूपसामान्यधर्मेणैव विभजनात् न सार्थकानां त्रैविध्यविभागव्याघात इति भाव इति व्याचक्षते । तन्न । प्रकृतिविभागप्रस्तावे तत्कथनानौचित्यापत्तेश्च सार्थकविभागक्रमय एव तदभिधानस्यौचित्यात्, एवं विवरणं प्रातिपदिकं सार्थकमित्युक्तमित्यपहाय प्रकृतिरित्युक्तमित्युक्तेरसङ्गत्यापत्तेश्चेति ॥ १४ ॥

तत्र—नामधात्वोर्मध्ये । प्रथमोद्दिष्टमिति । एतेन धातुलक्षणात् प्राक् नामलक्षणकरणे किं नाम इति शिष्यजिज्ञासाप्राथम्यमेव बीजं, तद्बीजन्तु प्रथमोपस्थितत्वमिति व्यञ्जितम् ।

विवृणोति—यादृशशब्देनेति । तथा च प्रथमाविभक्तिधर्मिकाव्यवहितोत्तरत्वसम्बन्धेन यादृशानुपूर्व्यवच्छिन्नप्रकारकनिश्चयत्वं स्ववृत्तिज्ञानजन्योपस्थितिप्रयोज्ययादृशार्थमुख्यविशेष्यताशालिशाब्दत्वव्यापकजन्यतानिरूपितजनकताविशेषव्यापकं तादृशानुपूर्वीमत्त्वं तादृशार्थकनामत्वमिति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयन् व्यापकत्वान्तर्भावं व्यञ्जयति—घटादयो हीति । स्वार्थमुख्यविशेष्यकं सुबर्थसंख्यादिप्रकारकमित्यस्यादिः, अत एवाग्रे सुबर्थसंख्यादेरवगम इत्यपि सङ्गच्छते ।

रामभद्रीटीका ।

भागस्य—सार्थकशब्दानां त्रैविध्यविभागस्य ॥ १४ ॥

तत्र—नामधात्वोर्मध्ये ।

मुख्यतो—मुख्यविशेष्यविधया ।

(१) यत् स्वकीयार्थस्य विशेष्यतयान्वयबोधने स्वोत्तरप्रथमादिविभक्तिसापेक्षं तत्तदर्थकं नामेत्यर्थः ।

शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यकं बोधमुत्पादयन्ति नत्वन्यथा, (१)न हि घट इत्यादित इव घटादित्यादितोऽपि घटादिमुख्यकः सुबर्थसंख्यादेरवगमः। पीतपट इत्यादिकः समासोऽपि स्वोत्तरं प्रथमाप्रतिसन्धानदशायामेव पटादिमुख्यधर्मिकस्य पीताद्यन्वयबोधस्य जनकः, अत एव "नापदं प्रयुञ्जीतेति" वृद्धाः। पदं विभक्त्यन्तम्। पीत-

कृष्णकान्तीटीका।

नत्वन्यथा—नतु प्रथमांशेऽनिश्चिता इत्यर्थः। विभक्तीत्यपहाय प्रथमापर्यन्तनिवेशव्यावृत्तिमाह—नहीति। तत्र एकघटनिष्ठा हेतुता इति बोधस्यैव जननात् तादृशनिश्चयत्वस्य निरुक्तजनकताव्यभिचारित्वेनासम्भवापत्तेरिति भावः। अत एव मुख्यविशेष्यतानिवेशोऽपि। ननु विभक्तिं विनापि पीतपट इत्यादिसमासेन मुख्यविशेष्यकबोधजननात् निरुक्तजनकत्वस्य तादृशनिश्चयत्वव्यभिचारित्वादसम्भव इत्यत आह—पीतपट इत्यादिक इति। अन्वयबोधस्य जनक इति। न तु तदप्रतिसन्धानदशायामित्यर्थः। अत एव–तदप्रतिसन्धानदशायां तस्याबोधकत्वादेवेत्यर्थः। अपदमिति। समासादिकमित्यादिः। अतोऽपदस्य चादेः प्रयोगेऽपि न क्षतिः। वस्तुतस्तु चादेरपि वैयाकरणैर्विभक्त्यन्ततास्वीकारात् यथाश्रुतमेव सम्यगिति। प्रयुञ्जीत–तज्जन्यशाब्देच्छया उच्चरेदित्यर्थः। वृद्धाः–पण्डिताः, वैयाकरणा इति तु परमार्थः। ननु पदत्वं यदि शक्तिमत्त्वं, तदा समासस्यातथात्वात् विभक्तिसहकारेणापि कथं तत्प्रयोग इत्यत आह—पदमिति। तथाचापदं विभक्त्यन्तभिन्नमित्यर्थः। ननु तथापि पीतपटरूपमित्यादौ पीतपटवृत्तिरूपमिति महावाक्यार्थबोधजनकस्य पीतः पट इत्यवान्तरवाक्यार्थबोधस्य जनकतायास्तादृशनिश्चयत्वव्यभिचारित्वादुक्तलक्षणमसम्भवीत्यतो म-

रामभद्रीटीका।

प्रथमान्तत्वेनेति, प्रथमांशे इत्येव वा पाठः। नत्वन्यथेति। ननु प्रथमांशे अनिश्चिता घटादिशब्दाः स्वार्थमुख्यविशेष्यकबोधमुत्पादयन्तीत्यर्थः। नहीति। एकघटनिष्ठा हेतुता इत्याकारकस्य हेतुतामुख्यविशेष्यकबोधस्यैव घटादिति वाक्यात् उत्पत्तेरिति भावः। अत एव–विभक्त्यन्तं विना समासस्याबोधकत्वादेव। अपदमित्यस्य समासादिकमित्यादिः। ननु पदत्वं यदि वृत्तिमत्त्वं तदा समासस्यातथात्वात् विभक्तिसहकारेणापि कथं स प्रयुज्यते इत्यत आह विभक्त्यन्तमिति। तथा च विभक्त्यन्तभिन्नं समासादिकं नान्वयबोधाय प्रयुञ्जीतेति वृद्धवचनस्यार्थ इति भावः। ननु पीतपटरूपमित्यादाववान्तरवाक्यार्थधीपूर्वको महावाक्यार्थबोधो न स्यात् पटधर्मिकपीतान्वयबोधरूपस्यावान्तरबोधस्य पटमुख्यविशेष्यकस्यैव वाच्यत्वात् तद्वे-

(१) मुख्येत्यस्य व्यावृत्तिमाह नहीति।

पटरूपमित्यादावपि नावान्तरवाक्यार्थबोधपूर्वको महावाक्यार्थबोधः, पटादिनाम्नः प्रथमान्तत्वाभावेन तदर्थे पीताद्यन्वयधियः पूर्वमसम्भवात्, विशिष्टवैशिष्ट्यावगाहितायाः प्रमाणान्तरेण पटधर्मिकपीतनिश्चयादपि तत्र सम्भवात् । न चान्योन्यपरस्परादिनामस्वव्याप्तिः, 'एभ्यः प्रथमा नाभिधीयत' इति वृद्धस्मरणादिति वाच्यम् । मल्लाभ्यामन्योन्यं हन्यत इत्यादौ मल्लयोः परस्परकर्तृक–हननकर्मत्वान्वयानुरोधेन(१) तेषामपि प्रथमान्तत्वात्, अन्यथा

---

कृष्णकान्तीटीका ।

हावाक्यार्थबोधेऽवान्तरवाक्यार्थबोधस्य हेतुतामेव खंडयति—पीतपटेत्यादिना । नावान्तरवाक्यार्थबोधपूर्वकः—नावान्तरवाक्यार्थबोधजन्य इत्यर्थः, तथाच तादृशबोधे न तस्य हेतुत्वमिति भावः । कुतो न हेतुत्वमित्याकाङ्क्षायामाह—पटादिनाम्न इति। तदर्थे—पटपदार्थे पट इति यावत । पूर्वमिति । महावाक्यार्थबोधादित्या दिः । असम्भवादिति । तथाच व्यभिचारान्न तादृशकार्यकारणभाव इति भावः । ननु विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुतया उक्तबोधस्य तथात्वरक्षार्थमेव तत्पूर्वमवान्तरवाक्यार्थबोधोऽवश्यं स्वीकर्तव्यः इत्यत आह—विशिष्टवैशिष्ट्येति । अवगाहितायो इति । तत्र सम्भवादिति परेणान्वयः । प्रमाणान्तरेणेति । शाब्दभिन्नप्रामाणेन प्रत्यक्षादिनेत्यर्थः । इदमग्रेतननिश्चयान्वयि, तत्पूर्वं पदार्थोपस्थितेरावश्यकत्वेनोपनीतभानसामग्र्याश्च नियमतः सत्त्वादिति भावः । नन्वलौकिकप्रत्यक्षसामग्र्यपेक्षया शाब्दसामग्र्या बलवत्त्वेन शाब्द एव तत्र भविष्यतीति नाशङ्क्यम्, प्रथमान्तपटनिश्चयरूपकारणविरहेण शाब्दसामग्र्यास्तत्रासम्भवात् । तत्र—पीतपटमित्यादिबोधे । एभ्योऽ—न्योन्यादिनामभ्यः। वृद्धस्मरणादिति । तथाच प्रथमांशे तन्निश्चयस्य भ्रमात्मकस्य सम्भवेऽपि अन्योन्यादिपदार्थमुख्यविशेष्यकशाब्दाप्रसिद्ध्या तत्रोक्तलक्षणागमनादिति भावः । अव्याप्तिं निरस्यति मल्लाभ्यामिति । मल्लयोरिति । सप्तम्यन्तस्य बोधने इत्यत्रान्वयः । परस्परकर्तृकेति । एतन्म-

रामभद्रीटीका ।

तुभूतस्य पटादिपदानां प्रथमान्तत्वस्याभावादतस्तत्रेष्टापत्तिमाह—पीतपटेत्यादि । ननु तत्रावान्तरवाक्यार्थबोधस्यानुत्पत्तौ पीतविशिष्टपटस्य रूपादौ वैशिष्ट्यावगाहिबोधो न स्यात् तत्र विशेषणतावच्छेदकावैशिष्टतया विशेषणनिश्चयस्य हेतुत्वादत आह—विशिष्टेति । प्रमाणान्तरेण—प्रत्यक्षादिना, तत्र—पीतपटरूपमित्यादौ । एभ्यः—अन्योन्यादिनामभ्यः । सर्वत्र वृद्धवचो न ग्राह्यमित्याशयेनाह—मल्लाभ्यामिति । कर्मत्वान्वयानुरोधेनेति । प्रथमान्तपदोपस्थाप्य एव धात्वर्थावच्छिन्नाख्यातार्थस्य भावनादेः

---

(१) बोधने इति कृष्णकान्तसम्मतोत्र पाठो द्रष्टव्यः ।

सकर्मकस्य हन्तेर्भावाख्यातसाकाङ्क्षत्वानुपपत्तेरकर्मकस्यैव धातोस्तथात्वात् १५

निरुक्तं नाम विभजते—

(१)रूढ़ञ्च लक्षकञ्चैव योगरूढञ्च यौगिकम् ।
तच्चतुर्द्धा, परै रूढयौगिकं मन्यतेऽधिकम् ॥ १६ ॥

तन्नाम । च-त्रयमवधारणार्थम् । तेन किञ्चिन्नाम कचिदर्थे रूढमेव,

कृष्णकान्तीटीका ।

छकर्तृकहननकर्मकत्वस्यापरमल्ले, एवमपरमल्लकर्तृकहननकर्मत्वस्यैतन्मल्लेऽन्वयबोधने इत्यर्थः । तेषामपि-अन्योन्यादिनाम्नामपि । प्रथमान्तत्वादिति । तथाच प्रथमान्तपदोपस्थाप्य एव धात्वर्थावच्छिन्नाख्यातार्थस्यान्वयादिति भावः । ननु भाववाच्य एव तथाप्रयोगः, तथाच परस्परमल्लकर्तृकपरस्परमल्लकर्मकहननमित्यन्वयबोधस्तत्र इति कुतः प्रथमान्तत्वापेक्षेत्यत आह—अन्यथेति । अनुपपत्तौ हेतुमाह—अकर्मकस्यैवेति । एवकारेण सकर्मकव्यवच्छेदः । तथात्वात्-भावाख्यातसाकाङ्क्षत्वात् । "भावाख्यातं ध्रौव्यादि"ति नियमसूत्रादिति भावः ॥ १५ ॥

निरुक्तं नामेति । क्रमप्राप्तमित्यादिः ।

तच्चतुर्धेति । तन्निरुक्तं नाम, चतुर्धा भिद्यत इति शेषः । परैरन्यैः पण्डितैरिति शेषः । रूढयौगिकमप्यधिकं नाम मन्यते स्वीक्रियत इत्यर्थः ।

तच्चतुर्धा इत्यत्र तत्पदार्थमाह—तन्नामेति । ननु मिथो विरुद्धधर्माणामेव विभाजकत्वे रूढत्वयौगिकत्वयोश्चैकस्मिन्नेव पङ्कजादिशब्दे समावेशात् ताभ्यां विभागानुपपत्तिरिति यौगिकत्वादितत्तद्धर्माणां प्रत्येकं स्वेतरधर्माभावविशिष्टतत्तद्धर्माणां विभाजकत्वं निर्वक्तुं भूमिकामारचयन्नाह—चत्रयमिति । एवकार-

रामभद्रीटीका ।

साकाङ्क्षत्वादिति भावः । ननु मल्लद्वयकर्तृकं परस्परकर्मकं हननमित्याकारक एवान्वयबोधः इत्यन्योन्यपदस्य प्रथमान्तत्वविरहेऽपि न क्षतिस्तत्राख्यातस्य भावविहितत्वेन कर्मत्वाबोधकत्वादत आह—अन्यथेति । तथात्वात्-भावाख्यातसाकाङ्क्षत्वात्, 'भावाख्यातं ध्रौव्यादेवे'ति नियमसूत्रादिति भावः ॥ १५ ॥

तच्चतुर्द्धेति । तन्निरुक्तं नाम चतुर्धा भिद्यत इति शेषः । परैः-पण्डितैः, रूढयौगिकमप्यधिकं नाम मन्यते स्वीक्रियते इत्यर्थः ।

ननु योगरूढस्य पङ्कजादेः रूढत्वयौगिकत्वयोर्नियमात् न रूढत्वादिकं नामविभाजकं विरुद्धधर्माणामेव तथात्वात् अत आह चत्रयमिति । 'गोप्रसूतौ' अर्थ

(१) तन्नाम १-रूढ २-लक्षक ३-योगरूढ ४-यौगिकभेदाच्चतुर्विधं स्वमतेन, अन्यमते न च ५-रूढयौगिकमपि पञ्चममधिकमिति बोध्यमिति कारिकार्थः ।

यथा गोप्रभृतौ गवादि "गमेर्डोर्दाभाभ्यां नुर्धेट इच्चे"त्यादेरौणादिक(स्य)प्रत्ययस्य शक्तिविरहेण यौगिकत्वायोगात । किञ्चिल्लक्षकमेव, यथा तीरादौ

कृष्णकान्तीटीका।

स्यावधारणार्थकतायाः प्रसिद्धत्वात्तस्य तादृशार्थो नोक्तः । एवकारस्य योगरूढमित्यनेन सम्बन्धः, तदुत्तरवर्त्तिचकारस्य च यौगिकमित्यनेन सम्बन्ध, इत्यवधारणचतुष्टयलाभ इति हृदयम् । नच रूढत्वयौगिकत्वयोरेव योगरूढे पङ्कजादौ नाम्नि समावेशसम्भवेन तयोर्विरोधार्थं रूढपदयौगिकपदान्यतरोत्तरावधारणार्थकपदोपादानौचित्येऽपि पदान्तरोत्तरतादृशार्थकस्य चकारद्वयस्यैवकारस्य च वैयर्थ्यमिति वाच्यम् । यौगिकान्यशब्दानां सर्वेषां किञ्चिदर्थे लक्षकत्वस्यापि सम्भवात, यौगिकत्वस्य च योगरूढेऽपि सम्भवादवधारणचतुष्टयस्योक्तत्वात् । तेन चकाराणामवधारणार्थकत्वेन नाममात्रस्यैवैकार्थे रूढत्वादेरपरार्थे लक्षकत्वादेः सम्भवेन तेषां रूढत्वादेरवधारणार्थकत्वासम्भवादर्थविशेषान्तर्भावेणावधारणार्थकत्वमावेदयितुं क्वचिदर्थे इत्युक्तम्, इदञ्च सर्वत्रान्वितम्, तथाच किञ्चिदर्थकलक्षकत्वाद्यभावविशिष्टं रूढत्वमेकं विभाजकम् । एवं किञ्चिदर्थकरूढत्वाद्यभावविशिष्टं लक्षकत्वमेकं विभाजकमिति रीत्या निर्वाच्यमिति भावः । नच किञ्चिदर्थलक्षकत्वाद्यभावविशिष्टरूढत्वस्य किञ्चिदर्थरूढत्वाद्यभावविशिष्टलक्षकत्वस्य चैकत्रैव घटादिपदे समावेशात्तादृशविशेषणाक्रान्ततया तयोर्न विरोध इति वाच्यम् । तदर्थलक्षकत्वाभावविशिष्टतदर्थरूढत्वतदर्थरूढत्वाभावविशिष्टतदर्थलक्षकत्वादेरेव विभाजकत्वात् । एतेन तदर्थरूढत्वादेरेव विभाजकत्वसम्भवेनाभावत्रयस्य तद्विशेषणत्वमनर्थकमिति परास्तम् । तत्पदार्थस्यानियन्त्रिततया तदर्थरूढत्वतदर्थलक्षकत्वयोरेकत्र समावेशात्तद्दोषतादवस्थ्यात् । गोप्रभृताविति । अर्थे इत्यनुषज्यते । गोशब्दादिति पूरणीयम् । प्रभृतिपदाद्दानुभानुपरिग्रहः । ननु गमादिधात्वर्थान्वितस्वार्थबोधकभावादिप्रत्ययगर्भत्वेन गो-दानु-भानु-धेन्वादिशब्दानां यौगिकत्वमेवेत्यत आह—गमेर्डोरिति । तदर्थश्च गमधातूत्तरं डोर्भवति, दाधातुभाधातूत्तरञ्च नुर्भवति, धेट्धातूत्तरं नुरिकारागमश्च भवतीति । शक्तिविरहेणेति । शक्तिग्राहकस्य व्याकरणस्य कोषादेर्वा तत्र शक्त्यग्राहकत्वात् किंचिदर्थे प्रत्ययादिविधायकव्याकरणस्यैव तथात्वादिति भावः । यौगिकत्वायोगादिति । अवयववृत्त्यप्रसिद्धेरिति भावः । तीरादाविति । अर्थे इति शेषः । एवमग्रेऽपि । ननु गङ्गायां व्रज इत्यादिप्रयोजकवृद्धवा-

रामभद्रीटीका ।

इति अनुषज्यते । ननु गोशब्दस्य दानुभानुधन्वादिशब्दस्य च धात्वर्थान्वितस्वार्थबोधकौणादिकप्रत्ययगर्भत्वात् योगरूढत्वमेव न तु केवलरूढत्वमत आह गमेर्डोरित्यादि । इत्यादेरित्यादिसूत्रलभ्यस्य, औणादिकस्य—उणादिगणान्तर्गतस्य । शक्तिविरहेणेति । व्याकरणस्य कोशादेर्वा तत्र शक्त्य-

गङ्गादि, आद्यव्युत्पत्त्या पूरवत्तीरे शक्तिग्रहस्याविशिष्टत्वेऽप्याजानिकप्रयोगापत्त्या तदप्रामाण्यकल्पनात्, शक्तेः पूर्वपूर्वप्रयोगनियतत्वात्। किञ्चिद्योगरूढमेव, यथा पङ्कजाते(१) पद्मादौ पङ्कजादि। किञ्चिद्यौगिकमेव, यथा पाककर्त्रादौ पाचकादि।

रूढयौगिकमप्यधिकं नाम, यथा मण्डप(२)महारजतादि, तद्धि कदा-

कृष्णकान्तीटीका।

क्यतः प्रयोज्यवृद्धस्य तीरगमनदर्शनाद्बालकस्य प्रथमतस्तीरेऽपि गङ्गापदशक्तिग्रहात्तत्र तस्य लाक्षणिकत्वमयुक्तमित्यत आह—आद्यव्युत्पत्त्येति। आद्यबोधानुरोधेनेत्यर्थः। पूरवद्भगीरथरथखातावच्छिन्नजलप्रवाहवदित्यर्थः। केचित्तु नीरवदित्यर्थ इत्यप्याहुः। क्वचित् पूर्ववदित्यपि पाठः, तत्राप्युक्त एवार्थः।पूर्वपूर्वप्रयोगविषयत्वेन पूर्वत्वं बोध्यम्। शक्तिग्रहस्याविशिष्टत्वेऽपीति। भ्रमप्रमासाधारणशक्तिनिश्चयत्वस्यैव शाब्दजनकतावच्छेदकत्वादिति भावः। आजानिकेति। गङ्गापदं यदि तीरशक्तं स्यात् तदा सृष्टिकालत्वव्यापकतीरानुभावकताकं स्यात् तीरपदवदित्यादिविपर्ययानुमानेन गङ्गापदे तीरशक्तत्वनिश्चयात्ततो बालकस्य निरुक्तादृशशक्तिज्ञाने इदं ज्ञानं भ्रमः बाधितार्थकत्वादित्यनुमानसम्भवादिति भावः। आपाद्याभावस्यापादकाभावव्यभिचारित्वं नास्तीत्याह-शक्तेरिति। पूर्वपूर्वप्रयोगनियतत्वात् सृष्टिकालत्वव्यापकान्वयानुभावकत्वव्याप्यत्वादित्यर्थः। पङ्कजाते पङ्कजनिकर्तरीत्यर्थः।

अपरैरित्यादिपरार्द्धं व्याकुरुते रूढयौगिकमपीति। मण्डपेति। मण्डं पिबतीति व्युत्पत्त्या कदाचित् मण्डपानकर्तारं कदाचिच्च रूढ्या गृहं तदभिधत्ते इति तद्रूढयौगिकमिति भावः। नन्वेतन्मते मण्डपशब्दस्य योगरूढत्वापत्तिः, न चेष्टापत्तिः, तथासति तस्य विभाजकत्वानुपपत्तेः मिथो विरुद्धानामेव तथात्वात् इति चेन्न। रू-

रामभद्रीटीका।

ग्राहकत्वादिति भावः। किंचिदिति। नाम क्वचिदर्थे इत्यनुषज्यते। एवमग्रेऽपि। ननु गङ्गायां व्रजेत्यादिप्रयोजकवृद्धवाक्यतः प्रयोज्यवृद्धस्य तीरे गमनदर्शनाद्बालकस्य प्रथमतस्तीरेऽपि गङ्गापदस्य शक्तिग्रहात् तत्र तस्य लाक्षणिकत्वमयुक्तमत आह—आद्यव्युत्पत्त्येति। आद्यबोधानुरोधेनेत्यर्थः। पूरवत्—नीरवत्। आजानिकेति। गङ्गापदं यदि तीरशक्तं सृष्टिकालत्वव्यापकतीरानुभावकताकं स्यात् तीरपदवत्, न चेदं तथा तस्मान्न तीरशक्तम् अतः प्राथमिकशक्तिग्रहस्य भ्रमत्वं कल्प्यत इत्यर्थः।

पदैरित्यादेरर्थं विवृणोति—रूढयौगिकमित्यादिना। मण्डपेति। मण्डं

(१) स्थलपद्मव्यावर्तनार्थं पङ्कजात इत्युक्तम्।

(२) मण्ड-पा-कृत्प्रत्ययानां प्रत्येकशक्त्या मण्डपानकर्तृबोधकमेवेत्यर्थः। एवं महारजतशब्दो रूढ्या काञ्चनबोधकः अवयवशक्त्या महद्रजतं बोधयतीत्यर्थः।

चिदवयववृत्त्या योगार्थमेव, कदाचिच्च समुदायशक्त्या रूढ्यर्थमेवाभिधत्त इत्यपरेषाम् मतम्। गौर्वाहिक इत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादिपदं गोसदृशादौ लक्षकमेव न तु ततो भिद्यते ॥१६॥

कृष्णकान्तीटीका।

ढ्यर्थेऽभेदेन यौगिकार्थबोधकत्वमेव योगरूढत्वम्, यौगिकार्थमात्रविषयबोधजनकत्वे सति रूढ्यर्थमात्रविषयकबोधजनकत्वं रूढयौगिकत्वमिति वाच्यं, तथाच मण्डं पाति रक्षतीति व्युत्पत्त्या मण्डपशब्दोऽपि रथकारादिशब्दवत् योगरूढ एव तन्मते भविष्यति। न चोक्तलक्षणाक्रान्तरूढयौगिकत्वमपि तत्र स्थास्यतीति वाच्यम्। तस्य विभाजकत्वरक्षार्थं तल्लक्षणे योगरूढभिन्नत्वस्य रूढ्यर्थेऽभेदेन यौगिकार्थप्रकारकबोधजनकान्यत्वपर्यवसितस्य निवेशादिति। तन्मते उदाहरणान्तरमाह—महारजतेति। तच्च कदाचित् महच्च तद्रजतञ्चेति व्युत्पत्त्या बृहद्रजतम्, कदाचित् रूढ्या काञ्चनमभिधत्ते, न तु जातुचित् रजताभिन्नकाञ्चनमयोग्यत्वादिति भावः। ये तु मण्डं पातीति व्युत्पत्त्या योगरूढत्वं तस्येति यथाश्रुतेऽवतारणिकामाहुः। तेषां वैदग्ध्यं पुनरनयैव दिशा प्रत्येतव्यं सुधीभिरिति। आदिना व्योमकेश—भवादिपरिग्रहः। हरे आकाशकेशस्योत्पत्तेश्चाभेदस्य बाधितत्वात्तस्य योगरूढत्वासम्भवात्। केचित्तु आदिना यक्षकर्दमादिपरिग्रहः "कुङ्कुमाऽगुरु-कस्तूरी-कक्कोलैर्यक्षकर्दम" इति कोपदर्शनात् कदाचित् रूढ्यर्थं कदाचित् यक्षाणां कर्दम इति व्युत्पत्त्या योगार्थं बोधयन्तीत्याहुः। तन्न, तेषां योगरूढत्वस्वीकारे क्षत्यभावादिति। अपरेषामित्यस्वरससूचनाय, स च तुल्ययुक्त्या रूढलक्षकत्वमप्यधिकं स्यात्। अस्मन्मते तु महारजतादिशब्दो बृहद्रजतबोधने यौगिकः, काञ्चनबोधने रूढ एव तयोर्विरोधसम्पादनप्रकारस्तु पूर्वमेव दर्शित इति भावः। ननु रूढयौगिकस्य तदन्तर्भावेऽपि गौणस्याधिकत्वं दुर्वारमित्यतस्तदपि लक्षकान्तर्भूतमित्याह—गौर्वाहि:

रामभद्रीटीका।

पिबतीति व्युत्पत्त्या कदाचिन्मण्डपानकर्तारमेव तद्बोधयति कदाचिच्च रूढ्या गृहमेवेति भावः। मण्डं पाति रक्षतीति व्युत्पत्त्या मण्डपपदं मण्डरक्षकगृहत्वप्रकारेण गृहं बोधयत् यदि योगरूढं कुर्यात्तदा यौगिकरूढस्य स्थलान्तरमुदाहरति—**महारजतेति**। महच्च तत् रजतं चेति व्युत्पत्त्या महारजतपदं कदाचित् महद्रजतमेव योगार्थं बोधयति कदाचिच्च रूढ्या सुवर्णत्वप्रकारेण सुवर्णमेव बोधयति नतु रूढयर्थे धर्मिणि योगार्थमयोग्यत्वादिति भावः। महारजतादेरित्यादिना यक्षकर्दमपदस्योपग्रहस्तस्य रूढ्या 'कुङ्कुमागुरुकस्तूरीकक्कोलैर्यक्षकर्दम' इत्यमरकोशबलेनानुलेपनप्रभेदस्य यक्षाणां कर्दम इति व्युत्पत्त्या यक्षीयकर्दमस्य च बोधनादिति ध्येयम्। रूढलक्षकमपि एवमधिकं स्यादित्याशयेन उक्तं (१)परेषामिति ॥१६॥

(१) एतन्मतेनात्र शक्तौ 'परेषाम्' इति पाठो बोध्यः।

रूढं नाम लक्षयति विभजते च—

**(१)रूढं सङ्केतवन्नाम, सैव संज्ञेति कीर्त्यते ।**
**नैमित्तिकी पारिभाषिक्यौपाधिक्यपि तद्भिदा ॥ १७॥**

यन्नाम यादृशार्थे सङ्केतितमेव न तु यौगिकमपि तद्रूढम्, योगरूढन्तु पङ्कजादिकं न तथा । रूढनामैव च संज्ञापदेनाभिलप्यते, न तु रूढादि-

कृष्णकान्तीटीका ।

क इत्यादाविति । शक्यार्थसदृशत्वावच्छिन्नेति । गोसदृशत्वावच्छिन्नेत्यर्थः । ततस्तस्माल्लक्षकादिति यावत् । तथाच नाम्नां न चतुर्धा विभागव्याघात इति भावः । केचित्तु मतान्तरमभिधाय न्यूनताभङ्गाय तन्मतेऽस्वरसं प्रतिबन्धिमुखेन व्यञ्जयति—गौर्वाहिक इति । भवन्मते इत्यादिः । तथाच रूढयौगिकस्याधिकस्येव गौणस्याप्यधिकस्य सत्त्वेन भवन्मते पंचधा विभागोऽप्यनुपपन्न इति गौणस्य तदन्तर्भावे रूढयौगिकस्यापि तदन्तर्भावः सुवचः युक्तेस्तौल्यादिति भावः इत्याहुः । अन्ये तु तत्र तादृशपाठो न ग्रन्थकृत्सम्मतः लक्षणाविचारस्थले एतत्पाठस्य वक्ष्यमाणत्वात् तथैव सन्दर्भसङ्गतेः । अन्यथा नामविभागप्रस्तावे लक्षकत्वावान्तरधर्मावच्छिन्नस्यातिरिक्तत्तादृशशङ्काया अनुत्थितेः ॥ १६ ॥

रूढमिति । तल्लक्षणं तद्विभागं च प्रतिजानीते इत्यर्थः । तद्भिदेति । तस्याः संज्ञाया भेद इत्यर्थः ।

विवृणोति—यन्नामेति । सङ्केतितमेवेति । तथाच कारिकास्थं सङ्केतवदिति सङ्केतवदेवेति सावधारणार्थकमिति भावः । एवकारव्यवच्छेद्यमाह—नत्विति । यद्यपि यौगिकनाम्नः सङ्केतशून्यत्वादेव व्युदाससम्भवे एवकारव्यवच्छेद्यत्वकथनमसङ्गतं, तथापि यौगिकपदस्यावयवशक्त्या बोधजनकपरतया योगरूढस्यैव तद्व्यवच्छेद्यत्वं बोध्यम् । तथाच यादृशानुपूर्वी इदं पदं अमुकं बोधयतु इति यादृशार्थबोधजनकत्वप्रकारकेच्छाविषयतावच्छेदिका योगरूढभिन्नत्वे सति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे रूढत्वमिति पर्यवसितम् । योगरूढेऽतिव्याप्तिमुद्धरति—योगरूढन्त्विति । न तथा—न तादृशार्थकयोगरूढभिन्नमिति, तत्र नातिप्रसङ्ग इति शेषः । सैव संज्ञेति कीर्त्यत इत्युक्त्योः सार्थक्यमाह—रूढनामैव चेति । स्यादिति । तथाच ना-

रामभद्रीटीका ।

तद्भिदेति । तस्याः संज्ञाया भिदा भेद इत्यर्थः ।

सङ्केतितमेवेति । तथाच कारिकास्थं सङ्केतवत्पदं सङ्केतमात्रवदर्थकमिति भावः । एवकारार्थं विवृणोति न तु यौगिकमपीति । एवार्थनिवेशस्य प्रयोजनमाह

(१) यादृशार्थविशेषबोधने व्यवहारादिना यत्सङ्केतितमात्रं तन्नाम संज्ञेत्युच्यते । सा च संज्ञा १ नैमित्तिकी २ पारिभाषिकी ३ औपाधिकी चेति त्रिविधेति कारिकार्थः ।

वत् संज्ञापि नाम्नोऽवान्तरभेदः, येन विभागव्याघातः स्यात् ।

संज्ञायाश्च त्रयो भेदाः—नैमित्तिकी पारिभाषिकी औपाधिकी चेति । पाचक-पाठकादयस्तु न संज्ञाः सङ्केतशून्यत्वादिति वक्ष्यते ॥ १७ ॥

ये तु रूढस्य नाम्नश्चतुर्विधत्वमाहुस्तन्मतमुपन्यस्यति—

(१)जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतवत्तया ।
जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः ॥ १८ ॥

कृष्णकान्तीटीका ।

म्नश्चतुर्धाविभागव्याघातवारणाय तदुपादानमिति भावः ।

पराद्धं व्याकुरुते—संज्ञायाश्चेति । तथाच तन्निरेत्यत्र तस्याः संज्ञाया इत्यर्थः, भिदा इत्यस्य भेदोऽर्थः इति व्यञ्जितम् । ननु गुणप्रकाशे पाचकपाठकादिशब्दानामौपलाक्षणिकसंज्ञात्वोपगमात्तदनुक्त्या न्यूनत्वमत आह—पाचकेत्यादि । वक्ष्यते इति । कृदन्तनाम्नो विचार इति शेषः ॥ १७ ॥

शाब्दिकमतस्यावतारणिकामाह—ये त्विति । तन्मतं—तेषां मतम् ।

जातिशब्दादीत्यादिना द्रव्यशब्द-गुणशब्द-कर्मशब्दपरिग्रहः । यद्यपि जात्यादिभेदानामेव तद्भेदकत्वं न तु जातिशब्दादिभेदानामिति शब्दशब्दोपादाने प्रयोजनविरहोऽसङ्गतिश्च, तथापि जातिशब्द इत्यस्य जातिरित्याकारकशब्दो जातिवाचकशब्दो वा नार्थः, किन्तु जात्यात्मकवाच्यादिभेदेनेत्यर्थः । शब्द इत्यस्य कर्मविहितप्रत्ययनिष्पन्नत्वात् जातिरितिशब्दो वाचको यस्येति बहुव्रीहिणा वा तादृशार्थलाभात् । नच किं जात्यादिनेति नोक्तम्, स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात् । केचित्तु शब्दपदं गुणपरं तथाच जातिगुणभेदेनेत्यर्थ इत्याहुः । परे—शाब्दिकाः, जगुराहुः ।

रामभद्रीटीका ।

योगरूढं त्विति । न तथा—न संकेतितमेव । रूढनाम चेत्यादिकं सैव संज्ञेत्यादेर्विवरणम् । तदभिधानस्य प्रयोजनमाह नन्विति । विभागव्याघातः स्यादिति । रूढादेरिव संज्ञाया अपि नामविशेषत्वे 'रूढं च लक्षकं चैव योगरूढं चे'त्यादि चतुर्द्धाविभागस्य व्याघातापत्तिरित्यर्थः ।

नैमित्तिकी त्यादिकं विवृणोति संज्ञायाश्चेति । ननु गुणप्रकाशे पाचकपाठकादिशब्दानामौपलक्षणिकसंज्ञात्वोपगमात् तदनुक्त्या न्यूनत्वमत आह पाचकेत्यादि । वक्ष्यत इति । कृदन्तरूढस्य यौगिकनाम्नो विचार इति शेषः ॥ १७ ॥

जातिशब्दादीत्यादिना द्रव्यशब्दगुणशब्दकर्मशब्दानामुपग्रहः । परे—शाब्दिकाः, जगुरूचुः ।

(१) जाति-व्यक्ति-गुण-क्रियारूपोपाधिषु गृहीतसङ्केतिततया (१) जातिशब्द (२) व्यक्तिशब्द-(३) गुणशब्द (४) क्रियाशब्देतिभेदाच्चतुर्विध्यमिति वैयाकरणाः प्राहुरित्यर्थः ।

गोगवयादीनां गोत्वादिजात्या पश्वाढ्यादीनां लाङ्गूलधनादिद्रव्येण धन्यपिशुनादीनां पुण्यद्वेषादिगुणेन चलचपलादीनाञ्च शब्दानां कर्मणाव- च्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेव रूढानामिति । यदुक्तं दण्ड्याचार्यैः—

शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः ।
चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विधः ॥ इति,

तदेतज्जडमूकमूर्खादीनामन्यशून्यादीनाञ्च शब्दानामपरिग्रहापत्त्या

---

कृष्णकान्तीटीका ।

**गोगवयादीनामिति** । शब्दानामिति परेणान्वयः । गोत्वादीत्यादिना गव- यत्वादिपरिग्रहः । जात्येति । अवच्छिन्नशक्तिमत्त्वादिति परेणान्वयः । एवमग्रेऽपि षष्ठ्यन्तानां शब्दानामित्यत्रान्वयः, तृतीयान्तानां चावच्छिन्नशक्तिमत्त्वादित्यत्रान्वयो बोद्धव्यः । लाङ्गूलेति लोम्नोऽप्युपलक्षणम् , लोमलाङ्गूलविशिष्ट एव पशुपदस्य शक्तेः । शाब्दिकमतदाढ्यार्थं प्राचीनसम्वादमाह—यदुक्तमिति । प्रतीयन्त इति । प्रकारतया इत्यादिः । अमीषां-जात्यादीनाम् । चातुर्विध्यात्—मिथोविरुद्धधर्मचतुष्टय- वत्त्वात् । शब्द इति । रूढ इत्यादिः, चतुर्विधो—मिथोविरुद्धधर्मचतुष्टयवान् । परे जगुरित्यत्र परे इत्यस्वरससूचनाय, तमेवास्वरसमाह तदेतदिति । जडपदं चेष्टा- रहिते, मूकपदं वाग्विधुरे, मूर्खपदं विद्यारहिते शक्तं, तत्र न जात्यवच्छिन्ना शक्तिः किन्त्वभावावच्छिन्नेति तेषामनुपग्रहाद्विभागन्यूनतेति भावः । ननु जडादिपदं न चेष्टादिरहितमात्रे शक्तं तथासतीष्टकादेरपि जडत्वप्रसङ्गात् , किन्तु चेष्टारहितप्रा- ण्यादावेव, तथा च पश्वादिवत् तदपि द्रव्यावच्छिन्नशक्तिकमिति अत आह—अ- न्यशून्यादीनाञ्चेति । अन्यपदस्य भेदवति शून्यपदस्यात्यन्ताभाववति शक्तेस्ते-

रामभद्रीटीका ।

**गोगवयादीनामिति** । शब्दानामिति परणान्वयः । गोत्वादीत्यादिना गवय- त्वादिजात्युपग्रहः । द्रव्येणेति । अवच्छिन्नशक्तिमत्त्वादिति परेणान्वयः । पशुपदस्य लोमवल्लाङ्गूलवत्त्वादिप्रकारेण आढ्यपदस्य च धनवत्त्वप्रकारेण बोधकत्वादिति भावः । पिशुनादीत्यादिना गगनादीनामुपग्रहः , तेषां शब्दादिगुणवत्तया बोधकत्वात् । पुण्येति । धन्यपदस्य पुण्यवत्त्वेन पिशुनपदस्य द्वेष्टृत्वेन बोधकत्वादिति भावः । प्रतीयन्ते इति । प्रकारीभूय इत्यादिः । अमीषां जात्यादीनां, चातुर्विध्यात्—जातित्वादि- धर्मचतुष्टयवत्त्वात् । परे जगुरित्यस्वरसबीजमाह तदेतदिति । जडपदं चेष्टारहिते मूकपदं वाग्विधुर मूर्खपदं विद्यारहिते शक्तं, तत्र च न जातिद्रव्याद्यवच्छिन्नं शक्तिमत्त्वं किन्तु अभावावच्छिन्नमेवेति तेषामनुपग्रहात् विभागन्यूनत्वमिति भावः । ननु जडादिपदं न चेष्टारहितादिमात्रे शक्तं तथासतीष्टकादेरपि जडत्वादिप्रसङ्गात् किन्तु चेष्टारहितप्राण्या-

परित्यक्तमस्माभिः ॥ १८ ॥

नैमित्तिकसंज्ञां लक्षयति--

(१)जात्यवच्छिन्नसङ्केतवती नैमित्तिकी मता।
जातिमात्रे हि सङ्केताद्व्यक्तेर्भानं सुदुष्करम् ॥ १९ ॥

यन्नाम जात्यवच्छिन्नसङ्केतवत् सा नैमित्तिकी संज्ञा, यथा गोचैत्रादिः। सा हि गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते न तु

---

कृष्णकान्तीटीका।

षामनुपग्रहस्तदवस्थ इति भावः। आदिना करणाधिकरणसामान्यविशेषादिपरिग्रहः। तेषामपि द्रव्यगुणजातिस्पन्दान्यतमत्वावच्छिन्नशक्तिकान्यत्वात्। अपरेषां पूर्वोक्तनामादिपदानां षण्णां यदर्थग्राहकत्वं तत् स्वयमेवोह्यम् ॥ १८ ॥

नैमित्तिकेति। नैमित्तिकसंज्ञालक्षणं प्रतिजानीते इत्यर्थः। जात्यवच्छिन्नसङ्केतवतीत्यत्र वतुप्रत्ययान्तत्वेन सप्तमीतत्पुरुषः, न तु कर्मधारयोत्तरं वतुप्रत्ययो "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर" इत्यनेन तन्निषेधात्।

विवृणोति--यन्नामेति। नैमित्तिकी संज्ञेति। क्वचिन्नैमित्तिकेत्येव पाठः, तत्र संज्ञेति पूरणीयम्। उदाहरति--गोचैत्रादिरिति। सङ्केतस्य नित्यानित्यभेदाद्द्वयोरुपादानम्। सा--गोचैत्रादिरूपा संज्ञा। हि हेतौ, तच्चाभिधत्ते इत्यत्रान्वयि। जातेः सङ्केतावच्छेदकत्वं च शाब्दबोधविषयतावच्छेदकत्वेन सङ्केतविषयत्वम्। सङ्केतश्च पदविशेष्यकोऽर्थविशेष्यको वा इत्यन्यदेतत्। नच चैत्रत्वस्यानेकवृत्तित्वाभावात् कुतो जातित्वमिति वाच्यम्। चैत्रत्वस्य शरीरमात्रवृत्तेः शरीरस्य च बाल्यादिभेदेन नानात्वात् जातित्वाक्षतेः। अभिधत्ते वक्तीत्यर्थः। गोत्वावच्छिन्नशक्तेति यावत्। कारिकापरार्द्धं व्याकुर्वन् मीमांसकमतं दूषयितुमारभते नत्विति। गोत्वा-

रामभद्रीटीका।

दावेव, तथाच पश्वादिपदवत्तदपि द्रव्यशब्द एव स्यादत आह--अन्यशून्यादीनां चेति। शून्यपदमत्यन्ताभाववत्त्वे, अन्यपदं भेदवत्त्वे शक्तिमत् न तु जात्यादिमत्त्वेनेति तेषामनुपग्रहस्तदवस्थ इति भावः। आदिना अधिकरणादिशब्दस्योपग्रहः, तत्र स्वरूपसम्बन्धस्य पदार्थान्तरस्यैव वाऽधिकरणत्वादेः शक्यतावच्छेदकत्वादिति ध्येयम् ॥१८॥

नैमित्तिकीत्यस्य संज्ञेति शेषः। क्वचित्तथैव पाठः। गोचैत्रादिरिति सङ्केतस्य नित्यानित्यभेदात् गोचैत्रयोरुपादानम्। सा गवादिसंज्ञा, अभिधत्ते--बोधयति। नत्विति। अभिधत्ते इति पूर्वेणान्वयः।

---

(१) स्वमतेनोक्ता नैमित्तिकीं संज्ञां लक्षयति जातीति। जातिविशिष्टव्यक्तौ गृहीतसङ्केता संज्ञा नैमित्तिकीत्यर्थः। मीमांसकमतानुसरणेन जातिमात्रे यदि संज्ञायाः सङ्केतो गृह्यते तदा व्यक्तिभानं संज्ञया न स्यादिति परार्धार्थो बोध्यः।

गोत्वादिजातिमात्रम्, गोपदं गोत्वे सङ्केतितमित्याकारकग्रहाद्गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुभवानुपपत्तेः; एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात्।

(१)ननु गामानयेत्यादौ गोत्वादिकर्मताकत्वेनैवानयनादेरन्वयधर्गो-त्वादिशक्तत्वेन पदज्ञानस्य गोत्वाद्यन्वयबुद्धिं प्रत्येव हेतुत्वात्, (२)सुबर्थक

कृष्णकान्तीटीका।

दीत्यादिना चैत्रत्वादिपरिग्रहः। जातिमात्रमिति अभिधत्ते इति पूर्वेणान्वयः। मात्रपदेन व्यक्तेर्व्यवच्छेदः। मीमांसकैरर्थवादानां शाब्दबोधजनकत्वस्वीकारात् गामानय इतिस्थलानुधावनम्। ननु सङ्केतविषयीभूतशाब्दबोधविषयत्वमिव सङ्केतग्रहविषयत्वमपि तज्ज्ञानप्रयोजकम् इति गोत्वशाब्दत्वज्ञानमपि गवान्वयबोधहेतुर्भविष्यतीत्यत आहैकशक्तत्वग्रहस्येति। प्रसङ्गादिति। तादृशज्ञानात् घटादेरपि ज्ञानप्रसङ्गादित्यर्थः। सङ्केतग्रहाविषयत्वस्याविशेषादिति भावः॥

भट्टमतं दूषयितुमुपन्यस्यति नन्विति। आनयेत्यादिना आनयेदित्यादेः परिग्रहः। एतादृशस्थलानुधावनबीजन्तु पूर्वमुक्तमेव। गोत्वकर्मताकत्वेनैवेति एवकारेण गवादिकर्मताकत्वव्यवच्छेदः। हेतुत्वादिति। गोत्वशक्तत्वेन पदज्ञानोत्तरगोत्वान्वयबुद्धिं प्रति गोत्वशक्तित्वेन पदज्ञानस्य हेतुत्वादित्यर्थः। ननु आनयनकर्मत्वादौ गोत्वाधेयत्वस्य बाधात्कथं तत्र गोत्वान्वय इत्यत आह—सुबर्थकर्मत्वा-

रामभद्रीटीका।

भट्टानां मतमुत्थापयति नन्विति। आनयनादिकर्मत्वस्य गोत्वादिजातौ साक्षात्सम्बन्धेनासत्वात् आह—सुबर्थेति। द्वितीयाद्यर्थकर्मत्वादावित्यर्थः। इदमुपलक्षणम्।

(१) जातिमात्रे पदस्य शक्तिरिति वादिनां तौतातितानां भाट्टानां मतं दूषयितुं तन्मतमुपन्यस्यति नन्विति। तेषामयमाशयः—वाक्यार्थप्रतिपत्त्यनुकूलपदार्थस्मरणजनकपदपदार्थयोस्सम्बन्धस्तावत् वाचकत्वं नाम सकलवादिसिद्धम्। तच्च सङ्केतो वा पदार्थान्तरं वेत्यन्यदेतत्। स च सम्बन्धः कुत्र कल्प्यतां जातिमात्रे वा जातिव्यक्त्योर्वेति विमर्शे जायमानेपि जातावेव तत्कल्पना ज्यायसी 'नागृहीतविशेषण' न्यायेन, न तु व्यक्तौ अनन्ताभिर्व्यक्तिभिः सह सम्बन्धग्रहणस्याशक्यत्वात्, सामान्यलक्षणायाः प्रत्यासत्तेः प्रमाणाभावेनानङ्गीकारात्, तथात्वे वा व्यक्तेरन्यथालाभसम्भवेन तत्र शक्तिकल्पनस्य गौरवपराहतत्वात्, अत एवोक्तं 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति। व्यक्तेः कथं लाभ इति चेत्? कर्मत्वं गवीयं गोत्वनिष्ठकर्मतात्वादित्याद्यनुमानरूपाक्षेपेणैव तल्लाभसम्भवात्। ननु व्यक्तिं विना किमनुपपन्नं, न तावज्जातिः, व्यक्तिं विना जातिस्वरूपावस्थानादिति। मैवम्। जातेर्हि व्यक्तिवृत्तिता नियतेति कथमाक्षेपानुपपत्तिः। न च जातिव्यक्त्योर्युगपत्प्रतीतिदर्शनात्कथमाक्षेप्याक्षेपकभाव इति वाच्यम्। गौरवप्रसंगबाधकबलेन युगपत्प्रतीतेर्भ्रान्तत्वकल्पनस्योचितत्वात्। तस्माज्जातावेव शक्तिरिति। (२) ननु गोत्वादावानयनकर्मत्वाभावात् कथं कर्मत्वे गोत्वादेराधेयतयाऽन्वयबोधो योग्यताविरहादित्यत आह सुबर्थेति।

र्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात्, गवादिकर्मताकत्वेन बोधस्तूत्तरकालमाक्षेपात्। कर्मत्वं गवीयं गोत्वनिष्ठकर्मतात्वात्, आनयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वा(१)दित्याद्यनु-

कृष्णकान्तीटीका।

दाविति। तथाच स्वरूपसम्बन्धावच्छिन्नाधेयत्वस्य तत्र बाधेऽपि स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नाधेयत्वस्य तत्राबाधेन तेन सम्बन्धेन तत्र तदन्वये बाधकाभावः। स्वं गोत्वम्। साकाङ्क्षत्वादिति। इदमुपलक्षणम्, सुबर्थसंख्यादेरपि स्वपर्याप्त्यधिकरणसमवेतत्वसम्बन्धेन गोत्वादावन्वयो बोध्यः, तेन गोत्वस्यैकत्वेऽपि द्विवचनबहुवचनयोर्नानुपपत्तिरित्यपि द्रष्टव्यम्। वस्तुतः कर्मत्वादावित्यादिपदात् करणत्वादेरिव गोत्वादेरित्यादिपदात् सुबर्थसंख्यादेरपि परिग्रहः, साकाङ्क्षत्वादित्यस्य आश्रयतया प्रकारतया वा साकाङ्क्षत्वादित्यर्थ इति नानुपपत्तिर्न वा ग्रन्थकर्तुर्न्यूनत्वमिति युक्तमुत्पश्यामः। ननु गवादिकर्मताकत्वेनानयनादेस्तत्र बोधोऽनुभवसिद्ध इति तदपलापे सिद्धान्तविरोध इत्यत आह—गवादिकर्मताकत्वेनेति। आक्षेपादनुमानात्। अनुमानप्रकारमाह—कर्मत्वमिति। गवीयमिति। स्वरूपसम्बन्धावच्छिन्नाधेयतया गोसम्बन्धीत्यर्थः। क्वचिद् गोवृत्तीत्येव पाठः, तत्र स्वरूपसम्बन्धेनेत्यादिः। गोत्वनिष्ठेति। स्वाश्रयवृत्तित्वसम्बन्धेनेत्यादिः, अन्यथा गोत्वं पश्यतीत्यादौ प्रकारतारूपकर्मत्वे व्यभिचारापत्तेः। उक्तानुमानेऽन्वयेन दृष्टान्तसम्भवेऽपि व्यतिरेकेण घटादिरेव दृष्टान्त इति बोध्यम्। अथवा यत् स्वाश्रयवृत्तित्वसम्बन्धेन यद्वृत्तिजातिवृत्ति तत्तद्वृत्ति घटविषयवदिति सामान्यव्याप्त्या तत्र तदनुमानम्। ननु उक्तानुमानात् कर्मत्वादौ गोनिष्ठत्वसिद्धावपि तादृशकर्मतानिरूपकत्वस्यानयनादावसिद्धया नोक्तबोधनिर्वाह इत्यतोऽनुमानान्तरमाह—आनयनमिति। केचित्तु अनुमानमिदमग्रिमानुमाने साध्यप्रसिद्ध्यर्थमित्याहुः। तन्न समीचीनं, तदनुमाने साध्यतावच्छेदकविधयैव कर्मत्वादौ गोवृत्तित्वसिद्धिसम्भवात् पूर्वानुमानवैयर्थ्यापत्तेरिति। अत्र गोदानादिकं दृष्टान्तो बोध्यः। अन्ये तु अन्वयदृष्टान्तसम्भवासम्भवाभ्यामे-

रामभद्रीटीका।

सुबर्थबहुत्वादेरपि स्वपर्याप्त्यधिकरणसमवेतत्वसम्बन्धेन प्रकृत्यर्थे गोत्वादावन्वयो बोध्यस्तेन गोत्वस्यैकत्वेपि गावौ गाव इत्यादौ द्विवचनादेर्नानुपपत्तिरित्यपि द्रष्टव्यम्। नन्वेवं गामानयेत्यादिवाक्यश्राविणः पुरुषस्य गोनिष्ठकर्मताकबोधः कथं स्यात् अत आह—गवादीति। बोधस्त्वानयनादेरित्यादिः। उत्तरकालं—गोत्वकर्मताकत्वबोधानन्तरम्, आक्षेपादनुमानात्। तदेवानुमानमाह कर्मत्वमित्यादिना। गवीयमिति। आधेयतासम्बन्धेन गोमदित्यर्थः। गोत्वकर्मतात्वादिति। स्वाश्रयवृत्तित्वसम्बन्धेन गोत्व

(१) रामभद्रमते 'गोत्वकर्मतात्वात्, गोत्वकर्मताकत्वात्' इति हेतुद्वयस्य पाठो द्रष्टव्यः।

मानसाम्राज्यात् । न च वस्तुगत्या यद्गोत्वशक्तत्वं तज्ज्ञानस्य हेतुत्वे गोपदं जातिशक्तमित्येवं गोपदज्ञानादपि शुद्धगोत्वस्यान्वयबोधापत्तिः, गोत्वत्वावच्छिन्नशक्तत्वप्रकारकज्ञानत्वेन तथात्वे च लाघवाद्गोत्वावच्छिन्नशक्तताप्रकारकज्ञानत्वेनैव हेतुत्वं गोत्वत्वाद्यप्रवेशादिति वाच्यम् । गोपदं गोत्वशक्तमित्यकारकज्ञानत्वेनैव हेतुतायां शुद्धस्यैव गोत्वस्य विषयितासम्बन्धेन शक्त्यंशे विशेषणत्वेन गोत्वत्वादिप्रवेशगौरवस्यासम्भवात् । न हि समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्मावच्छिन्नत्वानियमो मानाभावात्, अयं गौरित्यादिव्यवसायोत्तरमिमं गोत्वेन जानामीत्याकारके तस्य

---

कृष्णकान्तीटीका ।

वानुमानद्वयोपादानमिति प्राहुः । अत्रापि यद्यद्वृत्तिजातिवृत्तिकर्मतानिरूपकं भवति तत्तद्वृत्तिकर्मतानिरूपकं भवति ग्रामगमनवदिति सामान्यव्याप्तेरपि सम्भवो बोध्यः । अनुमानसाम्राज्यात्—अनुमानप्राचुर्यात् । नचेति । वाच्यमिति परेणान्वयः । वस्तुगत्या इति । गोत्वत्वाद्यप्रवेशेनेत्यर्थः । हेतुत्वे इति । स्वोत्तरनिरवच्छिन्नगोत्वान्वयबोधं प्रतीत्यादिः । अन्वयबोधापत्तिरिति । तज्ज्ञाने जातित्वेन गोत्वस्यैव भातत्वात् इति भावः । तथात्वे—निरुक्तबोधं प्रति हेतुत्वे । चस्त्वर्थे । लाघवादिति । गुरुशरीरगोत्वत्वाद्यप्रवेशेनेत्यादिः । हेतुत्वमित्यस्योचितमिति शेषः ॥ लाघवमेव स्वयं व्यञ्जयति गोत्वत्वेति । गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपस्य तस्यातिगुरुत्वादिति भावः । समवायान्यसम्बन्धेन गोत्वादेर्निरवच्छिन्नप्रकारत्वे बाधकं निरस्यति—नहीति । हिर्हेतौ, यस्मात्तादृशनियमो नेत्यर्थः । नियमाभावे हेतुमाह—मानाभावादिति । साधकाभावमुक्त्वा बाधकमप्याह—अयं गौरिति । गोत्ववानितिज्ञानानुव्यवसायस्य प्रकारित्वांशे स्वरूपतो गोत्वप्रकारकत्वाभावात् अनुव्यवसाये एतादृशव्यवसायजन्यत्वपर्यवसितव्यवसायोत्तरत्वाभिधानम् । गोत्वेनेमं जानामीत्याकारक इत्यनुमाने इत्यत्रैवानुव्यवसाये इत्यत्राप्यन्वितम् । नच प्राकट्यापरनामातिरिक्तपदार्थरूपज्ञाततालिङ्गकानुमानस्य गवादिविशेष्यकतया कथं तदा-

रामभद्रीटीका ।

निष्ठकर्मतात्वादित्यर्थः । अनुमानमिदमग्रिमानुमानस्य साध्यप्रसिध्यर्थम् । गोत्वकर्मताकत्वादिति । गोत्वनिष्ठफलजनकत्वादित्यर्थः । न चेति । वाच्यमित्यन्वयः । हेतुत्व इत्यस्य निरवच्छिन्नगोत्वान्वयबोधं प्रतीत्यादिः । शुद्धेति । निरवच्छिन्नेत्यर्थः । तथात्वे—गोत्वान्वयबोधकत्वे । शक्त्यंशे गोत्वादेर्निरवच्छिन्नप्रकारत्वे बाधकं निरस्यति नहीति । गौरित्यादिप्रत्यक्षस्य प्रकारतायां व्यभिचारापत्तेः समवायान्येति । ननु बाधकाभाव एव निरुक्तव्याप्तौ मानमत आह अयमिति । तस्य-व्यवसायस्य, ज्ञाततालिङ्गकानुमान

ज्ञाततालिङ्गकानुमानेऽनुव्यवसाये वा(१) व्यभिचाराच्च प्रागनुपस्थितस्या गोत्वत्वादेस्तत्रोपनयायोगात् । एतेन जातेर्निरवच्छिन्नप्रकारत्वस्य समवायसंसर्गावच्छिन्नत्वानियमात्, केवलस्य गोत्वादेः शक्त्यंशे विषयतया सुबर्थकर्मत्वांशे(२) च परम्परया प्रकारत्वायोग इत्यपि प्रत्युक्तम् । उक्तस्थल एव व्यभिचारात् । (३)न चैवं 'कालो गौः पदं गौ'रित्यादिप्रत्ययोऽपि प्रमा स्यात्, कालिकादिसम्बन्धेन गोत्वादिमति कालिकादिसम्बन्धेन

---

कृष्णकान्तीटीका ।

कारतेति वाच्यम् । भट्टमते तदनुमानेनैव प्रामाण्यस्यात्मनश्च विषयीकरणात्, अन्यथा तद्विशेष्यकत्वस्याभानेन प्रामाण्यविषयकत्वानुपपत्तेश्च । तस्य व्यवसायस्येदमप्युभयान्वितम् । तादृशनियमो भवन्मतेऽपि न सम्भवतीत्यभिप्रायेणाहानुव्यवसाये वेति । ननु तत्र गोत्वत्वेनैव गोत्वं भासत इति न व्यभिचार इत्यत आह—प्रागनुपस्थित्येति । तत्र-प्रकारित्वप्रकारीभूतगोत्वे । अयोगादिति । तदलौकिकप्रत्यक्षं प्रति तज्ज्ञानहेतुत्वस्य भवद्भिः स्वीकारादिति भावः । एतेनेति । प्रत्युक्तमिति परेणान्वयः । केवलस्य-निरवच्छिन्नस्य । शक्त्यंशे विषयतयेति । प्रकारत्वायोग इति परेणान्वयः । तथाच भवन्मते कारणीभूतज्ञानानुपपत्तिरिति भावः । कार्यीभूतज्ञानानुपपत्तिमप्याह—कर्मत्वांशे इति । परम्परयेति । स्वाश्रयवृत्तित्वरूप इत्यादिः । स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नाधेयतया भानोपगमे गौरवादिति भावः । उक्तस्थल इति । अयं गौरितिज्ञानानुव्यवसायस्थले इत्यर्थः ॥ शङ्कते नचैवमिति । एवं—उक्तनियमासत्त्वे इत्यर्थः । प्रमा स्यादिति । प्रमाजनकः स्यादित्यर्थः । कालिकादीत्यादिना शक्त्यादिपरिग्रहः । तत्प्रकारकत्वात्—गो-

रामभद्रीटीका ।

इति भट्टमतेन । व्यभिचारादिति । तत्र प्रकारत्वांशे निरवच्छिन्नस्यैव गोत्वस्याधेयतासंबन्धेन प्रकारत्वादिति भावः । ननूक्तस्थले गोत्वत्वेनैव गोत्वस्य भानान्न व्यभिचार इत्यत आह प्रागिति । तत्र—अनुमानेऽनुव्यवसाये वा, अयं गौरिति व्यवसायेन गोत्वत्वस्याभानादिति भावः । एतेनेति । परास्तमित्यन्वयः । विषयतया-विषयतासम्बन्धेन, प्रकारत्वायोग इत्यग्रेऽन्वयः । कारणे बाधकमुक्त्वा फले तदाह सुबर्थकर्मत्वादाविति । परम्परया—स्वाश्रयवृत्तित्वसम्बन्धेन । उक्तस्थले-गोत्वेनेमं जानामीत्याकारबोध । नचैवमिति । समवायान्यसम्बन्धेन जातेः प्रकारतायां धर्मानवच्छिन्नत्वे

---

(१) ज्ञाततालिङ्गकात्मपक्षकायं गौरितिज्ञानस्यानुमान इत्यर्थः । अत्र ज्ञाततायां हेतुत्वं स्वजनकज्ञानसमवायित्वसम्बन्धेन बोध्यम्, एतज्ज्ञानस्य भट्टमतेऽनुमानत्वं, नैयायिकमतेऽनुव्यवसायत्वमतोऽनुव्यवसाये वेति ।

(२) कर्मत्वादाविति रामभद्रसम्मतः पाठः । (३) जातिशक्तिवादिमते दोषमाह नचैवमिति ।

तत्प्रकारकत्वादिति वाच्यम् । कालिकादिसम्बन्धेन गोत्वादेः प्रामाण्यस्य गोत्वत्वाद्यवच्छिन्नप्रकारतागर्भत्वेन तादृशमतेः प्रमात्वायोगात् , अन्यथा घटत्वादिजातेः संस्थानसमवेतत्वमते संयोगो घट इत्यादिप्रतीतेः समवायेन प्रमात्वस्य दुर्वारतापत्तेः, शाब्दस्येव प्रत्यक्षस्यापि कालो गौरित्या-

कृष्णकान्तीटीका।

स्वप्रकारकत्वात् । तद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वस्यैव प्रामाण्यरूपत्वादिति भावः । प्रकारतागर्भत्वेन—प्रकारताघटितत्वेन । तथाच गोत्ववति गोत्वत्वावच्छिन्नप्रकारकत्वं तादृशज्ञानप्रामाण्यमिति, तादृशमतेः—समवायान्यसम्बन्धेन स्वरूपतो गोत्वप्रकारकज्ञानस्य, प्रमात्वायोगादिति । तथाच कालो गोत्ववानित्यादिकमेव प्रमाणमिति भावः । स्वोक्तं द्रढयति अन्यथेति । तत्सम्बन्धेन तद्वति तत्सम्बधेन तत्प्रकारकज्ञानसामान्यस्य प्रामाण्यपदार्थत्वे इत्यर्थः । संस्थानमारम्भकावयवसंयोगः तत्समवेतत्वं तन्मात्रसमवेतत्वम् । समवायेन प्रमात्वस्य—समवायावच्छिन्नप्रकारतागर्भप्रमात्वस्य । दुर्वारतापत्तेरिति । तथाच तन्मते समवायेन घटत्वप्रकारकज्ञानप्रामाण्यस्य घटत्वावच्छिन्नप्रकारतागर्भत्वनियमः, स्वाश्रयारभ्यत्वसम्बन्धेन घटत्वप्रकारकज्ञानस्य तु न तन्नियम इति वक्तव्यमिति भावः । अतएव मात्रपदं सार्थकम्, अन्यथा तस्योभयवृत्तित्वे उक्तनियमानुपपत्तेरिति । ननूक्तज्ञानयोस्तद्भाववति तत्प्रकारकत्वरूपभ्रमत्वस्याप्यसम्भवान्महदसमञ्जसं भ्रमप्रमाभिन्नस्य विशिष्टज्ञानस्यालीकत्वादित्यत आह—शाब्दस्येति । शाब्दस्य भ्रमत्वव्यवस्थापनेऽपि तथाविधप्रत्यक्षस्य तथात्वानुपपत्तिरित्यालोच्य ग्रन्थगौरवभयेन दृष्टान्तदार्ष्टान्तभावेन प्रत्यक्षस्यापि तथात्वं व्यवस्थापयन्नाह—प्रत्यक्षस्यापीति । आदिपदात् पदं गौरित्यादेः परिग्रहः । कदाचिदभेदानवगाहिनः तादृशबोधस्य तथात्वानुपपत्तिरतो निय-

रामभद्रीटीका।

जातेर्निरवच्छिन्नप्रकारत्वे समवायसंसर्गावच्छिन्नत्वनियमे चेत्यर्थः । कालो गौरित्यत्र कालिकेन, पदं गौरित्यत्र स्वशक्तत्वसम्बन्धेन गोत्वं प्रकार इति सम्बन्धभेदादुदाहरणद्वयम् । तादृशमतेरिति । कालो गौरित्यादिमतेरित्यर्थः । प्रमात्वायोगादिति । कालिकादिसम्बन्धेन गोत्वादिगर्भप्रमात्वायोगादित्यर्थः । अन्यथेति । येन सम्बन्धेन यत्र यद्वर्तते तत्रैव तेन सम्बन्धेन तस्य तदवच्छिन्नस्य वा प्रमोपगम इत्यर्थः । दुर्वारेति । तन्मते स्वाश्रयारभ्यत्वसम्बन्धेनैव शुद्धघटत्वस्य प्रमाया निर्वाच्यत्वादिति भावः । ननु विशिष्टबुद्धेर्भ्रमप्रमान्यतरत्वनियमेन भ्रमभिन्नाया कालो गौरितिबुद्धेः प्रमाभिन्नत्वानुपपत्तिरत आह शाब्दस्येत्यादि । यद्वा ननु कर्मत्वं गौरितिज्ञानस्याप्रमात्वानुरोधेन स्वाश्रयवृत्तित्वसम्बन्धेन गोत्वप्रामाण्यशरीरे तत्सम्बन्धावच्छिन्नगोत्वत्वावच्छिन्नप्रकारत्वं निवेश्यम्, तथाच स्वरूपतो गोत्वविषयकस्य गामानयेत्यादिशाब्दबोधस्य

दिबोधस्य नियमतो गवाद्यभेदावगाहित्वेनैवाप्रमात्वसम्भवाच्चेति भट्टमतानुवर्त्तिनः ।

(१)तन्मन्दम्, विनाप्याक्षेपं गामानयेत्यादितो गवादिकर्मताकत्वेनानयनादेरन्वयबोधस्याऽऽनुभविकत्वात्, गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्त्वाद्यन्वयस्यानुभवेनास्पर्शात्, गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्याद्यनुभवस्यासम्भवात्, स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वादिहेतुना गवादौ साक्षात्सम्बन्धेन गतिमत्त्वाद्याक्षेपस्य व्यभिचारादिदोषेण दुःशक्यत्वाच्च ।

कृष्णकान्तीटीका।

मत इत्युक्तम् । गवाद्यभेदेति । गोपदार्थाभेदेत्यर्थः । गोत्वाभेदेति यावत् । अप्रमात्वेति । भ्रमत्वेत्यर्थः ।

दूषयति—तन्मन्दमिति । यद्यपि नियमतो गवाद्यभेदावगाहित्वे मानाभाव इत्येव दोषः सम्भवति, तथापि स्फुटतया स उपेक्षितः । आनुभविकत्वात्—अनुभवसिद्धत्वात् । अनुभवे विप्रतिपन्नं प्रत्याह—गौर्गच्छतीति । अस्पर्शादविषयीकरणात् । निर्धर्मितावच्छेदककशाब्दानभ्युपगमादिति भावः । ननु गोत्वत्वधर्मितावच्छेदकक एव तादृशबोधो भविष्यति इत्यत आह—गोत्वत्वाद्यनुपस्थित्येति । ननु गौर्गतिमान् स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्त्वादित्याक्षेपात् गवि गतिमत्त्वबोधो भविष्यतीत्यत आह—स्वाश्रयवृत्तित्वेति । व्यभिचारादीत्यादिना स्वरूपासिद्धिपरिग्रहः ।

रामभद्रीटीका ।

प्रमात्वानुपपत्तिरतः समाधानान्तरमाह शाब्दस्येति ।

विनापीति । अन्यथा गोत्वकर्मकत्वेनानयनाद्यनुभवस्यानुमितित्वं किमिति न रोचयेरिति भावः । अनुभवे विप्रतिपन्नं प्रत्याह गौर्गच्छतीत्यादाविति । गतिमत्त्वादित्यादिना सुवर्थैकत्वान्वयस्योपग्रहः । अस्पर्शादविषयीकरणात् । ननूक्तस्थले गोत्वत्वविशिष्ट एव गोत्वे गतिमत्त्वाद्यन्वयो भविता इत्यत आह गोत्वत्वेति । ननु गामानयेत्यादौ शुद्धगोत्वानुभावकस्य गोपदस्य गौर्गच्छतीत्यादौ गोत्वत्वावच्छिन्ने लक्षणा वाच्या, तेन गोत्वं गच्छतीत्याकारक अन्वयबोधो नानुपपन्न इत्यत आह

(१) उक्तमतं दूषयति तन्मन्दमिति । अयमत्र नैयायिकानामभिप्रायः—गामानयेति वाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिर्दृश्यते, सा च गवानयनज्ञानसाध्या, तच्च ज्ञानं गामानयेति वाक्यजन्यम्, वाक्यजे ज्ञाने पदोपस्थापित एवार्थोऽन्वयप्रतियोगितया भासते इति सिद्धान्तात् । तथा च गोपदाद्गोव्यक्तेरनुपस्थितौ कथमन्वयप्रत्ययः । आक्षेपोपस्थितस्य च वाक्यजप्रत्ययान्वयमतित्वाभावात्, अन्यथा घटमानयेति वाक्यं रूपसंख्यापरिमाणादिकमाक्षिप्यान्वयबोधं विदध्यात्, न चैवं, तथानुभवाभावात् । किं चाक्षेपे व्यक्तेः प्राधान्येन मानं न स्यात् इत्यन्यत्र विस्तरः ।

एतेन—कर्मत्वादौ गोत्वादेः स्वाश्रयवृत्तित्वसम्बन्धेनान्वयबोधोत्तरं कर्मत्वस्य गोवृत्तित्वं विना गोत्ववृत्तित्वमनुपपन्नमित्यनुपपत्तिधीसहकृतेन गामित्यादिवाक्येनैव कर्मत्वं गवीयमित्यौपादानिको गवादिव्यक्तिबोध—इति श्रीकरमतमप्यनादेयम् । मिथो विरुद्धाभ्यां शाब्दत्वार्थापत्तित्वाभ्यामवच्छिन्नबोधस्यालीकत्वेन शब्दानुपपत्तिभ्यां सम्भूय तथाविधौपादानिकबोधस्य जननायोगाच्च ।

---

कृष्णकान्तीटीका ।

एतेनेति । विनाप्यर्थापत्तिं गामित्यादिवाक्यात् कर्मत्वादौ गोरन्वयानुभवेनेत्यर्थः । मतमनादेयमिति परेणान्वयः । अनुभवे विप्रतिपन्नं प्रति दूषणान्तरमाह—मिथो विरुद्धाभ्यामिति । शाब्दत्वार्थापत्तित्वयोः समानाधिकरणत्वे साङ्कर्यप्रसङ्गादिति भावः । सम्भूय—मिलित्वा । तथाविधेति । कर्मत्वं गवीयमित्याकारकेत्यर्थः । जननायोगाच्चेति । तथाच शाब्दत्वार्थापत्तित्वयोर्विरोधरक्षार्थमेव तत्तदवच्छिन्नबोधसामग्र्योरन्यतरस्य शाब्दत्वार्थापत्तित्वान्यतरत्वावच्छिन्नं प्रति प्रतिबन्धकत्वमित्यभिप्राय इति कश्चित् । वस्तुतः स्वमते शाब्दं प्रति अनुमितिसामग्र्या इव आपत्तिसामग्र्या एव प्रतिबन्धकत्वमित्यभिप्रायः । नच श्रुतार्थापत्तित्वरूपवैजात्यमेव तत्र स्वीकार्यमिति वाच्यम् । मानाभावात्, प्रत्युत आपत्तित्वस्यैव तत्रानुभवात् । अधिकन्तु प्राक् प्रपञ्चितमस्माभिः ।

रामभद्रीटीका ।

स्वाश्रयेति । व्यभिचारादीति । गौः समवायेन गतिमान् स्वाश्रयसमवेतत्वसम्बन्धेन गतिमत्त्वादित्यत्र सत्ताद्रव्यत्वादौ व्यभिचारः पक्षे स्वरूपासिद्धिश्चेत्येवं दोषेण दुःशक्यत्वादित्यर्थः । तथाच तत्रैव गोधर्मिकगतिमत्त्वबोधसंपत्त्यर्थं भट्टेनापि जातिविशिष्टे शक्तिरुपेया । न च तत्र लाघवेन गोत्वे शक्तस्य गोपदस्य तत्र गवि लक्षणा कर्त्तव्येति वाच्यम् । परेषां मते लक्ष्यार्थस्य ताटस्थ्येन प्रकारतयैवान्वयबुद्धौ भानस्वीकारेण तद्विशेष्यकान्वयबोधानुपपत्तेरित्यन्यत्र विस्तरः ।

एतेनेति । विनाप्यर्थापत्तिं गामित्यादिवाक्यात् कर्मत्वादौ गवाद्यनुभवेनेत्यर्थः । श्रीकरमतमनादेयमित्यग्रेऽन्वयः । दूषणान्तरमाह मिथो विरुद्धाभ्यामिति । न च शाब्दत्वादिविरुद्धं श्रुतार्थापत्तित्वनामकं वैजात्यान्तरमव तादृशबोधे श्रीकरैरुपेयमिति वाच्यम् । तादृशवैजात्ये मानाभावात् । प्रत्युत गवाद्यवगाहिबोधे शाब्दत्वस्यैवानुभवादिति भावः ।

(१)यत्तु-गौर्जायते गौर्नश्यति इत्यादौ सर्वत्र गोत्वादिजातिशक्त्यैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते, व्यक्तीनां बहुत्वेनान्यलभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्य्यानुपपत्तेरपि लक्षणायां बीजत्वात्। यदाहुर्मण्डनाचार्य्याः—

जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति।
नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे॥—इति,

तदपि तुच्छम्, व्यक्तिं विनाकृतायां गोत्वादिजातौ गवादिपदस्य मु-

---

कृष्णकान्तीटीका।

मण्डनाचार्य्यमतं निरसितुमाह—यत्त्विति। इत्यादावित्यादिपदेन गामानय अश्वो जायते इत्यादेरुपग्रहः। गोत्वादीत्यादिनाऽश्वत्वपरिग्रहः। ननु विनिगमनाविरहाद्व्यक्तावपि शक्तिरस्तामित्यत आह—व्यक्तीनामिति। बहुत्वेनेति। तथाच लाघवमेव विनिगमकमिति भावः। ननु व्यक्तीनामशक्यत्वे शाब्दानुपपत्त्या गौरवमकिञ्चित्करमित्यत आह—अन्यलभ्यत्वेनेति। तथाच व्यक्तीनामाक्षेपादपि भानसम्भवात् तत्र शक्तिरनुचिता, 'अनन्यलभ्ये' हि शक्तिरिति प्राचीनसिद्धान्तादिति भावः। नच जातेरपि आक्षेपलभ्यत्वसम्भवे तत्र कथं शक्तिरिति वाच्यम्। जातिभानं विनापि व्यक्तिभानसम्भवादत्राक्षेपस्यासम्भवात्। ननु गां पश्यतीत्यादौ कथं गोपदस्य गवि लक्षणा, मुख्यार्थगोत्वान्वयानुपपत्तिरूपतद्बीजासत्त्वादित्यत आह—तात्पर्य्येति। बीजत्वादिति। अन्यथा यष्टीः प्रवेशयेत्यादौ लक्षणानुपपत्तेरिति भावः। मण्डनाचार्य्यसम्वादमप्याह—यदाहुरित्यादिना। अस्तित्वनास्तित्वे-उत्पादविनाशौ। अविवक्षणे हेतुमाह—नित्यत्वादिति। ते-अस्तित्वनास्तित्वे, तथाच व्यक्तौ लक्षणेति भावः दूषयति—तदपि तुच्छमिति। गोविषयत्वानिरूपितगोत्वविषयताशालि-

रामभद्रीटीका।

मण्डनाचार्य्यमतं निरसितुमुपन्यस्यति यत्त्विति। इत्यादावित्यादिपदेन गामानय गौर्गच्छतीत्यादिवाक्यस्योपग्रहः। ननु जातिव्यक्त्योर्मध्ये जातावेव शक्तौ विनिगमकाभाव इत्यत आह—व्यक्तीनामिति। बहुत्वेनेति। ननु प्रत्येकव्यक्त्या समं जातिशक्तौ विनिगमनाविरह एव इत्यत आह अन्यलभ्यत्वेन चेति। तत्र-जातिविशिष्टव्यक्तौ। नन्वेवं गां पश्यतीत्यादौ मुख्यार्थस्य गोत्वस्यान्वयानुपपत्तेरभावात् गोपदस्य गवि लक्षणा न स्यात् अत आह—तात्पर्य्येति। अस्तित्वनास्तित्वे उत्पादविनाशौ न अस्तित्वनास्तित्वे।

---

(१) व्यक्तेः प्राधान्यानुभवाल्लक्षणा व्यक्तौ, आक्षेपे तूपसर्जनता स्यादिति भट्टैकदेशिमण्डनमिश्रमतमाह यत्त्विति।

ख्यप्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात्, शक्यसम्बन्धस्यैव लक्षणात्वात्। न 'च गोरन्यो महिष' इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थल एव जातौ मुख्यप्रयोगः, तत्र पञ्चम्याः स्वार्थेऽवधित्वादौ स्वनिष्ठगोत्वावच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्वयबोधकत्वात्, अन्यथा गोगोत्वयोर्भक्तिशक्तिभ्यां गोपदेन बोधने वृत्तिद्वयस्य

---

कृष्णकान्तीटीका।

बोधौपयिकशक्तिमत्पदघटितप्रयोगासम्भवेनेति तृतीयान्तार्थः। तस्य चाशक्यत्वे हेतुतयान्वयः, स्वारसिकप्रयोगस्यैव शक्तिकल्पकत्वादिति भावः। तन्मात्रस्य- गोत्वमात्रस्य, तद्वति—गोत्ववति। ननु शक्याप्रसिद्धावपि लक्षणा सम्भवत्येवेत्यत आह—शक्यसम्बन्धस्यैवेति। लक्षणात्वात्—लक्षणास्वरूपत्वात्। शङ्कते नचेति। जातौ मुख्यप्रयोग इति परेणान्वयः। उक्तस्थलेऽवधित्वस्यापि प्रतियोगितारूपत्वात्, तदेवाह--प्रतियोगित्वे वेति। स्वावच्छेद्यत्वसम्बन्धेनेति। शुद्धस्य—गवादिविनाकृतस्य, गोत्वादेरित्यादिनाऽश्वत्वादिपरिग्रहः, अन्वयात्--अन्वयस्यावश्यं स्वीकार्यत्वादित्यर्थः। अन्यथा आधेयतया तत्र गवादेरन्वये गोरन्यो महिष इतिवत् गोरन्यो गौरित्यपि प्रतीत्यापत्तेः तथाविधभेदस्य तत्राव्यबाधादिति भावः। शङ्कां निरस्यति—तत्रेति। गोरन्यो महिष इत्यादिस्थले इत्यर्थः। स्वनिष्ठेति। तथाच गवि निरुक्तसम्बन्धेन गोविशिष्टभेदासत्त्वात् नोक्तापत्तिसम्भवः। अन्वयबोधकत्वात्—पञ्चम्या अन्वयबोधकत्वे बाधकाभावादित्यर्थः। ननु गोत्वादेरपि तत्रान्वये बाधकाभाव इत्यत आह—अन्यथेति। तत्रोभयान्वयस्वीकारे इत्यर्थः। भक्तिर्लक्षणा। तथाच शक्त्या गोत्वस्य, भक्त्या च गोर्गोपदेन बोधने इत्यर्थः। ननु तात्पर्यसत्त्वे शक्यलक्ष्ययोरेकदान्वयबोधस्तु नव्यैः स्वीक्रियते कथमन्यथा गङ्गायां घोषमत्स्यौ स्त इत्यत्रोभयान्वयबोधः। न च युगपद्वृत्तिद्वयविरोध इति प्रवादासङ्गतिरिति वाच्यम्। एकधर्मावच्छिन्नवृत्तिभ्यामन्वयबोधास्वीकार एव तस्य तात्पर्यात्। एवमेवाकाङ्क्षाग्रन्थे मणिकृदप्याह-

रामभद्रीटीका।

तद्वति—गोत्वादिमति। शक्येति। शक्त्या भासते योऽर्थस्तत्सम्बन्धस्यैव लक्षणात्वादित्यर्थः। नचेति। प्रयोग इत्यग्रेऽन्वितम्, शुद्धस्य--निरवच्छिन्नस्य। तथाविधेति। गौरन्यो महिष इत्यादिस्थले एवेत्यर्थः। स्वनिष्ठेति। गोनिष्ठेत्यर्थः। नन्वत्र पञ्चम्यर्थावधित्वादौ स्वावच्छेद्यत्वसम्बन्धेन गोत्वादेरन्वये बाधकाभाव इत्यत आह अन्यथेति। भक्तिर्लक्षणा। ननु गङ्गायां घोषमत्स्यौ स्तः इत्यादा-

यौगपद्यापत्तेः(१) । वस्तुतस्तु शुद्धस्य गोत्वादेः शाब्दधीप्रकारतायाः समवायावच्छिन्नत्वनियमात्तस्यावधित्वादौ स्वावच्छेद्यत्वादिसम्बन्धेनान्वयो दुर्घट एव, द्रव्यं घट इत्यादिप्रतीतेः(२) समवायेन प्रमात्वानुरोधाद्धटत्वादिजातेर्नानात्वोपगमादिति ।

कृष्णकान्तीटीका ।

वस्तुतस्त्विति ; कालो गोत्ववानितिशाब्दे व्यभिचारात् शुद्धस्येति । निरवच्छिन्नस्येत्यर्थः । गोत्वेनेमं जानामीत्यनुव्यवसाये व्यभिचारात् शाब्दधीति । तस्य—गोत्वादेः, अन्वयो दुर्घट इति परेणान्वयः । ननु जातेः प्रकारत्वस्य समवायावच्छिन्नत्वे किं मानमित्यत आह—द्रव्यमिति । ननु द्रव्यत्वं जातिरेव न गगनादौ तस्याप्रत्यक्षत्वात्, अत एव 'पृथिवीत्वमपि न जातिः, घृतजतुप्रभृतौ तदप्रत्यक्षादित्याचार्या'इत्यत आह—घट इति । प्रमात्वानुरोधादिति। अन्यथा समवायेन द्रव्यत्वादिमति द्रव्यत्वादिप्रकारकत्वरूपप्रमात्वमेव न स्यादिति भावः । केचित्तु निर्धर्मितावच्छेदककशाब्दबोधासम्भवाद्द्रव्यमित्यस्योपादानम् । प्रमात्वानुरोधादिति । अन्यथा तेन सम्बन्धेन घटत्वाभाववति घटत्वप्रकारकत्वेन भ्रमत्वं स्यादित्याहुः । तत्तुच्छम्, घट इति ज्ञानस्य घटत्वावच्छिन्ने एकत्वस्यैव विधेयतया भानात्, प्रत्यक्षात्मकज्ञानमादायापि प्रकृतनिर्वाहसम्भवाच्च, तावतापि जातेः समवायेन द्रव्यादिवृत्तित्वसिद्धावपि तन्निष्ठप्रकारतायाः समवायावच्छिन्नत्वमसिद्धमेवेति दूषणमपि तन्मतेऽवसेयम् । ननु घटत्वं न जातिः पाषाणमयत्वादिना साङ्कर्यात् तत्प्रकारतायां समवायावच्छिन्नत्वासिद्धौ किं तद्भिन्नमित्यत आह—घटत्वादिजातेरिति । नाना-

रामभद्रीटीका ।

विव प्रकृते युगपत् वृत्तिद्वयस्वीकारो न क्षतिकर इत्यत आह वस्तुत इति । सामान्यतो जातेः प्रकृते प्रकारतायाः समवायाच्छिन्नत्वनियमस्य कालो गोत्ववानित्यादिबोधे व्यभिचारादत उक्तं-शुद्धस्येति । निरवच्छिन्नस्येत्यर्थः । तथापि गोत्वेनेमं जानामीत्याकारकानुव्यवसाये व्यभिचारादुक्तं-शाब्दधीति । तस्य-गोत्वादेः। जातेः प्रकारतायाः समवायावच्छिन्नत्वे किं मानमत आह द्रव्यमिति। अन्यथा तादृशप्रतीतेः समवायेन घटत्वाप्रकारकत्वात् अप्रमात्वापत्तिरिति भावः । ननु घटत्वादिः संस्थानगतो जातिविशेषः, द्रव्यगतत्वे मृत्वादिना साङ्कर्यात्, तथाच द्रव्यं घट इत्यादौ स्वाश्रयसामानाधिकरण्य सम्बन्धेन स्वरूपतः शाब्दधीप्रकारतया व्यभिचार इत्यत आह द्रव्यमिति । अन्यथा तादृशप्रतीतेः परंपरया प्रमात्वेऽपि समवायेनाप्रमात्वापत्तिरिति भावः । ननु स्वर्णत्वे पाषाणत्वाभावात् तादृशनियमे मानाभाव इत्यत आह घटत्वादिजातेरिति । तथाच

(१) एकपदेन शक्यार्थलक्ष्यार्थयोर्युगपदन्वयबोधापत्तेरित्यर्थः ।

(२) द्रव्यमित्याकारिकाया घट इत्याकारिकायाश्च प्रतीतेरित्यर्थः ।

(१)प्राभाकरास्तु गोत्वशक्तत्वेन ज्ञातं पदं ताद्रूप्येण गोशाब्दत्वावच्छिन्नं प्रत्येव हेतुः, अतो गोत्वशक्तिग्रहान्न गोत्वेन गवयादेः न वा द्रव्य-

कृष्णकान्तीटीका।

त्वेति। तथाच पाषाणमयत्वव्याप्यैका घटत्वजातिः अपरा स्वर्णत्वव्याप्या इति पाषाणमयत्वाद्यभावसमानाधिकरणघटत्वस्य पाषाणमयत्वव्याप्यत्वाभावात् न साङ्कर्यमिति भावः। वस्तुतो ननु घटत्वजातेः संस्थानसमवेतत्वमते तादृशनियमो व्यभिचारी, स्वाश्रयारब्धत्वसम्बन्धेन घटत्वजातेस्तत्र प्रकारत्वादित्याह—द्रव्यमिति। तत्र घटविशेष्यकत्वज्ञापनाय द्रव्येति। ननु घटत्वस्य द्रव्यगतत्वे उक्तरूपेण साङ्कर्यमित्याशङ्कायां समाधत्ते—नानात्वोपगमादिति। तथाच साङ्कर्याभावात् कुतो व्यभिचारशङ्केति परमार्थः।

प्राभाकरमतमुपदर्शयति—प्राभाकरास्त्विति। ताद्रूप्येण-गोत्वरूपेण। गोशाब्देति। गोविषयकशाब्देत्यर्थः, एवकारेण गोत्वमात्रविषयतया जन्यतावच्छेदकत्वव्युदासः। तथाच गोत्वप्रकारतानिरूपितगोविशेष्यताशालिशाब्दं प्रति पदधर्मिकगोत्वशक्तिज्ञानस्य हेतुत्वमिति पर्यवसितम्, अतो न रूपान्तरेण गोविषयकान्यांशे गोत्वप्रकारकसमूहालम्बनशाब्दे च व्यभिचारः। तथाविधप्रकारताविशेष्यतयोर्निवेशस्य क्रमेण व्यावृत्तिमाह— अत इति। गवयादेरित्यस्यान्वयधियोऽतिप्रसङ्ग इति परेणान्वयः। इदमुपलक्षणम्, निरूप्यनिरूपकभावानिवेशे गो-गोत्वयोः समू-

रामभद्रीटीका।

स्वर्णत्वादिव्याप्या एव घटत्वजातय इति क्व साङ्कर्यं येन तादृशनियमे मानाभावः स्यादिति भावः।

ताद्रूप्येणेति। गोत्वेनेत्यर्थः। ताद्रूप्येणेत्यादेर्व्यावृत्तिमाह न गोत्वेनेति। गवयादेरन्वयधियोऽतिप्रसङ्ग इत्यन्वयः। नन्वेवं तन्मते गोत्वेन गवयादिबोधस्यालीकत्वात् लाघवाच्च गोशाब्दबुद्धित्वमेव कार्यतावच्छेदकं वाच्यम्, तावतैव गवयादेर्भानव्युदाससंभवादत आह नवेति। अतिप्रसङ्ग इति। तथाचावश्यं गोत्वरूपेण गोशाब्दबुद्धित्वं

(१) गामानयेत्यादिवाक्यस्थले विभक्त्युपनीतकर्मत्वादेर्व्यक्त्यन्वयानुपपत्त्या कल्पितां जरत्प्राभाकराणामर्धजरतीमुपन्यस्यति प्राभाकरास्त्विति। वस्तुतस्त्वित्यादिना तन्मते विशिष्टे शक्तिरिति प्रदर्शयिष्यतेऽनुपदमेव। अतश्चायमेतेषामभिप्रायः—शक्तिर्हि शक्यप्रकार्यापेक्षया, कार्यं चात्र विशिष्टज्ञानमेकमेवेत्येकैव सा, तस्याश्च विशिष्टगोचरता विशिष्टज्ञानविषयतयैवेति विशिष्टगोचरा एकैव शक्तिः, किन्तु जातिनिष्ठतया ज्ञातोपयुज्यते व्यक्तौ तु स्वरूपसती, अन्यथा गौरवात्, समानसंवित्संवेद्यतया च व्यक्तेरपि भानमिति तल्लाभ इति। व्यक्तेरन्वयप्रकारतया भानमिति च गुरुमतैकदेशिनः। केवलजातेरन्वयनायनयायोग्यतया तद्योग्यताघटकत्वेन घटपदे छिन्नेतरत्ववद्व्यक्तिः प्रतीयत इति तेषां तात्पर्यम्। अत्र च तन्मतेन गोव्यक्त्याकृती न गोशब्दवाच्ये गोत्वभिन्नत्वात्पटवदित्यनुमानप्रयोगो द्रष्टव्यः।

त्वादिना गोरन्वयधियोऽतिप्रसङ्गः । न चैवं जातेरिव व्यक्तेरपि शक्यत्वमावश्यकम्, न हि गवादिपदस्य शक्यत्वं जन्यत्वमपि तु जन्यशाब्दधीविषयत्वं, तच्च गोत्वस्येव गोरप्यविशिष्टमिति वाच्यम्। गवादिपदधर्मिकस्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकत्वेन गोत्वादिजातेरेव गवादिपदशक्यत्वात्, गोत्वशक्तत्वापेक्षया गोशक्तत्वस्य गुरुतया तज्ज्ञा-

---

कृष्णकान्तीटीका।

द्यालम्बनबोधप्रसङ्ग इति बोध्यम् । ननु मीमांसकैर्भ्रमानङ्गीकारात् गोत्वेन गवयादिबोधस्य तन्मतेऽलीकतया गोत्वप्रकारकशाब्दत्वमेव कार्यतावच्छेदकं वक्तुमुचितमिति चेन्न । गोपदाद् गोत्वमुख्यविशेष्यकबोधवारणाय कार्यतावच्छेदककोटौ विशेष्यतानिवेशस्यावश्यकत्वात्। नच विशेष्यतानिवेशेऽपि तादृशबोधस्योक्तरीत्या गवि गोत्वप्रकारकतया तद्दोषतादवस्थ्यमिति वाच्यम् । किञ्चिन्निष्ठमुख्यविशेष्यतानिरूपितगोत्वप्रकारताशालिशाब्दत्वस्यैव कार्यतावच्छेदकत्वे तात्पर्यात्, गोशाब्दत्वेत्युक्तेः फलानुरोधित्वात् । शङ्कते—न चैवमिति । एवमुक्तरूपेण कार्यकारणभावस्वीकारे । व्यक्तेरपीति । न केवलं जातिमात्रस्य व्यक्तेरपीत्यर्थः। आवश्यकत्वे हेतुमाह—न हीति । हि यस्मात्, जन्यत्वं जन्यत्वस्वरूपं, जातेर्नित्यत्वेन तत्र तद्बाधादिति शेषः। जन्येति । गवादिपदस्येति पूर्वेणान्वयः। तथाच गवादिपदजन्यशाब्दधीविषयत्वं गवादिपदशक्यत्वमित्यर्थः।अश्वादौ गवादिपदशक्यत्ववारणाय जन्यान्तं शाब्दविशेषणम् । गोपदं गोत्वं बोधयत्वितीश्वरेच्छायाः प्रामाणिकत्वेऽपि लाघवादावश्यकत्वाच्च शाब्दधीविषयत्वस्यैव तथात्वौचित्यात्, ईश्वरस्य सकलमीमांसाऽसिद्धत्वाच्चेति भावः । तच्च-तादृशशाब्दधीविषयत्वरूपशक्यत्वं च। **अविशिष्टमिति** । न च गोपदजन्यशाब्दधीप्रकारकत्वं तथेति वाच्यम् । गामानयेत्यादौ गोरपि तथात्वात् । नापि समवायावच्छिन्नप्रकारकत्वम्, शृङ्गं गवीयमित्यादौ च तस्या अपि तथात्वात्। गवादिपदधर्म्मिकेति । तथाच शाब्दबोधनिरूपिता या गोत्वशक्तताज्ञानत्वावच्छिन्नजनकता तन्निरूपितावच्छेदकतानिरूपितावच्छेकत्वमेव गोपदशक्यत्वम् । आकाङ्क्षादिघटकपदार्थादावतिप्रसङ्गवारणायावच्छिन्नान्तं जनकताविशेषणम् । पदधर्म्मिकस्येव गोत्वधर्मिकस्यापि शक्तिज्ञानस्य विनिगमनाविरहेण शाब्दं प्रति हेतुतया पदादावतिप्रसङ्गवारणाय पदधर्मिकेति शक्तिज्ञानविशेषणम् । गोत्वादिजातेरेवेति। एवकारेण व्यक्तिव्यवच्छेदः । ननु विनिगमनाविरहाद् गोत्वशक्तत्वज्ञानत्वेनेव गोशक्तताज्ञानत्वेनापि हेतुतया गोरपि तथाविधजनकतावच्छेदकतया शक्यत्वं दुर्वारमित्यत आह—गोत्वशक्तत्वापेक्षये-

रामभद्रीटीका।

कार्यतावच्छेदकं वाच्यम् इति लाघवमाकिंचित्करमिति भावः । एवमुक्तरूपेण हेतुहेतुमद्भावे। **जन्यत्वमिति** । बाधादिति शेषः। ननु गोशक्तताज्ञानत्वावच्छिन्नशाब्दधजनकताव-

नत्वस्य गोशब्दं प्रति जनकतानवच्छेदकत्वात् । अत एवान्वयबुद्धेरात्म-स्वात्माद्यवगाहित्वेऽपि न तेषां पदशक्यत्वम् । अस्तु वा गोत्वादि-

---

कृष्णकान्तीटीका ।

ति । गोशक्तत्वस्य- गोत्वविशिष्टशक्तत्वस्य।गुरुतयेति । व्यक्तिघटितत्वादिति भावः। तज्ज्ञानत्वस्य —गोत्वविशिष्टशक्तताज्ञानत्वस्य । जनकतावच्छेदकत्वादिति । तथाच लाघवमेव विनिगमकमिति भावः । अवच्छेदकताविशेषनिवेशव्यावृत्तिमाह— अतएवेति । अवच्छेदकताविशेषनिवेशादेवेत्यर्थः । आत्मस्वात्मेति । स्वं-शाब्दबोधः, प्रथमात्मशब्दो जीवबोधकः, द्वितीयः स्वरूपबोधकः, तथाचान्वयबुद्धेर्जीवशाब्दस्वरूपादिविषयत्वेऽपि जनकतावच्छेदककोटौ गौरवेण तदप्रवेशान्न तेषां शक्यत्वमिति भावः । ननु अवच्छेदकतामात्रनिवेशादेवैतद्दोषवारणसम्भवात् कथं तद्विशेषनिवेश इति वाच्यम् । पदादेरपि तथात्वापत्तेः तस्यापि शक्तताज्ञानविषयत्वात्क्षतेः । न चात्मस्वात्मादीनामन्वयबोधविषयत्वकथनमनर्थकं कारणीभूतज्ञानविषयत्वकथनस्यैवोचितत्वादिति वाच्यम् । यो यच्छाब्दविषयः सोऽवश्यं तज्जनकतावच्छेदक इतिनियमे व्यभिचारप्रदर्शनार्थं तथोक्तेरिति केचित् । वस्तुतो यो यच्छाब्दविषयः सोऽवश्यं तज्जनकतावच्छेदक इति नियमाद्गोत्वस्येव गोरपि शाब्दबोधजनकतावच्छेदकत्वमव्याहतमेवेति गोत्वविशिष्टशक्तताज्ञानत्वेनैव हेतुत्वमवश्यं वाच्यमित्यवच्छेदकताविशेषनिवेशेऽपि गोः शक्यत्वं दुर्वारमित्यत आह—अत एवेति । गुरुधर्मस्यानवच्छेकत्वादिति भावः । तथाच तादृशनियमस्यात्मस्वात्मादौ व्यभिचारान्न किञ्चिदेतदिति भाव इति परमार्थः । ननु गोधर्मिकगोत्वप्रकारकशाब्दत्वस्य कार्यतावच्छेदकत्वे प्रकारताविशेष्यतयोर्विशेष्यविशेषणभावे विनिगमनाविरहात् कार्यकारणभावद्वयापत्तिरतो लाघवादाह— अस्तु वेति । गोत्वादिशाब्दत्वावच्छिन्नमित्यर्थः । हेतुर्हेतुतावच्छेदकं, तथाच विशेष्यतासम्बन्धेन गोत्वप्रकारकशाब्दत्वावच्छिन्नं प्रति गोपदधर्मिकगोत्वशक्तताज्ञा-

रामभद्रीटीका ।

वच्छेदकत्वेनाविशिष्टत्वात् व्यक्तेरपि शक्यत्वमावश्यकमत आह गोत्वेत्यादि । गोशक्तत्वस्य—गोत्वविशिष्टशक्तत्वस्य । नन्वेवं गवादीनां पदजन्यशाब्दज्ञानावगाहितया तेषां शक्यतावच्छेदकत्वकल्पने बाधकाभाव—इत्यत आहात एवेति । स्वात्मादीति । स्वप्रकाशात्मकज्ञानादीत्यर्थः । आदिना विषयस्य घटादेः परिग्रहः । तेषामात्मादीनाम् । न पदशक्यत्वमिति । तथाच यो यच्छाब्दज्ञानावगाही सोऽवश्यं तच्छाब्दत्वावच्छिन्नजनकतावच्छेदक इति व्याप्तौ व्यभिचारात् गवादेः शक्यतानवच्छेदकत्वमिति भावः । अथ गोत्वप्रकारकगोधर्मिकशाब्दत्वमिव गोत्वधर्मिकगोप्रकारकशाब्दत्वमपि गोत्वशक्तिज्ञानस्य कार्यतावच्छेदकं विनिगमनाविरहात्तथाच गुरुतरकार्यकारणभावद्वयापत्तिरतो लाघवादाह अस्तुवेति । अथ गोत्वशाब्दत्वावच्छिन्नं प्रति गोत्वशक्तिज्ञानत्वेनैव हेतुत्वे

शक्तत्वेन ज्ञातं पदं गोत्वादिशाब्दत्वावच्छिन्नं प्रत्येव हेतुर्विशेष्यतया ता-दृशशाब्दं प्रति समवायेन गोत्वस्य नियामकत्वकल्पनाच्च(१) नातिप्र-सङ्गः । गोत्वादिना गवादेरिव गवादेर्गोत्वादिनाऽन्वयबोधत्वाच्छिन्नं प्रत्यपि विनिगमकाभावेन(२) गोत्वादिशक्तिज्ञानत्वेन हेतुत्वमपेक्ष्य गोत्वशाब्दत्वा-वच्छिन्नं प्रत्येव गोत्वस्य तच्छक्तत्वज्ञानस्य च द्वयोः कारणतायामेव लाघवात् । (३)वस्तुतस्तु गोत्वशाब्दं प्रति गोत्वशक्तिज्ञानमेव हेतुर्न तु

कृष्णकान्तीटीका ।

नत्वेन सविषयपदप्रतिपाद्यत्वसम्बन्धेन हेतुत्वमिति पर्यसितम् । अथवा हेतुपदं यथाश्रुतार्थकमेव, तादृशशाब्दं प्रति गोत्वशक्तताज्ञानविशेष्योभूतपदत्वेन प्रतिपाद्य-तासम्बन्धेन हेतुत्वम् । नन्वेवं गोत्वशक्तत्वेन ज्ञातपदात् पदज्ञानाद्वा गोत्वेन गोरिव महिषस्यापि शाब्दबोधविषयतापत्तिः । न च महिषधर्मिकत्वस्य तत्कार्यतानवच्छेद-कत्वात् कुतस्तदापत्तिसम्भव इति वाच्यम् । तस्य तत्कार्यतानवच्छेदकत्वेऽप्यनुत्पाद-प्रयोजकविरहेण तद्धर्मावच्छिन्नापत्तिसम्भवात्, सामान्यरूपेण विशेषापत्तौ बाधका-भावाच्चेत्यतो हेत्वन्तरमाह-विशेष्यतयेति । विशेष्यतासम्बन्धेन नियामकत्वं हेतुत्वम् । नातिप्रसङ्गः—न गोत्वेन महिषबोधप्रसङ्ग इत्यर्थः । यद्यपि मीमांसकैरन्य-थाख्यात्यनङ्गीकारात गोत्वेन महिषादिबोधस्तन्मतेऽलीक एवेति कुतस्तदापत्तिः, तथापि एतदस्वरसेनैव वस्तुत इत्यादिकल्पान्तरस्य वक्ष्यमाणत्वात् । ननु भवन्मतेऽपि गोत्वस्य हेतुताधिक्येन कुत्र लाघवमित्यत आह—गोत्वादिनेत्यादि । गोत्वादिना गवादेरिव गोत्वादिप्रकारकगवादिविशेष्यकमिव गवादिविशेष्यकगोत्वादिप्रकारकमित्यर्थः । तच्छक्तत्वज्ञानस्य—गोत्वशक्तत्वज्ञानस्य । लाघवादिति । तथाच विशेष्यविशेषणभावे विनिगमनाविरहात् भवन्मते कार्यकारणभावद्वयं गुरुतरम्, अस्मन्मते तु तल्लभ्यमिति विशेष इति भावः । ननु भवन्मते एकस्य शक्तिज्ञानादपरस्य पुंसः शाब्दवारणाय शाब्दे

रामभद्रीटीका ।

गोत्वशक्तिज्ञानात् गवयादेरन्वयबुद्ध्यापत्तिरत आह **विशेष्यतयेति । तादृश-शाब्दं प्रतीति** । गोत्वशाब्दं प्रतीत्यर्थः । नियामकत्वं—हेतुत्वम् । पूर्वकल्पापेक्षया लाघवं व्याकरोति **गोत्वादीत्यादिना** । तच्छक्तत्वज्ञानस्य—गोत्वशक्तत्वज्ञानस्य । ननु गु-रूणामन्यथाख्यात्यनङ्गीकारेण गोत्वेन गवयादेर्भानस्यालीकतया तथापादनं दुर्घटमिति

(१) तादृशनियामकत्वञ्च, समवायेन गोत्वस्य हेतुत्वेनैव निर्वहतीति तस्य हेतुत्वं कल्पनीय-मिति पर्यवसितम् ।

(२) गोत्वप्रकारगोविशेष्यकशाब्दत्वं, किं वा गोविशेष्यकगोत्वप्रकारकशाब्दत्वं कार्यतावच्छे-दकमित्यन्यतरसाधकप्रमाणाभावेनेत्यर्थः ।

(३) भाविभूतगवादेरप्यन्वयबोधात्तत्र गोत्वस्यासत्त्वाद्व्यभिचार इत्यत आह-वस्तुत इति ।

गोत्वमपि, जातिव्यक्त्योस्तुल्यवित्तिवेद्यत्वानियमादेव गोव्यक्तीनां तद्विषयत्वसिद्धेः, प्रमाणविरहादेव गोत्वादिना गवयादिविषयत्वस्य तत्रासिद्धेश्च। यद्यपि जातेर्विषयत्वं तत्समवायिव्यक्तिविषयतानिरूपितमिति न व्याप्तिः, गोत्वाद्यालोचने काले गोत्ववानित्यादिबोधे च व्यभिचारात्, नापि जातेर्निरवच्छिन्नप्रकारतायास्तथात्वानियमः, गोरयमित्यादिज्ञानस्य प्रत्यक्षे गो-

कृष्णकान्तीटीका।

शक्तिज्ञाने च तत्पुरुषीयत्वनिवेशनमावश्यकमिति गोत्वप्रकारकत्वतत्पुरुषीयत्वशाब्दत्वयोर्मिथोविशेष्यविशेषणभावे विनिगमनाविरहात् कार्यमादाय षण्णां तत्पुरुषीयत्वज्ञानत्वयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहात् कारणमादाय द्वयोरित्यष्टानां कार्यकारणभावानां भवन्मते आपत्तिरतो लाघवादाह—वस्तुतस्त्विति। गोत्वशाब्दमिति। गोत्वप्रकारकशाब्दमित्यर्थः। न तु गोत्वमपीति। हेतुरिति पूर्वेणान्वयः। ननु कथं व्यक्तिभानं तद्भासकसामग्रीविरहादित्यत आह—जातिव्यक्त्योरिति। तद्विषयत्वसिद्धेः—गोत्वप्रकारकशाब्दधीविषयत्वसिद्धेरित्यर्थः। तथा च व्यक्तिभानं विना अनुपपद्यमानमेव गोत्वप्रकारकत्वं शाब्दे व्यक्तिभानप्रयोजकमिति भावः। ननूक्तातिप्रसङ्गतादवस्थ्यमित्यत आह—प्रमाणविरहादिति। तथाच तैरन्यथाख्यात्यनङ्गीकारात, तन्मते गोत्वशाब्दे गवयादिधर्मिकत्वसिद्धेः प्रत्यक्षादिप्रमाणेनासम्भवादिति भावः। शङ्कते—यद्यपीति। आलोचने—निर्विकल्पके, व्यभिचारादिति परेणान्वयः। विषयतायां संसर्गावच्छिन्नत्वनिवेशेऽपि दोषमाह—काल इति। न च समवायसम्बन्धावच्छिन्नत्वनिवेशान्नैष दोष इति वाच्यम्। तत्र तस्य सन्दिग्धत्वादित्यग्रे व्यक्तीभविष्यति। पुनः शङ्कते—नापीति। तथात्वात्—व्यभिचारादित्यर्थः। तथा·

रामभद्रीटीका।

तदनुरोधेन गोत्वस्य हेतुत्वकल्पनं निष्फलमित्याशयेनाह—वस्तुत इति। ननु विशेष्यतया गोत्वशाब्दबुद्धौ समवायेन गोत्वस्य हेतुत्वे गोव्यक्तेः शाब्दबुद्धौ विषयत्वं न स्यात् अत आह जातीत्यादि। तद्विषयकत्वसिद्धेः—जातिविषयकत्वसिद्धेः। जातिव्यक्त्योरित्यादिनियमे व्यक्तीनामिवान्यव्यक्तीनां तद्विषयकत्वे किं बाधकमत आह· प्रमाणेति। तत्र—शाब्दबुद्धौ। असिद्धेः—गुरूणामन्यथाख्यातिविरहे गवयादिविषयकशाब्दस्यालीकतया आपादनाप्रसिद्धेः। शंकते यद्यपीति। तत्समवायीति। जातिसमवायीत्यर्थः। गोत्वाद्यालोचने—गोत्वनिर्विकल्पके। ननु जातेः संसर्गावच्छिन्नविषयतायां तत्समवायीति नियमो वाच्यः, निर्विकल्पकस्य संसर्गानवच्छिन्नविषयतया गुरूणां निर्विकल्पकानङ्गीकाराच्च न व्यभिचार इत्यत आह—काल इति। अत्र जातेः समवायसंसर्गावच्छिन्नविषयतायां तथात्वमित्युक्तौ नैव दोष इति ध्येयम्। तथात्वं जातिसमवायिव्यक्तिविषयतानिरूपितत्वम्, तथाच निर्विकल्पके जातेः प्रकारत्वाभावात्

त्वेनेमं ज्ञानामित्याकारके तथात्वात् । तथाप्यन्वयबोधस्य निरवच्छिन्नगोत्वादिप्रकारकत्वं गवादिविशेष्यतानिरूपितमेवेतिव्याप्तिस्तादृशविशेष्यताकत्वं विना शुद्धस्य गोत्वादेरन्वयबोधेनास्पर्शनात् , गुरूणां गोत्वेन गवयादिबोधस्यालीकत्वात् । अत एव 'गवाद्यंशे गोत्वादिप्रकारको बोधः समवायेनेव सम्बन्धान्तरेणापि तत्प्रकारकः स्याद्गोत्वशक्तिज्ञानस्य तदीयसम्बन्धभा(१)नं प्रत्युदासीनत्वादि'त्यपि प्रत्युक्तम् । शाब्दमतेः शुद्धगोत्वप्रकारतायां गोविशेष्यताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्तिबलेन सिद्धावपि

कृष्णकान्तीटीका।

पीति । तथाच शाब्दबोधनिरूपितं गोत्वादिप्रकारकत्वं गवादिविशेष्यतानिरूपितं तादृशप्रकारतात्वादित्यादिप्रयोगलभ्या व्याप्तिरित्यर्थः । उक्तव्याप्तावन्वयेन दृष्टान्ताभावाद्व्यतिरेकेण दृष्टान्तस्य च व्यतिरेकव्याप्तावेवोपयुक्तत्वाद्व्यतिरेकव्याप्तिमाह—तादृशेति । तथा च गोविशेष्यत्वाभावे निरवच्छिन्नगोत्वप्रकारकत्वाभावव्याप्त्या तादृशशाब्दे तत्सिद्धिर्भविष्यतीति भावः । ननु गोत्वेन गवयादिबोधे व्यभिचार इत्यत आह—गुरूणामिति । अलीकत्वादिति । तैरन्यथाख्यात्यनङ्गीकारादिति भावः । अत एवेति । कार्यतानवच्छेदकस्यापि व्याप्तिबलेन तत्र सिद्धिसम्भवादेवेत्यर्थः । इति प्रत्युक्तमिति परेणान्वयः । उदासीनत्वात्—अप्रयोजकत्वात्, गोविशेष्यताकत्वस्य—गोविशेष्यतानिरूपितत्वस्य । व्याप्तिबलेनेति । शाब्दबोधस्य शुद्धजातिप्रकारत्वं समवायावच्छिन्नं तादृशप्रकारतात्वादित्यनुमानात् । अत्र समवायावच्छिन्नत्वं साधनीयं सम्बन्धान्तरावच्छिन्नत्वस्य साध्यत्वे व्यभिचारादिति भावः । उपसंहरति—

रामभद्रीटीका ।

कालो गोत्ववानित्यत्र सावच्छिन्नत्वान्न व्यभिचार इति भावः । तथात्वात्—व्यभिचारित्वात् । तादृशेति । गवादिविशेष्यताकत्वमित्यर्थः । अस्पर्शादनुभवेनाविषयीकरणात् । ननु गोत्वरूपेण गवयादिबुद्धौ व्यभिचारादुक्तनियमाभाव इत्यत आह गुरूणामिति । तथाच तादृशबुद्धेरलीकतया आपादनासंभवात् कुत्र व्यभिचार इति भावः । अत एव गोत्वेन गवयादिबोधस्येव समवायान्यसंबन्धेनापि गोत्वशाब्दबुद्धेरलीकत्वादेव, तत्प्रकारकः—गोत्वादिप्रकारकः । तदीयेति । गोत्वीयेत्यर्थः । उदासीनत्वादजनकत्वात् । व्याप्तिबलेनेति । शाब्दबोधस्य निरवच्छिन्नजातिप्रकारत्वं समवायसंसर्गावच्छिन्नमिति व्याप्तिन

(१) विशिष्टशक्तिमते यत्सम्बन्धेन यद्धर्मविशिष्टस्य शक्त्यंशे विषयतासम्बन्धेन विशेषणत्वं, तत्सम्बन्धावच्छिन्नप्रकारताक एव शाब्द इति गोशक्तिज्ञानस्य तदीयसम्बन्धविशेषभानं प्रति नौदासीन्यमिति भावः । जातिशक्तिवादिमते तु जातेर्विषयतयैव शक्त्यंशे विशेषणत्वं नतु, तस्य सम्बन्धविशेषस्यापि विषयत्वमिति भावः।

तस्याः सम्बन्धान्तरावच्छिन्नत्वस्य प्रमाणविरहेणासिद्धेः । एवञ्च गोत्वादिशक्तिज्ञानत्वेन जनकतायां विषयतयावच्छेदकत्वाद्गोत्वादिरेव गवादिपदस्यार्थः, गवादौ तद्व्यवहारस्तु तादृशावच्छेदकधर्मवत्ताप्रयुक्तो गौणः(१)। नचैवं गम्यादिधातोरपि गत्यादौ शक्तिर्न स्याद्गतित्वादिजातिशक्तिज्ञानादेव तादृप्येण गत्यादेर्गम्यादिधातुतो बोधसम्भवादिति वाच्यम् । गुरूणां गतित्वादेः संस्थानाऽव्यङ्ग्यत्वेन जातित्वासम्भवात्, उत्तरसंयोगाद्यवच्छिन्नक्रियात्वाद्युपाधिरूपे च तत्र स्वरूपतः शक्तिग्रहायोगात्, सखण्डस्य

कृष्णकान्तीटीका ।

**एवञ्चेति** । निरुक्तकार्यकारणभावस्य निर्दोषत्वे चेति तदर्थः । **विषयतयेति** । शक्त्यंशे इत्यादिः । **गवादिपदस्यार्थ इति** । शक्तिज्ञानजनकतावच्छेदकताविशेषस्यैव शक्यतारूपतोक्तेरिति भावः । ननु गोत्वस्यैव गोपदशक्यत्वेन गौर्गोपदशक्येति कथं व्यवहार इत्यत आह—**गवादाविति** । भक्तिप्रयोजकमप्याह—**तादृशेति** । गोत्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकतानिरूपितावच्छेदकताश्रयरूपशक्यसंबन्धप्रयुक्त इत्यर्थः । शङ्कते **नचैवमिति** । तादृरूप्येण गतित्वादिरूपेणेत्यर्थः । **गुरूणामिति** । तन्मते जातिमात्रस्यैव संस्थानव्यङ्ग्यत्वम्, अन्यथा गुणगतजातिस्वीकारे ज्ञानादीनामप्रकाशत्वहान्यापत्तेरिति भावः । ननु स्वरूपतः प्रकारतागर्भ एव तादृशनियमः, न तु जातिगर्भः, तथाच गतित्वस्य जातित्वाभावेऽपि अखण्डधर्मतया स्वरूपतः प्रकारत्वसम्भव इति तस्याखण्डत्वमपि खण्डयति—**संयोगेति** । संयोगाद्यनुकूलक्रियेत्यर्थः । तत्र—गतित्वादौ । स्वरूपतः शक्तिग्रहायोगे हेतुमाह—**सखण्डस्ये**-

रामभद्रीटीका ।

लेनेत्यर्थः । सिद्धौ—समवायावच्छिन्नत्वसिद्धौ । **असिद्धेरिति** । शाब्दज्ञानीयजातेः प्रकारतायाः समवायान्यसंबन्धानवच्छिन्नतया तत्संबन्धेनापादनाप्रसिद्धेरित्यर्थः । उपसंहरति **एवंचेति** । अर्थः—शक्यः । अथ जातेरेव शक्यत्वे व्यक्तौ तद्व्यवहारो न स्यादत आह **गवादीति** । **तादृशेति** । गोत्वशक्तताज्ञानत्वावच्छिन्नशाब्दधीजनतावच्छेदकगोत्वादिधर्मवत्त्वप्रयुक्तो भाक्त इत्यर्थः । एवं-जातेरेव शक्यत्वे । गत्यादौ—गतित्वविशिष्टगत्यादौ । तादृप्येण—गतित्वादिना । **सम्भवादिति** । जातिव्याक्त्योरित्यादिव्याप्तेर्जागरूकत्वात् इति भावः । आकृतिग्रहणा जातिरिति तत्सिद्धान्तानुसारेण समाधत्ते **गुरूणामिति** । जातित्वासम्भवादित्यन्वितम्, तथाच गतित्वादेर्जातित्वाभावेन तादृशनियमबलादपि गत्यादेर्बोधो न स्यात्, अतस्तत्र शक्तिरिति भावः । गतित्वजातेरसत्त्वेपि गतित्वमुपाधिर्वाच्य इति तत्रैव कथं न शक्तिः कल्प्यते इत्यत आह **संयोगेति** ।

(१) शक्यसम्बन्धस्य लक्षणाप्रयोजकत्वाद्गौण इति भावः ।

निरवच्छिन्नप्रकारकत्वाभावात्, निरुक्तक्रियात्वत्वावच्छिन्नशक्तताज्ञानत्वेन हेतुतामपेक्ष्य लघुतया तादृशक्रियात्वावच्छिन्नशक्तिमत्त्वज्ञानत्वेनैव तथात्वौचित्यात्, गुरुत्वादिप्रयोज्यस्य पतनत्वादेरखण्डोपाधित्वे पत्यादिधातूनां

कृष्णकान्तीटीका।

ति। प्रकारकत्वाभावादिति। जात्यखण्डोपाध्यतिरिक्तपदार्थानां स्वरूपतो भानानङ्गीकारादिति भावः। ननु समवायावच्छिन्नविषयत्वं तत्समवायिव्यक्तिविषयतानिरूपितमित्येव व्याप्तिः स्वीकार्या, तथाच गतित्वस्य सखण्डत्वेऽपि न क्षतिः समवायावच्छिन्नप्रकारकत्वस्य तत्राप्यनपायादित्यत आह—निरुक्तेति। तथात्वेति। हेतुत्वेत्यर्थः। औचित्यादिति। तथा च क्रियात्वस्य स्वरूपतो भानासम्भवेऽपि क्रियात्वत्वस्य जनकतावच्छेदकेऽप्रवेशादेव लाघवम्। भ्रमातुरोधेनैव तन्निवेश इति तु न वाच्यम्। तैर्भ्रमानङ्गीकारादिति भावः। न च प्रमेयत्वादिना क्रियात्वावगाहिनः शक्तिज्ञानस्य हेतुतावारणाय क्रियात्वत्वनिवेश आवश्यक इति वाच्यम्। शक्यवच्छेदकतया क्रियात्वत्वस्याप्रवेशादेव निरुक्तहेतुतामपेक्ष्य लाघवसम्भवादिति तु विभावनीयम्। ननु उत्तरसंयोगानुकूलक्रियात्वरूपगतित्वादौ गम्यादिधातोः शक्त्यस्वीकारे तुल्ययुक्त्याऽधःसंयोगानुकूलक्रियात्वरूपपतनत्वादावपि पत्यादिधातोः शक्तिर्न स्यात्, तस्याखण्डत्वे गतित्वस्याप्यखण्डत्वसम्भवात्, तत्रापि गम्यादिधातोः शक्तिस्वीकारे बाधाभाव इत्यत आह—गुरुत्वादीति। अथवा पतनत्वस्याखण्डोपाधित्वमवश्यं स्वीकार्यम्, अन्यथा गुरुत्वस्य कार्यतावच्छेदकगौरवापत्तेः, तथाच तत्र शक्तिस्वीकारे जातावेव शक्तिरिति तेषां सिद्धान्तव्याघात इत्यत आह—गुरुत्वादीति। तथाच जातावेवेत्येवकारस्य व्यक्तिव्यवच्छेदमात्रफलकत्वात् अखण्डधर्मे शक्तिस्वीकारेऽपि तादृशसिद्धान्तव्याघाताभावादिति भावः। नन्वेवं पश्वादिपदाद्व्यक्तेर्भानासम्भवः पशुत्वादेस्तेजस्त्वादिना साङ्कर्येण जातित्वाभावादिति लोमवल्लाङ्गूलादिरूपपशुत्वादि-

रामभद्रीटीका।

उत्तरेत्यादिः। तत्र—गतित्वादौ। प्रकारकत्वाभावादिति। तथाचोक्तनियमे जातेः प्रकारत्वमित्यत्र धर्मस्य प्रकारत्वमित्यादि नियमस्वीकारेऽपि निरवच्छिन्नप्रकारताया व्यक्तिविषयकत्वनियमात् उपाधेश्च सावच्छिन्नत्वनियमात् गत्यास्तत्र बोधो न स्यादतो गतौ शक्तिः कल्प्यते इति भावः। ननु धर्मस्य समवायसंसर्गावच्छिन्नप्रकारत्वं तत्समवायिविषयतानिरूपितमिति व्याप्तिः स्वीकार्येति, तथाच गत्यादेर्भाने न बाधकमत आह निरुक्तेति। उत्तरसंयोगावच्छिन्नेत्यर्थः। तथात्वौचित्यात्—हेतुत्वौचित्यात्। नन्वेवं पत्यादिधातूनामपि पतनत्वादौ शक्तिर्न स्यात् अधःसंयोगावच्छिन्नक्रियात्वस्वरूपत्वात् पतनत्वादेरत आह गुरुत्वादिप्रयोज्येति। तत्र। पतनत्वादौ। नन्वेवं पश्वादिपदात् व्यक्तेर्भानासंभवः पशुत्वादेस्तेजस्त्वादिना सांकर्येण जातित्वाभावात् किन्तु लोमवल्लांगू-

तत्र शक्तत्वेऽपि क्षत्यभावाच्च । पश्वादिपदानामपि लोमवल्लाङ्गूलादिपर्य्यवसिते पशुत्वादिमात्रे शक्तिः, तस्य तत्र वृत्तिग्रहोत्तरं तन्मात्रस्यैवानुभवेन तदाश्रयस्यालाभात्, लोमादीनां स्वाश्रयतुल्यवित्तिवेद्यत्वस्य लोमवल्लाङ्गूलवान् देश इत्याद्यनुभवे व्यभिचारादिति प्राहुः ।

---

कृष्णकान्तीटीका ।

विशिष्टे पशुपदस्य शक्तिरावश्यकीत्याह—पश्वादीति । ननु तस्य जातित्वाभावेऽपि तत्र शक्तिर्लाघवात्, लोमलङ्गूलविषयत्वं स्वाश्रयव्यक्तिविषयतानिरूपितमिति व्याप्तिबलादेव व्यक्तिभानसम्भवादत आह—लोमादीनामिति । स्वाश्रयेत्यस्य समवायेनेत्यादिः, तुल्यवित्तिवेद्यत्वस्य—स्वाश्रयविषयतानिरूपितत्वस्य । अनुभव इति । अनुभवनिरूपिते लाङ्गुलादिविषयत्व इत्यर्थः, अन्वयेन दृष्टान्तासम्भवेऽपि व्यतिरेकेण घटादावेव दृष्टान्तत्वसम्भवात् तदसिद्धिर्नोक्तेति भावः । नच व्यभिचारसंशयस्याप्रतिबन्धकत्वात् पक्षे व्यभिचारोऽकिञ्चित्करः, अत एव 'नहि पक्षे पक्षसमे वा व्यभिचार' इति साधारणदीधितिरपि सङ्गच्छत इति वाच्यम् । प्राच्यैः साध्याभावांशे संशयात्मकव्यभिचारज्ञानस्यापि प्रतिबन्धकत्वस्वीकारात् । न च समवायित्वसम्बन्धावच्छिन्नलोमादिविषयतात्वस्य हेतुत्वे न व्यभिचारः, तैर्भ्रमानङ्गीकारादिति वाच्यम् । तत्र तादृशसम्बन्धत्वस्यापि सन्दिग्धतया तद्विशिष्टस्य हेतुत्वासम्भवात्, मीमांसकैर्व्यक्ताविव सम्बन्धेऽपि शक्त्यस्वीकारात्, हेतुतावच्छेदकरूपेण हेतोः पक्षतानिश्चयस्यैवानुमितिहेतुत्वात् ॥

केचित्तु लोमादिविषयकं ज्ञानं स्वाश्रयविषयकमिति व्याप्तिबलादेव तत्र व्यक्तिभानम्, अनुभवे इत्यस्यानुभवान्तर्भावेणेत्यर्थः, शेषस्तु पूर्ववदवसेय इति, यथाश्रुतमेव वर्णयन्ति । तदसत्, तादृशव्याप्तिबलाल्लोमादिविषयतायां स्वाश्रयविषयतानिरूपितत्वसिद्धावर्थान्तरापत्तेरिति ।

रामभद्रीटीका ।

लादिविशिष्टे शक्तिः पशुपदस्यानायत्या कल्प्यते इत्याह—पश्वादीति । तत्र—लोमादौ, तन्मात्रस्य—लोमादिमात्रस्य । ननु जातेरिवात्रापि स्वाश्रयतुल्यवित्तिवेद्यत्वनियमादेव तद्विशिष्टाया व्यक्तेर्लाभ इत्यत आह—लोमादीनामिति । नन्वेवं जातेरेव शक्यत्वे गौर्गच्छतीत्यादिवाक्यानामप्रामाण्यं स्यात्, स्याच्च गौर्नित्या इत्यादिवाक्यानां जातेर्गमनकर्तृत्वाभावात् नित्यत्वाच्चेति वाच्यम् । स्वाश्रयवृत्तित्वरूपपरंपरासंबन्धेन तत्र गवादावेव गतिमत्त्वादेरन्वयात्तादृशवाक्यानां प्रामाण्याद्युपपत्तेः, न्यायमतेऽपि तादृशवाक्यस्य जातेरपदार्थतया तत्र नित्यत्वादेरन्वयाऽव्युत्पन्नतयाऽप्रामाण्यमिति भावः ।

(१)तत्र ब्रूमः—शाब्दमतेर्गवादिव्यक्त्यवगाहि(२)त्वमवश्यङ्कारण-प्रयोज्यं जन्यधीविषयितायास्तत्प्रयोज्यत्वनियमादन्यथा पक्षधर्मिकसा-

---

कृष्णकान्तीटीका ।

आहुरिति सूचितास्वरसं स्वयमेव व्यञ्जयन् तन्मते बाधकमाह—तत्रेति । निर्व्यूढे प्रभाकरमते इत्यर्थः । ब्रूम इति । बाधकमिति शेषः । शाब्दमतेरिति । षष्ठ्यर्थो निष्ठत्वं, तथाच शाब्दज्ञाननिष्ठं गवादिनिरूपितविषयित्वं किंचित्स्वकारणप्रयोज्यं जन्यज्ञानविषयतात्वादिति प्रयोगपर्यवसानम् । विषयिताया ज्ञानस्वरूपत्वेन नित्यज्ञानविषयिताया अपि नित्यत्वाद् भागासिद्धिर्बाधश्चातः शाब्दज्ञाननिष्ठत्वं पक्षविशेषणम् । प्रागभावघटितजन्यत्वस्य गुरुत्वादिति भावः । जातिविषयितायां सिद्धसाधनवारणाय च गवादिनिरूपितत्वं तथा । कारणजन्यत्वसिद्धावपि न व्यक्तौ शक्तिः सिध्यति, शक्तिज्ञानस्य तज्जनकत्वाभावात्, शाब्दकारणजन्यत्वस्य तत्र बाधाच्च स्वकारणप्रयोज्यत्वमेव साध्यीकृतम् । अनैकान्तिकत्वशंकां निराकुर्वन् ज्ञानविषयितात्वस्य हेतुत्वं व्यञ्जयति—जन्यधीत्यादि । विषयिताया इत्येव पाठः, विषय-

रामभद्रीटीका ।

तत्र—जातेरेव शक्यत्वे, ब्रूमो बाधकमिति शेषः । प्रयोज्यान्तं जन्यतावच्छेदके वाच्यमिति शेषः । कुत इत्याकांक्षायामाह जन्यधीति । तत्प्रयोज्यत्वनियमादिति । किंचिद्धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वनियमादित्यर्थः । तथाच गोत्वश

---

(१) उक्तप्राभाकरमतं निरस्यन्नाह तत्र ब्रूम इति । अयमत्र नैयायिकानामाशयः—गामानयेत्यादि वाक्याद्व्यक्तिबोधात्तत्रापि गोपदशक्तिः स्वीकार्या । न च जातिप्रत्ययानन्तरं व्यक्तिप्रतीतिरत्र, येन विशिष्टे शक्तिग्रहः स्याद्विशेषणज्ञानस्य विशिष्टज्ञानात्पूर्वं नियमेन सत्वस्यावश्यकत्वात्, किन्तु युगपदेव । न च तदुपपादकं युगपद्वृत्तिद्वयं सम्भवति । क्वचिन्मुख्यं हि क्वचिल्लाक्षणिकं भवति, न च जातौ क्वचिन्मुख्यः प्रयोगो व्यक्तिमनादाय क्वचिदपि पदाज्जातेर्व्यवहाराभावात्तथाच गोबोधार्थं तत्रापि शक्तिरावश्यकी । एवं जातौ निर्विकल्पकोपस्थितायां न शक्तिग्रहः, किन्तु सविकल्पकोपस्थितायां, जातौ विशेषणं व्यक्तिरेव तथाच जातेः स्मरणमपि सविकल्पकतया विशेषणसापेक्षम्, विशेष्यं च व्यक्तिरेवेति समानसंवित्सम्वेद्यतया कथमाक्षेपः । न चान्वयप्रकारतयापि व्यक्तेर्ज्ञानं किन्तु प्राधान्येन । किञ्च पदार्थोपस्थितावन्वयप्रकारता स्याद् व्यक्त्या विना जात्युपस्थितिरेव नास्तीति कस्यान्वये व्यक्तिः प्रकारः स्यात् । तस्माद् पदशक्तेः कार्यापेक्षतयोभयाविषयकज्ञानस्यैव कार्यस्यानुभवसिद्धत्वादुभयत्रैकैव शक्तिः । किञ्च न्यायमते पदानां शक्तिः सङ्केतो न तु पदार्थान्तरम्, स च व्यवहारबलेन जातिवद् व्यक्तावपि गृह्यते न हि गोपदाज्जातिमात्रं गृह्यते न च व्यक्तिरिति युक्तिमत्, तस्मात्सङ्केतग्राहकस्य जातिव्यक्तिसाधारणस्य प्रमाणसिद्धत्वादुभयत्रापि सङ्केतरूपा शक्तिरिति न काप्यनुपपत्तिः । एतेन गुरूणामर्धजरती निरस्ता, स्वरूपशक्तेः पदार्थोपस्थित्यनङ्गत्वात् तदर्थमेव तस्याः कल्पनात्, अन्यथा जातावपि स्वरूपसत्यैवास्तामित्यपि वक्तुं शक्यत्वात्तस्माज्जातिरिव व्यक्तिरपि यथासम्भवमाकृतिरपि पदार्थ इत्यवधार्यैवोक्तमक्षपादेन जात्याकृतिव्यक्तयः पदार्थ इति तदेव युक्तमिति सर्वं समञ्जसम् ।

(२) गवादिव्यक्तिनिष्ठविशेष्यतानिरूपितविषयत्वमित्यर्थः ॥

व्याप्यवगाहितादेरपि परामर्शादिप्रयोज्यता न स्यादनुमितिसामान्यं प्रत्येव ज्ञानत्वादिना हेतुत्वस्य लाघवेनौचित्यात्(१), पक्षतादिसहकृतपरामर्शोत्तरज्ञानस्य तत्प्रकाशस्यैव वा(२) पक्षे साध्यावगाहित्वनियमादेवानुमि-

कृष्णकान्ताटीका।

ताया इति पाठे तु विषयतानिरूपकताया इत्यर्थो बोध्यः। तथा चोक्तानुमानाद् व्यक्तिविषयितायां शक्तिज्ञानप्रयोज्यत्वसिद्धौ तेनैव हेतुना पश्चात् कार्यतावच्छेदकत्वं तत्र साधनीयं, कार्यतावच्छेदकविषयिताया एव कारणप्रयोज्यत्वनियमादिति। तत्र तत्त्वसिद्धौ प्रागुक्तयुक्त्या कारणतावच्छेदकत्वमपि तस्यावश्यकमित्यभिप्रायः। अन्यथा—एतादृशव्याप्त्यस्वीकारे इत्यर्थः। न स्यादिति। ननु तत्र पक्षविषयित्वाद्यन्तर्भाव्य कार्यकारणभावान्तरासंभवादगत्या तत्र तत्स्वीकार आवश्यक इत्यत आह—अनुमितिसामान्यमिति। अनुमितित्वावच्छिन्नमित्यर्थः। औचित्यादिति। नन्वेवं घटादिज्ञानोत्तरमपि पक्षे वह्न्याद्यनुमितिः स्यादित्यत आह—पक्षतादीति। आदिना बाधाभावादिपरिग्रहः। ज्ञानस्येत्यस्य पक्षे साध्यावगाहित्वनियमादित्यत्रान्वयः, तथाच यद्यज्ज्ञानं पक्षतादिसमानकालीनयद्धर्मावच्छिन्नव्याप्यावगाहिज्ञानोत्तरं तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नावगाहि, यथा घटे रूपानुमितिरिति नियमादेव तत्र पक्षे साध्यावगाहित्वसिद्धिरिति भावः। यदि चापरयनुमित्योर्यौगपद्यं स्वीक्रियते, तदा वन्हिव्याप्यवत्तापरामर्शाव्यवहितोत्तरायां वह्न्यनुमित्यनात्मकघटाद्यापत्तौ व्यभिचारः, तदङ्गीकारे तु यत्र विनश्यदवस्थाऽसमानविषयकालौकिकप्रत्यक्षसामग्रीसमवहितानुमितिसामग्री तदुत्तरम् अविरलक्रमेण घटानुमितिपटप्रत्यक्षे तत्र पटप्रत्यक्षस्यापि तादृशपरामर्शानन्तरत्वेन तत्र व्यभिचारः। द्वितीयक्षणमात्रवृत्त्युत्तरत्वनिवेशे च यत्र प्रत्यक्षेच्छासमवहितविनश्यदवस्थप्रत्यक्षसामग्रीसहितभिन्नविषयकानुमितिसामग्री तदुत्तरं प्रत्यक्षं ततोऽनुमितिः, तत्र प्रत्यक्षे व्यभिचारः, अत आह—तत्प्रकाशस्यैव वेति। पक्षतादिसहकृतपरामर्शोत्तरज्ञानानुव्यवसायस्यैव वेत्यर्थः। तथाच

रामभद्रीटीका।

क्तिज्ञानस्यैव गोत्वादिशाब्दबुद्धेर्हेतुत्वे तत्र गवादिव्यक्त्यवगाहिता न स्यात् कारणाभावात् अतो गोत्वविशिष्टस्य गवादिशक्तिज्ञानत्वेन हेतुत्वं वाच्यम् इति भावः। अन्यथा—जन्यज्ञानीयविषयतायाः कारणप्रयोज्यत्वानियमे, साध्यावगाहित्वादेः, साध्यविषयकत्वादेः। ननु पक्षधर्मिकसाध्यावगाह्यनुमितौ तत्तत्परामर्शस्य हेतुत्वे घटादिज्ञानोत्तरमपि पक्षे वह्न्याद्यवगाह्यनुमितिः स्यादत आह पक्षतादीति। आदिना बाधाभावस्य संग्रहः। अर्थो-

(१) तत्पक्ष—तत्साध्यव्याप्यवत्तावगाहिनिश्चयत्वरूपपरामर्शत्वापेक्षया ज्ञानत्वस्य लघुत्वादिति भावः।

(२) गुरुमते त्वाह—तत्प्रकाशस्यैवेति। तत्पक्षस्यैवेत्यर्थः। पटपदस्य क्वचिद्गोत्वानुभवजनकत्वेऽपि गोत्वानुभवसामान्यजनकत्वाभावान्नातिप्रसङ्ग इति भावः।

स्यादेः प्रतिनियतपक्षाद्यवगाहित्वसिद्धेः । किञ्च गोत्वशक्तत्वं न गोत्वसमर्थत्वं यस्य धीरन्वयधीहेतुरप्रसिद्धत्वात् । नापि तद्गोचरमभिधानामकं पदार्थान्तरं, तत्र मानाभावात् । न वा गोत्वानुभवजनकत्वं, पटादिपदस्या-

---

कृष्णकान्तीटीका ।

इदं ज्ञानं पक्षे साध्यावगाहि तत्त्वेनानुव्यवसीयमानत्वात्, इत्यत्र तत्सिद्धिरिति भावः । प्रतिबन्देरनुत्तरत्वादाह—किंचेति । यद्यपि जातेरेव शक्यत्वे गौर्गच्छतीत्यादिवाक्यस्याप्रामाण्यं न, प्रत्युत गौर्नित्या इत्यादिवाक्यस्य प्रामाण्यं स्यादित्यपि दोषः सम्भवति, तथापि स्वाश्रिताश्रितत्वसम्बन्धेन गोत्वे गतिमत्त्वस्य स्वाश्रयत्वसम्बन्धेन गवि नित्यत्वस्यान्वयेनोपपत्तिः, अन्यथा न्यायमतेऽपि गोत्वस्य पदार्थतावच्छेदकतया तत्र नित्यत्वान्वयासम्भवात् । इयांस्तु विशेषः—न्यायमते गौर्नित्या इत्यादिज्ञानस्य परम्परया प्रामाण्यम् , अस्मन्मते तु साक्षात्सम्बन्धेनापि, गौर्गच्छतीत्यादौ च तद्वैपरीत्यमिति । समर्थत्वमव्यवहितपूर्वत्वसम्बन्धेन गोत्वान्वयबोधविशिष्टत्वम् । जनकत्वमित्यपि कश्चित् । ननु तदनिर्वचने का क्षतिरस्माकमित्यत आह–यस्य धीरिति । तथाच तदनिर्वाच्यतज्ज्ञानस्य हेतुत्वस्य वक्तुमशक्यत्वादिति भावः । नञर्थे हेतुमाह—अप्रसिद्धत्वादिति । शाब्दबोधात् प्राक् तज्ज्ञानस्यासम्भवादित्यर्थः । असम्भवादित्यपि क्वचित् पाठः । पुनः शङ्कते—नापीति । तद्गोचरमिति । गोत्वगोचरमित्यर्थः । न चाभिधापदार्थः शब्दसमवेतः शब्दजन्यः शाब्दजनकः, तस्य निर्विषयकत्वेन तद्गोचरमित्यभिधानमसङ्गतमिति वाच्यम् । तज्जन्यशाब्दविषयतामादायैव तस्य सविषयकत्वोल्लेखात् । तत्राभिधायाम् । मानाभावादिति । शब्दप्रत्यक्षादिना तस्याविषयीकरणात् । अभिधया शब्दं शृणोमीत्यनुव्यवसायस्यालीकत्वादिति भावः । न च शब्दत्वादेरिवाभिधायामपि सन्निकर्षसत्त्वात् कथं न तेन रूपेण तत्प्रत्यक्षमिति वाच्यम् । तस्या अलीकत्वेन तदन्तर्भावेण सन्निकर्षस्य कार्यकारणभावस्य वक्तुमशक्यत्वात्, अन्यथा शब्दे द्रव्यत्वादेरपि सत्त्वप्रसङ्गात् । न च यत् स्वभिन्नसमवेतं यत्कार्यं प्रति कारणं भवति तत्तत्कार्यानुकूलस्वनिष्ठव्यापारजनकं भवति, यथा चक्रभ्रमितण्डुलविच्छित्त्यादिजनकं तज्जनकस्पन्दवन्द्यादिसंयोगरूपव्यापाराद्दण्डकाष्ठादिकमित्याद्यनुमानमेव तत्र मानमिति वाच्यम् । व्याप्तिज्ञानादौ व्यभिचारात् ।

रामभद्रीटीका ।

परत्यनुमित्योर्यौगपद्योपगमेऽर्थापत्तौ व्यभिचारादत आह तत्प्रकाशस्येति । तादृशपरामर्शाद्युत्तरज्ञानसाक्षात्कारस्येत्यर्थः । नन्वेवमपि पूर्वकल्पद्वये व्यक्तिविषयकत्वस्य शक्तिधीप्रयोज्यत्वस्वीकारान्न तत्र दोष इत्यत आह किञ्चेति । प्रतिबन्देरनुत्तरत्वादाह किञ्चेति, इत्यपि कश्चित् । अन्वयधीहेतुर्गोत्वान्वयधीहेतुः। अप्रसिद्धत्वात्—गोत्वान्वयबोधात् पूर्वमप्रतीतत्वात् । तत्रेति । अभिधानामके पदार्थान्तरे इत्यर्थः । मानाभा-

पि गोत्वशक्तत्वापत्तेस्तस्यापि गवादिपदाकाङ्क्षादिसाचिव्येन गोत्वानुभवजनकत्वात्। न च गोत्वानुभवसामान्यं प्रति हेतुत्वं तथा, गवादिपदेऽप्यसत्त्वात्। नापि गोत्वानुभवजनकत्वप्रकारकनित्यसङ्केतवत्त्वं तादृशसङ्केतवत्त्वमात्रं वा गोत्वशक्तत्वमिति साम्प्रतम्। गोपदं गोत्वेन गवानुभवस्य जनकतया न सङ्केतितमित्यादिग्रहेऽपि तस्य ग्रहाद्गोत्वेन गोरन्वयधीप्रसङ्गात्, किन्तु गोत्वेन गवानुभवस्य जनकतया सङ्केतितत्वं तथा, तथा

---

कृष्णकान्तीटीका।

न च शब्दात्तत्सिद्धिरयोग्यत्वात्, अन्यथा गगनकुसुमादेरपि सिद्धिप्रसङ्गात्। पुनः शङ्कते—न वेति। तस्यापि—पटादिपदस्यापि, साचिव्येन—आकाङ्क्षादिसहकारेण। जनकत्वादिति। गौर्द्रव्यं पटश्च रूपवानिति वाक्येन समूहालम्बनगोत्वानुभवजननादिति भावः। गोत्वानुभवसामान्यं प्रति—गोत्वविषयकानुभवत्वावच्छिन्नं प्रतीत्यर्थः। तथा—गोत्वशक्तत्वम्। असत्त्वादिति। गोत्वस्य प्रत्यक्षादौ प्रमेयत्वादिना शाब्दे च व्यभिचारात्, स्वरूपतो गोत्वप्रकारकत्वस्य गोत्ववानितिज्ञानसाधारण्येन गोपदजन्यतानवच्छेदकत्वादिति भावः। नित्यसङ्केतवत्त्वं नित्यसङ्केतविशेष्यत्वमित्यर्थः। नदीवृद्ध्यादिशब्दस्य सङ्केतितत्ववारणाय नित्यत्वं सङ्केतविशेषणम्। नन्वेवं चैत्रादिपदे शक्तिर्न स्यात् तस्य पितृसङ्केतितत्वेन नित्यसङ्केतवत्त्वे मानाभावात्, "द्वादशेऽहनि पिता नाम कुर्यात्" इत्यादेः पितृकर्तव्यतामात्रविधायकत्वादित्यत आह—तादृशेति। गोत्वानुभवजनकत्वप्रकारकेत्यर्थः। मात्रपदेन नित्यत्वव्यवच्छेदः। न च वृद्ध्यादिपदस्य शक्तत्वापत्तिरिष्टत्वात्। तस्य ग्रहात् तादृशसङ्केतस्य ग्रहसम्भवादित्यर्थः। विशेषाभावनिश्चयस्य सामान्यग्रहाप्रतिबन्धकत्वादिति भावः। प्रसङ्गादिति। न चेष्टापत्तिरनुभवविरोधादिति भावः। उपसंहरति—किन्त्विति। तथा—गोत्वशक्तत्वम्। ननु तादृश-

रामभद्रीटीका।

धात् इति। नित्यसंकेतस्यैवाभिधापदार्थत्वादिति भावः। तस्यापि—पटादिपदस्यापि। आकांक्षादिसाचिव्येन—आकांक्षादिसहकृतेन। जनकत्वादिति। गौर्द्रव्यं पटश्च रूपवान् इत्यादिवाक्यादपि गोत्वानुभवजनने बाधकाभावादिति भावः। हेतुत्वमिति। तथाच पटादिपदस्य गोत्वानुभवत्वावच्छिन्नं प्रति अजनकत्वात् न तस्य गोत्वशक्यत्वापत्तिरिति भावः। असत्त्वादिति। प्रमेयत्वादिप्रकारेण गोत्वानुभवे गवादिपदस्याहेतुत्वेन तस्य गोत्वानुभवसामान्याजनकत्वादिति भावः। ननु चैत्रादिपदे शक्तिर्न स्यात् तस्य पित्रादिसंकेतितत्वेन नित्यसंकेतवत्त्वे मानाभावात्, 'द्वादशेऽहनि पिता नाम कुर्यादि'तिश्रुतेः पितृकर्तव्यसंकेतमात्रविधायकत्वादत आह तादृशेति। गोत्वानुभवजनकत्वप्रकारकसंकेतवत्त्वमित्यर्थः। तस्य—निरुक्तशक्तस्य। तथा—गोत्वशक्तत्वं, तज्ज्ञानत्वेन—गोत्वेन गवा-

च पदधर्मिकतज्ज्ञानत्वेन गोत्वप्रकारकशाब्दं प्रति हेतुतायां गोत्वस्येव तद्विशिष्टस्य गोरपि विषयविधयाऽवच्छेदकत्वादवश्यं गोत्वादिविशिष्टो गवादिर्गवादिपदस्यार्थः ॥ १९ ॥

स्यादेतत्, निरुक्तस्यैव सङ्केतस्य कुतः प्रथमतो ग्रहः, नोपमानान्न कोषान्न विवरणान्न प्रसिद्धार्थशब्दसामानाधिकरण्यान्नापि वाक्यशेषादमीषां शक्तिग्रहमूलकत्वेन पूर्वं पृथुकस्य कस्यापि तदसत्त्वादत आह—

**(१)सङ्केतस्य ग्रहः पूर्वं वृद्धस्य व्यवहारतः ।**

कृष्णकान्तीटीका ।

सङ्केतस्य गोत्वशक्तिरूपत्वेऽपि गवादिपदधर्मिकशक्तिज्ञानत्वावच्छिन्नशाब्दधीजनकतावच्छेदकत्वविशेषत्वस्यैव गोपदार्थत्वस्य न गवि सम्भव इत्यतस्तदपि सङ्गमयति—तथा चेति ॥ १८ ॥

नैयायिकदत्तदूषणेन व्यस्तचित्तो न्यायमतदूषणोत्कटरागेण मीमांसकः स्वमतसाधारणदोषं भीत्या जिज्ञासाभावेनोज्ञापयति इत्यवतरणिकया कारिकान्तरमुत्थापयति-स्यादेतदिति । उक्तसङ्केतस्यैव गोत्वशक्तिरूपत्वं गवि गोपदार्थत्वञ्च स्यादित्यर्थः । निरुक्तस्य गोत्वादिप्रकारकगोविशेष्यकशाब्दबोधजनकत्वप्रकारकस्येत्यर्थः । प्रथमतः शक्तिग्राहकोपमानादेः प्रागित्यर्थः । ननूपमानादिरेव शक्तिग्राहकत्वेन वृद्धैरुक्तः । यथा—

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च ।

वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥ इति ।

तथा च तदन्यतमस्मात् प्राक् एतदन्यतमस्मादेव शक्तिग्रहो भविष्यतीति तेषां प्रथमतः शक्तिग्राहकत्वं सम्भवतीत्याह—**नोपमानादित्यादिना** । अमीषामुपमानादीनां, पृथुकस्य बालकस्य, अज्ञातशक्तिकस्येति यावत् । तदसत्त्वादुपमानाद्यसत्त्वात् ।

रामभद्रीटीका ।

नुभवजनकतया संकेतितत्वज्ञानेन ॥ १९ ॥

**स्यादेतत् इति**। एतद्दूषणं स्यादित्यर्थः। **वाक्यशेषादिति**। यद्यपि पित्राद्युपदेशस्यापि शक्तिग्राहकत्वेन वाचस्पतिमिश्रादिसंमतत्वात्तददर्शने न्यूनत्वम् । तथापि स्वमते विवरण एव तस्यान्तर्भावात् न न्यूनतेति । तदुक्तं—

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च ।

वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

कोषादेराप्तोक्तत्वेपि गोबलीवर्दन्यायेन पृथगुपन्यासः । अमीषां-उपमानादीनां, पृथुको-बालकः । असौ-संकेतस्य ग्रहः ।

---

(१) बालकस्य प्रथमं वृद्धव्यवहारादेव पदार्थसङ्केतग्रहो पदे जायते तदनन्तरमुपमानादिभिः शक्तिज्ञानपूर्वकस्सङ्केतग्रहो भवतीति कारिकार्थः ।

पश्चादेवोपमानाद्यैः शक्तिधीपूर्वकैरसौ ॥ २० ॥

प्रथमं पदेषु सङ्केतग्रहो वृद्धस्य व्युत्पन्नस्य शब्दाधीनव्यवहारादेव बालानाम्, तथा हि—गामानयेति केनाचिन्निपुणेन नियुक्तः कश्चन व्युत्पन्नस्तद्वाक्यतोऽर्थं प्रतीत्य गवानयनं करोति, तच्चोपलभमानो बाल इदं गवानयनं स्वगोचरप्रवृत्तिजन्यं चेष्टात्वान्मदीयस्तनपानादिवादित्यनुमाय, सा गवानयनप्रवृत्तिः स्वविषयधर्मिककार्य्यताज्ञानजन्या प्रवृत्तित्वान्निजप्रवृत्तिवदिति प्रवृत्तेर्गवानयनधर्मिककार्य्यताज्ञानजन्यत्वं प्रसाध्य, गवानयनगोचरतज्ज्ञानमसाधारणहेतुकं कार्य्यत्वाद्घटवदित्येवमनुमिन्वानः प्रथममुपस्थित-

---

कृष्णकान्तीटीका ।

पूर्व्वं—उपमानादेः पूर्व्वं, वृद्धस्य व्यवहारतः सङ्केतस्य ग्रहः । पश्चात् शक्तिधीपूर्वकैरुपमानाद्यैरसौ सङ्केतस्य ग्रहो भवतीति शेषः ।

ननु वृद्धस्य कुतः प्रथमतः शक्तिग्रह इत्यत आह—तथाहीति । निपुणेन शक्तिग्रहवता, व्युत्पन्नः शक्तिं जानन्, तद्वाक्यतः—गामानय इतिवाक्यतः । तद्गवानयनं, बाल इत्यस्यावधारयतीत्यग्रेऽन्वयः, स्वं—गवानयनम् । चेष्टात्वादिति । न च चेष्टात्वस्य शरीरक्रियामात्रवृत्तित्वेनानयनादौ स्वरूपासिद्धिरिति वाच्यम् । गमनानुकूलव्यापारस्यैवानयनपदार्थत्वेन तेन रूपेणानेतृशरीरक्रियाया एव पक्षत्वात् । दृष्टान्तमाह—स्तनपानेति । ननु द्रवद्रव्यस्य गलाधःसंयोगानुकूलव्यापारः पानं, तच्च स्तनस्यासम्भवि, इति उक्तदृष्टान्ताप्रसिद्धिरिति चेन्न । स्तनपदस्य स्तन्यपरत्वेन स्तनपानस्यैव दृष्टान्तत्वात् । इत्यनुमायेति । एतदनुमानं चाग्रिमानुमानोपयुक्तपक्षतावच्छेदकप्रकारकज्ञानसम्पादनायोक्तम् । स्वविषयधर्मिकेति । प्रवृत्तिविषयविशेष्यकेत्यर्थः । कार्यता—कृतिसाध्यता, निजप्रवृत्तिवत् अस्मत्स्तनपानादिगोचरप्रवृत्तिवदित्यर्थः । इत्येवंक्रमेण । प्रवृत्तेरिति षष्ठ्यर्थो निष्ठत्वं, तच्च कार्यताज्ञानजन्यत्वान्वितम्, प्रसाध्य—अनुमाय, इदमपि अग्रिमानुमानोपयुक्तपक्षतावच्छेदकप्रकारज्ञानसम्पत्त्यर्थम् । तज्ज्ञानं—कार्यताज्ञानम्, असाधारणहेतुकं गवानयनधर्मिककार्यताज्ञानमात्रवृत्तिकार्यतानिरूपितकारणताश्रयकिञ्चिन्निरूपितकार्यताकमित्यर्थः । प्रथमोपस्थितत्वं तादृशवाक्यस्येवान्यस्यापि सम्भवति, नियमतः प्रथमोपस्थितत्वञ्च तादृशवाक्यस्याप्यसम्भवि, योग्यतादेरपि कदाचित् प्रथमतो ज्ञानसम्भवात्, पदस्मृतेश्च सर्वत्र शाब्दबोधात् प्रागनपेक्षणात्

रामभद्रीटीका ।

निपुणेन—शक्तिग्रहवता, तद्वाक्यतः—गामानयेत्यादिवाक्यतः । तत्—गवानयनम् । स्वविषयेति । प्रवृत्तिविषयविशेष्यकेत्यर्थः । इतिप्रवृत्तेरित्येवंक्रमेण प्रवृत्तेः । तज्ज्ञानं

त्वात्लाघवाच्च श्रुतं वृद्धवाक्यमेव तदसाधारणकारणत्वेनावधारयति । तदनन्तरञ्च गवादिपदानां प्रत्येकमावापोद्वापेन गवादिबुद्धौ जनकत्वमवगत्यानतिप्रसक्तये गवादिसङ्केतस्य तदनुकूलत्वं कल्पयति ।

पश्चात्तु क्वचिदुपमानाच्छक्तिग्रहो, यथा गवादिपदशक्तिधीसाचिव्येन गोसादृश्यातिदेशवाक्यात् गवयपदवाच्यत्वबोधोत्तरं गवयत्वजात्यवच्छिन्ने

---

कृष्णकान्तीटीका ।

आह—लाघवाच्चेति । शाब्दबोधप्राग्वर्त्तित्वेनावश्यकवृद्धवाक्यातिरिक्तस्य तदसाधारणकारणताकल्पने गौरवादिति भावः । अज्ञातवाक्ये तदवधारणासङ्गतेः श्रुतमिति । ज्ञातमित्यर्थः । एतच्च ज्ञायमानवाक्यस्य हेतुतामताभिप्रायेण, इतरथा तु तज्ज्ञाने तदवधारणं बोध्यम् । तदनन्तरं—तादृशावधारणानन्तरम् । गवादीत्यादिना आ—नीपद—द्विपद—परिग्रहः । गवादिबुद्धौ समुदायवाक्यस्यावापोद्वापासम्भवात् प्रत्येकमिति । तत्तत्पदत्वेनेत्यर्थः । आवापोद्वापौ-अन्वयव्यतिरेकौ । गवादीत्यादिना नयनादिपरिग्रहः । अनतिप्रसक्तये इति । तद्वाक्यघटकान्यपदस्यान्वयबोधजनकत्वनिरासायेत्यर्थः, इति कश्चित् । तन्मन्दम् , गवादिसङ्केतस्य गवादिबोधानुकूलत्वकल्पनेऽपि तादृशातिप्रसक्तिनिराकरणासम्भवेन उपष्टम्भासङ्गतेः, एवं गवादिपदानां गवादिबोधजनकत्वमवगम्य प्रागसत्त्वेऽपि संकेतस्य तथात्वकल्पनसम्भवात् 'जनकत्वमवगत्ये'ति क्त्वान्तपदप्रयोगानर्थक्यापत्तेश्च । वस्तुतस्तु एतादृशजनकत्वावगमानन्तरं गवादिपदस्य गवाद्यन्वयबोधजनकत्वं साक्षात् पदार्थोपस्थित्यन्यद्वारा वाऽसम्भवीति पदार्थोपस्थितिद्वारैव तत्र तस्य हेतुत्वं, द्वारत्वघटकस्य पदार्थोपस्थितौ तद्धेतुत्वस्य सम्बन्धिज्ञानमुद्रया एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वनियमात् । तादृशसम्बन्धश्च यथाकथंचिद्रूप इति गवादिपदस्य गवाद्यन्वयबुद्धाविव गगनाद्यन्वयबुद्धावपि हेतुत्वप्रसक्तिरिति विभाव्य तन्निराकरणाय गवादिसङ्केत एव शाब्दबोधानुकूलो नान्यः सम्बन्धः, तथासत्यतिप्रसङ्गादिति कल्पयतीत्यन्तग्रन्थाभिप्रायः ।

कारिकापरार्द्धं व्याकुरुते—पश्चादिति । क्वचित्—किञ्चिद्धर्मावच्छिन्ने । शक्तिग्रहप्रकारमाह—यथेति । साचिव्येन सहकारेण, अतिदेशवाक्यघटकप्रत्येकपदशक्त्यग्रहे अतिदेशवाक्यार्थबोधो दुर्घट इति भावः । गोसादृश्यातिदेशवाक्यात्—गोसदृशो गवयपदशक्तिबोधकवाक्यात , गोसदृशो गवयपदवाच्य इति वाक्यादिति यावत् । गोसा-

रामभद्रीटीका ।

कार्यताज्ञानं, प्रथमोपस्थितत्वस्य शक्तिग्राहकतायामतिप्रसंगादाह लाघवाच्चेति । तदानीं वृद्धवाक्यादन्यस्य कार्यताज्ञानासाधारणकारणत्वकल्पनायां गौरवादिति भावः । तदनन्तरं—कार्यताज्ञानस्यासाधारणकारणत्वावधारणानन्तरम् । आवापोद्वापोऽन्वयव्यतिरेकः ।

कारिकार्द्धं व्याकुरुते पश्चादिति । अतिदेशवाक्यादिति । गोसदृशो गवय

गोसादृश्यग्रहात् गवयो गवयपदवाच्य इत्याकारः । क्वचिच्च व्याकरणात्, यथा 'कर्मणि द्वितीया' 'कर्त्तरि परस्मैपदमि'त्याद्यनुशासनात् कर्मत्वादौ द्वितीयादेः । क्वचित् कोषादपि, यथा

गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ।
शीतं गुणे तद्वदर्थाः सुषीमः शिशिरो जडः ॥
चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले ।

कृष्णकान्तीटीका ।

द्वयग्रहाद्गवयो गोसदृश इति प्रत्यक्षादित्यर्थः । इत्याकार इति । शक्तिग्रह इति पूर्वेणान्वयः, एवमग्रेऽपि बोध्यम् । व्याकरणाधीनशक्तिग्रहस्थलमाह—व्याकरणादिति । अनुशासनादित्यर्थः । कर्मत्वादित्यादिपदात् कर्तृत्वादिपरिग्रहः । द्वितीयादेरित्यादिपदात् परस्मैपदादेः परिग्रहः । कोषाधीनशक्तिग्रहस्थलमाह—क्वचित् कोषादपीति । शक्तिग्रह इति पूर्वेणान्वयः । सप्तम्यन्तपदद्वयोत्तरं वाच्या इति पूरणीयम् । ननु अत्र गुण इति व्यर्थं "शुक्लः शुभ्रः शुचिः श्वेत" इत्याद्युक्त्वा 'शुक्लादयः पुंसि, गुणवति गुणिलिङ्गा' इत्युक्तेरेवार्थात् गुणे वाच्ये पुंलिङ्गत्वप्रतीतेरिति चेन्न । गुण इति कथनाद् गुणत्वस्य उद्देश्यतावच्छेदकस्थल एव तेषां पुंस्त्वमिति ज्ञापनात् । अत एव 'रक्तो रूपमि'ति प्रत्यक्षमणिः । तत्र रूपत्वस्यैवोद्देश्यतानवच्छेदकत्वात् । अत एव च 'रक्तं रूपं 'नास्ती'ति दीधितिकृदुक्तं सङ्गच्छते तत्र रक्तत्वस्यैवोद्देश्यतानवच्छेदकत्वात्, तदपवादं दर्शयति—शीतं गुण इति । अत्रापि गुण इत्यस्य किञ्चिदविशेष्यीभूतगुण इत्यर्थः, "तेन शुक्ल-मधुर-शीता रूपरसस्पर्शा" इत्यत्र शीतशब्दस्य पुंस्त्वेऽपि न क्षतिः । यद्वा 'शीतं गुणे' इत्यत्र गुणशब्दो गुणविशेषपरः, अत एव "वेतसे बहुवारे ना, शीतं हिमगुणे त्रिषु" इति रभसः । तद्वदर्थाः—शीतवदर्थाः, सुसीम

रामभद्रीटीका ।

पदवाच्य इत्यतिदेशवाक्यादित्यर्थः । इत्याकार इति । शक्तिग्रह इति पूर्वेणान्वयः । गुणे—गुणे वाच्ये । तद्वतीति । गुणवति वाच्ये इत्यर्थः । अत्र पुंसीत्यनेनैव प्रकृतनिर्वाहे गुणे इति नियमार्थं, तेन यदा गुणपुरस्कारेणैव वर्तते तदैव पुंस्त्वम्, अत एव 'रक्तो रूपम्' इति प्रत्यक्षमणिः । अत एव च 'रक्तं रूपं नास्तीति' दीधितिकृदुक्तमपि संगच्छते तत्र रूपपुरस्कारेणैव नपुंसकत्वाभिधानात् । यद्वा गुणे विशेष्यीभूतगुणे इत्यर्थः । तदपवादं दर्शयति शीतमिति । अन्यत्राविशेषितगुणे वाच्ये शीतमित्यर्थः । तेन 'शुक्लमधुरशीता एव रूपरसस्पर्शा' इत्यत्र शीतशब्दस्य पुंस्त्वेऽपि न क्षतिः । यद्वा गुणे विशेष्ये(१) क्लीबम् । अतएव 'वेतसे बहुवारे ना गुणे शीतं हिमे त्रिषु' इति रभसः । तद्वदर्थाः—शीतव-

(१) गुणविशेष इति क० पु० पाठः ।

इत्यादिकोषेभ्यः श्वैत्यादौ शुक्लादिशब्दस्य। क्वचिद्विवरणादपि, यथा 'पचति, पाकं करोती'ति तुल्यार्थकवाक्यात् कृत्यादौ तिङादेः। क्वचित् प्रसिद्धार्थकशब्दसामानाधिकरण्यादपि, यथा "नीरूपस्पर्शवान् वायुर्निःस्पर्शं मूर्त्तिमन्मन" इत्यादौ रूपशून्यस्पर्शवदादिषु वाय्वादिपदस्य वायुत्वादिजातेरतीन्द्रियत्वेन स्वरूपतस्तदवच्छिन्नस्यानुपस्थितया तत्र शक्ति-

---

कृष्णकान्तोटीका।

इत्यादयो भवन्तीत्यर्थः। शुक्लादिशब्दस्येति। शक्तिग्रह इति पूर्वेणान्वयः। विवरणाधीनशक्तिग्रहस्थलमाह—क्वचिद्विवरणादपीति। प्रकृतवाक्यार्थस्य स्फुटतया कथनं विवरणम्। तुल्यार्थकवाक्यादिति। एतेन तुल्यार्थकवाक्यमेव विवरणमिति प्रतीयते। तन्न सङ्गच्छते, पाकं करोतीत्यस्य पचतीत्यादिना विवरणत्वमिव पचतीत्यस्य पाकं करोतीत्यादेरपि विवरणत्वापत्तेः। न चेष्टापत्तिरनुभवविरोधात्। तुल्यार्थकवाक्यादित्यस्य तुल्यार्थकस्फुटवाक्यादित्यर्थ इत्यपि कश्चित्। तिङादेरिति। शक्तिग्रह इति पूर्वेणान्वयः। प्रसिद्धार्थकशब्दसामानाधिकरण्याधीनशक्तिग्रहस्थलमाह—क्वचित् प्रसिद्धार्थकेति। सामानाधिकरण्यादिति। स्वाव्यवहितपूर्वोत्तरान्यकालावच्छिन्नसामानाधिकरण्यादित्यर्थः। ननु यत्र प्रकारान्तरेण शक्तिग्रहो नसम्भवति तत्रैव पदसान्निध्यस्य तथात्वं कल्प्यते, अत्र तु प्रत्यक्षतोऽपि शक्तिग्रहः सम्भवति, प्राच्यैर्वायोरपि प्रत्यक्षस्वीकारादित्यत आह— निस्पर्शमिति। स्पर्शवदादीत्यादिपदात् स्पर्शशून्यमूर्त्तिमत्परिग्रहः। वाय्वादीत्यादिपदान्मनःपरिग्रहः। ननु वायुपदसान्निध्यादपि वायुपदशक्तिग्रहो भवितुमर्हति तत्पदस्यापि प्रसिद्धार्थत्वादिति कथं प्रसिद्धपदानुसरणम्, इत्याशंक्य वायुपदस्य प्रसिद्धार्थत्वमेव नास्तीति व्यावृत्तिव्याजेनाह—वायुत्वादिजातेरिति। अतीन्द्रियत्वेनेति। अत्रातीन्द्रियत्वं प्रत्यक्षजनकसन्निकर्षानाश्रयत्वं, तथा च वायुपदस्य प्रसिद्धार्थकत्वमेव नास्ति प्रत्यक्षविषयार्थकत्वस्यैव तथात्वादिति भावः। अतीन्द्रियस्यापि प्रमेयत्वादिसामान्यलक्षणया प्रत्यक्षसम्भवात् स्वरूपत इति। तदवच्छिन्नस्य-वायुत्वाद्यवच्छिन्नस्य, तत्र-स्वरूपतो वायुत्वाद्यवच्छिन्ने। शक्तिग्रहायोगादिति। तथा च स्वरूपतः प्रकारतायां स्वरूपतः शक्तिग्रहविशेष्यतावच्छेदकत्वस्य प्रयोजकतया वायुपदस्य प्रसिद्धार्थकत्वेऽपि तत्सान्निध्यं न स्वरूपतो वायुत्वप्रकारकज्ञानोपयुक्तशक्तिग्रहोपयोगीति भावः। नव्यमते म-

रामभद्रीटीका।

दर्थाः, सुषीम इत्यादयो भवन्तीत्यर्थः। शुक्लादिशब्दस्येति। शक्तिग्रह इति पूर्वेणान्वयः। ननु गुरुमते वायोरपि प्रत्यक्षत्वाङ्गीकारात् वायुत्वविशिष्ट एव प्रत्यक्षत एव शक्तिग्रहसम्भवान्नेदं प्रसिद्धशब्दसामानाधिकरण्येन शक्तिग्रहस्योदाहरणमत आह निःस्पर्शमिति। वाय्वादीत्यादिना मनःपरिग्रहः। तदवच्छिन्नस्य—वायुत्वाद्यवच्छिन्नस्य।

ग्रहायोगात्। यथा वा "सत्कृत्यालङ्कृतां कन्यां ददानः कूकुदः स्मृत" इत्यादावुक्तरीत्या कन्यादात्रादिषु कूकुदादिपदस्य। "इह सहकारतरौ मधुरं रौति पिक" इत्यादिकन्तु न युक्तमुक्तक्रमेण शक्तिग्रहस्योदाहरणं, तिङर्थे धर्मिण्यभेदेन नामार्थान्वयस्याव्युत्पन्नत्वात्, प्रत्यक्षासिद्धकोकिल-

कृष्णकान्तीटीका।

नसोऽभावात् त्रुटेरेव विश्रामात् त्रुटित्वविशिष्टे प्रत्यक्षत एव शक्तिग्रहसम्भव इत्यत आह—यथा वेति। अत्र निरुक्तकन्यादातृत्वस्यैव कूकुदपदशक्यतावच्छेदकतया तस्यातीन्द्रियकालादिघटितत्वेनाप्रत्यक्षत्वान्न प्रत्यक्षतः शक्तिग्रहसम्भव इति भावः। मणिकारोक्तमुदाहरणं दूषयति—इह सहकारतराविति। यः सहकारवृक्षाधिकरणकमधुररवणकर्त्ता स पिकपदवाच्य इत्यर्थः। इत्यादिकन्तु शक्तिग्रहस्योदाहरणं न युक्तमिति योजना। उक्तक्रमेण—प्रसिद्धार्थपदसान्निध्येनेत्यर्थः। इदञ्च शक्तिग्रहान्वयितनर्थे हेतुमाह—तिङर्थ इति। वैयाकरणमतेनेदं तैरेव कृतिमत्याख्यातशक्तिस्वीकारात्। न्यायमते तु तिङर्थकृत्यवच्छिन्नधर्मिणीति तदर्थो बोध्यः। अभेदेनेति नामार्थान्वयस्येति च प्रकृताभिप्रायम्। अव्युत्पन्नत्वादिति। कृत्यवच्छिन्नविशेष्यकान्वयबोधं प्रति नामजन्यायाः तिङन्यपदजन्याया वा कृत्युपस्थितेस्तन्त्रत्वात्, अन्यथा पक्वा गच्छतीत्यत्रेव पचति गच्छतीत्यत्रापि पाककृत्यवच्छिन्ने गमनानुकूलकृतिमत्त्वस्यान्वयापत्तेरिति भावः। ननु मणिकृन्मते चैत्रः पचति चैत्रत्वादित्यादिन्यायानुरोधेन तत्स्वीकार आवश्यकः, यद्यपि उक्तस्थले प्रत्येकावयवजन्यबुद्धौ कृतेर्नोद्देश्यतावच्छेदकत्वम्, तथापि न्यायजन्यविशिष्टबुद्धौ तस्यास्तदावश्यकत्वमिति न्यायजन्यविशिष्टबोधास्वीकारेऽपि "यो यः शूद्रस्याऽन्नं पचति सोऽतिनिन्दित" इत्यादौ तादृशबोधस्य स्वयं स्वीकर्त्तव्यत्वाच्च तादृशव्युत्पत्तिर्न सर्वसिद्धेत्यत आह—प्रत्यक्षेति। कोकिलत्वजातेरप्रत्यक्षत्वे प्रकारान्तरेण शक्तिग्रहासम्भवात् सुतरां प्रसिद्धार्थपदसान्नि-

रामभद्रीटीका।

तत्र-वाय्वादौ। ननु नव्यमते मनस एवाभावात् त्रुटावेव विश्रामात् त्रुटित्वविशिष्ट एव प्रत्यक्षत एव शक्तिग्रहसम्भवात् नेदं युक्तम्, अतः स्थलान्तरमाह यथा वेति। मणिकृदुक्तोदाहरणं न सम्यगित्याह सहकारेति। यः सहकारतर्वधिकरणकमधुरतररवणकर्ता स पिकपदवाच्य इत्यर्थः। अव्युत्पन्नत्वादिति। कृत्यवच्छिन्नधर्मिकशाब्दबोधं प्रति नामजन्यायास्तिङन्यपदजन्याया वा कृत्युपस्थितेस्तन्त्रत्वात्, अन्यथा पक्वा चैत्रो गच्छतीत्यत्रेव पचति चैत्रो गच्छतीत्यादावपि पाककर्तृत्वावच्छिन्ने गतिमत्त्वस्यान्वयापत्तेरिति भावः। ननु मणिकृन्मते चैत्रः पचति चैत्रत्वादित्यादिन्यायजन्यान्वयबोधजनकवाक्यस्य न निराकाङ्क्षत्वम्, अत एव 'यो यः शूद्रस्यान्नं पचति सोऽतिनिन्दित' इत्यादिरप्यग्रे वक्ष्यतीत्यत आह—प्रत्यक्षासिद्धेति। ननु 'यवमयश्चरुर्भवती'ति श्रुतौ

स्वजात्यवच्छिन्न एव लाघवेन पिकशब्दस्य शक्त्यवच्छेदाच्च । क्वचिद्वाक्यशेषादपि, यथा यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां, दीर्घशूके च शिष्टानाम्, व्यवहारादेकमात्रे शक्तेः परिच्छेत्तुमशक्यत्वात्, नानार्थत्वस्य चान्याय्यत्वात्, "यवमयश्चरुर्भवतीति" श्रुतौ यवपदस्यार्थसन्देहे

वसन्ते सर्वशस्यानां जायते पत्रशातनम् ।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः ॥

---

कृष्णकान्तीटीका ।

व्यस्य शक्तिग्रहोपायत्वं कल्पनीयमिति प्रत्यक्षसिद्धेत्युक्तम् । लाघवेनेति । प्रसिद्धार्थपदसान्निध्यस्य शक्तिग्राहकत्वमपेक्ष्येत्यादिः । पिकशब्दस्येति । प्रत्यक्षत इत्यादिः । शक्त्यवच्छेदात्—शक्तिग्रहसंभवादित्यर्थः । केचित्तु लाघवेनेति शक्यतावच्छेदकस्य लाघवेनेत्यर्थ इत्याहुः । तन्न, लाघवेनेति तृतीयार्थस्यानन्वयापत्तेः । न च तच्छक्तिग्रहान्वयि, शक्यतावच्छेदकलाघवस्य शक्तिग्रहाप्रयोजकत्वादिति । वाक्यशेषाधीनशक्तिग्रहस्थलमाह—क्वचिदिति । वाक्यशेषादपीति शक्तिग्रह इति पूर्वेणान्वयः । ननु वाक्यशेषस्य शक्तिग्राहकत्वं निर्युक्तिकं तत्रापि प्रत्यक्षत एव शक्तिग्रहसम्भवात्, अप्रत्यक्षस्थले प्रसिद्धार्थपदसान्निध्यादेव शक्तिग्रहः संभवतीति आशंक्य प्रकारान्तरेण शक्तिग्रहासम्भवस्थल एतदुपयोगित्वमभिधित्सुस्तादृशस्थलमाह—यथा यवपदस्येति । कङ्गुर्धान्यविशेषः । म्लेच्छादीनां व्यवहारादिति परेणान्वयः । शिष्टानां म्लेच्छभिन्नानामित्यर्थः । अविगीतवेदार्थानामिति तु नार्थः, म्लेच्छभिन्नानां विगीतवेदार्थानामसंग्रहापत्तेः । न चास्तिकानां व्यवहारस्य वेदार्थसंशयाप्रयोजकत्वेन तदसंग्रहेऽपि न क्षतिरिति वाच्यम् । तद्व्यवहारस्याप्रामाण्यशंकाकलङ्कितत्वेऽपि संशयप्रयोजकत्वाक्षतेः, अन्यथा म्लेच्छव्यवहाराणामपि तादृशत्वेन तथात्वानुपपत्तेः । एकमात्रे—कंगुयवयोरेकमात्रे इत्यर्थः । परिच्छेत्तुं—निश्चेतुम् । ननु यवपदस्य नानार्थत्वाभावनिश्चय एव उभयत्र व्यवहारात् तस्य शक्तिसन्देहः स्यात्, तदसत्त्वे तु नेति "यवमयश्चरुर्भवती"तिश्रुतौ यवपदस्य उभयार्थकत्वेऽपि न क्षतिः, दीर्घशूकस्येव कंग्वादेरपि चरुनिर्वाहकत्वात् इत्यत आह—नानार्थत्वस्येति । नानाशक्तिनिरूपकत्वस्येत्यर्थः । अन्याय्यत्वादिति । एकार्थशक्त्या उपपत्तौ नानार्थे शक्तिकल्प-

रामभद्रीटीका ।

यवपदस्य नानार्थतयाप्युपपत्तिः कंग्वादेरपि चरुनिर्वाहकत्वात्तत्परत्वे क्षत्यभावादत आह—नानार्थत्वेति । अन्याय्यत्वान्न्यायागम्यत्वात्तथाच नानार्थसन्देहे एकस्मिन्नर्थेऽस्य एव वेदस्य प्रामाण्यमिति सिद्धान्तभङ्गः,(१) अत एवाह यवमय इत्यादि । कणिशं-

---

(१) सिद्धान्तभंग इति नास्ति क० पुस्तके, एतत्पाठ तु स्यादिति पूरणीयम् ।

इति विध्यर्थाकाङ्क्षया प्रवर्त्तमानाद्वाक्यशेषाद्दीर्घशूके एव यवपदस्य शक्तिग्रहः। कनिशं-शस्यमञ्जरी। यथा वा "स्वाराज्यकामेऽग्निष्टोमेन यजेते"त्यादिविधिशेषीभूतेभ्यः

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

---

कृष्णकान्तीटीका।

नस्य गौरवेणानुचितत्वादित्यर्थः। केचित्तु अन्याय्यत्वाद् युक्त्यविषयत्वादित्यर्थ इत्याहुः। 'इति' वाक्यशेषान्वितम्। विध्यर्थाकांक्षया—विध्यर्थसन्देहप्रयोज्यया यवपदशक्यः क? इत्याकांक्षया। तृतीयार्थः प्रयोजकत्वं, तच्च प्रयुक्तार्थकप्रवर्त्तमानपदार्थैकदेशे प्रयोगेऽन्वितं, तथा च विध्यर्थसन्देहाधीनाकांक्षाप्रयुक्तप्रयोगाश्रयाद्वाक्यशेषादिति समुदितार्थः। इदञ्च शक्तिग्रहान्वयि। एतेन वाक्यशेषत्वं विधिवाक्योत्थाप्याकांक्षानिवर्त्तकवाक्यत्वमिति च्छलतो व्यञ्जितम्। सुगमत्वात्तद्वाक्यघटकान्यपदार्थमनूद्यैव कनिशपदार्थमाह—कनिशं शस्यमञ्जरीति। एतत्पाठस्तु न सार्वत्रिकः। ननु शिष्टव्यवहारे एव याथार्थ्यग्रहसम्भवाच्छ्रुतिघटकयवपदस्य सन्देह एव नावतरति, प्रत्युत दीर्घशूक एव तन्निश्चयो भवतीति तादृशवाक्यस्य वाक्यशेषत्वमेव नास्ति, प्रागेव तु शक्तिनिश्चायकत्वमित्यतः स्थलान्तरमाह—यथा वेति। केचित्तु-विध्यर्थसन्देहस्थले वाक्यशेषस्य शक्तिग्राहकत्वमुक्त्वा यत्र विध्यर्थसन्देहो नास्ति तत्रापि तस्य तदाह यथा वेति—इति वदन्ति। तन्न, सन्देहं विना वाक्यान्तरप्रयोजकाकांक्षाया एवासम्भवाद्। स्वाराज्येति। स्वः स्वर्गे राजत इति स्वराट् इन्द्रः, तस्य भावः स्वाराज्यमिन्द्रत्वमिति यावत्। विधिशेषीभूतेभ्यः—विधिवाक्योत्थाप्याकांक्षानिवर्त्तकवाक्येभ्यः। अत्रापि श्रुतिघटकस्वरादिपदस्यार्थसन्देहे श्रुतिजन्यविशिष्टबोधानुदयात् अग्निष्टोमादौ प्रवृत्तिर्न स्यादिति तन्निश्चय आवश्यकः, स च स्वरादिशब्दस्य शक्तिनिश्चयं विना न सम्भवतीति वाक्यान्तरस्योपयोगित्वमिति। न चात्र स्वरादिपदस्यार्थसन्देह एव नावतरति नानाविधव्यवहाराभावादिति वाच्यम्। न हि नानाविधव्यवहारस्य संशायकत्वं, परन्त्वेकत्र निश्चयाभावस्य प्रयोजकत्वम्। संशयजनकञ्च क्वचित् साधारणधर्मज्ञानजन्यकोटिद्वयोपस्थितिसहकृतं धर्मिज्ञानं, क्वचिदसाधारणधर्मज्ञानजन्यकोट्युपस्थितिसहकृतं धर्मिज्ञानं, क्वचिद्विप्रतिपत्तिवाक्यजन्यकोट्युपस्थितिसहकृतं तदिति प्राचीनमतम्, यथाकथञ्चित्कोटिद्वयोपस्थितिसहकृतं धर्मिज्ञानं तथेति नव्यानां मतम्, तच्चोक्तस्थलेऽपि संभवतीति। यन्न दुःखेनेति। यद्यपि

रामभद्रीटीका।

सस्यमञ्जरी। यथावेति। स्वाराज्यकाम इति। स्वराट् इन्द्रस्तस्य भावः स्वाराज्यं तत्काम इत्यर्थः। यन्न दुःखेनेति। यद्यपि दुःखासम्भिन्नसुखत्वं न दुःखासमाना

कृष्णकान्तीटीका ।

दुःखासम्भिन्नत्वं न दुःखासमानाधिकरणत्वमसम्भवात्, जन्यसुखमात्रस्य सुखमात्रस्य वाऽतथात्वात् । नाप्यवच्छेदकतासम्बन्धेन दुःखानधिकरणशरीरवृत्तित्वं, दुःखानवच्छेदकीभूतखण्डशरीरविशेषवृत्त्यैहिकसुखेऽतिव्याप्तेः । नापि दुःखप्रागभावासमानकालीनत्वम्, असम्भवात्, स्वाधिकरणकालेऽवश्यं कस्यचित् दुःखप्रागभावस्य सत्त्वात्, नच समानकालीनत्वमेकदेशावच्छिन्नैककालवृत्तित्वरूपं वाच्यमिति वाच्यम्, स्वर्गाधिकरणात्मनि तत्कालावच्छेदेनान्ततः पातभयजन्यदुःखप्रागभावस्य सत्त्वेनाव्याप्त्यापत्तेः । अत एव स्वावच्छेदकशरीरावच्छिन्नस्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वं दुःखासम्भिन्नत्वमित्युक्तावपि न निस्तारः, पातभयजन्यदुःखस्य तच्छरीरावच्छिन्नत्वेन तस्यैव तत्प्रागभावस्यापि स्वर्गदशायां सत्त्वादव्याप्त्यापत्तेः, प्रागभावनिवेशस्य निष्प्रयोजनकत्वाच्च, न च यत्सुखकाले किञ्चिदपि दुःखं नास्ति तत्सुखातिव्याप्तिवारणाय तन्निवेश इति वाच्यम्, तादृशसुखे मानाभावात् । नाप्यवच्छिन्नप्रवाहदुःखासमानकालीनत्वं तत्, तच्चैकदेशावच्छिन्नं ग्राह्यमतो न पुरुषान्तरीयतादृशदुःखकालीनत्वमादायासम्भव इत्यव्याप्तिर्वा, कदाचिदस्मदादिसुखस्यापि तथात्वसम्भवात् । अत एव न धारावाहिकत्वम् । नापि स्वसमानाधिकरणदुःखासमानकालीनत्वे सति स्वसमानाधिकरणेच्छाजन्यत्वम्, चक्रवर्त्तिसुखे तस्यापि सम्भवात् । तथापि यत् सुखं न दुःखेन सम्भिन्नं, न च दुःखेन ग्रस्तं, न च दुःखेनानन्तरं, एवमभिलाषोपनीतं, तत्सुखं स्वःपदप्रतिपाद्यमिति योजना । तत्र दुःखसम्भिन्नत्वं दुःखकालीनत्वं, दुःखग्रस्तत्वं दुःखावच्छेदकीभूतशरीरावच्छिन्नत्वं, दुःखानन्तरत्वं दुःखेनाव्यवहितत्वं दुःखप्रागभावासमानकालीनत्वमिति यावत्, अभिलाषोपनीतत्वं स्वेच्छामात्राधीनभोगविषयत्वम्, अन्येच्छानधीनभोगविषयत्वमिति यावत् । तथा च दुःखासमानकालीनत्वे सति दुःखप्रागभावासमानकालीनत्वे सति अन्येच्छानधीनभोगविषयसुखत्वं स्वःपदप्रतिपाद्यतावच्छेदकमित्यर्थः । तत्र यादृशखण्डशरीरोत्पत्तिद्वितीयक्षणे सुखमुत्पन्नं तदनन्तरं तत् शरीरं नष्टं तादृशसुखातिव्याप्तिवारणाय प्रथमसत्यन्तम् । न च तस्य तृतीयसत्यन्तविशेषणेन व्युदास इति वाच्यम् । असम्भववारणाय स्वावच्छेदकशरीरावच्छिन्नत्वे

रामभद्रीटीका ।

धिकरणसुखत्वम्, स्वर्गसुखस्यापि दुःखसमानाधिकरणत्वात्, नाप्यवच्छेदकतासम्बन्धेन यत् दुःखाधिकरणं तद्वृत्तिभिन्नसुखत्वं स्वर्गत्वम्, दुःखानवच्छेदकखण्डशरीरवत्यैहिकसुखातिव्याप्तेः, नापि दुःखप्रागभावासमानकालीनसुखत्वं तत्, ऐहिकान्तिमसुखस्यापि तथात्वात्, न च 'न च ग्रस्तमनन्तरमि'त्यनेनाविरलप्रवाहतादृशसुखत्वं तदिति नैष दोष इति वाच्यम्, कतिपयकालावच्छेदेनास्मदादेस्तथा सम्भवात्, न चाभिलाषोपनीतमित्यनेन इच्छाकारणकत्वविवक्षणान्नैष दोषः, चक्रवर्तिसुखे तस्यापि सम्भवात्, अन्यथा तत एवातिप्रसङ्गनिरासे विशेषणान्त-

कृष्णकान्तीटीका।

सति दुःखप्रागभावासमानकालीनं यद्यत्तदन्यत्वस्यैव तादृशविशेषणे विवक्षितत्वात्, अन्यथा स्वर्गिणोऽपि शरीरान्तरावच्छिन्नभाविदुःखसत्त्वेनासम्भवापत्तेः। दुःखावच्छेदकखण्डशरीरविशेषावच्छिन्नचरमसुखेऽतिव्याप्तिवारणाय द्वितीयसत्यन्तम्। तत्राप्यभिलाषोपनीतत्वाभावात् नातिव्याप्तिरिति तु नाशङ्कनीयम्, चक्रवर्त्तिनस्तथाविधसुखस्य तथात्वसम्भवात्। तदर्थञ्च स्वसमानकालीनध्वंसप्रतियोगिदुःखावच्छेदकशरीरावच्छिन्नं यद्यत्तदन्यत्वम्, अतो न तृतीयसत्यन्तवैयर्थ्यम् दुःखावच्छेदकशरीरावच्छिन्नाद्यसुखस्यातथात्वात्। न च प्रतियोग्यन्तं निवेश्य तृतीयसत्यन्तस्य सार्थक्यसमर्थने "प्रक्षालनाद्धी"त्यादिना पर्यनुयोगः। स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वात्, यथासन्निवेशे वैयर्थ्याभावात्, सत्यन्तद्वयस्यैव तादृशार्थे तात्पर्यकल्पनासम्भवाच्च। वस्तुतस्तु दुःखग्रस्तत्वं स्वावच्छेदकशरीरावच्छिन्नदुःखध्वंसकालीनत्वम्। तादृशदुःखध्वंसाकालीनत्वतादृशदुःखप्रागभावाकालीनत्वयोर्व्यावृत्तिश्च खण्डशरीरविशेषीयाद्यसुखचरमसुखयोर्बोध्या। यादृशखण्डशरीरे सुखमेव जायते, अतीतं वर्त्तमानं भावि च दुःखं न सम्भवति तादृशसुखेऽतिव्याप्तिवारणाय चरमदलम्। कदाचिच्चक्रवर्त्तिसुखस्य तथात्वसम्भवाद्विशेष्यदलम्, तच्च सुखवृत्तिवैजात्यम्, तस्य च चक्रवर्त्तिसुखेऽनङ्गीकारात् नातिव्याप्तिः। वस्तुतस्तत्स्वःपदमित्येका योजना, सुखं स्वःपदार्थमित्यपरा योजना, तथा चोक्तातिव्याप्तिभयेन पूर्वकल्पं परित्यज्य परकल्पं आह। तादृशवैजात्यञ्च अधर्माजन्यशरीरजन्यतावच्छेदकतया सिद्धम्। न च स्वर्गिणः शरीरे धर्मजन्यत्वे मानाभावः। दुःखस्याधर्मजन्यशरीरत्वव्यापकतया दुःखाभावस्यैव तन्मानत्वात्। न च स्वर्गिशरीरे पातभयजन्यदुःखसत्त्वात् तेन हेतुना तत्राधर्मजन्यत्वमपि सेत्स्यतीति वाच्यम्। दुःखविशेषस्यैवाधर्मजन्यत्वव्याप्यत्वात्, 'स्वर्गेऽपि पातभीतस्ये'त्यादेः शरीरनिन्दामात्रपरत्वाच्च। न च शुकादेस्तादृशं शरीरम्, तत्र दुःखोत्पत्तेरावश्यकतयाऽधर्मजन्यत्वात्। एतेन मरणजन्यत्वस्य दुःखव्याप्यतया स्वर्गिशरीरेऽपि मरणजन्यत्वेन दुःखसम्भवादधर्मजन्यत्वसत्त्वेनासम्भवः, "ते नराः सुखमृत्यव" इत्यादिवचनस्य दुःखाल्पत्वज्ञापकत्वादित्यपि प्रत्युक्तम्। तादृशव्याप्तेरप्रयोज-

रामभद्रीटीका।

स्वैयर्थ्यात्। तथापि अधर्माजन्यशरीरजन्यसुखत्वोपलक्षकमिदम्। न च योगिनस्तादृशं शरीरम्, तत्र दुःखोत्पत्तेरधर्मजन्यत्वात् सुखमात्रावच्छेदके तच्छरीरे मानाभावात्। न च मरणस्य दुःखव्याप्यतया स्वर्गशरीरे मरणजदुःखसम्भवात् अधर्मजन्यत्वमित्यसम्भवः, 'ते नराः सुखमृत्यव' इत्यादिवचनं च दुःखाल्पत्वपरमिति वाच्यम्। विपक्षबाधकतर्काभावेन तादृशव्याप्तेरसिद्धेः, सिद्धौ वा मरणदुःखजनकाधर्मान्यत्वमधर्मे विशेषणीयं, नान्यथा। न च स्वर्गहेतुपुण्यक्षयशंकया स्वर्गेऽपि दुःखोत्पतेरावश्यकत्वात् तद्दोषतादवस्थ्यं, तदुक्तं 'स्वर्गेऽपि पातभीतस्य' इत्यादीति वाच्यम्। तस्य शरीरमात्रनिन्दापरत्वात्।

इत्यादिवाक्येभ्यः स्वरादिपदस्य ॥ २० ॥

कृष्णकान्तीटीका।

कत्वात्, प्रयोजकत्वे वा मरणाधीनदुःखाजनकाधर्माजन्यशरीरजन्यत्वव्याप्यस्यैव वैजात्यस्य स्वःप्रतिपाद्यतावच्छेदकत्वात् । केचित्तु 'यन्न दुःखेने'त्यादिकमधर्माजन्यशरीरजन्यसुखत्वोपलक्ष- मित्याहुः । तेषां वैदग्ध्यविवेचनमभियुक्तैरेव कार्यम् । अन्ये तु दुःखावच्छेदकशरीरावृत्तिजातिमच्छरीरावच्छिन्नसुखत्वोपलक्षकमेतदित्याहुः । अन्ये तु धर्मजन्यतावच्छेदकवैजात्यवच्छरीरावच्छिन्नसुखत्वोपलक्षकमेतदित्याहुः । अपरे तु यागादिक्रियाजन्यतावच्छेदकतया सुखनिष्ठवैजात्यावच्छिन्नमेव स्वःपदप्रतिपाद्यतावच्छेदकम्, 'यन्न दुखेने'त्यादिकन्तु तदुपलक्षकमित्याहुः । तन्न, यागगङ्गास्नादीनामनुगतधर्माभावेन प्रत्येकरूपेण वैजात्यावच्छिन्नं प्रति व्यभिचारेण हेतुत्वासम्भवात्, पुण्यतमत्वस्य चान्यथासिद्धिनियतत्वात्, प्रत्येकजन्यतावच्छेदकनानाजातिस्वीकारे च तद्वृत्त्यनुगतधर्माभावेन विनिगमनाविरहेण सर्वेष्वेव वैजात्येषु स्वःप्रतिपाद्यतावच्छेदकत्वकल्पनागौरवाच्च । नव्यास्तु दुःखासम्भिन्नत्वादिविशेषणचतुष्टयभेदेन कल्पचतुष्टयम् । पूर्वपूर्वकल्पास्वरसेनोक्ता'भिलाषोपनीतमि'तिकल्पे चक्रवर्त्तिसुखेऽतिव्याप्तिमाशंक्य तत्सुखमित्यनेन चरमकल्पः कृतः, विशेषणबोधकशब्दानामर्थस्तु पूर्वोक्त एवेति प्रलपन्ति । यत्तु 'अभिलाषोपनीतमि'त्येव चरमकल्पः, तदर्थस्तु इच्छामात्रकारणकत्वम्, चक्रवर्त्तिसुखे इच्छामात्रकारणकत्वाभावात् नातिव्याप्तिरिति । तच्तुच्छम्, इच्छामात्रकारणकत्वस्यासम्भवसम्पादकत्वात् कस्यापि सुखस्येच्छामात्रकारणकत्वाभावात । स्वरादिपदस्येति । शक्तिग्रह इति पूर्वेणान्वयः ॥ २० ॥

रामभद्रीटीका।

अतथात्वे तदन्यत्वेनाप्यधर्मविशेषणात् इति केचित् । अपरे तु तत्दुःखावच्छेदकावृत्तिजातिमन्निष्ठसुखत्वे उक्तकारिकायास्तात्पर्यमिति । न च स्वर्गादिशरीरेऽपि पातभयजन्यदुःखश्रवणात् असम्भव इति वाच्यम् । तस्य संसारिनिन्दापरत्वात् । तत्दुःखातिरिक्तत्वस्य वा दुःखे विशेषणीयत्वात्, अत एव धर्मजन्यमात्रवृत्तिजातिमत्तच्छरीरावच्छिन्नसुखत्वमित्यपि वदन्ति । केचित्तु विहितक्रियाविशेषजन्यतावच्छेदकजातिविशेषोपलक्षकमिदमित्याहुः । तच्चिन्त्यम्, विहितत्वस्यैकस्याभावेन तज्जन्यतावच्छेदकजातेः कल्पयितुमशक्यत्वादिति । वस्तुतो धारावाहिकचिरस्थायीच्छामात्रकारणकदुःखासम्भिन्नसुखत्वमेव स्वःपदार्थश्चक्रवर्तिसुखे इच्छामात्रकारणकत्वाभावात्, अस्मदादिसुखे च धारावाहिकत्वाभावात् पातभयाद्यजन्यदुःखासमानाधिकरणत्वाभावाच्च नातिप्रसङ्गः । वृत्तिश्च कालिकी सामानाधिकरण्यघटिका । अग्रस्तत्वं–चिरस्थायित्वं, धारावाहिकत्वमिति यावत् । इत्थं चान्यतमविशेषणस्य नासार्थकतेति(१) तु नव्याः ॥ २० ॥

(१) सार्थकेति क० पु० पाठः।

ननु व्यवहारादनुमिते गवाद्यानयनधर्मिककार्य्यत्वस्यान्वयज्ञाने पदानां प्रथमतः कारणत्वं साकाङ्क्षपदत्वावच्छेदेन गृहीतमुपस्थितत्वादतस्तदुपपत्तये शाब्दसामान्यं प्रत्यवश्यं(१) कार्य्यतावाचिपदस्य तत्साकाङ्क्षपदस्य वा हेतुत्वमुपेतव्यम् , तथा च कथं केवलकोषादितः शक्तिग्रह-

कृष्णकान्तीटीका ।

कारिकान्तरमवतारयति । नन्वित्यादिना । व्यवहारादिति । व्यवहारं प्रतीत्यर्थः । तथाच "ल्यब्लोपे पञ्चमीति" भावः । कार्यत्वस्य—कृतिसाध्यत्वस्य, अन्वयज्ञाने—शाब्दबोधे । पदानामिति । ज्ञायमानेत्यादिः, नातः पदानां स्वरूपसद्धेतुत्वेऽपि क्षतिः । एवमुत्तरत्रापि । प्रथमतः—शक्तिग्रहात् पूर्वमित्यर्थः । साकाङ्क्षेति । कार्यतेत्यादिः । पदत्वावच्छेदेनेति सावधारणनिर्देशः, साकाङ्क्षपदत्वावच्छेदेनैवेत्यर्थः । तेनार्थवादव्यवच्छेदः, तेन विध्यनाकाङ्क्षत्वेनार्थवादतया शाब्दबोधाजनकत्वादित्यग्रिमग्रन्थोऽपि सङ्गच्छते । क्वचिदेवकारसम्वलितपाठ एवास्ति । उपस्थितत्वात्—प्रथमोपस्थितत्वादित्यर्थः । अतो विध्यनाकाङ्क्षपदस्याप्युपस्थितिसम्भवेऽपि न क्षतिः । तदुपपत्तये—कार्यतासाकाङ्क्षपदत्वावच्छिन्नकारणत्वोपपत्तये इत्यर्थः । केचित्तु—तदुपपत्तये प्रथमोपस्थितत्वोपपत्तये इत्यर्थ—इत्याहुः । तदसत् , कार्यकारणभावस्वीकारस्य तदुपस्थापकत्वासम्भवेनोपष्टम्भासङ्गतेः । शाब्दसामान्यं प्रत्येव—शाब्दत्वावच्छिन्नं प्रत्येवेत्यर्थः । एवकारेण कार्यताविषयकत्वस्य कार्यतावच्छेदकत्वस्य व्यवच्छेदः। कार्यतावाचिपदस्येति । हेतुत्वमित्यग्रिमेणान्वयः । कार्यतावाचिपदघटितवाक्यघटकपदान्तरस्य शाब्दबोधजनकत्वोपपत्तये कल्पान्तरमाह—तत्साकाङ्क्षपदस्य वेति । कार्यतावाचिपदसाकाङ्क्षपदस्य वेत्यर्थः । तत्साकाङ्क्षत्वञ्च तज्जन्यविशिष्टैकार्थप्रतिपादकत्वम् । उपसंहरति—तथा चेति । कोषादीत्यादिना वि-

रामभद्रीटीका ।

कार्यत्वस्यान्वयज्ञान इति। कार्यत्वस्य कृतिसाध्यत्वस्यान्वयज्ञानेऽन्वयात्मकज्ञाने। पदानामिति । ज्ञायमानेत्यादिः । नातः पदानां स्वरूपसद्धेतुत्वेपि क्षतिः । एवमुत्तरत्र। साकाङ्क्षेति । कार्यतेत्यादिः । एवकारेणार्थवादस्य शाब्दहेतुत्वाक्षेपः, नातो विध्यनाकाङ्क्षतया(२)ग्रिमग्रन्थासङ्गतिः । उपस्थितत्वात्—प्रथमोपस्थितत्वात् । प्रागुक्तक्रमेण प्रवृत्तेः कार्यताज्ञानजन्यत्वमनुमायैव शक्तिग्रहादिति भावः । तदुपपत्तये—प्रथमोपस्थितत्वोपपत्तये । ननु 'स्वर्गकामो यजेते'त्यादौ स्वर्गकामपदादन्वयबोधो न स्यात्तस्य कार्यतावाचित्वाभावात् अत आह—तत्साकाङ्क्षेति । कार्यतासाकाङ्क्षेत्यर्थः । कोशादीत्यादिना विवरणादिपरिग्रहः । तस्य—कोषादेः ।

(१) प्रत्येवावश्यमिति कृष्णकान्त संमतोऽत्र पाठो बोध्यः ।
(२) नापेक्षेत्यादीति क० पु० पाठः ।

स्तस्य विध्यनाकाङ्क्षत्वेनार्थवादतया शाब्दबोधानर्जकत्वादिति प्राभाकराशङ्कां निरस्यति—

(१)कार्यत्वस्यान्वयज्ञाने प्राग्गृहीतापि हेतुता ।
पदानामर्थवादेभ्यः पश्चाद्बोधादुपेक्ष्यते ॥ २१ ॥

साकाङ्क्षपदत्वावच्छेदेन कार्यताधीजनकत्वं पूर्वगृहीतमप्युत्तरकालमर्थवादेभ्यः शाब्दबोधानुरोधादुपेक्ष्यते, पूर्वगृहीतस्यापरिहार्यत्वानियमात् प्रतिबिम्बिते वस्तुनि व्यभिचारात् । न वोपस्थितधर्मावच्छेदेनैव जनकत्वस्य ग्रहनियमः, पटजनकं देयद्रव्यमित्यादौ तत्सामानाधिकरण्येना-

कृष्णकान्तटीका ।

वधारणादिपरिग्रहः । तस्य—कोषादेः, विध्यनाकाङ्क्षत्वेन—कार्यतावाचिपदसाकाङ्क्षत्वाभावेनेत्यर्थः ।

कारिकार्थमाह—साकाङ्क्षपदत्वावच्छेदेनेति । कार्यतेत्यादिः । कार्यताधीति प्रकृताभिप्रायेण, अन्यथा कार्यताविषयकत्वस्य कार्यतानवच्छेदकतया कार्यतापर्यन्तलिखनासङ्गतेः। शाब्दबोधानुरोधादिति । अन्यथा "सन्ध्यामुपासते ये च" इत्यादेरर्थवादतया सन्ध्यावन्दनादेर्ब्रह्मलोकप्राप्तिफलकत्वं न स्यादिति भावः । उपेक्ष्यते—अप्रामाण्यज्ञानास्कन्दितज्ञानविषयतया कल्प्यत इत्यर्थः । ननु यत्पूर्वं गृहीतं भवति तदपरिहार्यं भवतीति नियमात तदुपेक्षा न सम्भवति, अपरिहार्यत्वञ्च अप्रामाण्यग्रहानास्कन्दितग्रहविषयत्वं, न त्वप्रामाण्यग्रहास्कन्दितग्रहाविषयत्वं, तथा सति प्रतिबिम्बिते वस्तुनि साध्यसत्त्वेन व्यभिचारोद्भावनासङ्गतेरित्यत आह—पूर्वगृहीतस्येति । अनियमादिति । नियमाभावे हेतुमाह—प्रतिबिम्बित इति । नैर्मल्यादिरूपदोषजन्यदर्पणादिधर्मिकाऽऽरोपविषयस्य मुखस्य दर्पणासन्निधानेऽपरिहार्यत्वादिति भावः । ननूक्तसाध्यस्य व्याप्यवृत्तितया व्यभिचारस्य च प्रतियोगिवैयधिकरण्यघटिततया नोक्तस्थले व्यभिचारसम्भवः, अन्यथा कपिसंयोगी एतत्वादित्यादावपि व्यभिचारप्रसङ्गादित्यत उद्देश्यतासिद्धिमाह न वेति । ग्रहनियम इति ।

रामभद्रटीका ।

अनियमादिति । नियमाभावे हेतुमाह—प्रतिबिम्बितेति । साकाङ्क्षपदत्वावच्छेदेनैवेत्येवकारान्तर्भावेणापि नियममाक्षिपति—न वेत्यादिना । पटजनकं द्रव्यम् इत्यत्र तन्मते शब्दानङ्गीकारादर्थवादतोऽसंसर्गग्रहस्योपेयत्वात् , अतः कार्यतावाचित्वसम्पत्तये देयेत्युक्तम् । तत्सामानाधिकरण्येन—देयद्रव्यत्वसामानाधिकरण्येन, अन्यथा—देय-

( १ ) गवाद्यानयनधर्मिककार्यत्वस्यान्वयबोधे पूर्वं वृद्धव्यवहारकाले गृहीतापि पदानां कारणताऽनन्तरमर्थवादवाक्येभ्यः शाब्दबोधदर्शनात्त्यज्यत इति कारिकार्थः ।

पि ग्रहात्(१), अन्यथाऽन्यथाख्यात्यापत्तेस्तत्रैव दुर्वारतापत्तेः । न च कार्य्यतासाकाङ्क्षपदान्तर्भावेणैव शब्दानामन्वयानुभवहेतुत्वस्य क्लृप्तत्वादर्थवादस्थले न शाब्दधीः, परन्त्वसंसर्गाग्रहमात्रमाकाङ्क्षान्तरकल्पने गौरवा-

कृष्णकान्तीटीका ।

तथा च कार्यतासाकाङ्क्षपदे पदत्वावच्छेदेन हेतुताग्रहेऽपि उक्तनियमसम्भवात् अर्थवादस्य शाब्दबोधजनकत्वम् दुर्वारमिति भावः । अनियमे हेतुमाह पटजनकमिति । द्रव्येतिद्रव्यत्वसामानाधिकरण्यसूचकम् । केचित्तु कार्यतावाचकपदासमभिव्याहारस्थले तैः शाब्दानङ्गीकाराद्द्रव्येतीत्याहुः । तत्सामानाधिकरण्येन—द्रव्यत्वसामानाधिकरण्येनेत्यर्थः । अन्ये तु—'अनियमादिति नियमाभावे हेतुमाह—प्रतिबिम्बित इति । नन्वुक्तनियमस्य व्यभिचारिसाधारणत्वेऽपि यज्जनकत्वप्रकारकशाब्दधीविशेष्यतावच्छेदकं तदवश्यं प्रागुपस्थितिविषयतावच्छेदकम् यन्नैवम् तन्नैवम्, इति नियमात् विध्यनाकाङ्क्षपदत्वावच्छिन्ने शाब्दधीजनकत्वग्रहविषयत्वाभावः सेत्स्यतीत्यत आह न वेति । (अन्यत्पूर्ववदित्यपि) । उपस्थितधर्मावच्छेदेनेति । तथा च उपस्थितिविषयतावच्छेदकव्यापकं यज्जनकत्वग्रहविशेष्यत्वम्, तद्घटितनियम इत्यर्थः । नियमाभावे हेतुमाह पटजनकमिति । ग्रहादिति । तथाच तन्तुत्वादेः प्रागुपस्थितिविषयतानवच्छेदकत्वेऽपि पटजनकत्वग्रहविशेष्यतावच्छेदकत्वाद्व्यभिचार इति भाव- इति प्रलपन्ति । अन्यथा—द्रव्यत्वावच्छेदेन पटजनकत्वग्रहे । तत्रैव—तादृशस्थल एव । दुर्वारतापत्तेरिति । तथा चान्यथाख्यातिस्वीकारभयेनोक्तस्थले सामानाधिकरण्येनैव जनकत्वधीरवश्यमुपेयेत्युक्तनियमासम्भवादर्थवादोऽपि शाब्दजनक इति भावः । शङ्कते न चेति । क्लृप्तत्वादिति । विधिवाक्यस्थल इत्यादिः । नन्वर्थवादस्थले शाब्दबोधानभ्युपगमे कथमाकाङ्क्षानिवृत्तिरित्यत आह परन्त्विति । असंसर्गाग्रहमात्रमिति । बाधनिश्चयाभावसहितं धर्मधर्मिणोरुपस्थितिमात्रमित्यर्थः । अगत्या तादृशबोधस्यापि आकाङ्क्षानिवर्त्तकत्वाभ्युपगमात्, मीमांसकमते भ्रमस्थलीयबोधवत् । आकाङ्क्षान्तरेति । कार्यतानिराकाङ्क्षपदान्तर्भावेण कारणत्वान्त-

रामभद्रीटीका ।

द्रव्यत्वावच्छेदेन पटजनकत्वग्रहे, अन्यथाख्यातेर्भ्रमत्वस्य, तथा चोपस्थिततादृशपदत्वावच्छेदेन यत्किञ्चित्क्रियाधर्मिककार्यताज्ञानजनकत्वभङ्गः प्रकृते तादृशदाने कार्यत्वस्याभानादिति भावः । यद्यर्थवादतः शाब्दबोधो जायते तदैव तत्परित्यागो युक्तः, नचैवं गौरवं, शाब्दसामान्यं प्रति पदज्ञानत्वेनैव हेतुत्वे लाघवादिति वाच्यम्, प्रामाणिकत्वादित्याशयेनाशङ्कते नचेति । आकाङ्क्षान्तरं—कार्यतानिराकाङ्क्षपदान्तर्भावेण

(१) द्रव्यादौ पटजनकत्वस्य बाधिततया तन्त्वादिरूपद्रव्यत्वसामानाधिकरण्येन पटजनकत्वस्य ग्रह इति भावः ।

दिति वाच्यम्। कार्यतानिराकाङ्क्षपदान्तर्भावेणैव शाब्दधीहेतुत्वस्य कल्पनया विधिस्थले न शाब्दधीरित्यस्यापि सुवचत्वात्, उभयत्राप्यन्वयमतेरानुभविकत्वेनैकशेषस्य दुष्करत्वादिति(१) दिक्॥ २१॥

पारिभाषिकीमौपाधिकीञ्च संज्ञां क्रमेण लक्षयति—

**(२)उभयावृत्तिधर्मेण(३) संज्ञा स्यात् पारिभाषिकी।**
**औपाधिकी त्वनुगतोपाधिना या प्रवर्त्तते॥ २२॥**

---

कृष्णकान्तीटीका।

रेत्यर्थः। प्रतिबन्धिमुखेन दूषयति कार्यतानिराकाङ्क्षेति। सुवचत्वादिति। विनिगमनाविरहादिति भावः। न च शाब्दयामीत्यनुव्यवसाय एव तत्र शाब्दत्वकल्पक इति वाच्यम्। तस्यैव सन्दिग्धत्वादित्याह उभयत्रेति। विध्यर्थवादोभयत्रेत्यर्थः। अन्वयमतेः–शाब्दबोधस्य, आनुभविकत्वेन–शाब्दयामीत्यनुव्यवसायेनेत्यर्थः। एकशेषस्य–एकत्र शाब्दबोधोऽन्यत्र नेति विशेषस्य। कर्त्तुमशक्यत्वादिति–उभयवादिसिद्धानुव्यवसायवैलक्षण्याभावादिति भावः॥ २१॥

ग्रन्थगौरवभियैकयैव कारिकया संज्ञाद्वयमाह पारिभाषिकीमौपाधिकञ्चेति। क्रमप्राप्तामिति शेषः। तृतीयार्थानवच्छेदकत्वस्य सङ्केतार्थकप्रवृत्तावन्वयः। एवमग्रेऽपि।

कारिकापूर्वार्द्धं व्याचक्षाणो लक्ष्ये लक्षणं योजयति उभयावृत्तिधर्मावच्छिन्नेति। उभयावृत्तित्वं नोभयवृत्तिभिन्नत्वमसम्भवात्, द्वित्वरूपस्य एकविशिष्टापरत्वरूपस्य वा उभयत्वस्य सर्वत्र सम्भवात्, नाप्येकमात्रवृत्तित्वम्, मात्रार्थाप्रसिद्धेः, संख्यारूपस्य बुद्धिविषयत्वरूपस्य वा एकत्वस्य सर्वत्र सत्त्वात्, न च स्वाभाववद्वृत्तित्व–स्वसामानाधिकरण्योभयसम्बन्धेन द्वित्वविशिष्टत्वम्, द्वित्वादीनामपि तथात्वापत्तेः, एकमात्रवृत्तिधर्मस्य पर्याप्तौ मानाभावात् तेन सम्बन्धेन वृत्तित्व-

रामभद्रीटीका।

कारणान्तरम्। प्रतिबन्दिमुखेन दूषयति––कार्यतेत्यादिना। न शाब्दधीः किन्त्वसंसर्गाग्रह इति शेषः। सुवचत्वादिति। विनिगमकाभावादिति शेषः। उभयत्र–कार्यतासाकाङ्क्षपदे तद्भिन्नपदे च। दिगिति। तदर्थस्तु लाघवात् शाब्दसामान्यं प्रति पदज्ञानत्वेनैव हेतुत्वं न तु कार्यतावाचिपदज्ञानत्वेनैव गौरवादिति॥ २१॥

ग्रन्थलाघवार्थमेकयैव कारिकाया संज्ञाद्वयमाह––पारिभाषिकीमौपाधिकीं चेति। क्रमप्राप्तामिति शेषः। नातोऽर्थान्तरादिदोषः। उपाधिना–सखण्डेन।

---

(१) कर्तुमशक्यत्वादिति कृष्णकान्तसंमतः पाठः।

(२) द्वितयावृत्तिधर्मविशिष्टा संज्ञा पारिभाषिकी, अनुगतोपाधिविशिष्टा च संज्ञौपाधिकीति कारिकार्थः।

(३) स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वैतदुभयसम्बन्धेन भेदविशिष्टान्यत्वमुभयावृत्तित्वम्।

उभयावृत्तिधर्मावच्छिन्नसङ्केतवती संज्ञा पारिभाषिकी, यथाऽऽकाश

कृष्णकान्तोटीका।

निवेशासम्भवात्, निवेशेऽपि द्वित्वादिवारणासम्भवात्, द्वित्वाभाववति पर्याप्तिसम्बन्धेन द्वित्वस्य वृत्तेः। किन्तु स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वम्। द्वित्वादेस्तु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदविशिष्टत्वान्न संग्रहः। तद्व्यक्तित्वादेरपि स्वाश्रयभिन्नभेदसामानाधिकरण्यात् स्वाश्रयभेदप्रतियोगित्वाद्यसम्भववारणाय सम्बन्धघटकदलद्वयोपादानम्। न च तद्व्यक्तित्वस्यापि निरुक्तोभयसम्बन्धेन तद्व्यक्तिघटोभयादिभेदविशिष्टत्वादसम्भव इति वाच्यम्। व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदविशिष्टान्यत्वस्य विवक्षितत्वात्। न च व्यासज्यवृत्तित्वस्याननुगमादननुगमतादवस्थ्यम्, स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टधर्मानवच्छेद्यत्वस्य विवक्षणादननुगमव्युदासात्।

अथ वा उक्तदोषवारणाय स्वप्रतियोगिवृत्तित्वस्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वमेव तत्। द्वित्वाद्यवच्छिन्नभेदवारणाय सम्बन्धघटकप्रतियोगितायां भेदविशिष्टान्यत्वं निवेशनीयम्। वैशिष्ट्यञ्च स्वाश्रयपर्याप्त्यवच्छेदकताकत्वसम्बन्धेन। स्वाश्रयत्वञ्च स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वस्वसामानाधिकरण्योभयसम्बन्धेन, तथा च द्वित्वाद्यवच्छिन्नप्रतियोगिताया अतथात्वान्नोक्तदोषः।

केचित्तु स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्य-प्रतियोगितानवच्छेदकत्वैतत्त्रितयसम्बन्धेन भेदविशिष्टान्यत्वं तत्। तथा च तद्व्यक्तित्वस्य नोक्तत्रितयसम्बन्धेन तद्व्यक्तिघटोभयादिभेदविशिष्टत्वं द्वित्वस्येव स्वस्यापि तादृशभेदप्रतियोगितानवच्छेदकत्वेन तदभावासत्त्वात्, केवलद्वित्वावच्छिन्नप्रतियोगिताया अलीकत्वात्। न च स्वप्रतियोगितानवच्छेदकत्वरूपसम्बन्धे स्वपदार्थस्यानिविष्टतया तादृशसम्बन्धाप्रसिद्धिः, प्रसिद्धत्वेऽपि अनेकवृत्तिलघुधर्मसात्रेऽतिव्याप्तिः, स्वपदार्थस्य निविष्टत्वे भेदत्वावच्छिन्नस्य सम्बन्धत्वासम्भव इति वाच्यम्। स्वप्रतियोगितानवच्छेदकत्वेत्यनेन प्रतियोगितावच्छेदकत्वसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकभेदत्वस्य विवक्षितत्वादित्याहुः। तन्मन्दम्। द्वित्वावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वेन निरुक्तत्रितयसंसर्गेण तादृशभेदविशिष्टत्वस्याप्यसम्भवात्। न च स्वप्रतियोगितानवच्छेदकत्वेत्यनेन स्वप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वस्य विवक्षणान्नैष दोष इति वाच्यम्। तथा सत्यसम्भवापत्तेः, तद्व्यक्तित्वस्यापि निरुक्तत्रितयसंसर्गेण द्वित्वावच्छिन्नभेदविशिष्टत्वादित्यलमधिकेन।

यथेति। नित्यसङ्केतस्थलमुक्त्वाऽनित्यसङ्केतस्थलमाह—डित्थेति। दारु-

रामभद्रीटोका।

संज्ञा—शक्तिः। सा हि—आकाशादिसंज्ञा हि। तादृश्यशक्त्यापत्तेरिति। नि

डित्थादि, सा हि द्वित्वयावृत्तिधर्मेणैव शब्दादिना रूपेण तदाश्रयमभिधत्ते । न चाकाशादिपदस्य गगनादौ निरवच्छिन्नैव शक्तिः, पटादिपदस्यापि पटादौ तादृशशक्त्यापत्तेः । पटे शक्तमपि पटपदं न पटत्वावच्छिन्नशक्तिमदित्यादिग्रहोत्तरं ततः पटत्वविशिष्टस्याननुभवादवश्यं तच्छक्तिरवच्छिन्नेति चेत् । शब्दवति शक्तमप्याकाशपदं न शब्दवत्त्वावच्छिन्नशक्तिमदित्येवं ग्रहदशायामाकाशादिपदान्न शब्दवत्त्वेन गगनस्य प्रतीतिरतस्तस्यापि शब्दवत्त्वावच्छिन्नैव तत्र शक्तिरिति विभाव्यताम् । एतेन—पटत्वाद्युपलक्षिते धर्मिण्येव शक्तिग्रहस्य ताद्रूप्येण पटाद्यनुभवं प्रति हेतुत्वान्माऽस्तु पटादिपदस्यापि पटत्वाद्यवच्छिन्ने शक्तिः, परन्तु पटत्वाद्यु-

---

कृष्णकान्तीटीका ।

मयहस्तिनिष्ठतद्व्यक्तित्वावच्छिन्ने आधुनिकसङ्केतवती डित्थेति संज्ञा । आदिना तादृशसंज्ञान्तरपरिग्रहः । सा हि—आकाशडित्थादिसंज्ञा हीत्यर्थः । शब्दादीत्यादिना दारुमयहस्तिनिष्ठतद्व्यक्तित्वपरिग्रहः । तदाश्रयं—तस्य शब्दस्य तद्व्यक्तित्वस्याश्रयमधिकरणम् अभिधत्ते वक्तीत्यर्थः । चैत्रत्वजातेरनेकावृत्तित्वात् तदाश्रये नैमित्तिकपदे नातिव्याप्तिरिति भावः । शङ्कते न चेति । निरवच्छिन्नैव शक्तिरिति । तथा चोक्तलक्षणस्य तत्राव्याप्तिरिति भावः । प्रतिबन्धिमुखेन शङ्कां निरस्यति पटादिपदस्यापीति । तादृशेति । निरवच्छिन्नेत्यर्थः । पटादिपदशक्तेः सावच्छिन्नत्वे प्रमाणमाऽऽशङ्क्य निराचष्टे पटे शक्तमपीत्यादि । ततः—पटादिपदशक्तिग्रहात् । तच्छक्तिः—पटादिपदशक्तिः। अवच्छिन्ना—किञ्चिदवच्छेदकतानिरूपिका । चेदिति । विभाव्यत इति शेषः । क्वचित्तथैव पाठः, अत एवाग्रे विभाव्यतामिति साधु सङ्गच्छते । तस्याकाशपदस्य, तत्राकाशे । विभाव्यतामिति । तादृशविशिष्टानुभवस्योभयत्रैव सन्दिग्धत्वादिति भावः । दीधितिकृन्मतं निरस्यति एतेनेत्यादि । तादृशग्रहोत्तरं पटत्वविशिष्टस्याननुभवेनेत्यर्थः । पटत्वाद्युपलक्षिते—शक्यतावच्छेदकत्वेनागृहीतपटत्वावच्छिन्ने, धर्मिण्येव इति ग्रहान्वयि । तन्मते शक्तिग्रहविशेष्यतावच्छेदकत्वस्यैव शाब्दप्रकारतानियामकत्वादिति भावः । पटादिपदस्यापीति । न केवलमाकाशादिपदस्य पटादिपदस्यापीत्यर्थः । तथा चोक्तापत्तिरिष्टतया न बाधिकेति

रामभद्रीटीका ।

रवच्छिन्नशक्त्यापत्तेरित्यर्थः । शङ्कते पटे शक्तमिति । ग्रहो—निश्चयः । बाधसंशयस्याप्रतिबन्धकत्वादिति ध्येयम् । ततः—पटपदात्, तच्छक्तिः—पटपदशक्तिः, तस्यापि-आकाशपदस्यापि । एतेन—पटपदं न पटत्वावच्छिन्नशक्तिमदित्यादिग्रहोत्तरं पटपदात् पटत्वविशिष्टस्याननुभवेन, ताद्रूप्येण—पटत्वादिना ।

पलक्षितव्यक्तिष्वेव–इति शिरोमण्युक्तमपि प्रत्युक्तम्। 'शब्दोपलक्षितधर्मिणि शक्तिग्रहादेवाकाशादिपदात्तदंशे निर्विकल्प(१)कात्मकस्मरणमन्वयानुभवश्चोत्पद्यत' इति तु नानुभविकम्, न वा यौक्तिकम्।

या चानुगतोपाध्यवच्छिन्ने सङ्केतवती संज्ञा सा त्वौपाधिकी, यथा भूतदूतादिः, सा हि सचेतनावृत्तिविशेषगुणवत्त्ववार्त्ताहारकत्वाद्यनुगतोपा-

कृष्णकान्तीटीका।

भावः। व्यक्तिष्वेवेत्येवकारेण पटत्वादिजातेर्व्युदासः। नन्वेतावता शब्दादेः प्रकारताप्रयोजकस्य शक्यतावच्छेदकत्वग्रहस्य विरहेऽपि आकाशपदात् निष्प्रकारकाऽऽकाशज्ञानोत्पत्तौ बाधकाभाव इत्यत आह शब्दोपलक्षितेति। शक्तिग्रहादेवेति एवकारेण शब्दे शक्तिग्रहव्यवच्छेदः। तदंशे–आकाशांशे। निर्विकल्पकात्मकेति। निष्प्रकारकेत्यर्थः। स्मरणमिति। शाब्दबोधजनकीभूततथाविधपदार्थोपस्थितेरानुभविकत्वं, तथाविधशब्दस्यानुभविकत्वम्, अयौक्तिकत्वञ्च नानुभविकमित्यादौ स्मरणस्य तथात्वमुक्तम्। अन्वयानुभवः—शाब्दबोधः, नानुभविकं नानुभवविषयः। ननु युक्तिरेव तत्रानुभवसाधिकेत्यत आह न वेति।

कारिकायाः परप्रतीकं व्याकरोति या चेति। अनुगतत्वमेकसम्बन्धावच्छिन्नानेकवृत्तितावच्छेदकावच्छिन्नत्वं, न त्वनेकवृत्तित्वं, कस्यापि विशेषगुणस्यानेकवृत्तित्वाभावात् भूतादिसंज्ञाया अव्याप्त्यापत्तेः। लक्ष्यं प्रदर्शयन् तत्र लक्षणं सङ्गमयति यथेत्यादिना। सुखसमवायिकारणतावच्छेदकतया सिद्धस्यात्मत्वस्येश्वरावृत्तित्वात्, ईश्वरसाधारणात्मत्वजातेरप्रामाणिकत्वात्, प्रत्येकभेदनिवेशे तु गौरवादाह सचेतनेति। ज्ञानवदवृत्तीत्यर्थः। न च कृतीच्छादिकमादाय विनिगमनाविरहः, चेतनपदस्य स्वविषयकपरत्वात्। वार्त्ताहारकत्वेति। यद्यपि प्रोषितवाक्यप्रतिपादितार्थप्रतिपत्त्यनुकूलव्यापारवत्त्वं न वार्त्ताहारकत्वम्, तथा सति लिप्यानेतुर्दूतस्यातथात्वापत्तेः, प्रत्युत शृण्वित्याद्यवधारयितुस्तथात्वापत्तेः, परम्परयाऽऽनुकूल्यमादाय लिपिलेखकस्यापि तथात्वापत्तेः, मौलिलिखितलिप्यानेतुर्दूतस्य तथात्वस्यासम्भावितत्वाच्च तत्र वार्त्ताया एवाप्रसिद्धेः। नापि तादृशवाक्यप्रतिपादितार्थप्रतिपादकवाक्यप्रयोक्तृत्वं तत्, लिप्यानेतुरपि कस्यचिदविशिष्टस्य प्रयोक्तृत्वमस्त्येव, अत एव लोकेऽपरमस्य प्रमुखाज्ज्ञातव्यमिति लिपिशेषपाठपरिपाटीति न तत्राव्याप्तिरिति, तथापि मौलिलिखितलि-

रामभद्रीटीका।

कारिकाशेषार्धं व्याकरोति––या चेत्यादिना। सुखसमवायिकारणतावच्छेदकतया सिद्धाया आत्मत्वजातेरीश्वरावृत्तितया सामान्यत आत्मभिन्नत्वे सति विशेषगुणवत्त्वरूपस्य भूतत्वस्य वक्तुमशक्यत्वादाह––सचेतनेति। ननु शब्दवत्त्वस्य सखण्डत्वेनोपा-

धिपुरस्कारेणैव प्रवर्त्तते, शब्दादिकन्तु सखण्डत्वेनोपाधिरपि नानुगतो द्वितयावृत्तित्वादतः पारिभाषिके गगनादिपदे नातिप्रसङ्गः । घटत्वादिजातेः संस्थानवृत्तित्वमते यदि घटादिपदं विलक्षणसंस्थानवत्त्वेन शक्तं तदौपाधिकमेव, यदि च परम्परया वैलक्षण्यवत्त्वेन तदा नैमित्तिकमेव । वस्तुतः सामा-

कृष्णकान्तोटोका।

व्यानेतुरतथात्वापत्तेः मूकस्यातथाविधस्यातथात्वापत्तेश्च । तथापि प्रोषितवाक्यप्रतिपादकलिप्यानेतृत्वे सति तादृशानयनभृतिग्राहित्वं तत्। तादृशभृतिग्राहिलिप्यानयनविरहिण्यतिव्याप्तिवारणाय सत्यन्तम् । उपरोधक्रमेण तादृशलिप्यानेतुर्ब्राह्मणादेस्तथात्ववारणाय विशेष्यदलम् । प्रवर्त्तते-शक्तो भवति । न चाकाशपदेऽतिव्याप्तिः, शब्दस्यापि अनुगतोपाधित्वादिति तस्यानुगतत्वमेव नास्तीत्याह शब्दादिकन्त्विति। ननु घटपदस्यापि नैमित्तिकत्वं न स्याद् प्रत्युत घटत्वजातेः संस्थानवृत्तितयौपाधिकत्वं स्यादित्यत आह घटत्वादिजातेरिति । संस्थानमवयवसंयोगविशेषः । विलक्षणेति । विजातीयसंयोगावच्छिन्नशक्तिमदित्यर्थः । तृतीययाऽवच्छेदकत्वप्रतिपादनादेवमग्रेऽपि । दण्डादिजन्यतावच्छेदकतया घटादावेव वैजात्यं सेत्स्यति, संस्थाने वैजात्यसिद्धौ मानाभावात् घटपदस्यौपाधिकत्वमसम्भवि । न च घटजनकतावच्छेदकतया तादृशवैजात्यसिद्धिरिति वाच्यम् । अभिघातप्रयोज्यजात्यादिना साङ्कर्यात्, इत्याशयेन यदीत्युक्तं । ननु संयोगजन्यतावच्छेदकतया सिद्धोऽभिघातक्रियाजन्यतावच्छेदकजातिविरुद्धो जातिविशेषः संस्थाने घटजनकतावच्छेदकतया सेत्स्यति, स एव स्वाश्रयारभ्यत्वरूपपरम्परया घटपदशक्यतावच्छेदकः, घटो गुणः घटमानयेति बोधयोर्भ्रमत्वप्रमात्वानुरोधेन तथैव कल्पनात् इत्याह—यदि चेति । परम्परयेति । स्वाश्रयारभ्यत्वरूपपरम्परासम्बन्धेनेत्यर्थः । वैलक्षण्यवत्त्वेन—वैजात्यवत्त्वेन, शक्तं घटपदमिति पूर्वेणान्वयः । एतन्मते यदि चेत्यनेन सूचितमस्वरसं स्वयं व्यञ्जयति । वस्तुत इति । तथा च स्वरूपतो घटत्वप्रकारकघटविशेष्यकबोधासम्भवाद् तन्मतम

रामभद्रीटोका।

धितया गगनादेरप्यौपाधिकसंज्ञात्वापत्तिरत उभयवृत्तिधर्मावच्छिन्नेत्युक्तमित्याह शब्दादीति । ननु घटपदस्यापि नैमित्तिकत्वं न स्यात् घटत्वादिजातेः संस्थानवृत्तित्वमते तस्य औपाधिकत्वात् अतस्तत्रेष्टापत्तिमाह घटत्वादिजातेरित्यादिना ।

मते—पक्षे । दण्डप्रयोज्यतया तादृशवैजात्यासिद्धेरिति भावः । कर्मप्रयोज्यजात्याऽभिघातप्रयोज्यजात्या वा संस्थानगतवैजात्यस्य सङ्करात् घटत्वादिजातेः संस्थानवृत्तित्वासम्भवात् घटादिपदस्यौपाधिकत्वमसम्भवतीत्याशयेन मते यदीत्युक्तम् । परम्परयेति । स्वाश्रयवत्त्वलक्षणेत्यर्थः । परम्परासम्बन्धेन शक्तिज्ञानस्य शाब्दसामान्यहेतु-

न्यस्य शाब्दबुद्धौ स्वरूपतः प्रकारत्वं समवायेनैवेत्यभिहितं प्रागिति ।२२।

ये तु जात्यवच्छिन्नसङ्केतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुस्तेषां मते त्रैविध्यमन्यथा निर्वक्ति--

(१)यद्वाधुनिकसङ्केत शालि स्यात्पारिभाषिकम् ।
जात्या नैमित्तिकं शक्तमौपाधिकमुपाधिना ॥ २३ ॥

यत्रार्थे यन्नामाऽऽधुनिकसङ्केतवत्तदेव तत्र पारिभाषिकम्, यथा पित्रा-

कृष्णकान्तीटीका ।

सम्यगिति भावः । समवायेनैवेत्येवकारेण सम्बन्धान्तरव्यवच्छेदः । अभिहितं प्रागिति । प्राभाकरमतविचारमध्ये । शाब्दमतेः शुद्धगोत्वप्रकारतायां गोविशेष्यताकत्वस्येव समवायावच्छिन्नत्वस्यापि व्याप्तिबलेन सिद्धावपीति ग्रन्थे उक्तप्रायमित्यर्थः । केचित्तु परम्परया शक्तिज्ञानस्य शाब्दधीहेतुत्वे प्राभाकरा एव विजयेरन्नित्यत आह वस्तुत इत्यादीत्याहुः । तन्न । तादृशास्वरसस्य ग्रन्थकृतस्तात्पर्यविषयत्वाभावात्, तथासति वस्तुत इत्यादिना स्वयमस्वरसोद्भावनस्य सन्दर्भविरुद्धत्वादिति ॥ २२ ॥

वैयाकरणमतमुत्थापयति--ये त्विति । जात्यवच्छिन्नसंकेतवतामपीत्यनेन स्वमते चैत्रादिपदानां नैमित्तिकत्वं व्यञ्जितम् । न च शरीरवृत्तेरपि चैत्रस्य कुतो जातित्वमनेकवृत्तित्वाभावादिति वाच्यम् । बाल्यादिभेदेन चैत्रशरीरस्यापि नानात्वात् । तेषां--वैयाकरणानाम् । त्रैविध्यमिति । नैमित्तिकी-पारिभाषिक्यौपाधिकीनां लक्षणत्रयमित्यर्थः । चैत्रादिपदानां पारिभाषिकत्वस्य स्वमतासिद्धत्वेनाश्चर्यविषयतया पारिभाषिकसंज्ञालक्षणस्योत्कटरागविषयतया च क्रममपहाय तल्लक्षणमादौ अभिदधान एव नैमित्तिकौपाधिकलक्षणमाह--यद्वेति । आधुनिकसंकेतशालि स्यादिति पदमित्यध्याहार्यं, तथा च नित्यसंकेतानिरूपकपदं पारिभाषिकं स्यादित्यर्थः । जात्येति तृतीयार्थोऽवच्छेदकत्वं, तस्य शक्तमित्यत्र शक्तावन्वयः । एवमग्रेऽपि, तथा च जात्यवच्छिन्नशक्तिमत्पदं नैमित्तिकमित्यर्थः । उपाधिनेति । उपाधित्वं सखण्डत्वमतो न नैमित्तिकेऽतिव्याप्तिः । विवृणोति यत्रेति । तथा च यादृशानुपूर्वी यादृशार्थवि-

रामभद्रीटोका ।

तास्वीकारे प्राभाकरा एव विजयेरन्नित्याशयेन यदि चेत्युक्तम् ॥ २२ ॥

तेषां--वैयाकरणानाम् ।

स्यादिति । नामेति प्रकृतम् । जात्येति तृतीयाया अवच्छिन्नत्वमर्थः, तथा च जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकम् इत्यर्थः । एवमुपाधिना इत्यत्रापि ।

(१) आधुनिकसंङ्केतवदर्थबोधकं नाम पारिभाषिकम्, जातिविशिष्टार्थबोधकं च नैमित्तिकम्, उपाधिविशिष्टार्थप्रतिपादकं च नामौपाधिकमिति वैयाकरणमतेन कारिकार्थो द्रष्टव्यः ।

दिभिः पुत्रादौ सङ्केतितं चैत्रादि, यथा वा शास्त्रकृद्भिः सिद्ध्यभावादौ पक्षतादि । जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकम्, यथा गो-गवयादि । यदुपाध्यवच्छिन्नशक्तिमन्नाम तदौपाधिकम्, यथाऽऽकाश-पश्वादि ।

कृष्णकान्तीटीका ।

शेष्यककिञ्चिज्जन्यबोधविषयत्वप्रकारकानित्यसंकेतविषयताविशेषावच्छेदिका तादृशानुपूर्वीमत्त्वं तादृशार्थे पारिभाषिकत्वमिति पर्यवसितम् । उदाहरति यथा पित्रादिभिरिति । चैत्रादीति, नामेत्यनुषज्यते । अथ चैत्रादिसंकेतस्य नित्यत्वेन नाधुनिकत्वं, "द्वादशेऽहनि पिता नाम कुर्या"दिति श्रुतेः, इत्यव्याप्तिभिया चैत्रपदस्यालक्ष्यत्वमेव स्वीकार्यम्, अत एवैतदवतारणिकायां ये तु चैत्रादिपदस्येत्यत्रादिपदमुपात्तम्, इति लक्ष्यान्तरमुपदर्शयति यथा वेति । शास्त्रकृद्भिरिति । संकेतितमिति पूर्वेणान्वयः । सिद्ध्यभावादाविति । आदिना सिषाधयिषामात्रविशिष्टसिद्ध्यभावस्य च परिग्रहः । केचित्तु सिद्ध्यभावादौ सिषाधयिषाविरहविशिष्टसिद्ध्यभावादावित्यर्थः, आदिपदात् साध्यसंशयादिपरिग्रहः, प्राच्यैस्तस्यापि पक्षतात्वस्वीकारादित्याहुः । जात्यवच्छिन्नेति । यत्रार्थे यन्नाम इत्यनुषज्यते । एवमग्रेऽपि । तथा च यादृशानुपूर्वी यादृशार्थविशेष्यकजात्यवच्छिन्नस्वशक्तिनिरूपकतावच्छेदिका तादृशानुपूर्वीमत्त्वं तादृशार्थनैमित्तिकत्वं पर्यवसितम् । यथेति । गवि गवये इत्यध्याहार्यम् । गो-गवयादीति । नामेत्यनुषज्यते, एवमग्रेऽपि । यदुपाध्यवच्छिन्नेति । अत्र यत्रार्थः इत्यस्यैवानुषङ्गः, तथा च यादृशानुपूर्वी यादृशार्थविशेष्यकसखण्डधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदिका तादृशानुपूर्वीमत्त्वं तादृशार्थौपाधिकत्वं पर्यवसितम् । उदाहरति यथेति । आकाशपदस्य निरवच्छिन्नशक्तिकत्वेऽलक्ष्यत्वमेव । न च तस्य तथात्वे लक्ष्यत्रयस्यैवालक्ष्यत्वात् त्रिधा विभागे व्याघात इति वाच्यम् । नैमित्तिकलक्षणे जात्यवच्छिन्नत्वमपहाय उपाध्यनवच्छिन्नशक्तिमत्त्वस्य निवेशेन तस्य नैमित्तिकत्वसम्भवादित्यत आह पश्वादीति । आदिपदात् कुकुदादिपरिग्रहः, तस्यापि दानाद्यवच्छिन्नशक्तिमत्त्वात् । नन्वाधुनिकसङ्केतस्यापि शक्तिमत्त्वात् पारिभाषिकचैत्रादिशब्दानां नैमित्तिकत्वापत्तिः, नदीवृद्ध्यादिशब्दानाञ्चौपाधिकत्वापत्तिः, इष्टापत्तौ च तेन रूपेण विभागासम्भवः, मियो विरुद्धधर्मस्यैव विभाजकतावच्छेद-

रामभद्रीटीका ।

ननु चैत्रत्वादिजातेः प्रामाणिकत्वे जात्यवच्छिन्नशक्तिमत्त्वेन गवयादिपदवत् चैत्रादिपदानामपि नैमित्तिकत्वमेवेत्यत आह यथावेति । शास्त्रकृद्भिः—नैयायिकैः । पक्षतादीत्यादिना समानाकारशाब्दबुध्यभावात्तत्तदानुपूर्व्यादौ आकाङ्क्षादेः परिग्रहः । आकाशपश्वादीति । तयोः शब्दवत्त्वलोमवल्लाङ्गूलवत्त्वाद्युपाध्यच्छिन्नशक्तिमत्त्वादिति भावः । ननु पारिभाषिकानामपि शब्दानां जात्यवच्छिन्नशक्तिमत्त्वात् आधुनिकसङ्केतस्यापि शक्ति-

आधुनिकस्तु सङ्केतो न शक्तिर्नित्यस्यैव तस्य तथात्वात्। तदुक्तं भर्तृहरिणा—

आजानिकश्चाधुनिकः सङ्केतो द्विविधो मतः।
नित्य आजानिकस्तत्र या शक्तिरिति गीयते॥
कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः॥ इति।

न च पित्रादिना सङ्केतिते चैत्रादिपदे नित्यसङ्केतत्वे मानमस्ति,

कृष्णकान्तीटीका।

कत्वादित्यत आह आधुनिकस्त्विति। तस्य—सङ्केतस्य, तथात्वात्—शक्तित्वात्। अत्र प्राचीनसम्वादमाह—तदुक्तमिति। नित्यसङ्केतस्यैव शक्तित्वमुक्तमित्यर्थः। तत्र—तयोर्मध्ये, नित्यः सङ्केत—आजानिको, नास्ति जनिरुत्पत्तिर्यस्यासौ अजनिः, अजनिरेवाजानिकः, स्वार्थे इकणिति आजानिकशब्दो यौगिकः। केचित्तु आजानिकः कालत्वव्यापक इत्यर्थः, तथा चाजानिकः शब्दः पारिभाषिक इत्याहुः। तन्न। यौगिकसम्भवे पारिभाषिककल्पनाया अन्याय्यत्वात्। न च प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपस्य नित्यत्वस्य योगालभ्यत्वेन तद्बोधने तस्य कथं यौगिकत्वमिति वाच्यम्। प्रागभावातिरिक्तस्यानुत्पन्नवस्तुनो ध्वंसाप्रतियोगित्वनियमात् नित्यपदस्यैवानुत्पन्नपरत्वाद्वा। न च तयोरैकार्थत्वेन पौनरुक्त्यम्, आजानिक इत्यस्याजानिकशब्दप्रतिपाद्यपरत्वात्। अत एव या शक्तिरित्यत्र यत्पदस्य नित्यसङ्केतपरत्वेपि शक्तिरित्यभिधीयते इत्यनेन शक्तिपदप्रतिपाद्यत्वकथनात् न पौनरुक्तम्, अत एव च "प्रजावती भ्रातृजाया" "श्यालाः स्युर्भ्रातरः पत्न्याः" "सत्कृत्यालंकृतां कन्यां यो ददाति स कूकुदः" इत्यादावपि न पौनरुक्त्यम्। कादाचित्कस्त्विति। कादाचित्कत्वं—ध्वंसप्रतियोगित्वमिति फलितम्। आधुनिकः—आधुनिकशब्दप्रतिपाद्य इत्यर्थः। स च क इत्याकाङ्क्षायामाह—शास्त्रकारादिभिरिति। आदिना म्लेच्छादिपरिग्रहः। यथा स्त्री कृतेकारे नदी, आरादिषु वृद्ध्यादिपदस्य सङ्केतः, कङ्गौ यवपदस्य। न चेति। अस्तीत्यग्रेणान्वयः। ननु "द्वादशेऽहनि पिता नाम कुर्या"दित्यादिश्रुत्या द्वादशाहाधिकरणकनामजन्यबोधविषयपुत्रत्वविशिष्टविषयकपितृसमवेतः सङ्केत इष्टसाधनमिति बोधजननादी-

रामभद्रीटीका।

त्वापत्तिरत आह—आधुनिकस्त्विति। तस्य—सङ्केतस्य, तथात्वात्—शक्तित्वात्। अत्र प्राचां संवादमाह—तदुक्तमिति। तत्र—तयोर्मध्ये। आजानिकः—कालत्वव्यापकः।

नचेति अस्तीत्यग्रेऽन्वयः। ननु 'द्वादशेहनि पिता नाम कुर्यादि'त्यादिश्रुतेश्चैत्रादिपदे नित्यसङ्केतस्य पित्रादिज्ञापकतयैव उपपन्नत्वात् तादृशश्रुतिरेव मानमत आह—

"द्वादशेऽहनि पिता नाम कुर्य्यादिति" श्रुतेः पितृकर्त्तव्यसङ्केतविधायकमात्रपरत्वात्, चैत्रादिपदस्य शक्तिमत्त्वे पूर्वपूर्वप्रयुक्तत्वापाताच्च, तस्य तन्नियतत्वादित्युक्तत्वात् । चैत्रादिपदानामिव पारसीकादिशब्दानां सङ्केतवत्त्वाविशेषेऽपि न तेषां धर्मकर्मण्युपयोगः, "साधुभिर्भाषितव्यं नापभ्रंशितवै

कृष्णकान्तीटीका ।

श्वरीयतादृशतात्पर्यस्यावश्यकत्वात् तदात्मकभगवदिच्छीयबोधविषयत्वनिष्ठप्रकारतानिरूपितविषयतायाः परम्परया निरूपकत्वस्य चैत्रादिपदे सत्त्वात् तादृशश्रुतिरेव तत्र मानमित्यत आह द्वादशेऽहनि पितेत्यादि । पितृकर्त्तव्यसङ्केतविधायकमात्रपरत्वादिति । तथा च तादृशश्रुतौ नामपदं तात्पर्यग्राहकम्, पुत्र विषयकबोधजनकः पितृसङ्केत इष्टसाधनमिति बोध एवेश्वरतात्पर्यमिति भावः । चैत्रादिपदे शक्तिसत्त्वे साधकाभावमुक्त्वा बाधकमप्याह—चैत्रादिपदस्येति । शक्तिमत्त्वेनित्यसङ्केतवत्त्व इत्यर्थः । क्वचित्तथैव पाठः, अत एवाग्रे तस्येति पुंलिङ्गनिर्देशोऽपि साधु सङ्गच्छते । आपत्तौ हेतुमाह—तस्येति । नित्यसङ्केतस्येत्यर्थः । केचित्तु शक्तेति पूर्वपाठं दृष्ट्वा एतस्या इति पाठं कल्पयन्ति । तन्न, तादृशपाठस्य कुत्राप्यदृष्टत्वात् । अन्ये तु तस्य शक्तिपदार्थस्येत्यर्थं याचक्रुः । अपरे तु तत्पदस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नशक्ततया तेन शक्तिपदार्थत्वेन नित्यसङ्केतवत्त्वेन बोधने बाधकाभाव इत्याहुः । तदुभयमप्यसत्, प्रक्रान्तमपहाय बुद्धिविषयपदार्थान्तरोपस्थापकतायास्तत्पदस्य केनाप्यनङ्गीकारादिति दिक् । ननु चैत्रादिपदे नित्यसङ्केतासत्त्वे धर्म्मकर्मणि चैत्रादिपदाभिलापो न स्यात् नित्यसङ्केतवत्पदस्यैव धर्मकर्म्मण्युपयोगात्, अन्यथा म्लेच्छसंकेतितशब्दानामपि तत्राभिलापे दोषा न स्यादित्यत आह चैत्रादिपदानामिवेति । पारसीकादिशब्दानां—म्लेच्छसंकेतितशब्दानाम् । संकेतवत्त्वाविशेषेऽपीति । अनित्यसंकेतस्यापि संकेतत्वाक्षतेरिति भावः । धर्मकर्मण्युपयोगे हेतुमाह साधुभिर्भाषितव्यमिति । नापभ्रंशितवै—नापभ्रंशितशब्दैः, म्लेच्छि-

रामभद्रीटीका ।

द्वादशेऽहनीति । मात्रत्वादिति । तथाच नाम कुर्यादित्यादेर्ज्ञापकतार्थकत्वे मुख्यार्थत्यागापत्तेः, 'न विधौ परः शब्दार्थः' इति न्यायविरोधापत्तेश्चेति भावः । चैत्रादिपदे नित्यसङ्केतसत्त्वे साधकाभावमुक्त्वा बाधकमप्याह—चैत्रादिपदस्येति । शक्तिमत्त्वे-नित्यसङ्केतसत्त्वे, तस्या—नित्यसङ्केतस्य, तन्नियतत्वात्—पूर्वपूर्वप्रयुक्तत्वनियतत्वात् । ननु चैत्रादिपदे नित्यसङ्केतासत्त्वे धर्मकर्मणि चैत्रादिपदाभिलापो न स्यात् नित्यसङ्केतवत्पदस्यैव धर्मकर्मण्युपयुक्तत्वात्, अन्यथा सङ्केतवत्त्वाविशेषेण म्लेच्छसङ्केतितशब्दानामपि तत्राभिलापे न दोषः स्यात् आह—चैत्रादीति । सङ्केतवत्त्वेति । आधुनिकेत्यादिः । तेषां—पारसीकादिशब्दानाम् । 'नापभ्रंशितवै—नापभ्रंशशब्दैः, तत्र—धर्मकर्मणि, तन्नि-

न म्लेच्छितवै"(१) इतिश्रुत्या तत्र तन्निषेधात्। म्लेच्छितवै म्लेच्छमात्रसङ्केतितैः। खरादिशब्दास्तु रासभादौ म्लेच्छैरिवार्यैरपि सङ्केतिताः(२)।

ननु गवादिपदं गोत्वादिनेव संस्थानप्रभेदेनापि विशिष्ट एव गवादौ शक्तमिति तत्रापि तदौपाधिकं स्यात्। न स्याच्छक्यत्वाविशेषेऽपि गोत्वा-

कृष्णकान्तीटीका।

तवै—म्लेच्छसङ्केतितशब्दैः। तत्र—धर्मकर्मणि, तन्निषेधात्—उपयोगनिषेधादित्यर्थः। तत्र म्लेच्छसङ्केतितशब्दमात्रोपयोगनिषेधे खरादिशब्दस्यापि तथात्वात्तत्रोपयोगो न स्यादित्यतस्तदर्थं विशेषयति—म्लेच्छितवै इति। मात्रपदव्यावृत्तिमाह खरादिशब्दास्त्विवति। आदिना कुलालादिपरिग्रहः। आर्यैः—श्रेष्ठैः। तथा च तत्र म्लेच्छेतरासङ्केतितत्वाभावान्न मात्रार्थसम्भव इति भावः। ननु गवादिशक्तेर्गोत्वादिजात्येव सास्नादिरूपसंस्थानेऽप्यवच्छिन्नत्वात् गवि गोपदं नैमित्तिकवत् औपाधिकमपि स्यादित्याशङ्क्य, जातेरिव संस्थानस्य शक्यत्वेऽपि न शक्यतावच्छेदकत्वं गौरवात्, न हि शक्यस्यैव शक्यतावच्छेदकत्वनियमः, व्यक्तौ व्यभिचारात्, "जात्याकृतिव्यक्तयः पदार्थः" इति न्यायसूत्रे, तस्य शक्यत्वस्यैव प्रतिपादनादिति समाधत्ते नन्विति। आदिपदात् घटादिपरिग्रहः, गोत्वादिनेवेत्यादिना घटत्वादिपरिग्रहः, अस्य विशिष्ट इत्यत्रान्वयः, एवमग्रेऽपि। संस्थानप्रभेदः सास्ना—कम्बुग्रीवादिः, विशिष्ट एवेत्येवकारेण विशिष्टशक्यत्वव्यवच्छेदः। शक्तमिति। तथा च संस्थानस्य शक्तिविशेष्यतावच्छेदकत्वाभिधानेन शक्यतावच्छेदकत्वं प्रकटीकृतं, तस्यैव तथात्वनियमादिति भावः। तत्रापि—गवादावपि, तत्—गवादिनाम। औपाधिकं स्यादिति। संस्थानरूपोपाध्यवच्छिन्नशक्तिनिरूपकत्वादिति भावः। न च गवादिपदस्य नैमित्तिकत्ववदौपाधिकत्वे क्षतिविरहादिष्टापत्तिसम्भव इति वाच्यम्। तथा सति तेन

रामभद्रीटीका।

षेधात्-अभिलापनिषेधात्। ननु कुलालादिशब्दानां म्लेच्छेनापि सङ्केतितत्वात् तदभिलापोऽपि तत्र न स्यात् अत आह म्लेच्छमात्रेति। खरादीत्यादिना कुलालादिपरिग्रहः। शङ्कते नन्विति। गवादीत्यादिना घटादेः परिग्रहः। संस्थानप्रभेदः—सास्नाकंबुग्रीवादिः। तत्रापि—गवादावपि, तत्—गवादिपदम्। स्यादिति। तथाच विभागव्याघातः मिथो विरुद्धधर्मस्यैव विभाजकत्वादिति भावः। शङ्कां निरस्यति—न स्यादिति। न चेति। देशनीयमित्यग्रेऽन्वयः। नियमतोऽवश्यम्। तस्यापि—संस्थानस्यापि। तच्छ

(१) *न म्लेच्छितवै न म्लेच्छितव्यम्, अव्यक्तं प्रकृतिप्रत्ययविभागहीनं न शब्दितव्यमित्यर्थ इति तु पाणिनिः। "कृत्यार्थे तवै-केन् केन्य-त्वनः॥" (वेदि० ।३।४।१४) इत्यनेन कृत्यार्थे तवै प्रत्ययेन प्रसाध्य "न म्लेच्छितवै इति न म्लेच्छितव्यमित्यर्थः।

(२) तथाच तेषां धर्मकर्मण्युपयोग एवेति भावः।

द्यपेक्षया गुरुत्वेन संस्थानस्य(१) गवादिपदशक्यतानवच्छेदकत्वात्। न च(२) संस्थानमशक्यमेव गवादिपदस्येति देशनीयम्, गवादिपदाद्गोत्वादिजात्या इव सास्नादिलक्षणविलक्षणाकृत्या अपि नियमतो गवादेरनुभवेन तस्यापि तच्छक्यत्वात्, तथाच न्यायसूत्रं "जात्याकृतिव्यक्तयः

कृष्णकान्तीटीका।

रूपेण विभागानुपपत्तेर्मिथो विरुद्धधर्मस्यैव विभाजकत्वादित्याशङ्कां निरस्यति न स्यादिति। गवादिपदमौपाधिकं न भवतीत्यर्थः। कुत इत्याकाङ्क्षायामाह शक्यत्वाविशेषेऽपीति। गोत्वनिष्ठावच्छेदकतायामिव संस्थाननिष्ठावच्छेदकतायामपि शक्तिनिरूपितविशेष्यतावच्छेदकत्वरूपैकधर्मसत्त्वादिति भावः। तथा च विशेषत्वं प्रकृते तादृशैकधर्मवत्त्वमिति पर्यवसितम्। एतेनाविशेषत्वमभिन्नत्वं, तच्च न सम्भवति, गोत्वनिष्ठावच्छेदकतातोऽवयवसंयोगरूपसंस्थाननिष्ठावच्छेदकताया भिन्नत्वात्तदवच्छेदकसंसर्गादीनां भिन्नत्वादिति प्रत्युक्तम्। गुरुत्वेनेति। तत्रावच्छेदकत्वस्वीकारे तदवच्छेदकत्वकल्पने गौरवादिति भावः। ननु अशक्यस्य शक्यतावच्छेदकत्वासम्भवात् संस्थानस्य शक्त्यविषयत्वात् कुतः शक्यतावच्छेदकत्वप्रसक्तिः? कथं वा तद्वारणाय लाघवगौरवविवेचनम्? इत्यतस्तस्य शक्यत्वं व्यवस्थापयन्नाह न चेति। देशनीयमिति परेणान्वयः। गवादिपदादिति पञ्चम्यर्थो जन्यत्वं, तच्चाग्रेतनानुभवेऽन्वेति। गोत्वादिजात्या इवेति तृतीयार्थः प्रकारत्वम्। एवमग्रेऽपि। शक्तिविशेष्यतानवच्छेदकस्यापि कदाचित् प्रकारतया शाब्दबोधे भानसम्भवान्नियमत इत्युक्तम्। अनुभवेन—शाब्दबोधेन, तस्यापि—सास्नादिरूपसंस्थानस्यापि, तच्छक्यत्वात्—गवादिपदशक्यत्वात्, गवादिपदशक्तिविषयतावच्छेदकत्वादिति यावत्, तथा चैतन्मते शक्तिविषयतावच्छेदकत्वस्य फलीभूतज्ञानप्रकारतानियामकत्वात् संस्थानस्य शक्तिविषयतानवच्छेदकत्वे नियमतः शाब्दबोधे प्रकारतया भानानुपपत्तिरित्यनुपपत्तिरेव तत्र तत्साधिकेति भावः। संस्थानस्य शक्तिविषयतावच्छेदकत्वे न्यायसूत्रं प्रमाणयति "जात्याकृतिव्यक्तय" इति। गुणादीनामाकृतेरभावाद् गुणादिपदानामाकृतौ शक्त्यसम्भवादाकृतेः सामान्यतः पदार्थत्वकथनमसङ्गतमतः पदं वि-

रामभद्रीटीका।

क्यत्वात्–गवादिपदशक्यत्वात्। आकृतेः शक्यत्वे सूत्रसंवादमाह तथाचेति।

(१) गोत्वसंस्थानविशिष्टे शक्तस्यापि गवादिपदस्य शक्यतावच्छेदकं लाघवाद् गोत्वमेव स्वीकार्यमिति भावः।

(२) तथाच गुरुतया शक्यतानवच्छेदकत्वेन उपाध्यवच्छिन्नेऽशक्तत्वादौपाधिकं गवादिपदमिति भावः।

पदार्थः" इति । पदार्थो गवादिपदशक्यः । त्रिष्वेकशक्तेर्लभार्थमेकवचनम्, अन्यथा विभिन्नशक्तौ विशकलितानामेव(१) तासामनुभवस्य

कृष्णकान्तीटीका ।

शेषयन् लक्ष्यार्थव्यावृत्तयेऽर्थपदस्य शक्यरूपार्थमाह पदार्थ इत्यादि । गवादीत्यादिना घटादिपरिग्रहः । नन्वभेदान्वयबोधे उद्देश्यविधेयवाचकपदस्य प्रायशः समानवचनकत्वनियमादेकवचन नेदृशोऽसङ्गतः, कथञ्चित्तदुपपादनेऽपि एकत्वस्य शक्तिविषयताश्रये तत्र बाधेनायोग्यत्वापत्तिरतस्तस्याः शक्तावन्वयेन योग्यत्वं सम्पादयन्नाह त्रिष्वेकशक्तेरिति । जात्याकृतिविशिष्टव्यक्तौ शक्तेरित्यर्थः । ननु जात्याकृतिव्यक्तिषु पृथक्शक्तौ को दोषः, ? 'न च' नानाशक्तिकल्पने गौरवमेव दोष इति तु न देश्यम्, जात्याकृत्योर्वैशिष्ट्यान्तर्भावेण शक्तिकल्पनामपेक्ष्य नानाशक्तिकल्पनस्य लघुत्वादित्यत आह अन्यथेति । जात्याकृतिव्यक्तिष्वेकशक्त्यभावे तासामशक्यत्वे वक्ष्यमाणदोषासंभवाद्विभिन्नशक्तावित्युप्युक्तम् । केचित्तु अन्यथा इत्यस्यार्थं स्वयमेवाह विभिन्नशक्ताविति, अन्यथा संस्थानस्य प्राक्शक्यत्वाभिधानादन्यथाशब्देन तद्व्यवच्छेदस्यापि बोधनाद्वक्ष्यमाणदोषासङ्गतेरिति भाव इत्याहुः । तन्न, संस्थानशक्यत्वाभिधानस्याप्रत्यासन्नत्वादन्यथाशब्देन, तद्व्यवच्छेदबोधनासम्भवात् । अपरे तु अन्यथैकवचनानुपादाने, बहुवचनोपादान इति यावत्, विभिन्नशक्ताविति । तेन सूचितायामित्यादिः, एकवचनमित्यनन्तरान्यथाशब्देन तद्व्यवच्छेदस्यैव बोधनादिति प्राहुः । विशकलितानामेव मिथो निरूप्यनिरूपकभावानापन्नविषयताविशिष्टानामित्यर्थः, विशेष्यविशेषणभावानापन्नामिति यावत् । तासांजात्या-कृतिव्यक्तीनाम् । अनुभवस्येति । प्रसङ्गादिति परेणान्वयः । न च वैशिष्ट्ये शक्तिविरहेण तद्भावनप्रयोजकाभावादिति भावः । न च वैशिष्ट्ये शक्तिविरहेऽपि घटवद्भूतलमित्यत्र घटभूतलयोवशिष्ट्यभानवत् प्रकृतेऽपि वैशिष्ट्यभानं सुवचम्, अगत्या तात्पर्यज्ञानादिकं तद्भानप्रयोजकमिति वाच्यम्, यदा खण्डशो बोधे तात्पर्यादिकं वर्तते तदा तादृशबोधस्य दुर्वारतापत्तेः । अस्मन्मते च गवादिपदात् शक्त्या तादृशबोधस्य कदाप्यनुदयात् । केचित्तु घटवद्भूतलमित्यादौ वैशिष्ट्यधं वाक्यार्थमर्यादया भासते, अत्र तु एकपदस्य वाक्यत्वाभावेन तद्भानासम्भवः, साकाङ्क्षपदसमूहस्यैव वाक्यत्वादित्याहुः । तच्चिन्त्यम् शक्तिमत एव पदत्वेन सविभक्तिकगवादिनाम्नो वाक्यत्वस्यापि सम्भवात् । सम्प्रदायमते विभक्त्यन्तरस्यैव पदत्वात् सविभक्तिकगवादिनाम्नो न वाक्यत्वमिति

रामभद्रीटीका ।

रूपादिपदानामाकृतेरभावात् पदार्थमात्राभिधानमयुक्तमत आह—गवादीति । एकशक्तेरिति । जात्याकृतिव्यक्ति(ष्वेक)शक्तेर्जात्याकृतिविशिष्टव्यक्तिशक्तेरित्यर्थः । तासां-

(१) विशकलितानां—परस्परविशेषणभावानापन्नानां तासां गोत्वसंस्थानव्यक्तीनामित्यर्थः ।

गौर्नित्या गुणो वेत्यादौ लक्षणाद्यभावस्य च प्रसङ्गादिति साम्प्रदायिकाः ।

नव्यास्तु जातिव्यक्त्योरेकशक्तिप्राप्त्यर्थं सौत्रमेकवचनम् । आकृतिरूपन्तु संस्थानं पृथगेव शक्यम् , शक्यञ्चैकपदोपस्थाप्ययोरप्याकृतिव्यक्त्योर्भेदान्वयबोधनं गवादिशब्देन, व्युत्पत्तिवैचित्र्यात , अत एव

---

कृष्णकान्तीटीका ।

तु रिक्तं वचः । ननु गौर्नित्या गौर्गुणो गौर्द्रव्यमित्यादौ लक्षणया विशकलितानां जात्याकृतिव्यक्तीनां भानवदस्मन्मते शक्त्या तादृशभाने नानुभवविरोध इत्यतो दोषान्तरमाह गौर्नित्येति । गुणो वेति गौ रिति पूर्वेणान्वयः, जातेर्नित्यत्वादाकृतेर्गुणत्वाच्च योग्यत्वमिति भावः । लक्षणाद्यभावस्येति । अनुभवसिद्धा इत्यादिः । आदिना तन्मूलीभूततात्पर्यानुपपत्त्यादिपरिग्रहः, लक्षणायाः शक्तिवधुर्यनियतत्वादिति निर्गर्भः । तथा च गौर्नित्येत्यादौ गवादिपदस्य लाक्षणिकत्वानुभवस्यापलापे जितं प्राभाकरैरिति भावः । जात्याकृतिविशिष्टव्यक्तेर्गवादिपदशक्यत्वे संस्थानस्यानुपस्थितिदशायामनुभवसिद्धस्य गोत्वप्रकारकगवादिबोधस्यापलापापत्तेरित्यस्वरसः सम्प्रदायविद इत्यनेन सूचितः ।

अत एवाह नव्यास्त्विति । जातिव्यक्त्योरिति । जातिव्यक्त्योरेवेत्यर्थः । एकशक्तिप्राप्त्यर्थम्—एकशक्तिबोधार्थम् । नन्वाकृतौ शक्तिरेव नास्ति तदा कथं गवादिपदात् सास्नादिबोध इत्यत आह—आकृतिरूपन्त्विति । संस्थानस्याकृतिरूपत्वाभिधानन्तु सूत्रस्थाकृतिपदस्य भावव्युत्पत्त्या प्रत्यक्षपरत्वस्यापि सम्भवात्तन्निराकरणाय, तथा चाक्रियते व्यज्यतेऽनेनेति व्युत्पत्त्या आकृतिपदं संस्थानपरमिति भावः । पृथगेव शक्यमिति । भिन्नशक्त्याश्रय एवेत्यर्थः । नन्वेकपदोपस्थाप्ययोर्मिथो भेदान्वयस्याव्युत्पन्नत्वादाकृतेः पृथक् शक्यत्वे व्यक्तौ भेदेन तदन्वयबोधो न स्यादित्यत आह—शक्यञ्चेति । चः पुनरर्थे, समर्थनीयं पुनरिति समुदितार्थः, तस्य बोधनमिति परेणान्वयः । व्युत्पत्तिवैचित्र्यादिति ।

रामभद्रीटीका ।

जात्याकृतिव्यक्तीनाम् । गौरित्यादि । जातेर्नित्यत्वात् संस्थानस्य गुणत्वात्तादृशवाक्यस्य योग्यतार्थं लक्षणाद्यनुसरणमफलमिति भावः । विशिष्टस्य शक्यत्वे संस्थानानुपस्थितिदशायां गोत्वादिना व्यक्तेरवगमस्य शक्यानुभावकत्वात् इदमयुक्तमित्याशयेन साम्प्रदायिका इत्युक्तम् ।

अत एवाह नव्यास्त्विति । नन्वेवमेकपदोपस्थाप्यार्थयोर्मिथो भेदान्वयस्याव्युत्पन्नत्वादाकृतेः पृथक् शक्यत्वं दुर्घटमत आह—शक्यं चेति । व्युत्पत्तिवैचित्र्यादिति । एवकारादिस्थल एव स्वहस्तितत्वात् इति भावः । अतएव—आकृतेः

संस्थानानुपस्थितौ केवलगोत्वादिप्रकारेण व्यक्तेरवगमः शक्त्यैव सम्पद्यते । यद्येवं संस्थानव्यक्त्योरेकैकशक्तिर्गोत्वादिजातावेव शक्त्यन्तरं, तद्वैशिष्ट्यं तु पदार्थविधया युष्माकमिवाऽस्माकं वाक्यार्थविधया भासते इत्येव किं न स्यात् । न स्यादेव, समवायेन गोत्वादिमदपेक्षया परम्परया संस्थानवतः परमगुरुत्वेनाशक्यत्वात्, शक्यतायाः किञ्चिद्धर्मावच्छिन्न-

कृष्णकान्तीटीका ।

आख्यातार्थयोः कृतिवर्तमानयोरन्वयेनेव एवकारार्थयोरन्ययोगव्यवच्छेदाद्योरन्वयेन च तत्तत्स्थानीयान्यत्ववत् एतत्स्थानीयान्यत्वस्यापि तादृशव्युत्पत्तिघटकत्वादित्यर्थः । आकृतेः पृथक्शक्यत्वकल्पनस्य प्रयोजनसन्निधान एव सम्प्रदायविदां मतेऽस्वरसं समुद्भावयति अत एवेति । संस्थानस्य पृथक्शक्यत्वादेवेत्यर्थः । केवलगोत्वादिप्रकारेणेति । केवलपदेनाकृतेर्व्यवच्छेदः, व्यक्तेर्गवादेः, अवगमः—शाब्दबोधः, शक्त्यैवेत्येवकारेण लक्षणाव्यवच्छेदः, त्रिष्वेकशक्तिपक्षेऽपि लक्षणया तादृशबोधसम्भवादिति भावः । संस्थानानुपस्थितौ गोत्वेन गवानुभवो न शक्त्या, अपि तु लक्षणयैव, अन्यथा विनिगमकाभावेन संस्थानविशिष्टव्यक्तावेका शक्तिः जातौ तु शक्त्यन्तरम्, इत्यस्यापि सुवचत्वादित्यभिप्रायेण शङ्कते यद्येवमिति । एवं—संस्थानस्य पृथक्शक्यत्वे । नन्वेवं गोत्वविशिष्टस्यापदार्थतया तत्र भानं न स्यादत आह—तद्वैशिष्ट्यमिति । गोत्वादिजातिवैशिष्ट्यमित्यर्थः । युष्माकं—जरन्नैयायिकानां, पदार्थविधया—शक्तिज्ञानप्रयोज्यविषयतया, वाक्यार्थविधया—शक्तिज्ञानाप्रयोज्यविषयतया, तृतीयार्थोऽभेदो भासधात्वर्थे भानेऽन्वेति, किं न स्यात्—कथं न स्यात् । संस्थानवैशिष्ट्यस्याशक्यत्वे गौरवमेव विनिगमकमुद्भावयन्नुक्तशङ्कां निराकरोति न स्यादिति । न भवतीत्यर्थः । यत्र न स्यादितिपाठो नास्ति, तत्र प्रश्नवाक्यस्य नञर्थ एवाग्रिमहेतोरन्वयो बोध्यः । परम्परया—स्वाश्रयसमवेतत्वरूपपरम्परासम्बन्धेन । अशक्यत्वादिति । तथा च समवायान्तर्भावेण शक्तिकल्पनामपेक्ष्य गुरुशरीरनिरुक्तपरम्परासम्बन्धान्तर्भावेण शक्तिकल्पनाया अन्याय्यत्वादिति भावः । यद्यपि गोत्वादेः पृथक्शक्यत्वे तदनुपस्थितितिदशायां केवलाकृतिप्रकारकगवादिबोधः स्यात्, न स्याच्च केवलगोत्वादिप्रकारेण तद्बोध इत्येव दोषो जागर्त्ति, तथापि तत्र तत्रेष्टापत्तिसम्भवात्तन्नोक्तम् । न चैवम् सर्वविरोधः, अस्मन्मतसिद्धस्य केवलगोत्वप्रकारक-

रामभद्रीटीका ।

पृथक्शक्यत्वादेव । शङ्कते यदीति । एवं—जातिविशिष्टव्यक्तेः शक्यत्वे । ननु जातेः पृथक्शक्यत्वे गवादिपदात् तद्वैशिष्ट्यभानं न स्यात् अत आह—तद्वैशिष्ट्यं चेति । वाक्यार्थविधया—सम्बन्धमर्यादया, परम्परया—स्वारभ्यत्वादिसम्बन्धेन । तद्वैशिष्ट्यस्य भाने दूषणान्तरमाह—शक्यताया इति । जात्याकृतिविशिष्टव्यक्तेरिवाकृतिजातिविशिष्टव्य-

त्वनियमात्, शुद्धगोत्वादौ(१) तदयोगाच्चेत्याहुः।

मिथो वैशिष्ट्यविधुराभ्यां चन्द्रत्वसूर्यत्वाभ्यामवच्छिन्नैकशक्तिमतः पुष्पवन्तपदस्येव गोत्वसंस्थानप्रभेदाभ्यामेवावच्छिन्नैकशक्तिमतो गवादिपदस्यापि जात्यवच्छिन्नशक्तिमत्तया नैमित्तिकसंज्ञात्वेऽपि नौपाधिकसंज्ञात्वम्, सखण्डोपाधिमात्रावच्छिन्नशक्तिमत एव नाम्नस्तथात्वादिति वस्तुगतिः।

---

कृष्णकान्तीटीका।

गवानुभवस्य भवताऽऽस्वीकरणीयतयाऽनुभवापलापस्य तुल्यत्वात्। ननु गोत्वादिजातेः संस्थानगतत्वमते निरुक्तपरम्परासम्बन्धान्तर्भावेण शक्तिकल्पनमावश्यकमिति लाघवम्? अतस्तन्मतेऽपि लाघवमाह—शक्यताया इति। शक्तिविषयताया इत्यर्थः, अतो गोत्वादेः स्वरूपतः शक्तिविशेष्यतावच्छेदकत्वेऽपि न क्षतिः। किञ्चिद्धर्मावच्छिन्नत्वनियमादिति। आकाशादिपदशक्यतायाः शब्दाद्यवच्छिन्नत्वस्यासकृदावेदितत्वान्न व्यभिचार इति भावः। तदयोगादिति। शक्तिविशेषत्वासम्भवात्। आहुरित्यस्वरससूचनाय, स च सौत्रैकवचनोपादानवैयर्थ्यरूप इति।

अत एव स्वमतमाह मिथो वैशिष्ट्यविधुराभ्यामित्यादिना। एतत्तत्त्वमग्रे प्रदर्शयिष्यामः। संस्थानप्रभेदः—सास्ना। गवादीत्यादिना घटादिपरिग्रहः। नौपाधिकसंज्ञात्वमिति। तथा चोभयावच्छिन्नैकशक्तिलाभार्थं सौत्रमेकवचनमिति भावः। नन्वेवं गवादिपदस्य नैमित्तिकत्ववदौपाधिकत्वमपि स्यात्, इष्टापत्तौ च तेन रूपेण विभागव्याघातो मिथो विरुद्धधर्मस्यैव विभाजकत्वादतः सखण्डोपाधिमात्रावच्छिन्नशक्तिमत एव नाम्न औपाधिकत्वमाह सखण्डेति। तथा च कारिकायामुपाधिनेत्यस्योपाधिमात्रेणेत्यर्थः, तस्य सावधारणनिर्देशपरत्वात्। न च जात्येत्यस्य

रामभद्रीटीका।

त्रैरपि विनिगमकाभावात् शक्यत्वापत्तिः साम्प्रदायिकमतेऽत्र तु तन्नास्तीत्याशयेन प्राहुरित्युक्तम्।

संस्थानस्य पृथक्शक्यत्वाकल्पनेनापि गवादेरौपाधिकत्वव्युदाससम्भवात् उभयावच्छिन्न एकशक्तिलाभायैव सौत्रमेकवचनसार्थकमित्याशयेनाह—मिथ इति। पुष्पवन्तपदस्येति। एतत्तत्त्वमग्रे दर्शयिष्यामः। तथात्वात्—औपाधिकसंज्ञात्वात्, प्रकृते च संस्थानावच्छिन्नशक्तिमत्त्वेऽपि न तन्मात्रावच्छिन्नशक्तिमत्त्वं गोत्वेनाप्यवच्छिन्नत्वात्, एवं च कारिकायामुपाधिना इत्यत्र उपाधिमात्रेणेत्यर्थः इति भावः।

---

(१) तथा च, संस्थानगतवैजात्यापेक्षया गोत्वत्वस्य शक्यतावच्छेदकत्वेऽतिगौरवम्, गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपस्य तस्यानेकपदार्थघटितत्वादिति भावः।

सौत्रमाकृतिपदं न संस्थानपरं, परन्तु करणव्युत्पत्त्याऽऽकारनिरूपकार्थकं जातिव्यक्त्योः संसर्गपरमेव, अन्यथा समवायादेरपि सम्बन्धविधया गवादिपदशक्यत्वेन तदनुक्त्या मुनेर्न्यूनत्वापत्तेः। कादाचित्कस्तु(१) जातिसंस्थानाभ्यां गवादेरवगमो गवादिपदस्य जात्याकृतिविशिष्टे शक्तिभ्रमेण लक्षणया वा सम्पाद्य इति पुनर्न्यायरहस्येऽस्मद्गुरुचरणाः २३

लक्षकं नाम लक्षयति—

कृष्णकान्तीटीका।

जातिमात्रेणेत्यर्थपरतया विपरीतमेव किं न स्यादिति वाच्यम्। गवादिपदानां नैमित्तिकत्वस्य सकलसिद्धान्तसिद्धत्वेन तस्य तादृशव्याख्यानासङ्गतेः।

देवीपुत्रमतमाह सौत्रमिति। करणेति। आक्रियतेऽनेनेति व्युत्पत्त्या लौकिकप्रत्यक्षप्रयोजकतया संसर्गपरं, संसर्गस्य तत्प्रयोजकत्वञ्च विषयतया गुणत्वेन वेत्यन्यदेतत्। अन्यथा–सौत्राकृतिपदस्य संस्थानपरत्वे। समवायादेरपीति। अपिकाराज्जातिव्यक्तिपरिग्रहः। आदिना घटत्वादेः संस्थानगतत्वमते स्वाश्रयाश्रयसमवेतत्वपरिग्रहः। सम्बन्धविधया–शक्तिविशेष्यतावच्छेदकतावच्छेदकसम्बन्धविषयतया, तृतीयार्थोऽभेदः, तस्य शक्यत्वे ऽन्वयः, तथा च तादृशविषयतारूपगवादिपदशक्तिविषयत्वेनेत्यर्थः। तदनुक्त्या–समवायादिसम्बन्धस्य शक्यत्वानुक्त्या, मुनेर्गोतमस्य, न्यूनत्वापत्तेः–तद्विषयविस्मारकत्वापत्तेरित्यर्थः। नन्वाकृतेरशक्यत्वे जात्याकृतिभ्यां क्वापि गवादेरनुभवो न स्यादित्यत आह कादाचित्कस्त्विति। अवगमः–शाब्दबोधः। शक्तिभ्रमेणेति। यदा दोषादिघटितभ्रमसामग्री नास्ति, तदापि तादृशबोधस्यानुभवसिद्धत्वे त्वाह लक्षणया वेति। केचित्तु सर्वत्र भ्रमसामग्रीसत्त्वे मानाभावादाह लक्षणया वेत्याहुः। तत्तुच्छम्। यदा तादृशभ्रमसामग्री तदैव तादृशबोध इत्युक्तावपि कादाचित्कतादृशबोधोपपत्तेस्तादृशान्तरणिकाया असम्भवात्। न्यायरहस्ये–न्यायरहस्यनामकग्रन्थे ॥ २३ ॥

लक्षकमिति। क्रमप्राप्तमित्यादिः।

रामभद्राटीका।

संस्थानस्य पदार्थविधया शक्यत्वविरहेऽपि न क्षतिरित्याशयेनाह—सौत्रमिति। करणव्युत्पत्त्या–आक्रियतेऽनेनेतिव्युत्पत्त्या, अन्यथा–संसर्गस्याशक्यत्वे, मुनेर्गौतमस्य। नन्वेवं जातिसंस्थानाभ्यां गवादेरवगमो न स्यात् अत आह—क्वाचित्कस्त्विति। सर्वत्र भ्रमसामग्रीसत्त्वे मानाभावात् आह—लक्षणयेति ॥ २३ ॥

लक्षकमिति। क्रमप्राप्तमिति शेषः।

(१) क्वाचित्कस्त्विति राममद्रसंमतः पाठः।

(१)यादृशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत्।
तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदि॥ २४॥

यादृशनामार्थसम्बन्धवति यन्नाम सङ्केतितं तदेव तादृशार्थे लक्षकं यदि तादृशार्थे शक्तिशून्यं भवेत्। सैन्धवादयस्तु शब्दास्तुरगादिसम्बन्धिनि लवणादाविव तुरगादावपि शक्ता एव। गङ्गादयस्तु तीरादावस-

कृष्णकान्तीटीका।

विवृणोति यादृशनामार्थेति। यन्नाम यादृशानुपूर्व्यवच्छिन्नं नाम, तदेव—तादृशानुपूर्व्यवच्छिन्नमेव। तादृशार्थे शक्तिशून्यं भवेदिति। तथा च कारिकायां तच्छक्तिरित्यत्र तत्र शक्तिरिति सप्तमीतत्पुरुष इति भावः। तथा च यादृशानुपूर्व्यवच्छिन्नं नाम यादृशार्थनिरूपितशक्तिशून्यत्वे सति यादृशार्थसम्बन्धवन्निरूपितशक्तिमत् तादृशानुपूर्व्यवच्छिन्नं तन्नाम तादृशार्थे लक्षकम्। यादृशानुपूर्व्यवच्छिन्नं यद्धर्मविशिष्टनिरूपितशक्तिशून्यत्वे सति यद्धर्मविशिष्टनिरूपितसम्बन्धवन्निरूपितशक्तिनिरूपकं तद्धर्मप्रकारकतद्विशेष्यकबोधतादृशानुपूर्व्यवच्छिन्नं लक्षकमिति पर्यवसितम्। सत्यन्तस्य व्यावृत्तिमाह सैन्धवादयस्त्विति। आदिना हर्यादिशब्दपरिग्रहः। तुरगादीत्यादिना विष्णादिपरिग्रहः। लवणादावित्यादिना शुकभेकादिपरिग्रहः। तुरगादावित्यादिना विष्णादिपरिग्रहः। शक्ता एवेति। न तु तुरगादौ शक्तिशून्या इत्यर्थः, इति तुरगादौ न लक्षका इति शेषः। लक्ष्ये लक्षणं सङ्गमयति गङ्गादयस्त्विति। शब्दा इति शेषः। तीरादावसङ्केतिता इति। एतेन सत्यन्तदलसत्त्वमावेदितम्। इदं पुनरिहावधेयम्—कारिकायां 'शक्तन्तु यद्भवेदि'त्यत्र शक्तपदं सङ्केतितमात्रपरम्, अत एव विवरणे 'यन्नाम सङ्केतितमि'त्युक्तम्। एवं 'तच्छक्तिविधुरं यदी'त्यत्र शक्तिपदमपि सङ्केतमात्रपरम्। अत एव विवरणादौ तस्य तथात्वाप्रतिपादनेन न्यूनतां परिजिहीर्षुर्लक्षणसङ्गमनकाले 'तीरादावसङ्केतिता' इत्युक्तम्, अन्यथा 'तीरादावशक्ता' इत्येव वक्तुमुचितं स्यात्। न च विवरणे तस्य तथात्वाप्रतिपादनेऽपि सत्यन्तदलव्यावृत्तिदानग्रन्थे 'तुरगा-

रामभद्रीटीका।

यादृशेति। तीराद्यर्थसम्बन्धवति तीरादावित्यर्थः। तदेव—तन्नामैव, तत्रेत्यस्य वृत्तिस्तादृशार्थ इति। तच्छक्तिविधुरेत्यस्य व्यावृत्तिं दर्शयति—सैन्धवादय इति। तथा च तद्धर्मावच्छिन्नशक्तिशून्यत्वे सति यादृशार्थसम्बन्धवति शक्तिमत् यन्नाम तन्नाम तादृशार्थे लक्षकमिति भावः। लक्ष्ये लक्षणं योजयति गङ्गादय इति। तत्सम्बन्धीति। तीरादिसम्बन्धीत्यर्थः। गृहीताः—निश्चिताः—तत्र—तादृशार्थे, ते—गङ्गादिपदानि, तथा च गङ्गादिपदजन्यगङ्गातीराद्यन्वयबोधं प्रति गङ्गादिपदं तीरादिसम्बन्धिस्वशक्यकमित्या-

(१) मुख्यार्थशक्तिशून्यत्वे सति मुख्यार्थसम्बद्धार्थशक्तं नाम लक्षकमित्यर्थः।

ङ्केतितास्तत्सम्बन्धिनीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्ती-

कृष्णकान्तीटीका।

दावपि शक्ता एव' इति कथमुक्तमिति वाच्यम्। शक्तिपदस्य नित्यानित्यसङ्केतपरत्वेऽपि सैन्धवादिशब्दास्तुरगादौ नित्यसङ्केतनिरूपका इति वस्तुगतिमनुरुध्यैव तथोक्तेः। न चोभयत्र सङ्केतमात्रनिवेशनमफलमित्याशङ्कनीयम्, सत्यन्तदले तदनुक्तौ अन्यार्थशक्तं यत्पदं यादृशार्थे आधुनिकसङ्केतनिरूपकं तत्पदलक्षणया तादृशार्थस्य शाब्दबोधापत्तेः, न चेष्टापत्तिरनुभवविरोधात्, नद्यादिशक्तनद्यादिशब्दात् लक्षणया स्वीकृतेकारादिबोधस्य कैरप्यभियुक्तैरस्वीकारात्, किन्त्वाधुनिकसङ्केतेनैव तत्पदात्तद्बोधः, अन्यथा युगपद्वृत्तिद्वयस्वीकारप्रसङ्गात्। ननु गङ्गायां घोषमत्स्यौ स्त इत्यादौ तत्स्वीकार आवश्यक इति चेन्न। एकस्मिन्धर्म्मे सङ्केतविषयतावच्छेदकत्व-लक्ष्यतावच्छेदकत्वयोर्द्वयोः स्वीकारस्यैवायुक्तत्वात्, एवमेव हि चिन्तामणिना शब्दखण्डचिन्तामणौ प्रतिपादितम्, 'तन्निवेशेऽपि तत्पदस्य तादृशार्थे शक्तिशून्यत्वेऽपि आधुनिकसङ्केतवत्त्वात् तथापत्तिरत एव यादृशार्थे नित्यसङ्केतितोऽप्रसिद्धः तादृशार्थस्य केनापि पदेन बोधो न स्यात् सत्यन्तदलाप्रसिद्धेरि'त्यपि समाहितम्। एवं विशेष्यदले तदनुक्तौ आधुनिकसङ्केतमात्रनिरूपकचैत्रादिपदात् कस्याप्यर्थस्य लक्षणयाऽन्वयबोधो न स्यादिष्टापत्तावनुभवविरोधात्। न चैवं यन्नाम सङ्केतितमित्यस्याव्यावर्तकतापत्तिः, नाममात्रस्यैवाधुनिकसङ्केतनित्यसङ्केतान्यतरनिरूपकत्वादिति। विभक्त्यन्तवारणाय तदिति तु न देयं, नामपदेनैव तद्वारणसम्भवादिति वाच्यम्। एतन्निवेशप्रयोजनस्य 'एतेने'त्यादिना स्वयमेवाग्रे प्रदर्शनीयत्वादिति सम्प्रदायविदः। तन्न अपभ्रंशशब्दस्यापि लक्षकत्वापत्तेः। न च तदन्यत्वमपि निवेशनीयम्, अपभ्रंशस्यापि लक्षकत्वापत्त्याऽग्रे मतान्तरदूषणासङ्गतेः, तन्मतेऽपि तन्निवेशेनैवोपपत्तेः। वस्तुतस्तु विवरणे 'सङ्केतितमि'त्यस्येश्वरेत्यादिः, एवमग्रेऽपि। न च विवरणमनर्थकम्। शक्तेरतिरिक्तपदार्थत्वं पदसामर्थ्यरूपत्वं वा नेत्यावेदनायैव तथा विवरणात्। वस्तुगतिमनुरुध्येति कश्चित्। अत एव लक्षणसङ्गमनेऽपि 'तीरादावसङ्केतिता' इत्यभिधाय 'तच्छक्तौ'त्यत्रापि शक्तिपदस्यापीश्वरसङ्केतपरत्वमावेदितम्, अन्यथा यथाश्रुते गङ्गादिपदस्य तीरादावाधुनिकसङ्केतसम्भवात् लक्षणस्यासम्भवापत्तेः, 'सङ्केतित' इत्यस्याप्युन्मत्तप्रलपितत्वापत्तेश्च। न च नद्यादिशब्दात् स्वीकृतेकारादेरपि लक्षणया बोधापत्तिरिष्टापत्तौ च सङ्केतविषयतावच्छेदकत्वस्य लक्ष्यतावच्छेदकत्वस्य चैकस्मिन्धर्मे स्वीकारप्रसङ्ग इति वाच्यम्। एकधर्मे नित्यसङ्केतविशेष्यतावच्छेदकत्वलक्ष्यतावच्छेदकत्वयोः स्वीकारस्यादोषत्वात्।

रामभद्रीटीका।

कारकज्ञानत्वेन हेतुत्वं न तु तीराद्यशक्तत्वविषयकं तादृशज्ञानं हेतुर्गौरवात्। नचैवं गङ्गापदं गङ्गासम्बन्धिस्वशक्यकमित्यादिज्ञानादपि तादृशान्वयप्रसङ्गः। तद्धर्मावच्छिन्नसम्बन्धिनिः तद्धर्मावच्छिन्न भेदस्यापेक्षणीयत्वात्, गङ्गादौ च गङ्गादेर्भेदविरहादिति भावः। ननु

ति तत्र ते लक्षका एव । शक्तत्वे पूर्वपूर्वप्रयुक्तत्वापत्तेः, तस्य तद्व्या-

कृष्णकान्तोटीका।

न च यत्पदे शक्तिरप्रसिद्धा तत्र लक्षकत्वानुपपत्तिरिष्टत्वात् । अत एवापभ्रंशशब्दस्य लक्षकत्वापत्त्याऽग्रे मतान्तरदूषणमपि सङ्गच्छते । नामत्वनिवेशनमफलमिति तु न देश्यम् । नामभिन्नानामपि धातुविभक्त्यादीनां लक्षकत्वात्, तस्य नामत्वाव्याप्यतया तेन रूपेण नामविभागानुपपत्तेः, तद्धर्मव्याप्यस्यैव तद्धर्मावच्छिन्नस्य विभाजकतावच्छेदकत्वात्, अतो नामलक्षणाश्रयत्वरूपनानात्वस्य लक्षणविशेषणत्वम् । अन्यत् सर्वं पूर्ववदिति युक्तमुत्पश्यामः । लक्षणाग्रहकारणतावच्छेदककोटौ सत्यन्तदलं स्वरूपसन्निविष्टं, न तु ग्रहविषयतया, तथासति तथात्वेन ज्ञायमानाद् गङ्गापदादपि लक्षणया गङ्गाबोधसम्भवेन सत्यन्तदलस्याव्यावर्तकतापत्तेरित्यभिप्रायेण 'सङ्केतितत्वेन गृहीता'इत्यनुक्त्वा 'सङ्केतिता' इत्युक्तम् । नामत्वन्तु कारणतावच्छेदके न विशिष्टं, प्रयोजनाभावात्, विशेष्यदलन्तु ग्रहविषयतया निविष्टम्, इत्यभिप्रायेण ग्रहविषयतया विशेष्यदलमभिदधान एव लक्षणाग्रहकारणताबीजमन्वयव्यतिरेकं दर्शयति तत्सम्बन्धीति । तीरसम्बन्धीत्यर्थः । 'गृहीता एव' इत्येवकारेण तथाग्रहाविषयतीरान्वयबोधोपयोगित्वव्यवच्छेदः । योधयन्ति—विषयतया तादृशबोधजनकतावच्छेदका भवन्तीत्यर्थः । ज्ञायमानशब्दस्य कारणत्वमते यथाश्रुतमेव सम्यगिति । तत्र—तीरादौ, ते—गङ्गादिशब्दाः । तथा च गङ्गादिपदजन्यगङ्गातीरान्वयबोधं प्रति तीराशक्तत्वविशिष्टगङ्गापदत्वावच्छिन्नविशेष्यतानिरूपिततीरसम्बन्धस्वशक्यत्वप्रकारकताशालिज्ञानं हेतुरिति पर्यवसितः कार्यकारणभावः । केचित्तु सत्यन्तदलं कारणतावच्छेदके न निविष्टं, परन्तु गङ्गापदात् लक्षणया गङ्गाबोधवारणाय विशेष्यतासम्बन्धेन तादृशबोधं प्रति विशेषणतासम्बन्धेन गङ्गापदशक्यभेदस्य कारणत्वं कल्प्यते, तथा च गङ्गायां गङ्गादिपदशक्यभेदासत्त्वेन लक्षणया न तद्बोधापत्तिरित्याहुः । तन्मन्दम् । अतिरिक्तकार्यकारणभावस्वीकारे महागौरवापत्तेः, एवं द्रव्यादिपदस्य घटादौ लाक्षणिकत्वानुपपत्तेश्च घटादौ द्रव्यपदशक्यभेदासम्भवात्, द्वित्वाद्यवच्छिन्नभेदमादाय तद्दोषतादवस्थ्यवारणाय शक्यसामान्यभेदस्यैव निवेश्यत्वात् । न च भवन्मतेऽपि द्रव्यपदे घटादिनिष्ठद्रव्यत्वाव-

रामभद्रीटीका ।

गङ्गापदं तीरे शक्तं तीरार्थकत्वेन प्रयुक्तत्वादित्यनुमानादिना गङ्गापदस्य तीरादौ शक्तिरनुमेयेति लक्षणमिदमसम्भवीत्यत आह—शक्तत्व इति । तीरादिशक्तत्व इत्यर्थः । तस्य-शक्तत्वस्य । तदव्याप्यत्वात्—पूर्वपूर्वप्रयुक्तत्वव्याप्यत्वात्, तथाचोक्तानुमानं स्वरूपासिद्धमिति तीरादौ गङ्गादिपदस्य न शक्तिसाधकमिति भावः । यद्यपि गङ्गातीरत्वविशिष्टे गङ्गापदस्य पूर्वपूर्वप्रयुक्तत्वमस्त्येव, तथापि गङ्गात्वविशिष्टापेक्षया गङ्गातीरत्वविशिष्टे लक्षणैव लघुनो गङ्गात्वस्य शक्यतावच्छेदकत्वादिति ध्येयम् । शक्तमित्यस्य छलतो व्याच-

न्यत्वात् । कथञ्चित्तीरादिसम्बन्धित्वेन गृहीतादपि गङ्गादिपदात्तीरादे-

कृष्णकान्तीटीका ।

च्छिन्नशक्तिमत्त्वादुक्तदोषसम्भवः, तत्तद्धर्मावच्छिन्नशक्तिशून्यत्वनिवेशेन तद्दोषवार-णात्, तन्मतेऽपि स्वशक्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्य तत्त्वेन तादृशबोधं प्रति स्वशक्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदत्वेन हेतुत्वेऽतिरिक्तानां पदभेदेनाना-नन्तकार्यकारणभावानां स्वीकारेण महागौरवापत्तेश्च । न च भवन्मतेऽपि पदभेदेनान-न्तकार्यकारणभावस्वीकार आवश्यकः, अन्यथा पदान्तरजन्यतादृशतीरान्वयबोधे ग-ङ्गापदत्वावच्छिन्नविशेष्यकतीरादिसम्बन्धिस्वशक्यताज्ञानस्य व्यभिचारापत्तेरिति वा-च्यम् । तादृशकार्यकारणभावानन्त्यस्योभयत्र समानत्वेऽपि निरुक्तभेदत्वेनानन्तकार्य-कारणभावानां स्वीकारेण गौरवस्यातिरिक्तत्वात् कार्यकारणभावानन्त्यापेक्षया कल्-प्तकारणताया अवच्छेदकगुरुताया न्याय्यत्वादित्यस्तां विस्तरः । लक्षका एवेत्येवका रलब्धं शक्तत्वव्यवच्छेद्यं युक्त्या व्यवस्थापयति शक्तत्व इति । केचित्तु ननु गङ्गा-पदं तीरे शक्तं तदर्थकत्वेन वृद्धप्रयुक्तत्वात् इत्यनुमानात् तत्र तच्छक्तिः सेत्स्यतीत्यत आह शक्तत्व इति । तथा च तादृशानुमानं स्वरूपासिद्धमिति भाव इत्याहुः । तन्न, तथा सति पूर्वपूर्वप्रयुक्तत्वस्यैव तत्रासिद्धेरित्यस्यैव तत्रोचितत्वात् । न चापत्तौ बाधस्यानुगुणत्वात्तदापत्तिकथनेन तत्र तदभावस्य लाभात् तथाविधोक्त्यापि स्वरूपा-सिद्धिलाभसम्भव इति वाच्यम् । तेन हेतुना तत्र शक्यत्वसिद्धावेव शक्यत्वरूपापादकेन तदापत्तिर्भविष्यतीति तस्यासिद्धौ शक्यत्वासिद्ध्या तदापादकापत्त्यसम्भवात् तादृश ग्रन्थस्योक्तार्थतात्पर्यकत्वासम्भवात् । पूर्वपूर्वप्रयुक्तत्वापत्तेरिति । शक्तिभ्रमाज न्यलक्षणाग्रहाजन्यतीराद्यन्वयबोधजनकत्वापत्तेरित्यर्थः । तथाच यदि गङ्गापदं तीरशक्तं स्यात् तदा तादृशबोधजनकं स्यात् इत्यापत्त्या विपर्ययानुमानेन तत्र शक्तत्वाभावसि-द्धिरिति भावः । ननु शक्तत्वस्य तद्व्याप्यत्वाभावात्कथं तेन तदापत्तिरित्यत आह तस्येति । शक्तत्वस्येत्यर्थः । । तद्व्याप्यत्वात्—पूर्वपूर्वप्रयुक्तत्वात् । इद-मुपलक्षणम्—गङ्गात्वापेक्षया गङ्गातीरत्वस्य गुरुतया तद्धर्मावच्छिन्ने शक्तिकल्पनासम्भ-वः । नहि सम्भवति लघुधर्मे गुरुधर्मे शक्यतावच्छेदकत्वं कश्चिदुपैतीत्यपि द्रष्टव्यम् । अत एव 'तत्र पूर्वपूर्वप्रयुक्तत्वमिष्टमेवेत्युक्तौ न कोऽपि दोष' इत्यपि प्रयुक्तम् । कारि-कास्थशक्तमित्यस्य व्यावृत्तिमभिधान एव चिन्तामणिकृन्मतं दूषयति कथञ्चिदिति ।

स्वसम्बन्धिशक्तत्वरूपतीरसम्बन्धित्वेन गृहीतात् गङ्गापदात् तीरानुभवस्य सर्वसिद्धत्वात् कथञ्चिदित्युक्तम् , कालिकादिसम्बन्धित्वेनेति यावत् । गृहीतादि-त्यस्य तीराशक्तादिति शेषः । अन्वयाबोधेन—अन्वयबोधाननुभवनेत्यर्थः । तृतीया-

रामभद्रीटीका ।

र्त्तिं दर्शयन्नेव मणिकृन्मतं दूषयति कथञ्चिदिति । अन्वयाबोधेन—अन्वयाननुभवेन, तत्सम्बन्धितामात्रमिति । मात्रपदेन स्वशक्यांशव्यवच्छेदः । अन्वयाननुभवे

रन्वयाबोधेन तीराद्यशक्तत्वे सति तत्सम्बन्धितामात्रन्तु न लक्षणा, गङ्गागङ्गायां घोष इत्यादावपि गङ्गागङ्गेतिभागस्य निरुक्तलक्षणायाः सत्त्वेन वैयर्थ्याभावप्रसङ्गाच्च । एतेन 'तीराद्यशक्तत्वे सति तीरादिपरत्वे तीरादिपरत्वं तीरादिसम्बन्ध्यनुभावकत्वं वा तल्लक्षणकत्वमि'त्यपि प्रत्युक्तम्, अपभ्रंशस्यापि लक्षकत्वापाताच्च । न चेष्टापत्तिः, शक्तिलक्षणान्यतरवृ-

कृष्णकान्तीटीका ।

र्थंहेतुत्वस्य न लक्षणेत्यत्र नञर्थेऽन्वयः । तत्सम्बन्धिता—तीरसम्बन्धिता, मात्रपदेन स्वशक्यांशव्यवच्छेदः । निरुक्तान्वयबोधानुभवे विप्रतिपन्नं प्रत्याह—गङ्गागङ्गायामिति । निरुक्तेति । तीराशक्तत्वे सति तीरसम्बन्धितारूपलक्षणा इत्यर्थः । वैयर्थ्येति । अपार्थकत्वेत्यर्थः, शाब्दाजनकत्वमिति यावत् । अस्मन्मते च तादृशभागस्य वाक्यतया शक्तिविरहेण वैयर्थ्यसम्भवादिति भावः । ननु तत्सम्बन्धितामात्रमनिवेश्य तत्परत्वं तदनुभावकत्वमेव वा तत्र निवेश्यम्, तथा च गङ्गायामिति भागस्य तीरानुभावकत्वाभावात् न लक्षकत्वापत्तिरित्यतस्तदपि दूषयति एतेनेति । वक्ष्यमाणदोषेणेत्यर्थः । केचित्तु तेन उक्तस्थले गङ्गागङ्गामितिभागस्यावैयर्थ्यप्रसङ्गेनेत्याहुः । तन्न । वक्ष्यमाणनिरुक्तौ तादृशदोषस्यासम्भवात्, वक्ष्यमाणग्रन्थे चकारदानप्रसङ्गाच्च । ननु तत्परत्वं तत्प्रतीतीच्छयोच्चरितत्वं, तथा चोक्तस्थलवारणासम्भवः गङ्गागङ्गायामिति भागस्यापि तीरप्रत्यायनेच्छयोच्चरितत्वसम्भवात् । यदि च तत्प्रतीतीच्छयोच्चरितत्वे सति तत्सम्बन्ध्यनुभावकत्वम्, तदा सत्यन्तस्याव्यावर्तकतया विशेष्यदलमेव सम्यगित्यत आह—तीरादिसम्बन्ध्यनुभावकत्वं वेति । न च तदनुभावकत्वोक्त्यापि उक्तभागवारणसम्भवे सम्बन्ध्यंशनिवेशनमफलमिति वाच्यम् । तीरान्वयबोधात्पूर्वं तद्ग्रहासम्भवात् । अपभ्रंशस्यापीति । "गाच्माच्" प्रभृतिशब्दस्यापीत्यर्थः । तस्य वृक्षादावाधुनिकसङ्केतसत्त्वेन वृक्षाद्यनुभावकत्वादिति भावः । अपिकाराज्ञित्यसङ्केतशून्यचैत्रादिशब्दपरिग्रहः । शङ्कते न चेति । इष्टापत्तिरिति । तथा च तादृशापत्तिमूलकविपर्ययानुमानसम्भवित्वरूपसिद्धत्वादिति भावः । तस्य—अपभ्रंशादिशब्दस्य । साधुत्वापत्तेः—वृत्त्या शाब्दबोधजनकतापत्तेः । न च चन्द्रादिपदस्यापि वृत्त्यभावात् असाधुत्वापत्तिः, इष्टापत्तौ च तस्य

रामभद्रीटीका ।

विवादादाह—गङ्गागङ्गायामिति । निरुक्तेति । तीराद्यशक्तत्वे सति तत्सम्बन्धीत्यादिलक्षणासम्भवेनेत्यर्थः । प्रसङ्गाच्च स्वमते गङ्गागङ्गा इत्यस्य वाक्यत्वेन तत्र शक्तेरभावाद्वैयर्थ्यमिति भावः । एतेन—तद्वैयर्थ्याभावप्रसङ्गेन । तत्परत्वं तत्प्रतीतीच्छाजन्यतदुच्चरितविषयकानुभावकत्वं गुर्विति लाघवादाह—तीरादिसम्बन्धीति । अनुभावकत्वमनुभवजनकत्वम् । दूषणान्तरमाह अपभ्रंशस्येति । ननु पदसाधुतायां शक्ति-

त्तिमत्त्वे तस्य साधुत्वापत्तेः, पदसाधुतायां वृत्तिमत्त्वस्यैव तन्त्रत्वात् । किञ्चानुभावकत्वं यद्यनुभवस्योपाधायकत्वं, तदा घोषादिपदसाकाङ्क्षस्य

कृष्णकान्तीटीका ।

धर्म्मकर्मण्युपयोगो न स्यादसाधुत्वस्याविशेषादिति वाच्यम् । चैत्रादिशब्दस्यापि साधुत्वेऽपि धर्म्मकर्मण्युपयोगनिषेधाभावेन तत्रोपयोगात्, अपभ्रंशादिशब्दस्य तत्र निषेधसत्त्वेन तदनुपयोगात् । "साधुभिर्भाषितव्यमित्यादि" श्रुतौ साधुभिः पुरुषैरित्यस्य तत्र वक्तव्यत्वात् । वस्तुत इष्टापत्तिरिति, वृत्तिमत्त्वे–वृत्तिमत्त्वस्वीकारे, साधुत्वापत्तेः–प्रत्यवायजनकत्वोच्चारणकान्यत्वापत्तेः । इदं पदं यदि वृत्तिमत् स्यात् प्रत्यवायजनकत्वोच्चारणकान्यत् स्यादित्यापत्तेरिति यावत् । तत्र यथाश्रुतवृत्तिमत्त्वस्य चैत्रादिपदे आपाद्यव्यभिचारित्वात् वृत्तिमत्त्वं विशेषयति शक्तिलक्षणान्यतरेति । तथा च प्रकृते शक्तिलक्षणान्यतररूपवृत्तिमत्त्वस्य हेतुत्वेन चैत्रादिपदे हेत्वभावादेव न व्यभिचार इति भावः । आधुनिकसङ्केतस्य वृत्तिमत्त्वं नास्तीति न देश्यम्, वृत्त्या पदजन्यपदार्थोपस्थितेरेव शाब्दबोधजनकतया चैत्रादिपदे शाब्दजनकत्वानुपपत्तेः । अत एव "सङ्केतो लक्षणा चार्थे पदवृत्ति"रिति सामान्यतया गदाधरभट्टाचार्यलिखनमपि सङ्गच्छते । अत एव "साधुभिर्भाषितव्यं नापभ्रंशितवै न म्लेच्छितवै" इत्यादिश्रुतौ साधुभिरित्यस्य प्रत्यवायजनकत्वोच्चारणकान्यशब्दैरित्यर्थकत्वेऽपि न क्षतिः । न च 'नापभ्रंशितवै'इत्यादेरनाकाङ्क्षितत्वम्, कस्योच्चारणे प्रत्यवाय इत्याकाङ्क्षायामेव तदुक्तेरिति वयं सूक्ष्ममीक्षामहे । निरुक्तवृत्तिमात्रस्यापादकतया स्वयमनुक्त्वादापादकतानुक्त्या न्यूनतां परिहरन्नाह पदसाधुतायामिति । आपाद्यमानायामिति शेषः । वृत्तिमत्त्वस्य–निरुक्तवृत्तिमत्त्वस्य, तन्त्रत्वात्–आपादकत्वात् । केचित्तु 'आपाद्यमानायामि'ति न पूरयन्ति, तन्त्रत्वादित्यस्य प्रयोजकत्वादित्यर्थं वर्णयन्ति च । ननु अनुभावकत्वमनुभवोपधायकत्वं, तथा चापभ्रंशादिशब्दस्य तीराद्यनुभावकत्वाभावात् न लक्षकत्वापत्तिः, न वा निरुक्तवृत्तिसत्त्वेन च साधुत्वापत्तिरित्यत आह किञ्चेति । अथवाऽतिव्याप्त्यपेक्षयाऽसम्भवस्याधिकदोषतयाऽसम्भवमनुक्त्वाऽतिव्याप्तिदाने न्यूनता स्यादित्यतोऽनुभवत्वं वितर्क्य उपधायकत्वपक्षेऽसम्भवं योजयन् स्वरूपयोग्यत्वपक्षेऽतिव्याप्तिं योजयति किञ्चेति । केचित्तु शक्यत्वमेव पदसाधुताप्रयोजकं वाच्यं, तथा चापभ्रंशादिशब्दस्य न साधुत्वप्रसङ्ग इत्यत आह किञ्चेतीत्याहुः । तत्तुच्छम्, गङ्गायां घोष इत्यादौ गङ्गादिपदस्याप्यसाधुत्वापत्तेः, एवमाधुनिकसङ्केतनिरूपकसाधुचैत्रादिपदस्यापि, न चेष्टापत्तिरनुभवविरोधात्, अनुभवापलापे गङ्गादिपदस्य तीरादौ शक्तिस्वीकारेऽपि क्षत्यभावात्, पूर्वंपूर्वप्रयुक्तत्वस्यापि तन्त्रत्वादित्यलमनभिज्ञमतदूषणप्रयासेन । उपाधायकत्वमिति । स्वा-

रामभद्रीटीका ।

मत्वस्यैव प्रयोजकत्वं वाच्यं न तु वृत्तिमत्त्वं गौरवात् । तथा चापभ्रंशस्यापि लक्षकत्व-

गङ्गादिपदस्य तीरलक्षकता न स्यात्, तेन तीरसम्बन्धिनो नीरस्यानुभवानर्जनात्, स्वरूपयोग्यत्वन्तु गङ्गायामिति वाक्यस्य दुर्वारं, तस्याप्याधेयताधर्मिकनीरानुभवं प्रति नीरार्थकनामोत्तरसप्तमीत्वेन तथात्वात्, नीराधेयत्वस्य च तीरसम्बन्धित्वानपायात्।

---

कृष्णकान्तीटीका।

व्यवहितपूर्वत्वस्वजनकत्वोभयसम्बन्धेन तादृशानुभवविशिष्टत्वं, 'गङ्गायां घोषमत्स्यौ स्त' इत्यादौ मत्स्यादिपदसाकाङ्क्षगङ्गापदस्य तादृशानुभवोपाधायकत्वात्। घोषादिपदसाकाङ्क्षेति। तेनेति। घोषादिपदसाकाङ्क्षगङ्गादिपदेनेत्यर्थः। अनुभवानर्जनान्निरुक्तोभयसम्बन्धेन तादृशानुभवविशिष्टत्वाभावात्, तथा च तादृशगङ्गापदेऽव्याप्तिरिति भावः। स्वरूपयोग्यत्वन्त्विति। यद्यपि पूर्वोक्तगङ्गागङ्गेतिभाग एवाऽतिव्याप्तिः सम्भवति, गङ्गा इत्यानुपूर्व्यास्तीरसम्बन्धिगङ्गाबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदकतया तद्घटितविशिष्टानुपूर्व्या अपि तादृशजनकतावच्छेदकत्वात्। न च तादृशजनकतावच्छेदकतापर्याप्त्यधिकरणानुपूर्वीमत्त्वं तत्स्वरूपयोग्यत्वं वाच्यमिति वाच्यम्। तथा सति गङ्गायां घोष इत्यादौ गङ्गापदस्यापि लक्षकत्वापत्तेः, तादृशबोधजन्यतानिरूपितजनकताया घोष इत्यानुपूर्व्यामपि सत्त्वेन गङ्गा इत्यानुपूर्व्यास्तत्पर्याप्त्यनधिकरणत्वाभावात्। तथापि तीरादिसम्बन्धितत्तद्धर्मावच्छिन्नविषयकबोधत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकानुपूर्वीमत्त्वरूपस्वरूपायोग्यत्वनिवेशे तत्र नातिव्याप्तिः, गङ्गागङ्गेत्यानुपूर्व्या गङ्गात्वावच्छिन्नविषयकबोधत्वावच्छिन्नजन्यतानिरूपितजनकतानवच्छेदकत्वादतः स्थलान्तरेऽतिव्याप्तिमाह गङ्गायामिति। वाक्यस्यापीति। अपिकारात् गङ्गापदस्य समुच्चयः। एतेन तादृशबोधत्वावच्छिन्नजन्यता इत्यत्र बोधत्वे जन्यतावच्छेदकतायाः पर्याप्तिर्न निविष्टा, तन्निवेशे गङ्गापदेऽव्याप्त्यापत्तेरिति सूचितम्। तस्यापि—गङ्गायामिति वाक्यस्यापीत्यर्थः। तथात्वात्–जनकत्वात्। ननु तीरादिसम्बन्धिमुख्यविशेष्यकबोधे स्वरूपयोग्यत्वनिवेशे नैष दोषः, प्रकृते च तीरसम्बन्धिनो नीरस्याधेयत्वांशे प्रकारतया भानादित्यत आह नीराधेयत्वस्येति। तीरसम्बन्धित्वानपायादिति। तथा च लक्षणे यथाकथञ्चित्सम्बन्धेन स्वनिविष्टतया आधेयतायां तीरसम्बन्धिनीरस्य निरूपितत्वसम्बन्धस्यैव सत्त्वादिति भावः।

रामभद्रीटीका।

मिष्टमेवेति यदि ब्रूयात् तदाप्याह किञ्चेति। न स्यादिति। गङ्गायां घोष इत्यादाविति शेषः। तेन–गङ्गापदेन। तस्यापि–गङ्गायामित्यादिवाक्यस्यापि। आधेयतेति। सप्तम्यर्थेत्यादिः। अनुभवमन्वयानुभवम्। तथात्वात्—स्वरूपयोग्यत्वात्। अनपायादिति। तथाच वाक्ये शक्तिविरहेण लक्षणाप्रसक्तावपि वाक्यमपि लक्षकं स्यादिति भावः।

ननु वाक्यमपि लक्षकं भवत्येव, कथमन्यथा चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिनां बोधः ? कथं वा गभीरायां नद्यां घोष इत्यादौ गभीरनदीतीरस्य ? न हि तत्र नदीपदं तीरलक्षकं, गभीरायामित्यस्यानन्वयापत्तेः, न हि तीरं गभीरं, नापि गभीरपदं तथा, नद्यामित्यस्यानन्वयापत्तेः, न हि तीरं नदी, तस्माद्वाक्यमेव तत्र गभीरनदीतीरलक्षकमिति मीमांसकाः ।

---

कृष्णकान्तीटीका ।

दूषिते चिन्तामणिकृन्मते मीमांसकः शङ्कते नन्विति । गङ्गायामित्यादिवाक्यस्यापीत्यर्थः । लक्षकं भवत्येवेति । शक्तिविरहस्य लक्षणभावानियतत्वादिति भावः । वाक्यस्य लक्षकत्वं युक्त्या द्रढयति कथमन्यथेति । अन्यथा—वाक्यस्यालक्षकत्वे । चित्रगुसमुदायस्येति । तद्घटकपदयोरन्यतरस्य लक्षणास्वीकारे एकतरस्य वैयर्थ्यापत्तेरिति भावः । बोधः—शब्दबोधः, तथा च वाक्ये न लक्षणा इति नियम उक्तस्थल एव व्यभिचारादिति भावः । ननु व्यभिचारभिया समासातिरिक्तवाक्ये न लक्षणा इत्येव वा नियमोऽस्तु, अन्यथा वाक्यमात्रस्य लक्षतास्वीकारे शक्तेरपि स्वीकारप्रसङ्गः, अनुभवापलापस्य तुल्यत्वात् इत्यत आह कथं वेति । गम्भीरनदीतीरस्येति बोध इति पूर्वेणान्वयः । शङ्कते न हीति । तत्र—निरुक्तस्थले, तीरलक्षकमिति । गभीरनदीत्यादिः । समाधत्ते गभीरायामित्यस्येति । अन्वयापत्तेरिति । उद्देश्यतावच्छेदकविधेययोरैक्येन गभीरनद्यां गभीरत्वस्यान्वयासम्भवादिति भावः । ननु गभीरनदीतीर एव गभीरत्वान्वयसम्भव इत्यत आह न हीति । तीरमिति । गभीरनदीत्यादिः । गभीरमिति । तथा चायोग्यत्वान्न तत्रापि तदन्वयसम्भव इति भावः । पुनः शङ्कते नापीति । तथा—गभीरनदीतीरलक्षकम्, अनन्वयापत्तेः—अयोग्यत्वापत्तेः । ननु तादृशतीर एव नद्या अभेदान्वयो वाच्य इत्यत आह नहीति । तीरं—गभीरनदीतीरम् । नदीति । तथा चायोग्यत्वान्न तत्र तदन्वयसम्भव इति भावः । उपसंहरति तस्मादिति । उक्तस्थले गभीरनदीतीरान्वयबोधानुपपादनादित्यर्थः । वाक्यमेवेत्येवकारेण तद्घटकपदान्तरव्यवच्छेदः । तत्र—उक्तस्थले । मीमांसका इति । वदन्तीति शेषः ।

कृष्णकान्तीटीका ।

तदपि लक्षकं भवत्येवेत्याशयेन शङ्कते नन्विति । ननु वाक्ये शक्तिविरहेण न लक्षकतेति नियमः समासातिरिक्तस्थल एवाभ्युपेय इत्यत आह कथं वेति । गभीरनदीतीरस्येति, बोध इति पूर्वमनुषज्यते । तीरलक्षकमिति । गभीरनदीत्यादिः । एवमग्रेपि । ननु गभीरपदार्थस्य तीरेण सहाभेदान्वयो वाच्य इत्यत आह नहि तीरं गभीरमिति । बाधादिति शेषः ।

तत्र, गभीरायां नद्यामिति विभक्त्यन्तभागस्य तादृशतीरलक्षकत्वे घोषादावाधेयत्वेन तदन्वयानुपपत्तेः, समासादन्यत्र नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वात् । एतेन तादृशतीरवृत्तितायामेव तद्भागस्य लक्षणयापि न निस्तारः, तादृशतीरवृत्तेश्च लक्ष्यत्वे घोषादावभेदेन तदन्वयायोगात्, समासभिन्नस्थले नामार्थयोरभेदान्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वात् ।

---

कृष्णकान्तीटीका।

दूषयति तन्नेत्यादि । तादृशतीरलक्षकत्वे-गभीरनदीतीरलक्षकत्वे, आधेयत्वेन—आधेयतासम्बन्धेन, तदन्वयानुपपत्तेः—तादृशतीरान्वयानुपपत्तेः । अन्वयानुपपत्तौ हेतुमाह समासादन्यत्रेति । स्वमते राजपुरुष इत्यादौ राजसम्बन्धवान् पुरुष इति बोधस्य स्वीकर्तव्यत्वात समासादन्यत्रेति, अत एव 'समासव्यासयोस्तुल्यार्थकत्वमि'ति प्राचीनप्रवादः सङ्गच्छते । अत एव च 'राजपुरुष इत्यादौ राजपदस्य राजसम्बन्धे लक्षणा' इति चिन्तामणिकृतः । एतेन-समासादन्यत्र नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वेन, तादृशतीरवृत्तितायां-नदीतीरवृत्तितायाम्, एवकारेण तादृशतीरव्यवच्छेदः, तद्भागस्य-गभीरायां नद्यामितिभागस्य, निस्तारः—गभीरनदीतीरवृत्तिघोष इति शाब्दोपपत्तिः । ननु गभीरनदीतीरनिष्ठतद्भागस्य लक्षणा, तस्य च घोषेऽभेदसम्बन्धेनान्वयो वाच्यः, तथा च नोक्तव्युत्पत्तिविरोधः तथाविधभेदान्वयस्यैवाव्युत्पन्नत्वादित्यतस्तदपि दूषयति तादृशेति । गभीरनदीतीरनिष्ठस्येत्यर्थः । लक्ष्यत्वे-लक्ष्यत्वस्वीकारे, तदन्वयायोगात्-गभीरनदीतीरनिष्ठस्यान्वयायोगात । नीलोत्पलमित्यादिकर्मधारयस्थले नाम्नोः समानविभक्तिकत्वाभावेऽपि अभेदान्वयबोधदर्शनात् उक्तं समासभिन्नस्थल इति । समानविभक्तिकत्वस्य-स्वोत्तरविभक्तिसजातीयविभक्तिमत्त्वस्य, तन्त्रत्वात-प्रयोजकत्वात । प्रयोज्यप्रयोजकभावश्च विशेष्यतया तादात्म्येन तदर्थप्रकारकान्वयबोधं प्रति तदर्थकनामोत्तरविभक्तिसजातीयविभक्त्यन्तसमासघटकनामोपस्थाप्यत्वस्य प्रयोजक-

रामभद्रीटीका।

तादृशतीरलक्षकत्वे—गभीरनदीतीरलक्षकत्वे । तदन्वयानुपपत्तेः—तादृशतीरान्वयानुपपत्तेः । स्वमते राजपुरुष इत्यत्र राजसम्बन्धवान् पुरुष इत्याकारकभेदान्वयस्वीकारादुक्तं समासभिन्नेति । अत एव 'राजपुरुष इत्यत्र राजसम्बन्धे न लक्षणे'ति चिन्तामणिकृतः । एतेन—समासादन्यत्र नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वेन । तद्भागस्य—गभीरायां नद्यामिति विभक्त्यन्तभागस्य । नीलोत्पलमित्यादिकर्मधारये नाम्नोः समानविभक्तिकत्वाभावात् उक्तं समासादन्यत्रेति । अन्वयानुपपत्तेरिति । प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति व्युत्पत्तेरिति भावः । स भागः—गभीरायां नदीति

न च गभीरायां नदीतिभागस्यैव तादृशतीरलक्षकत्वम्, तदर्थे विभक्त्यर्थस्यानन्वयापत्तेः, नहि स भागः प्रकृतिर्येन तदर्थे विभक्त्यर्थस्यान्वयः स्यात्, गभीरायां नदीं व्रजेत्यादितोऽपि गभीरनदीतीरकर्मकत्वादिबोधापत्तेस्तद्भागस्य

---

कृष्णकान्तीटीका।

त्वमिति रीत्या निर्वाच्यः। शङ्कते न चेति। तादृशतीरेति। गभीरनदीतीरेत्यर्थः। तथा च सप्तम्यर्थाधेयत्वे तादृशतीरस्य निरूपकताऽन्वयेनाधेयत्वस्य घोषादौ स्वरूपसम्बन्धेनान्वयेन च विशिष्टबोधोपपत्तेरिति भावः। दूषयति तदर्थ इति। गभीरायां नदीति भागार्थे, गभीरनदीतीरे इत्यर्थः। विभक्त्यर्थस्येति। विशेष्यतयेत्यादिः। आधेयत्वरूपविभक्त्यर्थस्येत्यर्थः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेरिति भावः। ननु तद्भागस्य प्रकृतित्वेनोक्तव्युत्पत्तिविरोध इत्यत आह न हीति। स भागः—गभीरायां नदीतिभागः, प्रकृतिः—प्रकृतिलक्षणाश्रयः, तादृशतीरवृत्त्याधेयत्वबोधे सप्तमीविभक्तिधर्मिक'गभीरायां नदी'तिभागनिश्चयत्वेन हेतुताया अप्रामाणिकत्वेन "स्वोपस्थाप्ययादृशान्वयबोधं प्रति अव्यवहितोत्तरत्वसम्बन्धेन यादृशशाब्दनिश्चयो हेतुस्तस्य तादृशार्थे प्रकृतित्व"मित्युक्तप्रकृतिलक्षणस्य तत्रागमनादिति भावः। तदर्थे—तादृशभागार्थे। विभक्त्यर्थस्येति। आधेयत्वस्येत्यादिः। अन्वयः स्यात्—अन्वयबोधः स्यादिति। ननु विभक्त्यर्थधर्मिकतादृशशाब्दनिश्चयत्वेन हेतुताया अप्रामाणिकत्वमेवाप्रामाणिकं, निरुक्तशाब्दबोधान्यथानुपपत्तेरेव तत्प्रमाणत्वात्, अन्यथा 'कण्ठेकाला'दिशब्दानामपि प्रकृतित्वं न स्यात्, इष्टापत्तावनुभवविरोधादित्यत आह गभीरायां नदीं व्रजेति। बोधापत्तेरिति। तस्य प्रकृतित्वेन तदुत्तरं प्रत्ययो न जायते इत्यस्य तदर्थे विभक्त्यर्थान्वयो न सम्भवतीत्यस्य च वक्तुमशक्यत्वादिति भावः। ननु भवन्मतेऽपि कथं न तादृशबोधः, तस्यालक्षकत्वेऽपि तद्घटकपदानामन्यतमस्य लक्षणासम्भवात्, पदान्तरस्य तादृशार्थतात्पर्यग्राहकत्वकल्पनात्, अन्यथा गभीरायां नद्यां घोष इत्यादावपि शाब्दबोधो न स्यात्। न चास्मन्मते तस्य प्रकृतित्वाभावात् तदुत्तरममादिप्रत्यय एव न जायते इति तु न देश्यम्, तादृशभागस्य प्रकृतित्वाभावेऽपि तद्घटकनदीशब्दस्य प्रकृतित्वानपायादित्यत आह तद्भागस्येति। गभीरायां नदीमिति भागस्य, गभीरनदीतीरकर्मत्वबोधे व्रजेतिभागस्यानुपयुक्तत्वात् समुदायानुक्तिः। वाक्यादन्यत्वात्—मिथःसाकाङ्क्षशब्दान्यत्वात्, मिथो निराकाङ्क्षत्वादिति यावत्। न चास्मन्मतेऽपि तस्य निराकाङ्क्ष-

रामभद्रीटीका।

भागः। प्रकृतिरिति। स्वोपस्थाप्ययादृशान्वयबोधम् प्रति स्वाव्यवहितोत्तरत्वसम्बन्धेन यादृशशब्दनिश्चयो हेतुस्तादृशार्थे प्रकृतित्वात् इति भावः। तादृशभागस्य कण्ठेकाल इत्यादिवत् प्रकृतित्वेऽपि दूषणमाह गभीरायामिति। ननु गभीरायां नदीति भागस्य

वाक्यादन्यत्वाच्च, तस्माद्गभीरापदं नदीपदं वा तत्र गभीरनदीतीरलक्षकं, पदान्तरन्तु तत्र तात्पर्य्यग्राहकमिति सिद्धान्तविदः ।

---

कृष्णकान्तीटीका ।

स्वकल्पनान्नैतादृशबोधापत्तिरिति वाच्यम् । तादृशभागस्य लक्षकत्वेन प्रकृतित्वेन निराकाङ्क्षत्वकल्पनायोगात्, तद्घटकपदानां प्रत्येकं साकाङ्क्षत्वे समुदायस्य निराकाङ्क्षत्वासम्भवात्, व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदस्यानभ्युपगमात् । न च निरा- ३
काङ्क्षत्वमाकाङ्क्षाशून्यत्वं, तस्य तादृशसमुदायत्वावच्छिन्ने कल्पने बाधकाभावः, फलबलेन गभीरायां नद्यां घोष इत्यादौ प्रत्येकधर्मावच्छेदेनेव तादृशसमुदायत्वावच्छिन्नेऽपि साकाङ्क्षत्वस्वीकारात्, अत्र फलविरहेण तदकल्पनादिति वाच्यम् । तथा सति योग्यतादेः शाब्दं प्रत्यहेतुत्वापत्तेः, वह्निना सिञ्चतीत्यादौ वह्नौ सेककरणत्वान्वयबोधाभावेन तादृशसमुदायत्वावच्छिन्ने निराकाङ्क्षत्वकल्पनासम्भवात्, अत्यन्ताभावरूपनिराकाङ्क्षत्वस्य तद्घटकपदानां प्रत्येकेन साकाङ्क्षत्वसत्त्वेऽपि तादृशसमुदायत्वावच्छिन्ने सम्भवादव्याप्यवृत्तित्वात् फलोत्पादानुत्पादयोस्तत्राकिञ्चित्करत्वात्, घटं करोतीतिवत् घटं यतते इतिप्रयोगवारणायाऽगत्या तथात्वस्य सर्वैरेव स्वीकारात्, निराकाङ्क्षभेदरूपत्वाच्च न किञ्चिदेतत् । केचित्तु ननु गभीरायां नदीतिभागस्य वाक्यत्वेन शक्तिविरहात् अशक्तस्य च लक्षकत्वासम्भवात् न लक्षणया तादृशबोधापत्तिरित्यत आह तद्भागस्येति । गभीरायां नदीतिभागस्य, वाक्यादन्यत्वात्—मिथः—साकाङ्क्षशब्दव्यूहस्यैव वाक्यत्वात् इति भाव इत्याहुः । तत्तुच्छम् । वाक्यस्य लक्षतास्वीकर्तृमीमांसकमते वाक्ये शक्त्यभावाशङ्काया एवानवतारात् । इदानीं चिन्तामणिकृन्मतावलम्बनेन शक्तिशून्यत्वस्य लक्षणाविरहासम्पादकत्वाच्च वाक्यमपि लक्षकं भवत्येवेत्याशङ्किनां मीमांसकानां वाक्यत्वेनालक्ष्यत्वाशङ्कया महोन्मत्तप्रलपितत्वाच्चेत्यलमनभिज्ञमतदूषणप्रयासेन । उपसंहरति तस्मादिति । ननु गभीरपदस्य लक्षणा नदीपदं तात्पर्यग्राहकं, किं वा नदीपदस्य लक्षणा गभीरपदं तात्पर्यग्राहकमित्यत्र विनिगमनाविरह इत्यत आह नदीपदं वेति । तत्र—गभीरायां नद्यां घोष इति वाक्ये, घटकत्वं सप्तम्यर्थः, तथा च तादृशवाक्यघटकं गभीरपदं नदीपदं वेत्यर्थः । पदान्तरं—लक्षकेतरपदम् । तत्र—तादृशवाक्यार्थे, तात्पर्यग्राहकं प्रकरणादिग्राहकं वा इति शेषः । अतस्तद्धेतोरेव तत्सिद्धौ 'किमन्तर्गडुना' इतिन्यायेन स्वमते तात्पर्यज्ञानस्याहेतुत्वेऽपि न क्षतिः ।

रामभद्रीटीका ।

वाक्यत्वेन शक्तिविरहात् लक्षणया तादृशतीरकर्मत्वादिबोधोऽनुपपन्न इत्यत आह—तद्भागस्येति । तथाच मिथःसाकाङ्क्षशब्दस्तोमस्यैव वाक्यत्वात् गभीरायां नदीत्यादेर्निराकाङ्क्षतया वाक्यत्वविरहेण तादृशबोधापत्तेर्दुर्वारत्वादिति भावः । नन्वेवं तत्र गभीरनदीतीरान्वयबोधो न स्यादत आह—तस्मादिति ।

चटचटाद्यनुकरणस्य, हुंफट् हुवा ३ दिस्तोभस्य,(१)च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव, गौर्वाहिक इत्यादौ तु शक्यार्थसदृशत्वावच्छिन्नबोधकतया गौणं गवादिपदं गोसदृशादौ लक्षकमेवास्तु, न तु ततो लक्षकाद्भिद्यते ।

स्यादेतत्, 'मुखं विकसितस्मित'(२)मित्यत्र विकसितपदेन विस्तृता-

कृष्णकान्तीयटीका

ननु 'चटचटे'त्याद्यनुकरणशब्दानां स्वरूपार्थबोधकता न स्यात्, तेषु शक्त्यभावेन लक्षणाया अप्यसम्भवात् चटचटादिशब्दे कदाचिदाधुनिकसङ्केतसम्भवादाह हुं फडिति । स्तोभस्य—मन्त्रैकदेशस्य, स्वानुभावकत्वं—स्वरूपानुभावकत्वम् । अपभ्रंशानामिति । आधुनिकसङ्केताग्रहदशायामित्यादिः । अतोऽपभ्रंशादिशब्दस्याधुनिकसङ्केतेन स्वार्थानुभावकत्वेऽपि न क्षतिः । न चापभ्रंशशब्दादौ आधुनिकसङ्केतोऽपि नास्तीति वाच्यम् । पारसिकादिशब्दानां तत्स्वीकारे तुल्ययुक्त्याऽपभ्रंशादिशब्दे तत्स्वीकारस्यावश्यकत्वात् । न च पारसिकादिशब्देऽपि आधुनिकसङ्केतो न मन्यत इति वाच्यम् । चैत्रादिपदानामिव पारसिकादिशब्दानां सङ्केतवत्त्वाविशेषेण धर्मकर्मणि उपयोगः स्यादित्यादिना पूर्वमेव स्वयं लिखितत्वात् । शक्तिभ्रमादेवेत्येवकारेण शक्तिप्रमाव्यवच्छेदः । ननु नाम्नश्चतुर्धाविभागोऽसङ्गतः, गौर्वाहिक इत्यादौ गवादिनाम्नो रूढाद्यतिरिक्तस्य सत्त्वादित्यत आह गौर्वाहिक इति । शक्यार्थसदृशत्वावच्छिन्नबोधकतयेति । तथा च गवादिपदस्य वहनकर्तृसदृशात्मकसम्बन्धवति शक्तत्वेन लक्षणायाः सुवचत्वादिति भावः । ततो लक्षकाद्भिद्यत इति । तथा च न नाम्नश्चतुर्धाविभागव्याघात इति भावः ।

लक्षणामूलव्यञ्जनावृत्तिवादिनामालंकारिकाणां मतं दूषयितुमुपन्यस्यति स्यादेतदिति । गौणं नाम लक्षकान्तर्गतं स्यादित्यर्थः । विकसितस्मितमिति ।

रामभद्रीटीका ।

ननु 'चटचटादि'शब्दानां स्वरूपार्थबोधकत्वं न स्यात् तेषु शक्तिलक्षणयोरसत्त्वादत आह—चटचटेत्यादि । स्तोभस्य—मन्त्रैकदेशस्य, स्वानुभावकत्वं—स्वस्वरूपार्थानुभावकत्वम् ।

लक्षणामूलव्यञ्जनावृत्तिवादिनामालङ्कारिकाणां मतं दूषयितुं उपन्यस्यति स्यादेतदि-

(१) हुं मिति क्रोधबीजं,—"क्रोधाख्यो हुं तनुत्रञ्च शस्त्रादौ रिपुसंज्ञक" इत्युक्तेः । फट् अस्त्रबीजं,—"फडस्त्रं शस्त्रमायुधं" इति बीजाभिधानात् । स्तोभाः—सामगीतिपूरणार्थानि अक्षराणि, हावु हावु हावु इत्यादीनि । इति छान्दोग्यादौ स्पष्टम् ।

(२) "मुखं विकसितस्मितं वशितवक्रिम प्रेक्षितं, समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं, बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ इति पूर्णश्लोकः ।

श्लक्षणया मुखस्य प्रकटितस्मितवत्तामनुभाव्योत्तरकाले कुसुमतुल्यसौरभादिमत्त्वं तस्य लक्षणामूलव्यञ्जनया वृत्त्या बोध्यत इति रूढादिवद्व्यञ्जकमपि शब्दान्तरमास्थेयम् । न हि तत्र विकसितादिपदं कुसुमसदृशादौ रूढमसङ्केतितत्वात्, नापि यौगिकं स्वावयववृत्त्या तदप्रापक-

---

कृष्णकान्तीटीका ।

विकसितं स्मितं यत्रेति बहुव्रीहिः, न तु विकसितञ्च तत् स्मितञ्चेति कर्मधारयः, 'प्रकटितस्मितवत्तामनुभाव्य' इत्युत्तरग्रन्थासङ्गतेः । विकसितपदेन प्रफुल्लस्यैव बोधनादाह विस्तृतार्थलक्षणयेति । सामान्यतः प्रकाशविशिष्टे लक्षणया इत्यर्थः । "विस्तृतं विस्तृतं ततमि"त्यमरकोषात् । न च विकसितपदेन शक्त्यैव सामान्यतः प्रकाशाश्रयबोधसम्भवात् कथं लक्षणास्वीकार इति वाच्यम् । विकसितशब्दस्य पुष्पविकासाश्रयशक्तेः, अत एव "प्रफुल्लोत्फुल्लसम्फुल्लव्याकोपविकचस्फुटाः, फुल्लश्चैते विकसिते" इत्यनेन विकसितशब्दस्य फुल्लादिशब्दैरेकपर्यायत्वं प्रतिपादितम् । न च विकसितेत्यस्य वाक्यत्वात् कथं तत्र लक्षणासम्भव इति वाच्यम् । न हि विकसितपदस्य लक्षणेत्युक्तम्, किन्तु लक्षणयाऽनुभावकत्वमुक्तम्, लक्षणा तु कसधातोरेवेत्यत्रैव ग्रन्थकर्तुस्तात्पर्यात् । न च विस्तृतार्थलक्षणया इत्यसङ्गतम्, तत्र लक्षणास्वीकारे क्तप्रत्ययस्यानर्थक्यापत्तेरिति वाच्यम् । विस्तृतार्थलक्षणया इत्यस्य विस्तारार्थलक्षणया इत्यर्थकत्वात्, भावे क्तप्रत्ययात् । वस्तुतो विस्तृतार्थेति सप्तमीतत्पुरुषसमासात् विस्तृतघटकीभूतार्थे विस्ताररूपे लक्षणेत्यर्थः, अत एवार्थपदप्रयोगः, स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वादिति न किञ्चिदनुपपन्नम् । केचित्तु आलङ्कारिकैर्वाक्ये लक्षणास्वीकारात् तन्मतानुसारेणेदमुक्तमित्याहुः । तन्न, विकसितपदस्यासङ्केतितस्याग्रे एतन्मध्य एव वक्ष्यमाणत्वात्, न ह्यसङ्केतितं लक्षकं भवति । लक्षणामूलेति । लक्षणा मूलं सहकारि यस्येति बहुव्रीहिः । विशिष्टान्वयबोधे पदान्तरलक्षणाया अपि सहकारित्वात् । शब्दान्तरं रूढिचतुष्टयभिन्नम्, आस्थेयं स्वीकार्यं, नाम्नश्चतुर्धाविभागव्याघात इति शेषः । शङ्कते नहीति विकसितादिपदमित्यादिना स्मितपदपरिग्रहः । रूढ़—रूढ़लक्षणाश्रयः । असङ्केतितत्वादिति । रूढलक्षणस्य शक्तिघटितत्वादिति भावः । स्वावयववृत्त्या—कसधातुक्तप्रत्ययादिश-

रामभद्रीटीका ।

त्यादि । तस्य—मुखस्य, शब्दान्तरं—रूढादिचतुष्टयभिन्नम्, आस्थेयमिति स्वीकार्यमित्यर्थः । तथाच तस्याविभजनान्न्यूनत्वमिति भावः । असङ्केतितत्वादिति । अत एव न योगरूढमपि अवयवार्थसहकारेणार्थशक्तिमत्पदस्यैव तत्त्वादिति हृदयम् । तदप्रापकत्वात्—

त्वात्, नवा लक्षकम् उपस्थितार्थान्वयानुपपत्तिधीरूपस्य लक्षणाबीजस्य तत्रासत्त्वादित्यालङ्कारिका वदन्ति ।

तत्र अन्वयानुपपत्तिज्ञानस्य लक्षणाबीजत्वं हि न तज्जनकत्वं शक्यसम्बन्धात्मिकाया लक्षणाया(१)स्तदजन्यत्वात्, नापि तज्ज्ञापकत्वं मुख्यार्थान्वयानुपपत्तिज्ञानमन्तरेणापि प्रमाणान्तरेण तद्ग्रहसम्भवात्, अत

कृष्णकान्तीटीका ।

स्या, तदप्रापकत्वात्—कुसुमसदृशाबोधकत्वात् । अत एव योगरूढमपि नात्रयवार्थसहकारेण शक्तिमत्पदस्यैव तथात्वादिति हृदयम् । न वा लक्षकमिति । सकलप्रथमान्तपदेन कुसुमसदृशादावित्यस्य सम्बन्धो बोध्यः । तत्र—मुखं विकसितस्मितमित्यत्र । अक्षत्वादिति । हास्ये विस्तृतत्वस्य, मुखे तादृशहास्यवत्त्वस्य च बोधितत्वादिति भावः । इतीति इत्यनुपपत्तिमित्यर्थः । तत्र-नाम्नश्चतुर्धा विभजने ।

ननु विकसितपदं कुसुमसदृशादौ लक्षकमेव विकसित इत्यस्याङ्कितत्वेऽपि तत्र तद्बुद्धकसधात्वादीनां लक्षणास्वीकारे बाधकाभावादित्याशयेनोपस्थितार्थान्वयानुपपत्तेर्लक्षणाबीजत्वं वितर्क्य दूषयति तत्रेत्यादि । बीजत्वं हि—तादृशबीजशब्दप्रतिपाद्यत्वं हीत्यर्थः । हि—यस्मात्, लक्षणाया ज्ञानरूपत्वे तज्जनकत्वं कदाचित् सम्भाव्येत इत्यत आह शक्यसम्बन्धात्मिकाया इति । तस्या—लक्षणायाः, तदजन्यत्वादुपस्थितार्थान्वयानुपपत्त्यजन्यत्वात्, अनुपपत्तेः प्रतियोग्यनुयोगिभिन्नत्वादिति भावः । तज्ज्ञापकत्वं-तज्ज्ञानजनकज्ञानविषयत्वम् । मुख्यार्थान्वयेति । शक्यार्थान्वयेत्यर्थः । प्रमाणान्तरेणेति । गङ्गापदं गङ्गातीरलक्षकं तच्छक्तिशून्यत्वे सति तत्प्रतिपादकगङ्गापदत्वात् इत्यनुमानेऽन्वयदृष्टान्ताभावे शक्तिभ्रमाधीनतीरान्वयबोधजनके गङ्गापदे व्यभिचारसम्भवेऽपि तच्छक्तिभ्रमाजन्यशाब्दजनकज्ञानविशेषविषयत्वस्य हेतुत्वे दोषाभावादिति भावः । तद्ग्रहसम्भवात्-लक्षणाग्रहसम्भवादित्यर्थः । अत एव-व्यभिचारादेव । केचित्तु अत एवान्वयानुपपत्तिज्ञानं विना लक्षणाग्रहसम्भवादेवेत्यर्थं इत्याहुः । तत्तुच्छम्, लक्षणाग्रहव्यभिचारस्य तात्पर्यग्रहहेतुत्वाविघटकतयोपष्टम्भासङ्गतेः । तात्पर्यग्राहकत्वं—तात्पर्यग्रहजनकज्ञानविषयत्वं प्राक् सूचितम् । व्यभिचारमेव स्पष्टयति

रामभद्रीटीका ।

कुसुमसदृशाद्यप्रापकत्वात् । उपस्थितेति । पदादुपस्थितार्थेत्यर्थः ।

मतं निरस्यति तत्रेत्यादिना । अन्वयानुपपत्तेः—मुख्यार्थान्वयानुपपत्तेः । तज्जनकत्वं—लक्षणाजनकत्वम् । तदजन्यत्वात्—अन्वयानुपपत्तिज्ञानाजन्यत्वात् । तज्ज्ञापकत्वं—तज्ज्ञानजनकत्वम् । प्रमाणान्तरेणेति । गङ्गापदं तीरलाक्षणिकं तीरार्थ

(१) कृष्णकान्तमतेऽत्र तस्या इति पाठो द्रष्टव्यः ।

एवं न लक्ष्यार्थतात्पर्यग्राहकत्वमपि प्रकरणादितोऽपि लक्ष्यार्थपरत्वग्रहात्। न च लक्षणाजन्यान्वयबोधं प्रति तस्याः कारणत्वमेव लक्षणाबीजत्वमिति साम्प्रतम्, "यष्टीः प्रवेशये"त्यादौ व्यभिचारात्, तादृशहेतुतायां प्रमाणाभावाच्च।

कृष्णकान्ती टीका

प्रकरणादितोऽपीति। अनुपपत्तिज्ञानमन्तरेणेत्यादिः। अपिना प्रमाणान्तरपरिग्रहः, लक्ष्यार्थपरत्वग्रहात्—लक्ष्यार्थतात्पर्यग्रहात्। इदमुपलक्षणम्, स्वमते तात्पर्यज्ञानस्य शाब्दबोधं प्रत्यहेतुत्वात् तात्पर्यग्राहकत्वस्य लक्षणाबीजत्वासम्भवादित्यपि बोध्यम्। अत एवानुपपत्तिज्ञानोत्तरं तात्पर्यग्रहं प्रति अनुपपत्तिज्ञानत्वेन हेतुत्वोक्तौ व्यभिचारासम्भवात् तात्पर्यग्राहकत्वस्य तद्बीजत्वसम्भवादिति प्रत्युक्तम्। यत्र च प्रकरणादितो लक्ष्यार्थतात्पर्यग्रहः, तत्र लक्षणाबीजत्वस्य तत्रासम्भवेन बीजान्तरकल्पनस्यावश्यकत्वेनान्यत्रापि तथाकल्पनस्य न्याय्यत्वात्। लक्षणाग्रहजन्यान्वयबोधजनकत्वमेव लक्षणाबीजत्वमित्यपि दूषयति नचेति। लक्षणाजन्येति। लक्षणाग्रहजन्येत्यर्थः। स्वरूपतो लक्षणाया अन्वयबोधाजनकत्वात्। केचित्तु जन्यत्वं प्रयोज्यत्वमित्यपि वदन्ति। अन्ये तु लक्षणाग्रहस्येव ज्ञायमानलक्षणाया अपि हेतुत्वसम्भवाद् यथाश्रुतमेव सम्यगिति प्राहुः। एतन्मतयोः समीचीनासमीचीनत्वे विदग्धविविच्ये। तस्या—मुख्यान्वयानुपपत्तेः। व्यभिचारादिति। शब्दविशेषस्या(१)न्वयानुपपत्तिग्रहमन्तरेणापि लक्ष्यार्थस्य यष्टिधरस्य बोधसम्भवादिति भावः। ननु तादृशहेतुत्वस्य प्रामाणिकत्वेन तत्रानुपपत्तिविरहेऽपि भ्रमात्मकानुपपत्तिज्ञानं फलबलात् कल्प्यत इत्यत आह तादृशहेतुतायामिति। केचित्तु अनुपपत्तिज्ञानोत्तरतादृशान्वयबोधं प्रति अनुपपत्तिज्ञानस्य

रामभद्रीटीका।

कतया प्रामाणिकप्रयुक्तगङ्गापदत्वात् इत्याद्यनुमानसाम्राज्यादिति भावः। अत एव—अन्वयानुपपत्तिज्ञानं विनापि लक्षणाग्रहसम्भवादेव। प्रकरणादितोपीत्यपिना प्रमाणान्तरस्य परिग्रहः। तस्याः—अन्वयानुपपत्तिधियः। व्यभिचारादिति। मुख्यार्थान्वयानुपत्तिज्ञानमन्तरेणापि लक्ष्यार्थस्य यष्टिधरादेरन्वयानुभवादिति भावः। नन्वन्वयानुपपत्तिज्ञानविशिष्टलक्षणाजन्यबोधं प्रति अन्वयानुपपत्तिज्ञानस्य हेतुत्वं तज्ज्ञानस्य लक्षणाबीजत्वं, वैशिष्ट्यं चाव्यवहितोत्तरत्वसम्बन्धेन वाच्यमिति नैष दोष इत्यत आह तादृशेति। स्वमते तत्र मुखस्याधुनिकलक्षणया कुसमसदृशसौरभादिमत्ताप्रतीतेरिति तस्य लक्षकत्वात् न न्यूनतेति भावः।

(१) विधुरशरीरस्थित्यवम्बनयष्टिपदार्थस्यप्रसिद्धत्वेपि शब्दविशेषोक्तितात्पर्यमेत्र भगवान् कृष्णकान्त एव जानाति।

अथास्ति नानार्थशब्दैः प्रकरणादिसाचिव्यात्क्वचिदेकविधानामर्थाना-मन्वयबुद्धेरनन्तरमप्यन्यविधानामन्वयानुभवः सहृदयस्य, यथा "अयं

कृष्णकान्तीटीका ।

हेतुत्वे न व्यभिचारः, न वा तस्या लक्षणाबीजत्वमपि इत्यत आह तादृशहेतु-तायामिति, इत्याहुः । तत्तुच्छम्, यत्रानुपपत्तिज्ञानं विना लक्षणया तादृशान्वयबोधः तत्रत्यलक्षणाबीजत्वस्य तत्रासम्भवेन बीजान्तरकल्पनस्यावश्यकत्वेनान्यत्रापि तथा-कल्पनस्य युक्तत्वादित्युक्तप्रायम् । तादृशहेतुतायां—लक्षणाजन्यान्वयबोधं प्रत्यन्व-यानुपपत्तेर्हेतुतायामित्यर्थः । प्रमाणाभावाच्चेति । तथा च तादृशहेतुतायाः प्रामाणिकत्व एव तादृशज्ञानविरहस्थले तत्कल्पनं युक्तं, तदेव नेति भावः । न च आवापोद्वापावेव तत्र प्रमाणपदमावहतः, तयोरेवासिद्धेः । न च प्रत्यक्षमेव तत्र प्रमा-णमिति वाच्यम् । तादृशहेतुत्वस्य तत्रातीन्द्रियपदार्थघटिततयाऽतीन्द्रियत्वेनाप्रत्य-क्षत्वात् । न च तादृशान्वयबोधस्तादृशान्वयानुपपत्तिज्ञानजन्यस्तत्त्वादित्यनुमानमेव तत्र प्रमाणम्, अन्वयदृष्टान्ताभावादप्रयोजकत्वाच्च । एवं शब्दोऽपि तत्र न प्रमाणम्, अयोग्यत्वादित्यभिप्रायः । तथा च स्वमते मुखादिपदस्याधुनिकलक्षणया कुसुमादि-तुल्यसौरभादिमत्त्वप्रतीतिरिति तस्य लक्षकत्वान्न न्यूनतेति भावः ।

लक्षणामूलव्यञ्जनावृत्तिं सन्दूष्याभिधामूलव्यञ्जनावृत्तिं दूषयति अथेति । अस्तीति । अन्वयानुभव इति परेणान्वयः । एकमात्रशक्तिकशब्दादन्यस्यान्वया-नुभवो दुर्घट इत्यत आह नानार्थैरिति । नानाशक्तिकेत्यर्थः । प्रकरणादीति । प्रकरणज्ञानादीत्यर्थः । आदिना शाब्दकारणान्तरपरिग्रहः । केचित्तु आदिना तात्प-र्यपरिग्रह इत्याहुः । तन्न, स्वयं तात्पर्यज्ञानस्य हेतुताया अस्वीकारात् । न च आ-लङ्कारिकैस्तत्स्वीकारात् तदुक्तिरिति तु देश्यम्, प्रकरणज्ञानस्य शाब्दहेतुतास्वीकारे तद्धेतुतास्वीकारस्यानुपयुक्तत्वेन प्रकरणादिपदोत्तरादिपदेन तत्सङ्ग्रहासम्भवात् । सा-चिव्यात्सहकारात्, सहकृत्वादित्युच्छृङ्खलाः । अन्वयानुभवः-शाब्दबोधः । सहृद-यस्य-तत्तद्विषयसंयुक्तमनसः । कुत्रेत्याकाङ्क्षायामाह यथेति । अयमिति । गौर-वितः-पूज्यः, पक्षे अवितः-मेषतः "अवयः शलमेषार्काः" इत्यमरकोषात् । न च मह

रामभद्रीटीका ।

ननु मास्तु लक्षणामूलव्यञ्जनावृत्तिरभिधामूलव्यञ्जनाऽतिरिक्ता स्यादिति तथापि न्यूनतातादवस्थ्यादित्याशयेन शङ्कते अथेति । अस्तीति । अन्वयानुभव इत्यग्रेऽन्वयः । एकार्थमात्रानुभावकशब्दादन्यविधानुभवो दुर्घट इत्यतो नानार्थैरिति । प्रकरणादीति । तज्ज्ञानेत्यर्थः । आदिना तात्पर्यपरिग्रहः । साचिव्यात्-सहकारात् । अन्यविधाना-मिति । अर्थानामित्यनुषज्यते । सहृदयस्येति । तद्विशेष्यकतत्प्रकारकशाब्दबुद्धौ तथाविधशाब्दत्वेनैव प्रतिबन्धकत्वं न तु तत्पदान्यपदजन्यशाब्दबुद्धौ तत्पदजन्यशाब्द-

गौरवितो महान्" इत्यादौ, यथा वा "वयस्था नागरासङ्गादङ्गानां हन्ति वेदना"मित्यादौ । स चायमनुभवो न शक्तिधीप्रभवः, शक्यार्थबुद्धौ

कृष्णकान्तीटीका ।

च्छब्देनैव पूज्यताबोधाद् गौरवितेति पुनरुक्तम्, महच्छब्देनेह पीनस्यैव बोधात् । एकशब्देनैकविधबोधानन्तरं तच्छब्दघटकानां प्रत्येकशक्त्या बोधान्तरजननस्थलमुक्त्वा एकशब्दस्यैव नानाशक्त्या नानाविधबोधस्थलमाह यथा वा वयस्थेति । केचित्तु गौरवितशब्दस्य वाक्यतया नानार्थपदत्वाभावादभिधामूलव्यञ्जनावृत्तिलक्षणघटकत्वमेव न सम्भवतीत्यत आह यथा वा वयस्थेत्याहुः । तत्तुच्छम्, लक्षणे नानार्थशब्दत्वेनैव निवेशात्, तस्य पदत्वाभावेऽपि क्षतिविरहात् । न च नानार्थत्वं नानाशक्तिनिरूपकत्वम्, तस्य वाक्येऽसम्भवात् सुतरां पदत्वनिवेश इति वाच्यम् । नानार्थप्रतिपादकत्वरूपस्य नानार्थस्यैवात्र निवेशात् । न चैवं घटादिपदस्यापि नानार्थत्वप्रसङ्गः, तेनापि घटघटत्वयोः प्रतिपादनादिति वाच्यम् । नानाशक्तिप्रयोज्यप्रतिपत्तिजनकत्वस्यैव तथात्वात्, एवं वयस्थादिशब्दस्यापि वाक्यतया उक्तदोषतादवस्थ्याच्च, वयसि तिष्ठतीति व्युत्पत्तेः । न च वयस्थाशब्दस्य रूढिरभ्युपेया, अन्यथा वृद्धादीनामपि तेन बोधापत्तेरिति वाच्यम् । वयःपदस्य यौवनाधिकरणवयःपरत्वात् । न चैवं पङ्कजादिशब्दोऽपि योगरूढो न स्यात्, पङ्कशब्दस्यैव विजातीयपङ्कजपरत्वादिति वाच्यम् । तादृशवैजात्ये मानाभावात् । न च पद्मजनकतावच्छेदकतया तत्सिद्धिः, तथासति तुल्ययुक्त्या शैवालजनकतावच्छेदकतयापि वैजात्यसिद्धेः, तादृशवैजात्येन साङ्कर्यादित्यलमनभिज्ञमतदूषणप्रयासेन । वयस्था स्त्री नागरपुरुषासङ्गात् अङ्गानां वेदनां हन्ति । पक्षे वयस्था हरीतकी, नागरः शुण्ठी, तत्सङ्गात् तत्सहयोगात्, अर्थात् भक्षिता अङ्गानां वेदनां हन्तीत्यर्थः । स च—पूज्यताबोधानन्तरं जायमानो युवतिबोधानन्तरं जायमानश्चेत्यर्थः । अयं—मेषावधिकत्वबोधो हरीतकीबोधश्च । वस्तुतस्तु चस्त्वर्थे, एकविधबोधानन्तरं जायमानस्त्वित्यर्थः, अयं—अन्यविधबोध इत्यर्थः, न शक्तिधीप्रभवः—न शक्तिज्ञानप्रयोज्यः, तत्परत्वग्रहस्य—शक्यार्थपरत्वग्रहस्य, लक्ष्यार्थबुद्धौ शक्यार्थपरत्वग्रहस्य शक्यार्थबुद्धौ लक्ष्यार्थपरत्वग्रहस्य व्यभिचारादुभयदिशि शक्यनिवेशः । इदमुपलक्षणम्, वृत्तिप्रयोज्यतद्विषयकबुद्धौ तत्परत्वग्रहस्येत्यपि बोध्यम् । एतेनैकशक्यार्थबोधकालेऽपरशक्यार्थबोधवारणाय विशेषकार्यकारणभाव-

रामभद्रीटीका ।

त्वेन हेतुता गौरवादिति भावः । गौरवितः—पूज्यः, पक्षे अवितो—मेषतः । ननु गौरवित इत्यस्य वाक्यतया नानार्थपदात् तादृशानुभवोऽसिद्ध इत्यत आह—यथावेति । वयस्थेति । पक्षे वयस्था—हरीतकी, नागरः शुंठी । स चेति । एकविधानुभवानन्तरं अन्यविधान्वयानुभवः । ननु तात्पर्यज्ञानस्य हेतुत्वमेव न असत्त्वात्, सत्त्वे वा तद्धेतोर-

तत्परत्वग्रहस्य तद्ग्राहकप्रकरणाद्यवगमस्य वा हेतुत्वेन तदसत्त्वात्, नापि लक्षणाप्रयुक्तः, शक्यार्थे तदयोगात्, परन्त्वभिधामूलव्यञ्जनयैव सम्पा-

कृष्णकान्तीटीका।

स्यावश्यकत्वेन माध्यमिककार्यकारणभावे मानाभावेऽपि न क्षतिः। अथ तात्पर्यज्ञानस्य न हेतुत्वं तद्ग्राहकप्रकरणज्ञानादेरेव हेतुत्वोक्तौ सामञ्जस्यात्। न चैवं विनिगमनाविरहः, तात्पर्यज्ञानस्य हेतुत्वे तत्प्रति प्रकरणज्ञानादेरेव हेतुत्वोक्तौ कार्यकारणभावद्वयस्वीकारे गौरवात्। न च प्रकरणज्ञानस्य हेतुत्वेऽपि तत्प्रति यस्य कस्यचिद्धेतुत्वस्यावश्यकतया भवन्मतेऽप्युक्तगौरवमास्थेयमिति वाच्यम्। तात्पर्यस्य प्रकरणादिनाऽनुमेयत्वेन प्रकरणादिज्ञानस्य सर्वत्रावश्यकत्वेन नियतपूर्ववर्तित्वाकल्पनप्रयुक्तलाघवेन च तत्र तस्य हेतुत्वस्य युक्तत्वात्, प्रकरणग्राहकस्य तु क्वचित् सन्निकर्षरूपतया क्वचिदनुमानरूपतया क्वचिच्छब्दादिरूपतयाऽननुगतत्वेन तत्र हेतुत्वासम्भवात्। न च व्यापारेण व्यापारिणो नान्यथासिद्धिरिति न्यायात् तात्पर्यज्ञानस्य शाब्दहेतुत्वं युक्तमिति वाच्यम्। प्रकरणज्ञानस्य शाब्दहेतुत्वात्, तात्पर्यज्ञानद्वारा दिना शाब्दं प्रति हेतुत्वास्वीकारेण तस्य तद्व्यापारत्वाभावात्, अतस्तद्धेतोरेव तत्सिद्धौ किमन्तर्गडुनेति न्यायेन प्रकरणादिज्ञानस्यैव तत्र हेतुत्वमित्यत आह तद्ग्राहकेति। तात्पर्यग्राहकेत्यर्थः। प्रकरणाद्यवगमस्य-प्रकरणादिज्ञानस्य, हेतुत्वेन-शाब्दं प्रति हेतुत्वेन, तदसत्त्वात्तद्विषयकशाब्दजनकप्रकरणज्ञानाद्यसत्त्वात्। केचित्तु तदसत्त्वात् तादृशबोधस्य शक्तिज्ञानजन्यत्वाभावादित्यर्थ इत्याहुः। तत्तुच्छम्, शक्तिज्ञानजन्यत्वाभावे शक्तिज्ञानाजन्यत्वस्याप्रयोज्यत्वात् न शक्तिधीप्रभव इत्यत्र तस्य हेतुत्वासम्भवात्। शङ्कते नापीति। लक्षणाप्रयुक्त इति। स चायमित्यनुषज्यते, तदयोगात्-लक्षणायोगात्, तस्याः शक्यभावनियम्यत्वादिति भावः। अत एवोक्तम् लक्षकलक्षणे "तच्छक्तिविधुरं यदीति"। केचित्तु तदयोगात् लक्षणाप्रयुक्तत्वायोगादित्यर्थं व्याचक्षते। तत्तुच्छम्, अर्थे लक्षणाप्रयुक्तत्वाभावस्य सहजत एव सत्त्वेन शाब्दबोधे लक्षणाप्रयुक्तत्वाभावस्य तत्प्रयोज्यतया च तत्कथनस्योन्मत्तप्रलपितत्वापत्तेः। न च शक्यार्थे इत्यनन्तरं तादृशबोधस्येति पूरणीयमतो नैष दोष इति वाच्यम्। यथाश्रुतार्थसङ्गतौ पूरणस्यान्याय्यत्वादिति। स्वमतमुपसंहरति आलङ्कारिकः-परन्त्विति। अभिधामूलेति। अभिधा-शब्दशक्तिः, सैव मूलं सहकारि

रामभद्रीटीका।

चेति न्यायादाह (१)तद्ग्राहकेति। शक्यार्थग्राहकेत्यर्थः। तदसत्त्वात्-शक्तिज्ञानजन्यत्वासत्त्वात्। तदयोगात्-लक्षणाप्रयुक्तत्वायोगात्। अभिधा-शब्दशक्तिः। अत्रालङ्का-

(१) तत्तद्ग्राहकेति पाठान्तरम्।

यः, तदुक्तम्—

अनेकार्थस्य शब्दस्य प्रस्तावाद्यैर्नियन्त्रिते ।
एकत्रार्थेऽभिधामूलव्यञ्जनाऽन्यस्य बोधिका ॥ इति चेन्न ।

तात्पर्यधियो हेतुत्वस्य पूर्वं परास्तत्वात्, अत एव प्रकरणादीनामननुगतानां क्वचिदसत्त्वेऽपि क्षत्यभावात् ।

---

कृष्णकान्तीटीका ।

यस्या इति बहुव्रीहिः । सम्पाद्य इति । स चायमित्यनुषज्यते, क्वचित् स सम्पाद्य इत्यपि पाठः, स च यथाश्रुत एव सम्यक् । तत्रालङ्कारिकसम्वादमाह तदुक्तमिति । प्रस्तावः-प्रकरणम् । आदिनाऽऽकांक्षासत्तियोग्यताशक्तिपरिग्रहः । तृतीयार्थः प्रयोज्यत्वं, तस्य नियन्त्रितैकदेशे नियन्त्रणेऽन्वयः, नियन्त्रिते बोधिते सतीति पूरणीयम् । अत एव 'शीते पाथसि पीते' इत्यादिवत् तादृशबोधानन्तर्यप्रतीतेः । अन्यस्यान्यविधार्थस्य । बोधिका इति । तात्पर्यादिज्ञानं विनेत्यादिः ।

इति निर्व्यूढालङ्कारिकमतं दूषयति नेति । तात्पर्यधिय इति । शाब्दबुद्धाविति शेषः । पूर्वं परास्तत्वात्—शाब्दप्रामाण्यविचारे निरसितत्वात्, निस्तात्पर्यकत्वज्ञानस्य प्रतिबन्धकत्वकल्पनादिति भावः । अत एव—तात्पर्यज्ञानस्याहेतुत्वादेव । न च तात्पर्यज्ञानस्याहेतुत्वेऽपि प्रकरणज्ञानादीनां हेतुत्वात् 'अत एवे'त्याद्युपष्टम्भासङ्गतिरिति वाच्यम् । तात्पर्यज्ञानस्य हेतुत्वसिद्धौ सत्यां लाघवादावश्यकत्वाच्च प्रकरणज्ञानस्यैव हेतुत्वं कल्प्यते, तदसिद्धौ लाघवादिरूपयुक्तेरभावात्, प्रकरणज्ञानादेर्हेतुत्वासिद्ध्या तदसत्त्वस्याकिञ्चित्करत्वमित्युपष्टम्भसंगतेः । अननुगतानामिति । ज्ञानस्येति शेषः, एतेन तस्य हेतुत्वे गौरवमपि व्यञ्जितम् । क्वचित्—कस्यचिच्छाब्दस्य पूर्वं, क्षत्यभावात्—कार्यानुत्पादरूपक्षत्यभावात्, प्रकरणज्ञानस्य हेतुत्वादिति भावः । तथा चान्यार्थतात्पर्यज्ञानासत्त्वेऽपि शक्तिज्ञानादिसाचिव्येन अन्यार्थशाब्दबोधोत्पत्तेः सम्भवात् कुतस्तदनुरोधेन व्यञ्जनावृत्तिस्वीकार इति भावः ।

रामभद्रीटीका ।

रिकसंवादमाह तदुक्तमिति । प्रस्तावः—प्रकरणम् । एकत्रार्थे इति । एकार्थविषयकान्वयानुभवान्तरमित्यर्थः । अर्थपदस्यार्थविषकज्ञानपरत्वात् 'शीते पाथसि पीते' इत्यादिप्रयोगदृष्ट्या सतिसप्तम्या आनन्तर्यवाचित्वाच्चेति भावः । अन्यस्यान्यविधार्थस्य । हेतुत्वस्येति । शाब्दबुद्धावित्यादिस्तेन तात्पर्यविशिष्टबुद्धौ तात्पर्यज्ञानस्य हेतुत्वेऽपि न क्षतिः । अत एव-तात्पर्यज्ञानस्याहेतुत्वादेव ।

तदनुरोधेन—अन्यविधान्वयबोधानुरोधेन । नचैवमिति च्छेदः । ननु तात्पर्यज्ञानस्य शाब्दबुद्धावहेतुत्वे निस्तात्पर्यकत्वज्ञानदशायामपि शाब्दधीप्रसङ्ग इ-

वस्तुतः शक्त्याद्युपस्थितानामेकाविधानां पदार्थानामन्वयमतेरनन्तरं यद्यन्याविधानामन्वयबोधः स्यात्, स्यादपि तदनुरोधेन व्यञ्जनास्वीकारः, न चैवं, तत्तदर्थकशब्दसामान्यं प्रत्येव तत्तदर्थनिस्तात्पर्य्यकत्वधियः

कृष्णकान्तीटीका ।

ननु व्यञ्जनाया अस्वीकारे कथमेकविधार्थबोधानन्तमपरार्थबोधः, शक्तिज्ञानादिवशादेकदैवोभयार्थभानप्रसङ्गात् । न च तत्स्वीकारेऽपि कथं तादृशबोध इति वाच्यम् । व्यञ्जनावृत्तेः कार्यदिशि स्वशक्यैकार्थबोधानन्तर्य्यस्य निवेशेन तादृशबोधोपपत्तेः, तथा च तादृशशाब्दबोधान्यथानुपपत्तिरेव तत्साधिका भविष्यतीत्यतस्तादृशबोधस्यैवासिद्धिमाह वस्तुत इति । न चैवमिति विच्छेदः । एवमिति । तादृशशाब्दबोधो भवतीत्येवमित्यर्थः । कथं न तादृशबोध इत्याकाङ्क्षायामाह तत्तदर्थकेति । भवन्मतेऽपीत्यादिः, प्रत्येव इत्येवकारेण मानसज्ञानादिव्यवच्छेदः, अन्यथा स्वयं तत्र मानसज्ञानस्यैव स्वीकर्तव्यत्वात् तदसङ्गतेः । निस्तात्पर्यकत्वधियः—निस्तात्पर्यकत्वनिश्चयस्य, प्रतिबन्धकत्वात्—प्रतिबन्धकत्वस्य वक्तव्यत्वात्, अन्यथा निस्तात्पर्यकत्वनिश्चयदशायां शाब्दबोधापत्तेः । न चास्मन्मते तात्पर्यज्ञानस्य हेतुत्वसत्त्वेन नोक्तनिश्चयकाले शाब्दबोधापत्तिः, तदानीं तात्पर्यज्ञानासम्भवादिति वाच्यम् । शाब्दबोधात्पूर्वं वाक्यार्थज्ञानाभावेन तात्पर्यस्य वाक्यार्थघटितत्वेन च शाब्दबोधात्पूर्वं तात्पर्यज्ञानासम्भवात् सुतरां तस्याहेतुत्वादिति शाब्दप्रामाण्यविचारे स्वयमेवोक्तम् । प्रकरणज्ञानस्य तथात्वेऽपि तादृशज्ञानसत्त्वे निस्तात्पर्यकत्वनिश्चयसम्भवादिति । न च स्वरूपसन्निस्तात्पर्यकत्वस्याविरोधितया यत्र न तादृशनिश्चयस्तत्रैव तादृशशाब्दबोधार्थं तत्स्वीकार आवश्यक इति वाच्यम् । यत्र तादृशनिश्चयः, तत्रैकविधबोधानन्तरमपरार्थबोधस्य मानसस्वरूपतायाः स्वीकर्तव्यत्वेन सर्वत्रैव तत्स्वीकार उचित इत्यभिप्रायाद्दूषणग्रन्थस्य । केचित्तु—ननु तात्पर्यज्ञानस्य शाब्दबुद्धावहेतुत्वे निस्तात्पर्यकत्वज्ञानदशायामपि शाब्दधीप्रसङ्ग इत्यत आह तत्तदर्थकेति । निस्तात्पर्यकत्वधियः—निस्तात्पर्यकत्वनिश्चयस्येति नार्थः, संशयस्यापि प्रतिबन्धकत्वात् । न च तादृशज्ञानस्य प्रतिबन्धकत्वे तदवच्छेदककोटौ अप्रामाण्यनिश्चयाभावस्यैव निवेश्यतया तदपेक्ष्य तात्पर्यनिश्चय-

रामभद्रीटीका ।

स्यत आह तत्तदर्थकेति । न च निस्तात्पर्यकत्वज्ञानस्य प्रतिबन्धकत्वेऽप्रामाण्यनिश्चयदशायामेव प्रतिबन्धकतया गौरवं, तात्पर्यनिश्चयस्य हेतुत्वे तु अप्रामाण्यज्ञानानास्कन्दितत्वमेव निवेशनीयमिति लाघवात् तात्पर्यज्ञानं हेतुरिति वाच्यम् । तात्पर्यज्ञानस्य हेतुत्वे संशयनिश्चयसाधारणतत्तदप्रामाण्यग्रहव्यक्तीनामभावस्य निवेशात्, (निस्तात्पर्यकत्वज्ञानस्य प्रतिबन्धकत्वे तु निश्चयात्मकतत्तदप्रामाण्यग्रहव्य-

प्रतिबन्धकत्वात्, तत्तदर्थानां यथाकथञ्चिदुपनयवशेन मनसैव विशिष्टधीसम्भवात्, मानोरथिकसुखप्रभेदपर्य्यवसितं चमत्कारं प्रत्यपि शाब्दस्येव मानसस्यापि बोधस्य विशिष्य हेतुतायाः सुवचत्वात्, अतिरिक्तस्य(१)

कृष्णकान्तीटीका।

स्यैव हेतुत्वे तदवच्छेदककोटौ अप्रामाण्यज्ञानाभावस्य निवेशेन लाघवमिति वाच्यम्। तात्पर्यनिश्चयस्य हेतुत्वे संशयनिश्चयसाधारणाप्रामाण्यज्ञानानामभावनिवेशापेक्षया निस्तात्पर्यकत्वज्ञानप्रतिबन्धकतावच्छेदककोटौ अप्रामाण्यनिश्चयव्यक्तीनामभावनिवेशे लाघवात्, अप्रामाण्यग्रहव्यक्तीनामनुगतरूपेण निवेशस्य शतशो निरस्तत्वात्—इत्याहुः। तत्तुच्छम्, तात्पर्यज्ञानस्य हेतुत्वसत्त्वेऽपि 'वस्तुत' इत्यादिना दत्तदोषस्य सम्भवात्, 'वस्तुत' इत्यादिकल्पे तदाशङ्कनस्योन्मत्तप्रलपितत्वापत्तेः, पूर्वकल्पे एतदाशङ्कायाः सम्भवेऽपि तत्रैव तस्या उपयोगात्, न हि पूर्वकल्पानुसारेण परकल्पे किञ्चिदाशङ्कते कश्चिदिति। एवं संशयसाधारणनिस्तात्पर्यकत्वधियः प्रतिबन्धकत्वे यत्र तादृशसंशयस्योत्तरं तात्पर्यनिश्चयस्तत्र शाब्दबोधानुत्पत्तिप्रसङ्गात्, तात्पर्यनिश्चयाभावविशिष्टनिस्तात्पर्यकत्वज्ञानस्य प्रतिबन्धकत्वोक्तौ तु महागौरवात्, एवं स्वमतेऽप्रामाण्यज्ञानानामनुगतरूपेणैव निवेशेन तद्दूषणस्याप्यनुपयुक्तत्वाच्च इत्यलमलम्भिन्नसतदूषणप्रयासेन। नन्वेकार्थबोधानन्तरमपरार्थबोधस्यानुभविकतया कथमुपपद्यते इत्यत आह तत्तदर्थानामिति। एकार्थबोधानन्तरमपरार्थानामिति शेषः। यथाकथञ्चिदिति। येन केन प्रकारेणेत्यर्थः। उपनयवशेन—ज्ञानात्मकसन्निकर्षसहकारेण, विशिष्टधीसम्भवात्—विशिष्टबुद्ध्युत्पादात्। ननु तादृशबोधानन्तरं तदात्मनि सुखविशेषो जायते नान्यथा इत्यन्वयव्यतिरेकाभ्यां तादृशसुखं प्रति तथाविधशाब्दस्य हेतुत्वात् तदपलापे सुखविशेषस्यापलापप्रसङ्ग इत्यत आह मानोरथिकेति। मनोजन्यलौकिकप्रत्यक्षविषय इत्यर्थः। इदञ्च तादृशसुखविशेषापलापे इष्टापत्तिपरिपन्थिविधया उपयोगि। सुवचत्वादिति। गौरवादिदोषस्यासम्भवादिति

रामभद्रीटीका।

व्यक्तीनामभावस्य निवेशेन लाघवात्)(२) अप्रामाण्यग्रहव्यक्तीनामनुगतरूपेण उत्तेजकत्वस्य शतशो निरस्तत्वादिति ध्येयम्। एकविधान्वयबोधानन्तरं मास्तु शाब्दोऽनुभवस्तदानीमनुभवस्य सर्वसिद्धत्वात्, स च केन संपादनीय इत्यत आह तत्तदर्थानामिति। ननु सहृदयानां चमत्कारं प्रति शाब्दज्ञानत्वेन हेतुत्वात् चमत्कारान्यथानुपपत्त्या व्यञ्जना स्वीकार्येत्यत आह मानोरथिकेति। सुवचत्वादिति। यद्यपि मानसत्वस्येव शाब्द-

(१) अत्र अतिरिक्तया इति रामभद्रस्येष्टोऽपि पाठो पदार्थान्तरस्येत्यस्य विशेषणत्वासम्भवान्निष्कासितः।

(२) ( ) एतच्चिह्नान्तर्गतः पाठो नास्ति पुस्तकान्तरे।

व्यञ्जनाख्यपदार्थान्तरस्य स्वरूपसत्तया अन्वयबुद्धौ तद्धेतुत्वस्य च प्रमाणविरहेणासत्त्वाच्चेति संक्षेपः ॥ २४ ॥

लक्षकं नाम विभजते—

जहत्स्वार्थाजहत्स्वार्थनिरूढाधुनिकादिकाः ।
लक्षणा विविधास्ताभिर्लक्षकं स्यादनेकधा ॥२५॥

काचिल्लक्षणा शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते,

---

कृष्णकान्तीटीका।

भावः । ननु विनिगमनाविरहात् तादृशशाब्दस्यापि हेतुत्वसिद्धौ तदनुरोधेन व्यञ्जनास्वीकार आवश्यक इत्यत आह व्यञ्जनाख्यपदार्थान्तरस्येति । प्रमाणविरहेणासत्त्वादिति परेणान्वयः, तथा च व्यञ्जनासिद्धावेव तदधीना तत्र शाब्दसिद्धिः तदनन्तरं तस्य चमत्कारं प्रति हेतुत्वप्रसक्तिः तस्या एवासिद्धेरिति भावः । अतिरिक्तपदार्थत्वकथनेन शाब्दत्वमानसत्वयोर्जातित्वाविशेषेऽपि शाब्दत्वेन चमत्कारं प्रति हेतुत्वेऽतिरिक्तव्यञ्जनाकल्पनया गौरवमिति विनिगमनाविरहोऽपि नास्तीति सूचितम् । नन्वयं शब्द एतदर्थविषयकशाब्दबोधानुकूलशक्त्यन्यवृत्तिमान् एतदर्थविषयकशाब्दबोधानुकूलशाब्दत्वात् शाब्दजनकवृत्तिमतः शब्दस्य शाब्दजनकत्वनियमादित्यनुमानादितरबाधसहकारेण व्यञ्जना सेत्स्यतीति, एवं गौरवमपि फलमुखत्वान्न दोषायेत्यत आह स्वरूपसत्तयेति । ज्ञानविषयतयेत्यर्थः, तथा चोक्तानुमाने साध्यघटकमनुकूलत्वं यदि शाब्दकारणपदार्थोपस्थितिजनकज्ञानविषयत्वरूपं तदा तादृशानुकूलत्वस्य लक्षणायामेव सत्त्वेन बाधापत्तेः, यदि च जनकत्वरूपं तदा साध्याप्रसिद्धिः लक्षणायाः स्वरूपसत्या शाब्दजनकत्वात् व्यञ्जनायाः स्वरूपसत्या शाब्दजनकत्वस्य भवन्मात्रसम्मतत्वात्, अन्यथा व्यञ्जनात्वेनैव साध्यत्वोचितत्वादिति भावः ॥२४॥

लक्षकमिति । लक्षकं-भेदकम् । लक्षणा विविधा इति । ताभिर्लक्षणाभिः, तासामेव तद्भेदकत्वात्, एवं लक्षकपदमपि यौगिकं न पारिभाषिकमिति भावः ।

तासां निरुक्तानां लक्षणानां प्रत्येकलक्षणं निरूपयन् प्रत्येकोदाहरणमाह—काचिदिति। शक्यावृत्तिरूपेणेति तृतीयार्थः प्रकारत्वं, तथा च शक्यावृत्तिधर्मप्रकारकबोधप्रयोजकतया इत्यर्थः। शक्यावृत्तित्वञ्च लक्ष्यतावच्छेदकसम्बन्धेन, अतस्तीरत्वस्य कालिकादिसम्बन्धेन गङ्गावृत्तित्वेऽपि न क्षतिः । जहत्स्वार्थेति । जहत्स्वार्थं स्वाश्रयशक्यं

रामभद्रीटीका ।

त्वस्यापि जातितया विनिगमकाभावात् तद्धेतुत्वप्रसक्तौ व्यञ्जना सेत्स्यति, तथापि शब्दत्वेन चमत्कारं प्रति हेतुत्वेऽतिरिक्ताया व्यञ्जनायाः स्वीकारस्तादृशबुद्धिं प्रति च तस्य हेतुत्वं कल्प्यं तत्रैव च प्रमाणं नास्तीत्याशयेनाह अतिरिक्ताया इति ॥ २५ ॥

यथा तीरत्वादिना गङ्गादिपदस्य। काचिच्छक्यलक्ष्योभयवृत्तिना शक्यवृत्तिनैव वा रूपेणानुभावकत्वादजहत्स्वार्था, यथा द्रव्यत्वादिना नीलघटत्वादिना च घटपदस्य। काचिल्लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्वं पूर्वं प्रत्यायकत्वान्निरूढा, यथा आरुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादिपदस्य। काचिच्च पूर्वं पूर्वं ताद्रूप्येणाप्रत्यायकत्वादाधुनिकी, यथा घटत्वादिना पटादिपदस्य। आदिना शक्यसदृशत्वप्रकारेण बोधकतया गौण्युपगृह्यते, यथा अग्निर्माणवक इत्यादावग्निसदृशत्वादिना अग्न्यादिप-

---

कृष्णकान्तीटीका।

यस्या इति बहुव्रीहिः, वस्तुतो जहत् अर्थात् शाब्दबोधे त्यजत् स्वार्थं स्वाश्रयं शक्यं यस्या इत्येव बहुव्रीहिः, अतः प्रथमान्तान्यपदार्थबहुव्रीहेः स्वयमस्वीकारेऽपि न क्षतिः। तथा च शक्यावृत्तिधर्मावच्छिन्नलक्षणा जहत्स्वार्था, तदाश्रयो नाम जहत्स्वार्थं लक्षकमतो लक्षकलक्षणस्यानुक्तावपि न क्षतिरिति भावः। एवमग्रेऽपि। तीरत्वादिनेति। लक्षणेति पूर्वेणान्वयः, तृतीयार्थोऽवच्छेदकत्वं, गङ्गादिपदस्येति षष्ठ्यर्थो निरूपकत्वं, तथा च गङ्गादिपदनिरूपिता तीरत्वाद्यवच्छिन्ना लक्षणा यथेत्यर्थः। एवमग्रेऽपि। अजहत्स्वार्थलक्षणालक्षणमाह काचिदिति। लक्षणेति पूर्वेणान्वयः। ननु नीलघटत्वाद्यवच्छिन्नघटपदलक्षणाया अतिरिक्तत्वे विभागव्याघात इत्यत आह शक्यवृत्तिनैव चेति। तथा च शक्यवृत्तिरूपावच्छिन्नलक्षणा अजहत्स्वार्था, तदाश्रयो नामाजहत्स्वार्थलक्षकम्। द्रव्यत्वादिनेति। द्रव्यत्वावच्छिन्ना नीलघटत्वावच्छिन्ना वा घटादिपदनिरूपिता लक्षणा। निरूढलक्षणालक्षणमाह—काचिदिति। तथा चानादितात्पर्यमूलकतद्धर्मप्रकारकशाब्दबोधजनिका लक्षणा तद्धर्मावच्छिन्ने निरूढेति समुदितार्थः। तीरत्वावच्छिन्नगङ्गादिपदलक्षणाया अतथात्वान्न तत्रातिव्याप्तिरिति भावः। यथेति। आरुण्यादिप्रकारकारुण्याश्रयद्रव्यान्वयबोधजनिका अरुणादिपदनिरूपिता लक्षणा इत्यर्थः। यथा 'ऽरुणया गवा सोमं क्रीणातीत्या'दाविति भावः। आधुनिकलक्षणालक्षणमाह काचिदिति। आदितात्पर्यमूलकतद्धर्मावच्छिन्नविषयकशाब्दबोधजनिका लक्षणा तद्धर्मावच्छिन्न आधुनिकीत्यर्थः। यथेति। घटत्वाद्यवच्छिन्ना पटादिपदनिरूपिता लक्षणेत्यर्थः। आदिनेति। कारिकास्थादिपदेनेत्यर्थः। शक्यसदृशत्वावच्छिन्ना लक्षणा गौणीत्यर्थः। यथेति। अग्निसदृशत्वावच्छिन्नाऽग्निपदनिरूपिता लक्षणेत्यर्थः। यद्यपि निरूढादिलक्षणादिषु जहत्स्वार्थत्वमस्ति, एवं जहत्स्वार्थादिष्वपि निरूढत्वादिकमस्ति, तथापि उपाधेयाभेदेऽपि उपाधिभेदान्न विभागव्याघातः। न च विरुद्धधर्माणामेव विभाजकत्वात् तादृशधर्माणामविरुद्धत्वेन कथं विभाजकत्वमिति वाच्यम्। तादृशधर्मविभाग एव तात्पर्यात्। लक्षणा

दस्य । तदेवं विविधलक्षणावत्त्वाल्लक्षकं नामापि जहत्स्वार्थाऽजहत्स्वार्थादिभेदादनेकविधमित्यर्थः ।

स्यादेतत्, यदि तीरादिलक्षकतया गङ्गादिपदस्य ज्ञानं तीराद्यनुभवे भवेद्धेतुर्भवेदप्युक्तक्रमेण लक्षकाणां विभागः, न त्वेतदस्ति, तीराद्यन्वयबोधं प्रति तीरादिशक्तत्वेनैव पदज्ञानस्य लाघवेन हेतुतया लक्षकाणाम-

---

कृष्णकान्तीटीका ।

इत्यस्य विविधधर्माश्रया 'इत्यर्थात्ताद्दशधर्मवृत्तिधर्माणाञ्च मिथो विरुद्धत्वाद्विभागव्याघातासम्भवात् । ननु नामविभागप्रस्तावे लक्षणाविभागोऽर्थान्तरग्रस्त इति लक्षकनामविभागोपयोगितया लक्षणाविभागं सार्थकयन्नामविभागं स्पष्टयति तदेवमिति । तत्तस्मात्, एवं–प्रकारेण, विविधलक्षणावत्त्वात्—विरुद्धधर्मवल्लक्षणावत्त्वात् । जहत्स्वार्थाजहत्स्वार्थादीत्यादिना निरूढाधुनिकगौणोपग्रहः ।

ननु गङ्गादिपदात्तीराद्यन्वयबोधानुरोधात्तत्र तस्य लक्षणा स्वीक्रियते, अन्यथा गङ्गादिपदस्य तीरादावसङ्केतितत्वेन तीराद्यन्वयबोधाजनकत्वप्रसङ्गात्, तथा च गङ्गापदं तीरान्वयबोधानुकूलवृत्तिमत् तीरान्वयबोधजनकयथार्थज्ञानविषयशब्दत्वात् तदन्वयबोधजनकशब्दत्वस्य तद्वृत्तिमत्त्वे नियतत्वात्, इत्यनुमानादितरबाधसहकारेण तत्र तस्य लक्षणा सेत्स्यति, तदेव न, ताद्दशानुमानस्य स्वरूपासिद्धत्वादिति मीमांसकमतमुत्थाप्य निषेधयति स्यादेतदिति । केचित्तु लाक्षणिकस्याननुभावकत्वाल्लक्षकं नामैव नास्ति कुतस्तद्विभाग इत्याशङ्क्य निराचष्टे 'स्यादेतदि'तीत्याहुः । तत्तुच्छं, लक्षकस्याप्रसिद्धत्वेन लक्षकानामननुभावकत्वादित्युक्तेरेवोन्मत्तप्रलपितत्वापत्तेः, लक्षकानामित्यस्य लक्षकत्वेनाभिमतानामित्यर्थकत्वेऽपि लक्षकस्येत नामविभागसमये एव ताद्दशशङ्काया उपयुक्तत्वेनेदानीं ताद्दशाशङ्कायाः सन्दर्भविरुद्धत्वात् । तीराद्यनुभवे-तीराद्यन्वयबोधे । हेतुरिति । तदेति शेषः । न त्वेतदस्ति–(न)ताद्दशगङ्गापदज्ञानस्य तीराद्यन्वयबोधजनकत्वमस्तीत्यर्थः । ननु तदन्वयबोधं प्रति तद्वृत्तिमत्त्वेन पदज्ञानस्य हेतुताया अवश्यं स्वीकर्त्तव्यत्वात्, अन्यथा भक्तेरिव शक्तेरपि अस्वीकारप्रसङ्गात्, तत्रेतरबाधसहकारेण तत्कारणतावच्छेदकतया भक्तिरेव सेत्स्यतीत्यत आह—तीराद्यन्वयबोधं प्रतीति । शक्तत्वेनैवेत्येवकारेण वृत्तिमत्त्वस्यव्यवच्छेदः । लाघवेनेति । शक्त्यतिरिक्तवृत्त्यकल्पनप्रयुक्तलाघवेनेत्यर्थः । न च यत्र न शक्तिभ्रमस्तत्र तीरान्वयबोधो न स्यादिति वाच्यम् । फलबलात् शक्तिभ्रमस्यैव तत्र कल्पनात् । न च भवतापि ताद्दग्भ्रमस्य कल्पनात् क्व लाघवमिति वाच्यम् । वृत्तिमत्त्वरूपगुरुधर्मस्य विषयविधया

रामभद्रीटीका ।

लाक्षणिकस्याननुभावकत्वात् लक्षकं नामैव नास्तीति कस्य विभाग इत्याशङ्कते

ननुभावकत्वात्, गुरूणा "अग्नौ शैत्यं स्पृशे" दित्यादौ शक्येन दहनादिनेव 'गङ्गायां घोष' इत्यादौ लक्षितेन तीरादिना सार्द्धमगृहीतासंसर्गकस्यैव सप्तम्यर्थाधेयत्वादेरन्वयबोधप्रविष्टत्वादिति चेन्न।

प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य धर्म्यन्तरेऽन्वयबुद्धेर्व्युत्पन्नतया

---

कृष्णकान्ती टीका।

जनकतावच्छेदकत्वकल्पनं वृत्त्यन्तरकल्पनञ्चापेक्ष्य भ्रमकल्पने लाघवस्यानपायात्। लक्षकाणां—गङ्गादिपदानाम्, अननुभावकत्वात्—तीरान्वयबोधजनकयथार्थज्ञानविषयश-क्यतावच्छेदकत्वाभावात्, वृत्तिमत्त्वेन पदज्ञानस्य शाब्दबुद्धिं प्रत्यहेतुत्वादिति भावः। पूर्वमपि लक्षकतयेत्यस्य वृत्तिमत्तयेत्यर्थो बोद्धव्यः, लक्षणाप्रसिद्धेः प्राक् तादृशकार्यकारणभाव-स्य वक्तुमशक्यत्वात्। ननु मीमांसकैरन्यथाख्यात्यनङ्गीकारात्तन्मते तीरशक्तत्वेनैव गङ्गापदज्ञानमलीकमिति गङ्गायां घोष इत्यादौ तीरघोषाधारत्वप्रत्ययो दुर्घट इत्यत आह—गुरूणामिति।

केचित्तु 'न त्वेतदस्ती'ति (न)लक्षकतया गङ्गादिपदज्ञानस्य तीरान्वयबोधहेतुत्वम स्तीत्यर्थः, शक्तत्वेनैवेत्येवकारेण लक्षकत्वस्य गङ्गा इत्यानुपूर्वीविशेषस्य च व्यवच्छेदः। लाघवेनेति। आनुपूर्वीविशेषस्य लक्षकत्वस्य च प्रकारतयाऽप्रवेशेन लाघवमिति भावः। लक्षकाणामननुभावकत्वात्—लक्षकत्वप्रकारेण पदज्ञानस्य शाब्दबोधाजनक-त्वात्। ननु गङ्गायां घोष इत्यादौ तीरे घोषाधारत्वप्रत्ययो न स्यात् गङ्गापदस्य ती-रशक्तत्वाभावादित्यत आह—'गुरूणामि'तीति प्राहुः। तच्चिन्त्यम्। 'स्पृशेदि'त्यनेन विध्यसमभिव्याहृतत्वं निराकृतम्, अन्यथा 'अग्नौ शैत्यमि'त्यस्यार्थवादतया सुतरा-मेवाननुभावकत्वाद् दृष्टान्तत्वं न स्यादिति भावः।

दहनादिनेवेति। तथा च यथा दहनादिना सार्द्धमगृहीतासंसर्गकस्याधारत्व-स्यान्वयबोधप्रविष्टत्वं तथेत्यर्थः। लक्षितेन—शक्यसम्बन्धिना। आधेयत्वादेरित्यादिना शैत्यादिपरिग्रहः। प्रविष्टत्वात्—विषयत्वात्, तथा च तन्मते भ्रमास्त्वेऽप्यगृहीतासं-सर्गकतीरशक्तत्वेन गङ्गापदग्रहात् अगृहीतासंसर्गकतीराधेयत्वप्रकारकघोषादेरन्वयबोधो, न तु वैशिष्ट्यावगाहीति भावः। योग्यताज्ञानादेरपि साकाङ्क्षधर्मधर्मिविषयकान्वयबोधं प्रत्येव हेतुत्वादिति भावः।

इति निव्यूढं गुरुमतं दूषयति नेति। प्रकृत्यर्थावच्छिन्नस्यैवेति। स्वप्रक्र-

रामभद्रीटीका।

स्यादेतदित्यादिना। ननु लाक्षणिकस्याननुभावकत्वे 'गङ्गायां घोष' इत्यत्र तीरे घोषाधारत्वप्रत्ययो न स्यादत आह गुरूणामिति। 'स्पृशेदि'त्यनेन विध्यसमभिव्याहृत-त्वं निराकृतम्। अन्यथाऽग्नौ शैत्यमित्यस्यार्थवादतया सुतरामेवाननुभावकत्वात् दृष्टा-न्तत्वं न स्यादिति भावः।

तीराद्यविशेषितस्य सुवर्थाधेयत्वादेर्घोषादावन्वयबोधायोगात् । न च श-क्तपदस्यैव स्वसाकाङ्क्षपदान्तरोपस्थाप्यार्थान्वितस्वार्थधर्मिकान्वयबोधं प्रति हेतुत्वादन्वयबुद्धौ लक्ष्यार्थस्याप्रवेशः, कुन्ताः प्रविशन्तीत्यादौ लक्ष्यस्य

कृष्णकान्तीटीका।

स्यर्थविशेषितस्यैवेत्यर्थः । अन्वयबोधायोगादिति । इदञ्च-'अग्नौ शैत्यमि'त्यादौ आधेयत्वांशेऽग्न्यादेर्न प्रकारतया भानम्, आधेयत्वस्य च शैत्यप्रकारतया भानमित्य-भिप्रायेणोपपत्तिः कृता—इत्यभिप्रायेणान्यथाऽग्नेरिवाधेयत्वस्याप्युच्छृङ्खलभानेनैतद्-व्युत्पत्तिभङ्गप्रसङ्ग इति ध्येयम् । केचित्तु प्रकृत्यर्थविशेषितप्रत्ययार्थविषयतानिरूपिता-परार्थविषयताकान्वयबुद्धेरेव व्युत्पन्नतयाऽग्नेरिवाधेयत्वस्य शैत्ये प्रकारतयाऽभानेऽपि शैत्याधेयत्वयोर्निरूप्यनिरूपकभावसत्त्वाद् व्युत्पत्तिभङ्ग आवश्यकः, निरूप्यनिरूपक-भावस्यैव मीमांसकमते आकाङ्क्षापदप्रतिपाद्यत्वात्, 'प्रत्ययार्थस्य धर्मान्तरेऽन्वयबुद्धे-रि'त्यस्य प्रत्ययार्थविषयतानिरूपितधर्म्यन्तरविषयताकान्वयबुद्धेरित्यर्थः, इति न कि-ञ्चिदनुपपन्नमित्याहुः । तत्तुच्छम्, घटमित्यादितोऽपि कर्मत्वं घटीयमित्यादि-बोधानुपपत्तेः, घटाविशेषितकर्मत्वस्य घटादौ अन्वयबोधस्याव्युत्पन्नत्वात् । न च प्रकृत्यर्थभिन्नेऽतथाविधप्रत्ययार्थबोधस्याव्युत्पन्नत्वान्नोक्तदोषः, अत एवात्रापि ध-र्म्यन्तर इत्यत्रान्तरपदमुपात्तमिति वाच्यम् । 'अरुणया गवा सोमं क्रीणाती'त्यादा-वारुण्येऽपि तृतीयार्थस्य पारतन्त्र्येणान्वयबोधस्य सर्वसम्मतत्वात् आरुण्यप्रयोज्यतया क्रयादेर्बोधानुपपत्तेः, न ह्यारुण्यप्रयोज्यतयाऽऽरुण्यमन्वेतीत्यलमधिकेन । ननु लक्षक-पदज्ञानस्याहेतुत्वेऽपि लक्षितार्थस्य विशिष्टबोध उत्पत्तुमर्हतीति नोक्तदोष इत्यत आह—न चेति । शक्तपदस्यैवेति हेतुत्वादिति परेणान्वयः, एवकारेण लक्षक-पदव्यवच्छेदः, स्वं-शक्तपदम् । हेतुत्वादिति । स्वज्ञानजन्यार्थोपस्थितिद्वारा इत्या-दिः । लक्ष्यार्थस्य शक्यसम्बन्धिनस्तीरादेः प्रवेशो-भानं, तथा च गङ्गायां घोषोऽ-स्तीत्यादौ घोषपदस्य स्वसाकाङ्क्षगङ्गापदोपस्थाप्यतीरान्वितघोषादिधर्मिकास्तित्वा-न्वयबोधं प्रति हेतुत्वान्न विशिष्टान्वयबोधानुपपत्तिरिति कुतो व्युत्पत्तिभङ्ग इति भा-वः । न च यादृशवाक्यघटकसमुदितपद एव लक्षणा, तत्र विशिष्टान्वयबोधो न स्या-दिष्टत्वादनुभवविरोधस्य वक्ष्यमाणत्वात् । न च गङ्गादिपदेन लक्षणया तीरोपस्थापने भवन्मतेऽपि कथं लक्षकपदस्यानुभावकत्वं शाब्दजनकार्थोपस्थितिजनकज्ञानविषय-त्वरूपस्यानुभावकत्वस्यैव तत्र सत्त्वादिति वाच्यम् । अस्मन्मते शक्तत्वेन यत्किञ्चि-त्पदज्ञानस्य यथाकथञ्चित्सकलपदार्थोपस्थितीनाञ्चान्वयबुद्धौ हेतुत्वेन लक्षकपदजन्या-

रामभद्रीटीका ।

व्युत्पन्नतयेति । अन्यथा चैत्रः पचतीत्यत्र कृतिमान् चैत्रः इत्येवान्वय-बोधः स्यादिति भावः । लक्ष्यस्य—लक्ष्यार्थस्य, कुन्तपदस्य कुन्तधरे शक्तिविरहा-

कुन्तधरादेरन्वयविशेष्यत्वानुपपत्तेः, कुमतिः पशुरित्यादौ लक्ष्यार्थयोर्मिथोऽन्वयबोधस्याप्यानुभविकत्वाच्च । तस्माच्छक्तेरिव भक्तेरपि ज्ञानमनुभावकं भवत्येव, कार्य्यतावच्छेदकस्य सङ्कोचाच्च न व्यभिचारः ॥ २५ ॥

कृष्णकान्तोटीका ।

र्थोपस्थितेर्हेतुत्वेऽपि लक्षकपदज्ञानस्यान्वयबुद्धावहेतुत्वेनाननुभावकत्वात्, शाब्दजनकविषयस्यैवानुभावकत्वरूपत्वात् । विशेष्यत्वानुपपत्तेरिति । तत्राख्यातपदेन स्वसाकाङ्क्षकुन्तपदोपस्थाप्यकुन्तधरान्विताख्यातार्थधर्मिकान्वयबोधस्यैव जननात् कुन्तधरविशेष्यकप्रवेशनाश्रयत्वप्रकारकान्वयबुद्धित्वस्य तत्कार्यतानवच्छेदकत्वेन तदाश्रयबोधस्योत्पादनासम्भवादिति भावः । ननु तत्र विशिष्टान्वयबोधो न जायत एव, किन्तु पदार्थोपस्थितिमात्रमित्यत आह—कुमतिरिति । यद्वा स्वसाकाङ्क्षपदोपस्थाप्यार्थविषयतानिरूपितस्वार्थविषयाकान्वयबुद्धौ शक्तपदस्य हेतुत्वे नोक्तदोष इत्यत आह—कुमतिरिति । तत्र कुमतिपदेन कुमतिविशिष्टस्य पशुपदेन पशुसदृशस्य लक्षणयोपस्थापनेन विशिष्टान्वयबोधौपयिकशक्तपदाभावात् तन्मते विशिष्टान्वयबोधो न स्यादिति भावः । इदमत्रावधेयम्—तत्र विशिष्टान्वयबोधानुभविकत्वमेवानुभविकम्, अन्यथा'ऽग्नौ शैत्यमित्यत्रापि विशिष्टान्वयबोधस्य नैयायिकानुभवसिद्धतया मीमांसकैस्वीकारप्रसङ्गात्, न हि वाद्यनुभवसहस्रं प्रमाणमावहति, किन्तूभयवादिसिद्धोनुभव एव, स च न प्रकृते सम्भवतीत्युपसंहरति तस्मादिति । भक्तेरपि-लक्षणाया अपि, प्रयोज्यत्वं पञ्चम्यर्थः, ज्ञानमर्थोपस्थितिरूपम्, अनुभावकं—शाब्दबोधजनकं, तथा च शक्तिप्रयोज्यार्थोपस्थितिरिव लक्षणाप्रयोज्यार्थोपस्थितिरपि शाब्दबोधजनिका भवत्येवेत्यर्थ इति केचित् । तन्न । तैरपि लक्षणाप्रयोज्यार्थोपस्थितेः शाब्दबोधं प्रति हेतुतास्वीकारेण उपसंहारविरोधात् । वस्तुतस्तु शक्तेरित्यादिकं षष्ठ्यन्तं, प्रकारकत्वं षष्ठ्यर्थः, ज्ञानं पदज्ञानं, तथा च शक्तिप्रकारकमिव लक्षणाप्रकारकमपि पदज्ञानं शाब्दजनकमेव भवतीत्यर्थः, एवकारस्य भिन्नक्रमान्वयपरत्वात् । ननु लक्षकत्वेन पदज्ञानस्यापि हेतुत्वे शक्तिप्रकारकज्ञानजन्ये शाब्दे लक्षणाप्रकारकज्ञानस्य लक्षणाप्रकारकज्ञानजन्ये च तत्र शक्तिप्रकारकज्ञानस्य व्यभिचार इत्यत आह—कार्यतावच्छेदकस्येति । सङ्कोचात्—शक्तिज्ञानादिरूपविशेषणविशेषितत्वात् । चस्त्वर्थे, न व्यभिचारः—न कार्ये कारणाभाववद्वृत्तित्वरूपो व्यभिचार इत्यर्थः,

रामभद्रीटीका ।

दिति भावः । दूषणान्तरमाह—कुमतिरिति । तत्र कुमतिपदेन कुमतिविशिष्टस्य पशुपदेन च पशुसदृशस्य च बोधनात् शक्तपदयोरभावात् अन्वयबोधो न स्यादिति भावः । उपसंहरति तस्मादिति । भक्तेरपीति । लक्षणाया इत्यर्थः । क्वचित्तथैव पाठः । ननु लाक्षणिकस्यानुभावकत्वे शाब्दसामान्यं प्रति शक्तिज्ञानहेतुतायां व्यभिचार

योगरूढं नाम लक्षयति—

**स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्बोधकृन्मिथः ॥**

**योगरूढं न यत्रैकं विनाऽन्यस्यास्ति शाब्दधीः ॥ २६ ॥**

यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत् तन्नाम

---

कृष्णकान्तीटीका।

तथा चाव्यवहितोत्तरत्वसम्बन्धेन शक्तिप्रकारकपदज्ञानविशिष्टान्वयबोधं प्रति शक्तत्वेन पदज्ञानस्य, एवं लक्षणाप्रकारकपदज्ञानविशिष्टान्वयबोधं प्रति लक्षकत्वेन पदज्ञानस्य च हेतुत्वेन व्यभिचारासम्भवादिति भावः। न चाव्यवहितोत्तरत्वस्याननुगतत्वेन तेन सम्बन्धेन पदज्ञानवैशिष्ट्यस्य तद्व्यक्तित्वावच्छिन्नं प्रति तद्व्यक्तित्वेनैव हेतुत्वौचित्यं किं गुरुधर्मस्यावच्छेदकत्वकल्पनेनेति वाच्यम्। अव्यवहितोत्तरत्वानामननुगमेऽपि पदज्ञानप्रतियोगिकत्वेन तत्तत्संयोगानां वह्निप्रतियोगिकत्वसंयोगत्वादिनैवानुगमसम्भवात्, अनुगतस्याव्यवहितोत्तरत्वस्यापि सम्भवाच्च ॥ २६ ॥

योगरूढमिति। क्रमप्राप्तमित्यादिः। स्वान्तर्निविष्टेति। स्वं—लक्षकत्वेनाभिमतपरं स्वान्तर्निविष्टाः स्वघटका ये शब्दास्तेषामर्थ( तदर्थ ? )स्वशक्यार्थयोः परस्परं निरूप्यनिरूपकभावापन्नविषयताशालिबोधजनकं नाम योगरूढमिति यथाश्रुतकारिकाऽर्थः।

व्यासेन विवृणोति यन्नामेति। नामेति प्रकृतत्वाल्लभ्यते। स्वावयववृत्तिलभ्यार्थेनेति, इदञ्च स्वान्तर्निविष्टशब्दार्थप्रतीकलभ्यम्। समं—सह। यद्यपि साहित्यस्य कारिकयाऽप्राप्तत्वेन कुतो विवरणे तथोक्तिस्तथाप्यवयवार्थस्वशक्यार्थयोर्मिथोऽन्वयबोधजनकत्वोक्त्यैव विशेष्यविशेषणभावेनान्वयबोधप्राप्तिः, अन्यथा मिथःपदोपादानवैयर्थ्यापत्तेः, पर्यवसितार्थकथनस्यापि विवरणत्वात्। स्वार्थस्य—स्वशक्यार्थबोधस्य, अन्वयबोधकृत्—अन्वयबोधजनकं, तथा च यादृशानुपूर्वी स्वाश्रयशक्ययादृशार्थधर्मिकस्वाश्रयावयववृत्त्युपस्थाप्ययादृशार्थप्रकारकान्वयबोधजनकतावच्छेदिका तादृशानुपूर्वीमन्नाम तादृशार्थघटिततादृशार्थे योगरूढमिति पर्यवसितम्, अतस्तादृशबोधानुपधायकेयोगरूढे नाव्याप्तिः, न वा पङ्कज इत्यानुपूर्वीप्रकारकभ्रमविषयघटादिनाम्नि पङ्कजनि-

रामभद्रीटीका।

इत्यत आह कार्यतेत्यादि। तथाचाव्यवहितोत्तरत्वसम्बन्धेन शक्तिज्ञानविशिष्टशाब्दं प्रति शक्तिज्ञानत्वेन हेतुत्वम्, एवं लक्षणाज्ञानस्यापीति न व्यभिचार इति भावः ॥२५॥

योगरूढमिति। क्रमप्राप्तमिति शेषः। स्वं लक्ष्यत्वेनाभिमतम्। स्वार्थस्य—स्वशक्यार्थस्य, बोधकृद्यदित्यर्थः। योगरूढमिति। तन्नाम योगरूढमित्यर्थः। लक्ष्यं निर्दिशति न यत्रैकमिति।

स्वावयवेति। मिथ इत्यस्य विवरणं सममिति। आदिना पद्मनाभवास

योगरूढम्, यथा–पङ्कजकृष्णसर्पाश्वगन्धादि, तद्धि स्वान्तर्निविष्टानां पङ्कादिशब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना समं स्वशक्यस्य पद्मादेरन्वयानुभावकं, पङ्कजमित्यादितः पङ्कजनिकर्तृ पद्ममित्यनुभवस्य सर्वसिद्धत्वात् ।

कृष्णकान्तीटीका ।

कर्त्तृपद्मार्थकयोगरूढत्वम्, न वा घटादिघटकधादिलक्षणालभ्यपङ्कजनिकर्त्तृघटितसमुदितलक्षणालभ्ये पद्मबोधजनके नाम्नि तथेत्यादिकं दूषणम्, ता शानुपूर्वीमत्त्वात्, तदभावात्, पद्मादेर्घटपदशक्यत्वाभावाच्च । तत्रावच्छेदकत्वमनतिरिक्तवृत्तित्वम्, तच्च स्वव्यापकत्वरूपं, न तु तदभाववदवृत्तित्वं पूर्वपूर्ववर्णविशिष्टचरमवर्णत्वरूपानुपूर्व्या अन्यत्र वृत्तित्वेनासम्भवापत्तेः । तादृशजनकतात्वावच्छिन्नाधिकरणताशून्यनिष्ठाधिकरणतानवच्छेदकत्वानुपूर्वीत्ववत्त्वमित्युक्तौ च न विवदामहे, अतो विशिष्टान्वयबोधजनकतायां पङ्कज इत्यानुपूर्व्याः स्वरूपसम्बन्धरूपावच्छेदकत्वविरहेऽपि न क्षतिः । न च पङ्कज इत्यानुपूर्व्यास्तादृशविशिष्टबोधानुपधायकपङ्कजादिपदेऽपि सत्त्वात् कुतस्तस्यानतिरिक्तवृत्तित्वमिति वाच्यम् । स्वरूपयोग्यताया एव लक्षणे निविष्टत्वात् । न च स्वरूपयोग्यत्वं तादृशजनकतावच्छेदकानुपूर्वीमत्त्वरूपं वाच्यम्, तथा च पङ्कजेत्याद्यानुपूर्वीप्रकारकभ्रमविषयघटादिपदे तद्भावादतिव्याप्त्यसम्भवादवच्छेदकानुसरणमफलमिति वाच्यम् । पदनिष्ठस्वरूपयोग्यताया जनकज्ञानविषयत्वरूपत्वेन घटादिपदे तदसत्त्वात् । निरुक्तस्वरूपयोग्यत्वस्य निवेशे पङ्कजादिपदेऽपि तदभावादसम्भवापत्तेः, घटजनकतावच्छेदकदण्डत्वस्य कालिकादिसम्बन्धेन पटादावपि सत्त्वेन पटादेर्घटजनकत्ववारणाय तन्निष्ठजनकतावच्छेदकसम्बन्धेन तद्वत्त्वस्यावश्यं वक्तव्यतया विषयितासम्बन्धेनानुपूर्व्याः पदवृत्तित्वाभावात् । तादृशानुपूर्वीमत्त्वं–तादृशानुपूर्वीघटकवर्णसमुदायत्वम्, अतो न चरमवर्णरूपानुपूर्व्याश्चरमवर्णपर्यवसन्नत्वेनातिव्याप्तिः, एवं विपरीतानुपूर्व्या अपि तादृशावच्छेदकत्वेन पूर्वादिवर्णेऽपि । अधिकन्तु प्रागेव प्रपञ्चितम् । लक्ष्यं प्रदर्श्य लक्षणं सङ्गमयति यथेति । तद्धि—पङ्कजादिपदं हीत्यर्थः, स्वान्तर्निविष्टानां–पङ्कजादिपदघटकानां, पङ्कजादीत्यादिना जनधातु–डप्रत्ययपरिग्रहः । पङ्कजनिकर्त्रादिनेति । आदिना कृष्णसर्पादिपरिग्रहः, पङ्कजपदेन पङ्कस्य, जनधातुना जनेर्डप्रत्ययेन च कर्तुर्वृत्त्या उपस्थापनादिति भावः । स्वशक्यस्य—पङ्कजादिपदशक्यस्य, अन्वयानुभावकं—पद्मविशेष्यकपङ्कजनिकर्तृप्रकारकान्वयबोधजनकतावच्छेदकानुपूर्वीघटकवर्णसमुदायत्ववदित्यर्थः । पङ्कजादिपदस्य तथात्वे विप्रतिपन्नं प्रत्याह पङ्कजमित्यादित इति ।

ननु पङ्कजादिशब्देन कदाचित् पद्ममात्रस्य कदाचिच्च पङ्कजनिकर्त्तृमात्रस्य बोधनात्तदानुपूर्व्यास्तादृशविशिष्टान्वयबोधजनकतातिरिक्तवृत्तित्वेनासम्भवः । यदि च यो-

रामभद्रीटीका ।

देवादिपरिग्रहः । लक्ष्ये लक्षणं योजयति तद्धीति । पङ्कजादिनाम हीत्यर्थः ।

इयांस्तु विशेषो—यद्रूढमपि मण्डपरथकारादिपदं योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकम्, 'मण्डपे शेते' इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव, 'मण्डपं भोजयेदि'त्यादौ

कृष्णकान्तीटीका।

गार्थबोधजनकतावच्छेदिका सती रूढ्यर्थबोधजनकतावच्छेदिका यादृश्यानुपूर्वी तद्वत्त्वमेव तल्लक्षणम्, अवच्छेदकत्वन्तु स्वरूपसम्बन्धरूपं निवेश्यम् इत्युक्तौ नैष दोषः, तथापि किञ्चिदर्थयौगिके किञ्चिदर्थरूढे मण्डपरथकारादिशब्देऽतिव्याप्तिः तादृशानुपूर्वीमत्त्वादित्यतो लक्ष्यतानियामकमभिदधान एव कारिकापरप्रतीकं व्याकरोति इयांस्त्विति। तथा च 'न यत्रैकमि'त्यादिना एकं स्वावयवलभ्यार्थं विना रूढ्यर्थस्य शाब्दधीर्यत्र नास्ति तदेवैतल्लक्षणलक्ष्यमिति सूचितं, न तु तल्लक्षणघटकमिति भावः। रथकारादीत्यादिना यक्षकर्दमादिपरिग्रहः, तेनापि कदाचित् "कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः" इत्यादिलभ्यस्य कर्पूरागुरुकस्तूरीकक्कोलकर्दमविशेषरूपस्य कदाचिद्यक्षसम्बन्धिकर्दमरूपयोगार्थमात्रस्य बोधनात्। योगार्थविनाकृतरूढ्येति। गृह–सूत्रधारादिविनाकृतस्येत्यर्थः। योगार्थस्य–मण्डपानकर्तृरथकर्त्रादेः। बोधकमिति। तथा च मण्डपादिकं नैतल्लक्षणलक्ष्यमिति तत्र लक्षणागमनेऽपि न क्षतिरिति भावः। ननु मण्डपादिशब्दस्यैकार्थं विनाकृतापरार्थबोधकत्वमेवासिद्धमिति कथं तस्य लक्ष्यतास्वीकार इत्यत आह मण्डपे शेते इत्यादाविति। आदिना मण्डपे गच्छति उपविशतीत्यादिपरिग्रहः, योगार्थस्य–अवयवशक्तिलभ्यस्य। मण्डपानकर्त्रादेरिवेति। यथा मण्डपानकर्त्रादेरयोग्यत्वेनान्वयबोधजनकत्वं तथेत्यर्थः। भोजयेदित्यादाविति। आदिपदेन मण्डपे गच्छति उपविशति पश्यतीत्यादिपरिग्रहः। समुदितार्थस्य—समुदायशक्तिलभ्यस्य, अयोग्यत्वेन–बाधितत्वेन, मण्डपानकर्त्तरि शयनाधिकरणत्वस्य गृहादेर्भोजनकर्मत्वादेर्बाधितत्वेन शाब्दकारणीभूतस्य बाधविरहरूपस्य विशेष्यविशेषणत्वस्वरूपस्य वा योग्यत्वस्य तत्रासम्भवादिति भावः। न च बाधविरहरूपाया योग्यतायाः स्वरूपसत्या हेतुत्वेन यदा नास्ति बाधनिश्चयस्तदा तादृशबोधोत्पत्तौ बाधकाभावः, यदि च 'योग्यताभ्रमाच्छाब्दभ्रम' इति प्राचामनुभवरक्षार्थं विशेष्यविशेषणवत्त्वरूपयोग्यताज्ञानमेव हेतुस्तदापि तद्भ्रमात्तादृशबोधोत्पत्तौ बाधकाभाव इति वाच्यम्। कदाचित्तादृशबोधोपपादने बाधनिश्चयादिवशेनैकार्थमात्रविषयकबोधस्यापि

रामभद्रीटीका।

न यत्रैकमित्यादि व्याकुरुते इयांस्त्वित्यादिना। रथकारादीत्यादिना यक्षकर्दमादिपरिग्रहः। ननूक्तक्रमेण 'पङ्कजं शैवालमि'त्यत्र रूढ्यर्थस्य शैवाले बाधेनान्वयायोगात् पङ्कजनिकर्तृत्वमेवानुभावयेदिति लक्ष्याप्रसिद्धिरत आह—योगरूढं त्विति। अवयवशक्त्येत्यस्य योगार्थमेव इत्यनेनान्वयः। समुदायशक्त्या च रूढ्यर्थमेव इत्यनेना-

समुदितार्थस्य गृहादेरयोग्यत्वेनान्वयावोधात्। योगरूढन्तु पङ्कजादिपदमवयववृत्त्या रूढ्यर्थमेव समुदायशक्त्या चावयवलभ्यार्थमेवानुभावयति, नत्वन्यत् व्युत्पत्तिवैचित्र्यात्तथैव(१) साकाङ्क्षत्वात्। अत एव "पङ्कजं

कृष्णकान्तीटीका।

क्कुत्रचित् सम्भवेन प्रकृतसिद्धेः। अन्वयावोधादिति। अन्वयबोधाजनकत्वस्यानुभवसिद्धत्वादित्यर्थः। नन्वेवं 'पङ्कजं शैवालमि'त्यादौ समुदितार्थपद्मादेरिव 'भूमौ पङ्कजमुत्पन्नमि'त्यादौ योगार्थस्य पङ्कजनिकर्त्रादेरयोग्यत्वेनान्वयाबोधाल्लक्ष्याप्रसिद्धिरित्यत आह योगरूढन्त्विति। रूढ्यर्थमेवेति। न तु रूढ्यर्थं विनाकृतं केवलं योगार्थमन्यं वेति शेषः। अवयवलभ्यार्थमेवेति। न तु योगार्थं विनाकृतं रूढ्यर्थमन्यं वेति शेषः। क्वचित्त्वन्यमिति पाठः। तत्र तस्यैव तदुभयार्थकत्वं बोध्यं न तु पूरणम्। व्युत्पत्तिवैचित्र्येण—अनुभवस्य विलक्षणत्वेन, तथैव—तादृशविशिष्टान्वयबोधं प्रत्येव, साकाङ्क्षत्वात्—पङ्कजेत्याकाङ्क्षाया हेतुत्वात्।

केचित्तु योगार्थबोधजनकतावच्छेदिका सती या रूढ्यर्थबोधजनकतावच्छेदिका यादृश्यानुपूर्वी तादृशानुपूर्वीमत्वं योगरूढत्वम्, अवच्छेदकत्वं चात्र स्वरूपसम्बन्धविशेषोऽनतिरिक्तवृत्तित्वं वेत्यन्यदेतत्। अत एव स्वान्तर्निविष्टशब्दार्थस्वार्थयोर्द्वन्द्वसमासात् परं बोधजनकार्थकबोधकृत्पदोपन्यासः। न चैवं विवरणे 'स्वावयववृत्तिलभ्येन समं स्वार्थस्यान्वयबोधकृदि'त्यसङ्गतं स्यात्, एकार्थेऽपरार्थबोधजनकताया लक्षणाघटकत्वादिति वाच्यम्। तत्र साहित्यस्य बोधजननेनान्वयेनोक्तार्थस्यैव लाभात् 'पुत्रेण सहागतः' इत्यादावप्युभयगमनस्यैव प्रत्ययादेवं लक्षणसङ्गमनेऽपि 'सममि'त्यस्य तादृशान्वयस्तत्र बोध्यः। (ननु) उक्तलक्षणस्य मण्डपादिशब्देऽतिव्याप्तिवारकविशेषणसम्पादकतया कारिकापरप्रतीकं व्याकुर्वाणो मण्डपादिशब्दे लक्षणागमनं व्यञ्जयति इयांस्त्विति। इदं पुनरित्यर्थः। विशेष इति। योगरूढयोरित्यादिः, वैलक्षण्यमिति तदर्थः। नन्वेकशब्दार्थयोर्द्वयोर्मिथोऽन्वयस्याव्युत्पन्नत्वात् कथं पङ्कजशब्दादितः पङ्कजनिकर्तृपद्मयोः परस्परमन्वय इत्यत आह व्युत्पत्तिवैचित्र्यादिति। व्युत्पत्तिसङ्कोचादित्यर्थः। आख्यातार्थयोः कृतिवर्त्तमानत्वयोर्मिथोऽन्वयानुभवेन तादृशव्युत्पत्तिसङ्कोचस्यावश्य-

रामभद्रीटीका।

न्वयः। एवकारस्य विवरणं न त्वन्यत् इति। तथैव—स्वावयवलभ्यार्थस्वशक्यार्थयोः परस्परमेव, एतल्लाभाय च कारिकायां मिथःपदोपादानमिति भावः। अत एव—तादृशाकाङ्क्षास्वीकारादेव इत्यर्थः। अन्यथा रूढ्यर्थयोगार्थयोर्विनाप्यन्वयबोधकत्वे पङ्कजपदे लक्षणा न स्यादिति वार्तिकलिखनं विरुद्धं स्यादिति भावः।

(१) न त्वन्यं वैचित्र्येण तथैवेति कृष्णकान्तसंमतः पाठोऽत्र द्रष्टव्यः।

कुमुद''मित्यत्र पङ्कजनिकर्तृत्वेन ''भूमौ पङ्कजमुत्पन्न''मित्यादौ च पद्मत्वेन पङ्कजपदस्य लक्षणयैव कुमुदस्थलपद्मयोर्बोध इति वार्त्तिकम्।

ननु 'पुष्पं पङ्कजे'त्यादौ पङ्कजादेरन्वयस्याबोधात्, बोधाच्च 'पङ्कजपुष्प'मित्यादौ निर्विभक्तिकेन पङ्कजादिपदेनोपस्थाप्यार्थस्यान्वयधीसामान्यं

---

कृष्णकान्तीटीका।

त्त्वादिति भावः। ननु तादृशव्युत्पत्तिसङ्कोचेऽपि एकार्थविनाकृतापरार्थबोधः कथं न जायते, आकाङ्क्षादिघटितसामग्रीसत्त्वादित्यत आह तथैवेति। तादृशशाब्दं प्रत्येवेत्यर्थः। साकाङ्क्षत्वात्—आकाङ्क्षाज्ञानस्य हेतुत्वात्, तथा चैकार्थविनाकृतापरार्थबोधस्याकाङ्क्षाज्ञानकार्यताच्छेदकानाक्रान्ततया पङ्कजादिपदेनापत्त्यसम्भवादिति भावः। तथा च शक्त्या समुदायशक्यान्यविशेष्यकबोधजनकतावच्छेदकत्वमपि लक्षणघटकानुपूर्वीविशेषणम्, मण्डपाद्यानुपूर्व्या अतथात्वेन तादृशानुपूर्वीमत्त्वमादाय न तत्रातिव्याप्तिरित्यावेदनायैव कारिकापरार्द्धमित्यभिप्रायः। अन्यत् सर्वं पूर्ववदवसेयमिति प्राहुः।

पङ्कजादिशब्दस्यैकार्थमात्रस्याबोधकत्वे वार्त्तिकमपि प्रमाणयति अत एवेति। पङ्कजादिशब्देन शक्त्या एकार्थमात्रस्य बोधनादेवेत्यर्थः। पङ्कजनिकर्तृत्वेनेति। पङ्कजपदस्य लक्षणयैव कुमुदबोध इति योजना। लक्षणयैवेत्येवकारेण शक्तिप्रयोज्यत्वप्रतिक्षेपः।

शङ्कते—नन्विति। पञ्चम्यन्तद्वयं तन्त्रमित्यत्रान्वयि। निर्विभक्तिकेनेति। सामान्यतः पङ्कजपदोत्तरपदोपस्थाप्यत्वस्य तन्त्रत्वे 'पुष्पं पङ्कजमि'त्यादौ व्यभिचारोऽतः कार्यदिशि, 'पङ्कजं पुष्पमि'त्यादौ निर्विभक्तिकपङ्कजपदोपस्थाप्यार्थप्रकारकान्वयबोधानुत्पादात् सविभक्तिकपङ्कजपदोत्तरपदोपस्थाप्यत्वस्यैव तत्र सत्त्वाद्व्यभिचारोऽतः कारणदिशि निर्विभक्तिकत्वनिवेशः, तथा च विशेष्यतया निर्विभक्तिकपङ्कजपदोपस्थाप्यार्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन निर्विभक्तिकपङ्कजपदोत्तरपदोपस्थाप्यत्वं कारणत्वमिति पर्यवसितम्। अत्रेदमवधेयम्—'पुष्पं पङ्कजमि'त्यादौ पङ्कज एव पुष्पाभेदो भासते न तु पुष्पे पङ्कजाभेद इत्युक्तौ कार्यदिशि निर्विभक्तिकत्वनिवेशनमफलम्। न च 'पङ्कजे रूपमि'त्यादौ सविभक्तिकपङ्कजपदोपस्थाप्यपङ्कजाधेयत्वप्रकारकान्वयबोधे व्यभिचारवारणाय तदिति वाच्यम्, तादात्म्यसम्बन्धावच्छिन्नप्रकारताया एव निवेश्यत्वान्न तत्र व्यभिचार इति न देश्यम्। पङ्कजरूपमित्यादिवद्रूपं पङ्कजमित्यादितो रूपे आधेयतया पङ्कजप्रकारकबोधवारणाय सम्बन्धान्तरस्थलेऽपि तादृशकार्यकारणभावस्यावश्यकत्वात्, तथापि पङ्कजाधेयत्वस्य

रामभद्रीटीका।

पङ्कजमित्यादौ रूढ्यर्थयोगार्थयोरन्वय एव दुर्घट इत्याशङ्कते नन्विति। तादृ-

प्रत्येव तादृशपङ्कजादिपदोत्तरशब्दोपस्थाप्यत्वं तन्त्रम् , एवं 'पुष्पं पङ्कज-मि'त्यादौ अन्वयबोधदर्शनात्तदनुरोधेन सविभक्तिकपङ्कजादिपदोपस्थाप्यार्थान्वयबोधं प्रति स्वसमानविभक्तिकपदोपस्थाप्यत्वञ्च, अत(१)स्तदुपस्थापितस्य

कृष्णकान्तीटीका ।

पङ्कजपदोपस्थाप्यत्वादुक्तस्थले व्यभिचारासम्भवादिति । एवं यदि पङ्कजपदोपस्थाप्यत्वं पङ्कजपदवृत्तिज्ञानजन्योपस्थितिविषयत्वं, तदा सविभक्तिपङ्कजपदस्य वृत्तेरप्रसिद्धत्वादुभयत्रैव तन्निवेशनमफलमित्यपि विवेच्यम् । नन्वेवं 'पुष्पं पङ्कजमि'त्यादाविव पुष्पे पुष्पस्य वा पङ्कजमित्यादावपि पुष्पधर्मिकपङ्कजप्रकारकान्वयबोधः कथन्न जायते ? यदि च सविभक्तिकपङ्कजपदोपस्थाप्यार्थप्रकारकान्वयबोधं प्रति तादृशपङ्कजपदपूर्वसमानविभक्तिकपदान्तरोपस्थाप्यत्वस्य तन्त्रत्वमित्युच्यते, तदा पङ्कजं पुष्पमित्यादौ व्यभिचारः, यदि च तादृशबोधं प्रति तादृशपङ्कजपदोत्तरसमानविभक्तिकपदोपस्थाप्यत्वं तन्त्रमित्युच्यते, तदा 'पुष्पं पङ्कजमि'त्यादौ व्यभिचारः, अतः सविभक्तिकपङ्कजपदस्थले स्वतन्त्रप्रयोज्यप्रयोजकभावमप्याह अत इति(२) । निर्विभक्तिकत्वमन्तर्भाव्य कार्यकारणभावस्यावश्यकत्वादित्यर्थः । पङ्कजमित्यादिपदेन 'पङ्कजं पुष्पमि'त्यादिपरिग्रहः । अन्वयबोधदर्शनात्—पुष्पधर्मिकपङ्कजप्रकारकान्वयबोधदर्शनादित्यर्थः । तदनुरोधेन—तादृशबोधानुरोधेनेत्यर्थः । सविभक्तिकेत्यादि । विशेष्यतया सविभक्तिकपङ्कजपदोपस्थाप्यार्थप्रकारकान्वयबोधं प्रति स्वोत्तरविभक्तिसजातीयविभक्त्यन्तस्वसाकाङ्क्षपदोपस्थाप्यत्वं तन्त्रमित्यर्थः । 'पुष्पं पङ्कजं, द्रव्यं घट' इत्यादौ द्रव्ये पङ्कजबोधवारणाय साकाङ्क्षत्वनिवेशः । न च कार्यदिशि सविभक्तिकत्वनिवेशनमफलं निर्विभक्तिकपङ्कजपदोत्तरविभक्तेरप्रसिद्ध्या स्वपदेन तस्य धर्तुमशक्यतया व्यभिचारासम्भवादिति वाच्यम्। 'पङ्कजपुष्पमि'त्यादौ पङ्कजपदोत्तरविभक्तेरप्रसिद्धावपि 'पङ्कजं पुष्पमि'त्यादिस्थलीयपङ्कजपदस्य विभक्तिमत्त्वेन तत्साकाङ्क्षपदोपस्थाप्यत्वाभावाद्व्यभिचारसम्भवात् कार्यदिशि सविभक्तिकत्वनिवेशः । न च 'पङ्कजपुष्पमि'त्यादावपि विभक्तेरवर्त्तमानत्वात्तस्य कथं सविभक्तिकत्वमनुच्चारस्यैव विभक्तिकार्यकारित्वात्, "आगमा यद्गुणीभूतास्ते तद्ग्रहणेन गृह्यन्ते" इति न्यायान्नुरागमस्यापि विभक्तिग्रहणगृह्यत्वाद्विभक्तिपदस्य विभक्त्यनुसन्धानपरत्वादेतद्दोषस्य वक्ष्यमाणत्वाच्च, अत एव—तादृशप्रयोज्यप्रयोजकभावद्वयस्वीकारस्यावश्यकत्वात् । तदुपस्थापितस्य—सवि-

रामभद्रीटीका ।

शेति । निर्विभक्तिकेत्यर्थः । तदुपस्थापितस्य—पङ्कजपदोपस्थापितस्य ।

---

( १ ) अतएवेति पाठ कृष्णकान्तेनात्र व्याख्यातः ।

( २ ) अत्र सर्वत्र मूलपुस्तके धृतस्य 'एवं' इति संगतस्य पाठस्य सत्वादेतत्प्रतीकधारणं सार्थकं चिन्त्यम् ।

तस्य पङ्कजातादेः कथं पदान्तरानुपस्थापिते पद्मादावन्वय इति चेत् ।

"अपङ्कजवृत्तिः सत्त्वे"त्यादौ "स्खलदक्षरसंशोभि तरुण्या मुखपङ्क-

---

कृष्णकान्तटीका ।

भक्तिकेन निर्विभक्तिकेन वा पङ्कजपदेनोपस्थापितस्य, पदान्तरानुपस्थिते—सविभ-क्तिकपङ्कजपदसाकाङ्क्षसमानविभक्तिकेन निर्विभक्तिकपङ्कजपदोत्तरवर्तिना पदान्तरेण वाऽनुपस्थापिते । अन्वय इति । विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः फलजनकत्वनियमादिति भावः । तथा चोक्तलक्षणमसम्भवीति पूर्वपक्षिणामभिप्रायः ।

समाधत्ते अपङ्कजेति । पङ्कजभिन्नेत्यर्थः । इत्यादावित्यस्य व्युत्पत्तिसंकोच-हेतुव्यभिचारादित्यनेनान्वयः, तथा च पङ्कजभिन्नवृत्तिसत्तेति बोधस्य निर्विभक्तिक-पङ्कजपदोपस्थाप्यपङ्कजप्रकारकस्य विशेष्यतासम्बन्धेन नञर्थे भिन्ने तादृशपङ्कजपदोत्त-रशब्दानुपस्थाप्येऽप्युत्पत्तेः प्रथमकार्यकारणभावे व्यभिचार इति भावः । तत्र पङ्क-जवृत्तिरित्युक्तौ पङ्कजवृत्त्याधेयत्वस्य तादृशपदोपस्थाप्यत्वान्न व्यभिचारः सम्भव-तीत्यतो नञर्थानुसरणम् । ननूक्तस्थले पङ्कजवृत्तिभिन्न इत्येव बोध इति न व्यभि-चारः, अतः सत्तापदोपन्यासः, तथा च तादृशबोधस्य भ्रमत्वेनाभ्रान्तस्य दोषाद्य सत्त्वदशायां यस्य कस्य वा तादृशबोधो न स्यादिति गूढाभिप्रायः । न च भेदस्यैव नञः शक्यत्वात् सत्ताया भेदवृत्तित्वबाधात् सत्तापदोपादानेऽपि भवदभिप्रेतबोधस्य भ्रमत्वं दुर्वारमिति सत्तापदोपादानं व्यर्थम्, व्यभिचारोऽपि दुःशक्यनिर्वाह इति वा-च्यम् । तथा सत्त्वेऽपि भेदस्याश्रयतयान्वयादभिन्नलाभात् । न हि नञर्थस्यान्वये तद्साकाङ्क्षपदान्तरोपस्थाप्यत्वं तन्त्रम् । अघट इत्यादौ च व्यभिचाराल्लक्षणया तथालाभसम्भवाच्च । भवतु तावदेवं, तथापि अपङ्कजमित्यस्यैव सम्यक्त्वे शेषवै-यर्थ्यमिति तु रिक्तं वचः, तादृशबोधस्य प्रथमकार्यकारणतावच्छेदकानाक्रान्तत्वात्, द्वितीयस्य तथात्वेऽपि तत्र सत्त्वादुभयत्रैव व्यभिचारासम्भवात् । 'अपङ्कजरूपमि'-त्यादौ च वयं न विवदामहे, वैयर्थ्यविरहात् स्वतन्त्रेच्छस्य नियन्तुमशक्यत्वाच्च । द्वितीयकार्यकारणभावेऽपि व्यभिचारं घटयति स्खलदिति । तथा च मुखस्य स्वसमानविभक्तिकपदोपस्थाप्यत्वाभावाद्व्यभिचार इति भावः ।

इदमत्रावधेयम्—तादात्म्यसम्बन्धेन पङ्कजपदार्थप्रकारकान्वयबुद्धौ निरुक्तस्य हेतुत्वो-क्तौ प्रथमे न व्यभिचारः, द्वितीये समासाघटकपङ्कजपदस्य कार्यदिशि निवेशात् स्व-समानविभक्तिकेत्यस्य स्वोत्तरविभक्तिविजातीयविभक्तिराहित्ये पर्यवसानात् व्यभि-

रामभद्रीटीका ।

**अपङ्कजवृत्तिरिति** । पङ्कजभिन्नवृत्तिरित्यन्वये पङ्कजपदोत्तरपदोपस्थाप्यत्वस्यास-म्भवादिति भावः । निर्विभक्तिकत्वानन्तर्भावेनापि उक्तनियमे व्यभिचारमाह—**स्खलदि-ति। सङ्कोचेनेति** । तथाच तादृशपङ्कजपदोपस्थाप्यत्वमेव तन्त्रम् न तु तादृशपदोत्तरपदो-

ज" मित्यादौ च व्यभिचारादुक्तव्युत्पत्तेः सङ्कोचेनेति गृहाण । न च धेनुपदस्य धानकर्मत्वविशिष्टायां गवीव पङ्कजादिपदस्यापि पङ्कजातत्वादिविशिष्टे पद्मादौ रूढिरेवास्तु, न तु योगरूढिरिति साम्प्रतम् । अन्यत्र क्लृप्तशक्तिभ्यः पङ्कजन्यादिपदेभ्य एवाकाङ्क्षादिसाचिव्येन पङ्कजनिकर्तृत्वादेर्लाभसम्भवे तद्विशिष्टस्य पद्मस्य गुरोः समुदायाशक्यत्वादनन्यलभ्य-

---

कृष्णकान्तीटीका ।

चार इत्युक्तव्युत्पत्तेः कार्यकारणभावद्वयस्य सङ्कोचेन समुदायशक्यतावच्छेदकानवच्छिन्ननामार्थविशेष्यकत्वस्य कार्यतावच्छेदकविशेषणत्वेन, यद्वा उक्तव्युत्पत्तेर्गिशेष्यतारूपोक्तकार्यतावच्छेदकसम्बन्धस्य सङ्कोचेन—समुदायशक्यतावच्छेदकानवच्छिन्ननामार्थनिष्ठत्वविशेषितत्वेनेत्यर्थः । द्वितीयनियमे च स्वसमानविभक्तिकत्वस्य विजातीयविभक्तिराहित्यार्थकत्वेनेत्यर्थः । अन्वय इति पूर्वेणान्वयः । गृहाण—अवधारय, स्वीकुर्विति तदर्थः । पङ्कजनिकर्तृ पद्ममितिबोधस्य सर्वानुभवसिद्धत्वादिति भावः । केचित्तु सङ्कोचेनेति, तथा च प्रकारतया तादृशबोधं प्रति तादृशपङ्कजपदोपस्थाप्यत्वं तन्त्रं, न तु विशेष्यतया तादृशबोधं प्रति तादृशपङ्कजपदोपस्थाप्यत्वमिति भावः, शेषं पूर्ववदित्याहुः । तच्चिन्त्यम्, 'पुष्पं पङ्कजे'त्यादितोऽपि तादृशबोधादव्यभिचारापत्तेर्वारणासम्भवात् । शङ्कते न चेति । साम्प्रतमित्यग्रेणान्वयः । धानकर्मत्वं—दोहनकर्मत्वं, न तु वत्सकर्तृकदुग्धपानकर्मत्वं, द्रवद्रव्यगलाधः—संयोगानुकूलव्यापारात्मकपानकर्मत्वस्य गलाधःसंयोगस्य दुग्धादावेव सत्त्वेन गवि तद्बाधात्, परम्परया धानकर्मत्वस्य वैशिष्ट्यनिवेशे वयं न विवदामहे । गवीति । अन्यथा धेनुपदान्महिष्यादिबोधापत्तेरिति भावः । पङ्कजादीत्यादिपदात् रथकारादिपरिग्रहः,—जनधातुडप्रत्ययपरिग्रहो वा । पङ्कजातत्वादिविशिष्टे—पङ्कजनिकर्तृत्वादिविशिष्टे । रूढिरेवेत्येवकारव्यवच्छेद्यं स्वयमेवाह न त्विति । अन्यत्र—पङ्कोत्पत्त्याश्रयादिषु । क्लृप्तेति । 'पङ्कं शैवालमि'त्यादौ पङ्कादिशब्दस्य कर्दमे शक्तेरावश्यकत्वादिति भावः । पङ्कजादीत्यादिना डप्रत्ययपरिग्रहः । आकाङ्क्षादिसाचिव्येन—आकाङ्क्षादिसहकारेण, तद्विशिष्टस्य—पङ्कजनिकर्तृत्वादिविशिष्टस्य । गुरोरिति । पद्मत्वापेक्षया निरुक्तपद्मत्वस्य गुरुत्वादिति भावः । समुदायाशक्यत्वात्—

रामभद्रीटीका ।

पस्थाप्यत्वमिति भावः । नचेति । साम्प्रतमित्यग्रेऽन्वयः । धानकर्मत्वं—दोहनकर्मत्वम् । गवीवेति । अन्यथा धानकर्मत्वविशिष्टमात्रस्य शक्यत्वे महिष्यादेरपि धानकर्मत्वाविशेषात् धेनुपदाद्बोधः स्यादिति भावः । पङ्कादीत्यादिना जन्धातुडप्रत्ययस्य परिग्रहः । तद्विशिष्टस्येति । पङ्कजनिकर्तृत्वविशिष्टपद्मस्येत्यर्थः । समुदायाशक्यत्वादिति ।

स्यैव शब्दार्थत्वात् । यद्यपि कर्तृवाचकडप्रत्यय एव पद्मत्वविशिष्टस्य लक्षणया भानसम्भवान्न पङ्कजभागस्य तत्र शक्तिरुचिता, प्रकारान्तरालभ्यस्यैव शब्दशक्यत्वमित्युक्तत्वात्, कृतिवर्त्तमानत्वयोरिवैकपदार्थयोरपि कर्तृपद्मयोर्मिथोऽन्वयस्य सम्भवित्वात् । तथाप्यवयवानां शक्तेरग्रहे ग्रहेऽपि वा पद्मादौ तदर्थस्यान्वयधीविरोधिधीदशायां पङ्कजमस्तीत्यादितः

---

### कृष्णकान्तीटीका ।

तादृशगुरुधर्मावच्छिन्नस्य समुदायशक्यत्वासम्भवात्, तादृशपद्मत्वस्य शक्यतावच्छेदकत्वासम्भवादिति यावत् । इदञ्चानन्यलभ्यस्यैव शब्दार्थत्वादित्यत्र हेतुः । शङ्कते यद्यपीति । कर्तृवाचकेति 'सप्तमीपञ्चम्यन्ताज्जनेर्डः' इति सूत्रेण कर्त्तरि डप्रत्ययविधानादिति भावः । तत्र—पद्मत्वविशिष्टे । औचित्ये हेतुमाह प्रकारान्तरालभ्येति । उक्तत्वात् भवतैवेत्यादिः, अन्यथा पङ्कजनिकर्तृत्वादिविशिष्टपद्मत्वावच्छिन्ने शक्तिरेव समुचिता स्यादिति भावः । नन्वेकपदोपस्थाप्यार्थयोः परस्परान्वयस्याव्युत्पन्नतया डप्रत्ययार्थयोः कर्तृपदयोरन्वयासम्भवेन पङ्कजनिकर्तृ पद्ममिति बोधस्य सर्वानुभवसिद्धस्यानुपपत्तिरेव तत्र तत्कल्पने बाधिका भविष्यत्यत आह कृतिवर्त्तमानत्वयोरिवेति । तथा च फलानुरोधेन तत्र तादृशव्युत्पत्तिसङ्कोचेऽत्रापि तत्संकोचे बाधकाभाव इति भावः । सम्भवित्वादिति । तथा च पङ्कजादिकं नाम यौगिकमेवेति योगरूढनामाप्रसिद्ध्या कुतो नाम्नश्चतुर्धा विभागः । समाधत्ते तथापीति । अवयवानां शक्तिग्रहे पङ्कजमस्तीत्यादितः पद्ममस्तीत्याद्यनुभवार्थमवश्यं पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढिरुपेयेत्येका योजना, तत्रावयवशक्त्यग्रहदशायां तद्घटितलक्षणाग्रहासम्भवात्तदानीं पङ्कजपदात्पद्मत्वविशिष्टबोधो नाभ्युपेयत एव, त्वयापि लाक्षणिकपदान्तरस्थले शक्तेरग्रहे लक्ष्यार्थस्य ग्रहोऽवश्यं वक्तव्य इत्यत आह ग्रहेऽपि वेति । तदर्थस्य—पङ्कजनिकर्त्तृत्वरूपावयवार्थस्य, अन्वयधीविरोधिधीदशायां—पङ्कजनिकर्तृभिन्नं पद्ममित्यादिबाधनिश्चयदशायामिति

### रामभद्रीटीका ।

पद्मत्वस्य शक्यतावच्छेदकत्वसम्भवे पङ्कजनिकर्तृपद्मत्वस्य शक्यतावच्छेदकत्वाकल्पनादिति भावः । शङ्कते यद्यपीति । कर्तृवाचकेति सप्तमी 'पञ्चम्यन्ताज्जनेर्ड' इति सूत्रेण कर्तरि डप्रत्ययविधानादिति भावः । तत्र—पद्मत्वविशिष्टे । नन्वेकपदोपस्थाप्यार्थयोर्मिथोऽन्वयासम्भवात् कथं शक्तिलक्षणाभ्यामुपस्थाप्यार्थयोः कर्तृपद्मयोरन्वय इत्यत आह कृतीति । सम्भवित्वादिति । तथाच पङ्कजादिशब्दस्य यौगिकत्वमेवेति विभागव्याघात इति भावः । नन्ववयवशक्तिज्ञानं विना पङ्कजमस्तीत्यादितः पद्ममस्तीत्यनुभवो नोपपद्येत इति यदि ब्रूयात्, तदाप्याह—ग्रहेऽपीति । तदर्थस्य—अवयवलभ्यार्थस्य, विरोधिधीदशायां—

पद्ममस्तीत्याद्यनुभवार्थमवश्यं पद्मत्वादिविशिष्टे पङ्कजादिभागस्य रूढिरुपेया, इतरथा प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्य पदार्थान्तरेणान्वयस्य व्युत्पन्नतया डप्रत्ययोपस्थापितस्यापि पद्मस्यास्तित्वादिना सहाऽन्वयानुपपत्तेः, अत एव पङ्कजादिपदागृहीतशक्तिकस्य पुंसः 'पङ्कजमस्ती'त्यादितो

---

कृष्णकान्तीटीका ।

तु नार्थः, तादृशविरोधिज्ञानकाले डप्रत्ययादिना लक्षणया पद्मत्वविशिष्टबोधे बाधकाभावेन निरुक्तयुक्तेः शक्तिस्वीकारानुपयुक्तत्वात्, किन्तु तदर्थस्य-अवयवार्थस्य, 'अन्वयधीविरोधीति' अन्वयः सम्बन्धः, तद्विरोधी तदभावादिः, तज्ज्ञानदशायां, तथा च शक्यसम्बन्धाभावग्रहदशायां लक्षणाया अग्रहकालेऽपीति यावत् । डप्रत्ययादेर्लक्षणाऽग्रहकालेऽपि पद्मादिशब्दात् पद्मत्वविशिष्टबोधो नानुपपन्न इत्यत आह पङ्कजमस्तीत्यादित इति । पद्ममस्तीति, सर्वजनसिद्धेत्यादिः । रूढिरुपेया— शक्तिः स्वीकार्या । इतरथेति । पद्मत्वविशिष्टे रूढ्यस्वीकारे इत्यर्थः । अन्वयस्यास्तित्वादिना सह । अन्वयस्यानुपपत्तेरित्यत्रानुपपत्तौ हेतुमाह प्रकृत्यर्थावच्छिन्नस्यैवेत्यादि । स्वप्रकृतिभिन्नपदोपस्थापितार्थे तत्प्रत्ययार्थान्वयबोधसामग्रीत्वं तत्प्रत्ययार्थे स्वार्थान्वयबोधसामग्रीत्वव्याप्यमिति व्युत्पत्तेरिति भावः । अन्यथा 'देवदत्तस्य पुत्रो घटं करोती'त्यादौ सम्बन्धवान् पुत्रः कर्मतानिरूपककृतिमानित्यादिबोधापत्तेः । न च देवदत्तादिपदसमभिव्याहारस्यावश्यकत्वेन तत्र प्रत्ययार्थे प्रकृत्यर्थभानमावश्यकमिति वाच्यम् । तत्र तद्भानप्रतिबन्धकसद्भावस्थल एव तादृशापत्तिसम्भवात्। स्वप्रकृत्यर्थेन सह स्वार्थान्वये व्यभिचारात् स्वप्रकृत्यर्थभिन्नत्वं पदविशेषणम्। यत्किञ्चित्पदोपस्थापितार्थे स्वार्थप्रकारकान्वयबोधसामग्रीत्वं स्वार्थविशेष्यकप्रकृत्यर्थप्रकारकबोधसामग्रीत्वव्याप्यमित्युक्त( ावुक्त (?) )व्यभिचारविरहेऽपि न क्षतिः, यथासन्निवेशेनावैयर्थ्यात् । अन्तरेति स्वरूपकथनमित्यपि कश्चित्। डप्रत्ययोपस्थापितस्येति "तुष्यतु दुर्जन"न्यायेनोक्तम्, अन्यथा डप्रत्ययस्य लक्षणाया अग्रहकाले तस्य डप्रत्ययोपस्थापितत्वासम्भवात् । पद्मस्येति । अवयवशक्तेरग्रहकाले डप्रकृत्यर्थजन्यावच्छिन्नत्वेन पद्मादेर्भानासम्भवेनोक्तव्युत्पत्तिभङ्गापत्तेः, तत्र रूढिस्वीकारे तु तस्य प्रत्ययार्थत्वाभावेन नोक्तव्युत्पत्तिभङ्ग इति । रामभद्रसिद्धान्तवागीशस्तु चैत्रो गच्छतीत्यादौ गतिमांश्चैत्र इति बोधापत्तिं तादृशव्युत्पत्तिबीजतयोक्तवान्, तदर्थस्तु अभियुक्तैर्विवेचयितव्यः। निरुक्तव्युत्पत्तेर्बीजं स्वयमाह अत एवेति।

रामभद्रीटीका।

अवयवलभ्यार्थस्य बाधनिश्चयादिदशायाम् । इतरथा—केवलपद्मत्वविशिष्टरूढ्यर्थस्वीकारे । व्युत्पन्नतयेति। अन्यथा चैत्रो गच्छतीत्यादावपि गतिमांश्चैत्र इत्येवान्वयबोधः स्यादिति भावः। अत एव-प्रकृत्यर्थावच्छिन्नस्यैव प्रत्ययार्थस्यान्यत्रान्वयादेव। पङ्कजादिप-

जात्वपि कर्त्तास्तीत्याकारको नान्वयबोधः, प्रत्ययमात्रोपस्थाप्यस्य कर्त्तु-रन्यत्रान्वये निराकाङ्क्षत्वादिति वक्ष्यते । किञ्चैवमेकाक्षरकोषावधृतशक्तिकानां कखादिप्रत्येकवर्णानामेव निरूढलक्षणया तत्तदर्थानुभावकत्वसम्भवाद्बकनखादिसमुदायस्यापि तत्तदर्थे(१) शक्तिर्विलीयेत । "कादिप्रत्येकवर्णस्य शक्तिग्रहं विनापि बकादिशब्दाद्बकादेरनुभवार्थं तत्र समुदाये शक्तिरि"ति

कृष्णकान्तीटीका ।

निरुक्तव्युत्पत्तेः प्रामाणिकत्वादेवेत्यर्थः । पङ्कादिपदशक्तिग्रहकाले डप्रत्ययार्थे कर्त्तरि पङ्कजन्यादेर्भाने बाधकाभावादाह पङ्कजादिपदागृहीतशक्तिकस्येति । आदिना जनधातुपरिग्रहः । जात्वपि कदाचिदपीत्यर्थः । ननूक्तव्युत्पत्तिभयेन किं सामग्री कार्यं नार्जयतीत्यत आह—प्रत्ययमात्रोपस्थाप्यस्येत्यादि । प्रकृत्युपस्थाप्यस्य कर्तुरन्यत्रान्वयात् प्रत्ययेति । प्रकृत्यर्थावच्छिन्नस्य प्रत्ययार्थस्यापि प्रत्ययोपस्थाप्यत्वान्मात्रपदम्, प्रकृतिजन्योपस्थितयसहकारेण प्रत्ययोपस्थाप्यस्य प्रकृत्यर्थानवच्छिन्नस्य प्रत्ययार्थस्येति यावत् । वक्ष्यत इति । तत्प्रकरण इत्यादिः । नन्वन्वयवशक्त्याद्यग्रहकालेऽपि पद्ममस्तीत्याद्यनुभवस्य प्राच्यैरस्वीकारादेतद्दूषणन्तु मणिकृन्मत एव शोभते,। तैर्योगार्थं विना रूढ्यर्थस्य बोधानुपगमादतो दोषान्तरमाह किञ्चैवमिति । एवं-पङ्कजपदस्य शक्त्यस्वीकारे । शक्यसम्बन्धरूपलक्षणाग्रहस्य शक्तिग्रहसापेक्षत्वादाह एकाक्षरकोषावधृतशक्तिकानामिति । 'कोषाप्तवाक्या-दि'ति श्रुतेः कोषस्य शक्तिग्राहकत्वादिति भावः । तत्तदर्थेति । बकोऽस्ति नखोऽस्तीत्यादौ बकानकारादेरेव लक्षणया बलाकानखरादिबोधकत्वसम्भवादिति तदर्थः । तत्र-बलाकानखरादौ। कादीति । शक्तिग्रहमिति । एकाक्षरकोषादित इत्यादिः । विनापीति । क-न-खादिवर्णानां बलाकानखरादौ लक्षणाया अग्रहकालेऽपीत्यर्थः ।

रामभद्रीटीका ।

दानीं शक्तिग्रहदशायां सामग्रीसत्त्वेन पङ्कजनिकर्तृपद्ममस्तीत्यन्वयस्यैवोत्पादात् उत्तमगृहीतशक्तिकस्येति । जात्वपि–कदाचिदपि, प्रकृत्युपस्थाप्यस्य कर्त्तुरन्यत्रान्वये साकाङ्क्षत्वादुक्तं प्रत्ययेति । वक्ष्यत इति । (२)तत्प्रकरण इत्यादिः । नन्विदं वक्ष्यमाणमणिकृन्मते शोभते न तूक्तप्राचां तैर्योगार्थं विना रूढ्यर्थस्य केवलस्यान्वयबोधानुपगमादत आह—किञ्चेति । एवं-कर्तृवाचकडप्रत्ययस्य पद्मत्वविशिष्टे लाक्षणिकत्वे । शक्यसम्बन्धात्मिकायाः लक्षणायाः शक्त्यभावेनाऽसम्भवादाह--एकाक्षरेत्यादि । तत्तदर्थेति । बकनखाद्यर्थेत्यर्थः । शङ्कते कादीति । बलाकादेर्बकारादेवेत्यर्थः । शङ्कां निरस्यति–

(१) अत्र कृष्णकान्तमतेन,'तत्र' इति पाठो द्रष्टव्यः ।

(२) लट्प्रकरण इति लि० पु० पाठः ।

तु प्रकृतेऽपि समानम्, डादिप्रत्ययमात्रस्य पद्मादौ वृत्तिमत्त्वाग्रहेऽपि पङ्कजादिसमुदायात् पद्मादेरनुभवस्य सर्वसिद्धत्वात्। न चैवं 'चित्रगुरि'त्यादावपि चित्रगोस्वाम्यादौ समुदायस्य शक्तिप्रसङ्गः, समासत्वस्याविशिष्टत्वादिति वाच्यम्। अगृहीतावयववृत्तिकस्य पुंसस्ततोऽर्थानधिगमेनावयवानां वृत्तेरवश्यापेक्षायां तेषामेव तथाविधार्थबोधकत्वौचित्यस्य वक्ष्यमाणत्वादिति ॥ २७ ॥

पङ्कजादिपदेभ्यः केवलस्यैव योगार्थस्य रूढ्यर्थस्य वा बोधव्युदा-

---

कृष्णकान्तीटीका।

एतेन प्रत्येकवर्णानां शक्तिग्रहसत्त्वेऽपि कथञ्चित्प्रतिबन्धकवशेन लक्षणाया अग्रहकालेऽपि बलाकाद्यनुभवार्थं समुदायशक्तिस्वीकारसम्भवेऽपि न क्षतिः। अनुभवार्थं-प्रामाणिकानुभवार्थम्। तत्र-वकनखादौ, शक्तिः-बलाकादिशक्तिः, आवश्यकीति शेषः। समाधत्ते प्रकृतेऽपीति। पङ्कजपदेऽपीति तदर्थः। समानं पद्मशक्तेरावश्यकत्वम्। ननु डादेर्वृत्तित्वाग्रहकाले पङ्कजपदात् पद्मबोधो न प्रामाणिकः, तत्कुतस्तदनुरोधेन समुदायशक्तिरावश्यकी, बकनखादिस्थले च प्रत्येकवर्णशक्त्याद्यग्रहकालेऽपि तादृशबोधः सर्वजनसिद्ध इत्यत आह—डादिप्रत्ययमात्रस्येति। समुदायस्य वृत्तिमत्त्वाग्रहे केनापि तादृशबोधास्वीकारान्मात्रपदम्। समासशक्तिवादी वैयाकरणः शङ्कते न चैवमित्यादि। एवं—पङ्कजेत्यादिसमुदायस्य शक्तिस्वीकारे। शक्तिप्रसङ्ग इति, अवन्मत इत्यादिः। समाधत्ते अगृहीतावयववृत्तिकस्येति। ततश्चित्रगुसमुदायात्, तेषामवयवानाम्। तथाविधार्थेति। चित्रगवस्वाम्यादीत्यर्थः। वक्ष्यमाणत्वादिति। समासप्रकरण इत्यादिः ॥ २६ ॥

मीमांसकाभिप्रायं प्रकाशयन्नवतारणिकामाह पङ्कजादीति। केवलस्य—यो-

रामभद्रीटीका।

इति त्विति। प्रकृते-पङ्कजादिशब्दे। समानमिति। तथाच डादिप्रत्ययस्य शक्त्यग्रहदशायां पङ्कजादिशब्दात् पद्मादेरनुभवार्थं समुदाये शक्तिरिति भावः। ननु डादिप्रत्ययस्य शक्त्यग्रहदशायां तादृशानुभव एवासिद्ध इत्यत आह—डादीति। समासशक्तिवादी शङ्कते-नचेति। एवं-पङ्कजपदस्य समुदाये शक्तिकल्पने। अविशिष्टत्वादिति। सप्तमीपञ्चमीससाधाज्जनेर्डविधानादिति भावः। तत इति। चित्रगुरित्यादितश्चित्रगोस्वाम्याद्यर्थानधिगमादित्यर्थः। वृत्तेर्वृत्तिज्ञानस्य। तेषां—चित्रगुप्रभृतीनाम्। वक्ष्यमाणत्वादित्यस्य समास इत्यादिः ॥ २६ ॥

मीमांसकानामभिप्रायं प्रकाशयन्नवतारणिकामाह पङ्कजादीत्यादिना। रूढ्यर्थस्य वेति। केवलस्येत्यनुषज्यते। अथ तर्हि पङ्कजादिपदात् कुमुदादेः कथं न बोध

सार्थं तादृशार्थयोर्मिथः साकाङ्क्षत्वनियमो न कल्प्यते, परन्तु रूढ्यर्थः भिन्ने योगार्थस्य बोधं प्रति रूढिधियः प्रतिबन्धकत्वम्, तेन रूढेरप्रतिसन्धानदशायामवयवशक्त्यैव "पङ्कजं कुमद"मित्यादौ पङ्कजनिकर्तृत्वादिना कैरवादेरवगमः, तथा चावयवशक्तेरनुपस्थितौ समुदायशक्त्यैव "भूमौ पङ्कजमुत्पन्न"मित्यादौ पद्मत्वप्रकारेण स्थलपद्मादेः, अत एव च

---

कृष्णकान्तीटीका।

गार्थरूढ्यर्थयोरेकतरासमभिव्याहृतस्य, इदञ्च रूढ्यर्थस्येत्यत्रापि सम्बध्यते, तथा च पद्माद्यसमभिव्याहृतपङ्कजनिकर्त्रादेः पङ्कजनिकर्त्राद्यसमभिव्याहृतपद्मादेर्वेति समुदितार्थः। बोधेति पङ्कजादिपदेभ्य इति पूर्वेणान्वितम्, तथा च पङ्कजादिपदजन्यतादृशशाब्दबोधव्युदासार्थमित्यर्थः; तेन तादृशप्रत्यक्षादिसम्भवेऽपि न क्षतिः। तादृशार्थयोः—योगार्थरूढ्यर्थयोः, मिथः—परस्परम्। ननु तादृशार्थयोर्मिथः साकाङ्क्षत्वनियमे रूढेरप्रतिसन्धानदशायां योगार्थस्य, योगशक्तेरप्रतिसन्धानदशायां च रूढ्यर्थस्य पङ्कजादिपदाद्बोधो न स्यादित्यत आह परन्त्विति। रूढ्यर्थयोगार्थप्रकारकान्वयबोधं प्रत्यपि रूढिधियः प्रतिबन्धकत्वे प्रकृतासिद्धिरतो रूढ्यर्थभिन्नेति। प्रतिबन्धकत्वमिति। तथा च तादृशपदजन्यतादृशपदरूढ्यर्थभिन्नधर्मिकतादृशपदावयवशक्यार्थप्रकारकबोधं प्रति तादृशपदरूढिधियः प्रतिबन्धकत्वमिति पर्यवसितम्। न च रूढेरप्रतिसन्धानदशायां केवलस्य योगार्थस्य बोधे निरुक्तसाकाङ्क्षत्वनियमो भज्येत इति वाच्यम्। तादृशनियमस्य रूढिधीघटितत्वात्। निरुक्तप्रतिबन्धकत्वकल्पनाप्रयोजनमाह तेनेत्यादिना। अवयवशक्त्यैवेत्येवकारेण समुदायशक्तिव्युदासः। कैरवादेरवगम इति। तथा च तादृशप्रतिबध्यप्रतिबन्धकभावस्याकल्पनेन तादृशबोधो न स्यादिति भावः। रूढ्यर्थविशेष्यकयोगशक्यार्थभिन्नमात्रप्रकारकपङ्कजपदजन्यशाब्दबोधं प्रति योगशक्तिधियः प्रतिबन्धकत्वम्, पङ्कजमस्तीत्यादौ योगशक्तिभिन्नस्यास्तित्वादेर्बोधोपपत्त्यर्थं मात्रपदम्, योगार्थाप्रकारकेति तदर्थः, अन्यथा समुदायशक्त्या 'भूमौ पङ्कजमुत्पन्नमि'त्यादौ पद्मादिबोधो न स्यादित्याह तथेति। निरुक्तप्रतिबन्धकत्वकल्पनेनेत्यर्थः। समुदायशक्त्यैवेत्येवकारेणावयवशक्तिज्ञानव्युदासः। 'पङ्कजमुत्पन्नमि'त्यादितोऽपि कदाचित् पङ्कजनिकर्तृत्वादिना बोधः सम्भवतीत्यत उक्तं भूमाविति। स्थलपद्मादेरवगम इति पूर्वेणान्वयः। ननु रूढ्यादेरप्रतिसन्धानदशायां तादृशबोधो नानुभवसिद्ध इति तथाविधप्रतिबन्धकत्वे मानाभाव इत्यतः सकल-

रामभद्रीटीका।

इत्यत आह—परन्त्विति। स्थलपद्मादेरिति। अवगम इत्यनुषज्यते। तैलशब्दरूढत्ववादिनं टीकाकारमाक्षिपति—अत एवेति। यत एव शक्त्या कुमुदादेरवगमः

तैलपदं योगेन तिलप्रभवं, रूढ्या च विलक्षणद्रवद्रव्यपर्य्यवसितं स्नेहं बोधयद्योगरूढमपि 'तैलं पत्रमि'त्यादौ सर्षपस्य 'तैलमि'त्यादौ च शक्त्यैव प्रत्येकस्य बोधकमिति मीमांसकानां मतमुपन्यस्यति—

**रूढ्यर्थभिन्ने योगार्थबुद्धौ रूढेर्विरोधिताम्।**
**वदन्ति केचिदेकैकबुद्धिस्तैः क्वचिदिष्यते ॥ २७ ॥**

क्वचित्—समुदायावयवयोरेकमात्रस्य शक्तिप्रतिसन्धानस्थले। यद्यपि पद्मान्यधर्मिकपङ्कजातत्वान्वयधीसामान्यं प्रति पङ्कजपदं पद्मशक्तमित्येवं रूढिज्ञानत्वेन न विरोधित्वम्, तादृशधीसत्त्वेऽपि कर्दमजादिशब्देभ्यस्तादृ-

---

कृष्णकान्तीटीका।

अनानुभवसिद्धबोधोपपत्त्यर्थं तादृशप्रतिबन्धकत्वकल्पनं सार्थकयति अत एव चेति। तादृशप्रतिबन्धकत्वकल्पनादेव चेत्यर्थः। ननु तैलपदं योगरूढमेव न, कुतस्तज्जन्यबोधोपपत्त्यर्थं तादृशप्रतिबन्धकत्वकल्पनमित्यतस्तैलपदस्य योगरूढत्वं सम्पादयति योगेनेति। योगशक्त्येत्यर्थः। विलक्षणद्रवद्रव्यपर्य्यवसितं स्नेहमिति। तैलत्वजात्यवच्छिन्नमिति यावत्। रूढ्यर्थं विना योगार्थबोधमुक्त्वा योगार्थं विना रूढ्यर्थबोधमाह सर्षपस्येति। प्रत्येकस्येति। तिलप्रभवत्वावच्छिन्नस्य तैलत्वजात्यवच्छिन्नस्य बोधकमित्यर्थः।

केचित्—मीमांसकाः। रूढ्यर्थभिन्नधर्मिकयोगार्थप्रकारकबुद्धौ रूढिधियः प्रतिबन्धकत्वं वदन्ति, अत एव समुदायावयवयोरेकशक्तिप्रतिसन्धानस्थले एकैकबुद्धिस्तैरिष्यत इति समुदितार्थः।

क्वचिदित्यस्य स्वयमर्थमाह समुदायेति। शङ्कते यद्यपीति। तादृशेति। पङ्कजपदं पद्मशक्तमितिधीसत्त्वेऽपीत्यर्थः। तादृरूप्येण—पङ्कजातत्वप्रकारेण, तादृशबोधं प्रति—पद्मान्यधर्मिकपङ्कजातत्वान्वयबोधत्वावच्छिन्नं प्रति, तथात्वेन—पङ्कजपदं

रामभद्रीटीका।

अत एवेत्यर्थः। तैलमिति। तिलस्येदमित्यर्थः। प्रत्येकस्येति। रूढ्यप्रतिसन्धानदशायां योगेन तिलप्रभवस्य योगार्थाप्रतिसन्धानदशायां विलक्षणद्रवद्रव्यस्य चेत्यर्थः।

रूढेः—रूढिज्ञानस्य, ज्ञायमानायास्तस्याप्यविरोधित्वमिति मते वा। वदन्ति—मीमांसकाः। केचित—रूढेर्योगापहारित्वप्रवादानुयायिनः। एकैकबुद्धिरिति। एकैकस्य रूढ्यर्थस्य योगार्थस्य वा बुद्धिरित्यर्थः। तैर्मीमांसकैः।

उभयप्रतिसन्धानस्थले तन्मते योगार्थस्यान्वयास्वीकारादेकमात्रस्येत्युक्तम्। रूढिज्ञानदशायामपि पद्मादौ पङ्कजातत्वान्वयबोधोत्पादात् पद्मान्यधर्मिकेत्युक्तम्। तादृशधीसत्त्वेपीति। पङ्कजपदं पद्मत्वविशिष्टे शक्तम् इत्याकारकज्ञानसत्त्वेऽपीत्यर्थः। तादृरूप्ये-

प्येण कैरवादेरवगमात्, नापि पङ्कजपदजन्यतादृशबोधं प्रत्येव तथात्वेन वि-रोधित्वम् रूढिज्ञानदशायामपि समुदायस्य लक्षणया शक्तिभ्रमेण वा पङ्कजपदात् पङ्कजातत्वेन कुमुदबोधस्य सर्वैरुपगमात् । तथाप्यवयवशक्त्या पङ्कजपदजन्यपद्मान्यधर्मिकपङ्कजातत्वान्वयबोधं प्रत्येव निरुक्तरूढिज्ञानत्वेन प्रतिबन्धकत्वम् । न च कुमुद एव पद्मत्वेन रूढिभ्रमदशायां तादूरूप्येण कुमुदस्य बोधो न स्यात् विरोधिन्या रूढिधियःसत्त्वादिति वाच्यम् । पद्मान्यधर्मिकेत्यनेन

---

कृष्णकान्तीटीका ।

पद्मशक्तमिति ज्ञानत्वेन । ननु पङ्कजपदजन्येत्यस्य पङ्कजपदशक्तिज्ञानजन्येत्यर्थस्तथा च रूढिज्ञानदशायां लक्षणाजन्यबोधसम्भवेऽपि न क्षतिरत आह—शक्तिभ्रमेण वेति। समाधत्ते तथापीति । अवयवशक्त्या—पङ्कादिपदशक्त्या । निरुक्तेति । पङ्कजपदं पद्मशक्तमिति ज्ञानत्वेनेत्यर्थः । न चेति, वाच्यमिति परेणान्वयः । पद्मत्वेन रूढिभ्रमदशायां—पद्मत्वावच्छिन्नकुमुदनिष्ठविशेष्यताकरूढिभ्रमदशायामित्यर्थः । तादूरूप्येण—पङ्कजातत्वप्रकारेण । कुत इत्याकाङ्क्षायामाह—विरोधिन्या इत्यादि । रूढिधियः—पद्मत्वावच्छिन्नविशेष्यताकरूढिधियः । पद्मान्यधर्मिकेत्यनेनेति । यद्यपि 'पद्मत्वावच्छिन्नविशेष्यताकयथार्थरूढिज्ञानत्वेन विरोधित्वमि'त्युक्तौ नो दोषस्तथाप्यंशिकयाथार्थ्यस्योक्तज्ञानेऽपि रूत्त्वेन सर्वांशे यथार्थत्वस्यावश्यनिवेश्यत्वेन शक्तिघटकपदार्थांशे पदत्वांशे च भ्रमात्मकतादृशज्ञानस्याप्रतिबन्धकत्वापत्तिरतः पद्मत्वानवच्छिन्नविशेष्यताकत्वेन प्रतिबन्धकीभूतज्ञानं विशेषितम् । न च पद्मत्वान्यधर्मावच्छिन्नविशेष्यताकत्वं कथं न निवेशितमिति वाच्यम् । 'जले पङ्कजमुत्पन्नमि'त्यादौ निर्द्धर्मितावच्छेदककपङ्कजातत्वान्वयबुद्धेरप्रतिबध्यत्वापत्तेः । ननु 'पङ्कजपदं कुमुदशक्तमि'त्यादिज्ञानकालीननिरुक्तरूढिज्ञानदशायां 'पङ्कजं कुमुदमि'ति ज्ञानानुपपत्तिः, न च तदानीं पद्मत्वस्यापि भानसम्भवेन पद्मत्वावच्छिन्नविशेष्यताकान्यत्वेन प्रतिबध्यतानाक्रान्तत्वेन तादृशज्ञानोत्पत्तौ बाधकाभाव इति वाच्यम्, तादृशज्ञानविशेष्यतावच्छेदक-

रामभद्रीटीका ।

ण—पङ्कजातत्वप्रकारेण । तथात्वेन—तादृशरूढिज्ञानत्वेन । अवयवशक्त्या—स्वावयवशक्त्या । तृतीयार्थो ज्ञानजन्यत्वम् । निरुक्तेति । पङ्कजपदविशेष्यकपद्मत्वावच्छिन्नशक्तिप्रकारकेत्यर्थः । वस्तुतः पदविशेष्यकं शक्तिसम्बन्धेनार्थप्रकारकं पङ्कजपदं शक्तिसम्बन्धेन पद्मवदित्याकारकम् यज्ज्ञानं तस्यैव विरोधित्वं लाघवात्, न तु पङ्कजपदं पद्मत्वेन पद्मानुभवजनकतया सङ्केतितमित्याकारकशक्तिप्रकारकज्ञानत्वेन गौरवात् इति ध्येयम् । एवं चाप्रामाण्यज्ञानानास्कन्दिततादृशनिश्चयत्वेन प्रतिबन्धकत्वं बोध्यम्, तेन रूढिज्ञानस्य संशयात्मकस्य भ्रमत्वज्ञानास्कन्दितस्य वा सत्त्वे पङ्कजातत्वेन कुमुदा-

पद्मत्वानवच्छिन्नविशेष्यताकत्वस्योक्तत्वात् । पद्मस्येव कुमुदस्यापि समुदायशक्यत्वधीदशायामवयवशक्त्या 'पङ्कजातं कुमुदमि'त्याकारकधीस्वीकारे तु कुमुदादिशक्तत्वज्ञानाजन्यत्वेनापि प्रतिबध्यं विशेषणीयम् । न च यत्र तात्पर्यादिधीविलम्बाद्योग्यताभ्रमादिना प्रतिबन्धाद्वा रूढ्योपस्थिते पद्मे योगार्थस्य पङ्कजनिकर्तुरन्वयस्तत्रावयवशक्त्या पङ्कजातत्वेन कुमुदादिबोधो न स्यात् विरोधिनो रूढिज्ञानस्य सत्त्वादिति वाच्यम् । मीमांसकानामि-

---

## कृष्णकान्तीटीका ।

तथा पद्मत्वस्य भानेऽपि पद्मत्वानवच्छिन्नविशेष्यताकत्वस्याक्षतत्वात्, पद्मत्वावच्छिन्नविशेष्यताकान्यत्वस्य निवेशे तु 'पङ्कजं कुमुदं, पद्मं जलवृत्ती'ति ज्ञानस्याप्रतिबध्यतापत्तेः, न च निरुक्तसमूहालम्बनरूढिज्ञानदशायां नियमत एकत्र द्वयमिति रीत्या कुमुदत्वपद्मत्वभानसामग्रीसम्पत्तिः, मानाभावात्, तादृशरीत्या धर्मितावच्छेदकतया भानानभ्युपगमात्, प्रत्यक्ष एव तथाविधभानस्वीकाराच्च, नाप्येकविशिष्टेऽपरभानसामग्रीनैयत्यम्, तादृशभानप्रतिबन्धकसत्त्वस्थले व्यभिचारात्, अतः प्रतिबध्यदिशि विशेषणान्तरं प्रक्षिप्य तादृशज्ञानस्याप्रतिबन्धकत्वं सम्पादयति पद्मस्येवेति । वस्तुतस्तु तथाविधरूढिज्ञानदशायां 'पङ्कजं कुमुदमि'ति ज्ञानानुदयेऽपि न क्षतिः, न हि तदानीं तादृशज्ञानं समकालाभियुक्तानुभवसिद्धं मानाभावादिति प्रतिबध्यदिशि विशेषणान्तरदानमनुचितमित्याशयेन 'स्वीकारे त्वि'त्युक्तम् । शङ्कते—न चेति । तात्पर्यादीत्यादिनाऽऽसत्त्यादिज्ञानपरिग्रहः । ननु तात्पर्यादिज्ञानासत्त्वदशायां पङ्कजातत्वेन कुमुदादेरपि बोधो न जायत एवेतीष्टापत्तिसम्भवादाह अयोग्यतेति । 'पद्मं पङ्कजनिकर्तृभिन्नमि'त्याद्ययोग्यताभ्रमादिनेत्यर्थः, तादृशायोग्यतानिश्चयस्य पद्मत्वावच्छिन्नधर्मिकपङ्कजातत्वान्वयबुद्धावेव विरोधितया 'पङ्कजं कुमुदमि'ति बोधसम्भवान्नेष्टापत्तिसम्भव इति भावः । कुमुदादौ शक्तिभ्रमकालीनरूढिज्ञानस्याविरोधित्वमते तादृशभ्रमासत्त्वदशायामियमापत्तिर्बोध्या, कुत ? इत्याकाङ्क्षायामाह विरोधिन इति । इष्टापत्तौ मीमांसकानुभवं प्रमाणयति

## रामभद्रीटीका ।

न्वयबोधोत्पादेऽपि न क्षतिः । नचेति, वाच्यमित्यग्रेऽन्वयः । उक्तत्वादिति । तथाच पद्मत्वावच्छिन्नविशेष्यताकतादृशबोधस्याप्रतिबध्यत्वात् तादृशप्येण कुमुदादेर्बोधो नानुपपन्न इति भावः । समुदायशक्यत्वेति । पङ्कजपदं कुमुदे शक्तम् इत्येवंबोधदशायामित्यर्थः । अवयवशक्त्या—पङ्कजपदावयवशक्त्या । तादृशशक्यत्वग्रहदशायां लक्षणयैव तादृशबोधोपपत्तेः नावयवशक्त्या तादृशबोध इत्यतः 'स्वीकारे त्वि'त्युक्तम् । शाब्दबुद्धौ तात्पर्यग्रहस्याहेतुत्वात्तद्विलम्बात्तद्विलम्बोऽनुपयुक्त इत्यत आह अयोग्य-

ष्टत्वात् ते हि 'मण्डपं भोजये'त्यादावपि गृहादौ रूढिधीसत्त्वे मण्डपादिप दानामवयवशक्त्या मण्डपानकर्त्रादेर्न मन्वते बोधम्, भ्रमत्वग्रहा(१)ना-स्कन्दितस्यैव रूढ्यर्थगोचरतत्तदयोग्यताज्ञानाद्यभावविशिष्टस्यैव रूढिज्ञानस्य विरोधितायाः सुवचत्वाच्च। यदि च समुदाय एव पङ्कजनिकर्तृत्वेन पद्म-त्वेन च शक्तेः प्रमाभ्रमाभ्यां 'पङ्कजातं पद्म'मित्याकारको बोधः प्रामाणिकः,

कृष्णकान्तीटीका।

ते हीति। मीमांसका हीत्यर्थः। 'भोजयेदि'त्यनेन तदानीं गृहादिबोधस्या-त्यान्तसम्भवित्वं सूचितम्। उक्तस्थले कुमुदादिबोधस्वीकारेऽप्याह भ्रमत्वेति। सुवचत्वाच्चेति। तथा चायोग्यताग्रहकालीनरूढिज्ञानस्याविरोधितया तदानीं पङ्कजातत्वेन कुमुदादिबोधने बाधकाभाव इति भावः। शङ्कते यदि चेति। प्रमाभ्र-माभ्यामिति। पङ्कजपदनिरूपितपङ्कजनिकर्तृत्वावच्छिन्नशक्तिभ्रमेण तथाविधपद्मत्वाव-च्छिन्नशक्तिप्रमया चेत्यर्थः। वस्तुतो भ्रमप्रमाभ्यामित्येव पाठः, अन्यथा तृतीयान्तप-दाभ्यां क्रमान्वयानुपपत्तेः, व्युत्क्रमान्वये च ग्रन्थकर्तुर्न्यूनतापत्तिरिति ध्येयम्। केचित्तु-'पद्मत्वेन पङ्कजनिकर्तृत्वेन चे'ति पाठं कल्पयन्तः प्रमाभ्रमाभ्यामिति पाठं सङ्गमयन्ति। प्रामाणिक इति, यदि चेति पूर्वेणान्वितम्। केचित्तु पद्मत्वेन पङ्क-जनिकर्तृत्वेनान्वयबोधोऽप्रामाणिकः, अन्यथा प्रत्येकशक्त्यभावनिश्चयदशायामपि ता-दृशबोधसम्भवेनानुभवविरोधापत्तेः। न च तदानीं तादृशबोधस्यानुभवविरुद्धत्वे तु-ल्ययुक्त्या समुदायशक्तिभ्रमात् पङ्कजातं कुमुदमिति बोधोऽप्यनुभवविरुद्धः स्यादिष्टा-पत्तौ तु 'समुदायस्य लक्षणया शक्तिभ्रमेण वे'त्यादिपूर्वग्रन्थासङ्गतेरिति वाच्यम्। अ-वयवशक्त्यग्रहदशायां पङ्कजातत्वेन पद्मबोधस्यैवानुभवविरुद्धत्वात्—(इति वदन्ति)। केचित्तु युगपद्वृत्तिद्वयविरोधात्तादृशबोधोऽप्रामाणिक एवेत्यत उक्तं 'यदि चेती'-त्याहुः। तन्न, यतस्तादृशार्थे गहदसमञ्जसमिति-तत्र हर्य्यादिनानार्थशब्दैरेकदा हरिसिंहादिबोधो न स्यादित्येकस्मिन् धर्मे शक्यतावच्छेदकत्वलक्ष्यतावच्छेदकत्वयो-र्विरोधस्यैव वृत्तिद्वयविरोधार्थत्वमिति महदसमञ्जसम्। तदानीं—पङ्कजातत्वेन पद्मा-

रामभद्रीटीका।

देति। ते हीति। मीमांसका हीत्यर्थः। ननु रूढ्यर्थगोचरतत्तदयोग्यतानिश्चयदशायां पङ्कजातत्वेन कुमुदबोधस्यानुभवसिद्धस्यापलापापत्तिरित्यत आह भ्रमत्वज्ञानेति। रूढ्यर्थेति। रूढ्यर्थविशेष्यकपङ्कजातत्वाद्यभावनिश्चयाद्यभावविशिष्टस्येत्यर्थः। समुदाय एव—पङ्कजपद एव। पद्मत्वेन पङ्कजनिकर्तृत्वेन चेति, प्रमाभ्रमयोः क्रमेणान्वितम्। प्रामाणिक इति। तच्छाब्दं प्रति तद्विषयकशक्तिज्ञानस्य हेतुत्वा-

(१) भ्रमत्वज्ञानाना-इति रामभद्रस्येष्टः पाठः।

तदानीं च पङ्कजनिकर्तृत्वेन कुमुदस्य नान्वयधीः, तदावयवशक्त्येत्यप-हाय पङ्कजपदघटकशब्दशक्त्येति प्रतिबध्यकुक्षौ निक्षेपणीयम्। तद्घटक-त्वञ्चेह तद्विषयितार्किकत्वमात्रं तदवयव इव तत्राप्यविशिष्टम्।

यत्तु—स्वावयवशक्त्या पङ्कजपदजन्यं पङ्कजकर्तृत्वेनान्वयबोधं प्रति

कृष्णकान्तीटीका।

नुभवदशायाम्। नान्वयधीरिति, यदि चेति प्राक्तनेनान्वितम्। तदानीं पङ्कजा-त्वेन कुमुदबोधस्यावयवशक्त्यप्रयोज्यत्वेन प्रतिबध्यतया तादृशबोधो जायत एवेत्या-शयेन 'यदि चे'त्युक्तम्। ननु घटकत्वं यदि तदन्यत्वे सति तद्विषयताव्यापकविषयता-कत्वं, तदा स्वस्मिन् स्वघटकत्वाभावेनोक्तदोषतादवस्थ्यम्, अतः स्वसाधारणस्वघटक-त्वमाह तद्घटकत्वञ्चेति। मात्रपदेन तदन्यत्वव्युदासः, तथा च पङ्कजनिकर्तृ-त्वेन शक्तिभ्रमेण पद्मबोधेऽपि तदानीं पङ्कजपदघटकशक्तिप्रयोज्यपद्मत्वानवच्छिन्नवि-शेष्यताकपङ्कजनिकर्तृत्वेन कुमुदबोधो न सम्भवतीति भावः। तन्निरुक्तघटकत्वम्। तदवयव इवेति। पङ्कादिपद इवेत्यर्थः। तत्रापि—समुदाये पङ्कजपदेऽपीत्यर्थः। अ-विशिष्टमिति। स्वघटकत्वस्य स्वभेदाघटितत्वादिति भावः।

पद्मत्वस्य प्रयोगोपाधित्ववादिनां प्राचीनमीमांसकानां मतमुपन्यस्य दूषयति—यत्त्विति। ननु विशेष्यतासम्बन्धेन तादृशबोधं प्रति समवायेन पद्मत्वस्य हेतुत्वे भाविनि विनष्टे वा पद्मे तादृशबोधो न स्यात्। न च भाविनि विनष्टे वा जा-तिसत्त्वे बाधकाभाव इति वाच्यम्। सविषयकभिन्नवस्तुनो भाविनि विनष्टे वाऽभा-वस्य सर्वैः स्वीकारात्। न च सामान्यलक्षणप्रत्यासत्त्या भाविविनष्टादेः प्रत्यक्षं न स्यात्तस्य सामान्यानाश्रयत्वेन तत्कार्यतावच्छेदकाघटकत्वादिति वाच्यम्। तथापि

रामभद्रीटीका।

दिति भावः। तदानीं—पङ्कजातं पद्ममित्यनुभवदशायाम्। नान्वयधीरिति, यदि चेति प्राक्तनेनान्वितम्। स्वावयवशक्त्या पद्मान्यधर्मिकपङ्कजातत्वप्रकारकान्वयबोधं प्रत्येव रूढिज्ञानस्य विरोधित्वात् तादृशान्वये बाधकाभावात्। युगपद्वृत्तिद्वयविरोधेन (च) समुदाये शक्तिप्रमाभ्रमाभ्यां पङ्कजातं पद्ममित्यनुभवस्य चाप्रामाणिकत्वमेव नास्ती-त्याशयेनाह यदि चेति। ननु तद्घटकत्वं तदन्यत्वे सति तद्विषयताव्यापकविषयता-कत्वं तत् कुतस्तादृशान्वयबोधवारणमत आह तद्घटकत्वं चेति। मात्रपदेन तद-न्यत्वस्य व्युदासः।

पद्मत्वस्य प्रयोगोपाधिवादिनां प्राचीनमीमांसकानां मतमुपन्यस्यति यत्त्विति। ननु विशेष्यतासम्बन्धेन तादृशशाब्दं प्रति समवायेन पद्मत्वस्य हेतुत्वे भाविनि विनष्टे वा पद्मे पङ्कजनिकर्तृत्वेनान्वयस्यानुभविकत्वात् व्यभिचारः तदानीं तत्र पद्मत्वस्याभावात्, सविषयेतरवस्तुमात्रस्य भाविनि विनष्टे वाऽभावस्य सर्वसिद्धान्तसिद्धत्वात्, अत एव

पद्मत्वं हेतुः तत्र कार्य्यस्य विशेष्यत्वं तदवच्छेदकत्वं वा कारणस्य तु समवायस्तादात्म्यं वा प्रत्यासत्तिरित्येतावतैव योगार्थमर्य्यादया कुमुदादेर्बोधव्युदाससम्भवात् उक्तक्रमेण प्रतिबन्धकतायां मानाभावः, 'पद्मत्वं पङ्कजपदप्रयोगोपाधिरि'ति प्राचीनप्रवादस्याप्युक्तार्थ एव पर्य्यवसानात्—इति ।

तत्तुच्छम्, पद्माग्रहीतशक्तिकस्यापि पुंसः पङ्कजनिकर्तृत्वेनावयवशक्त्या कुमुदस्य बोधानुदयप्रसङ्गात् । न चेष्टापत्तिरनुभवविरोधात् । न च

---

कृष्णकान्तीटीका ।

पद्मत्वेन तथाविधकुमुदभ्रमासम्भवादित्यत आह—तदवच्छेदकत्वं वेति, प्रत्यासत्तिरिति परेणान्वयः । समवाय इति विशेष्यतायाः कार्यतावच्छेदकसम्बन्धत्वाभिप्रायेण । तदवच्छेदकत्वस्य सम्बन्धत्वाभिप्रायेणाह—तादात्म्यमिति । एतावतैव—तादृशकार्यकारणभावेनैव, योगार्थमर्यादया—अवयवशक्तिज्ञानेन । कुमुदादेरिति । पङ्कजनिकर्तृत्वादिप्रकारेणेत्यादिः। वस्तुतः—'योगार्थमर्यादया—योगलभ्यार्थप्रकारेण' पङ्कजनिकर्तृत्वादिप्रकारेणेति यावत्'—इति तु परमार्थः । व्युदाससम्भवादिति । रूढिज्ञानदशायामित्यादिः । उक्तक्रमेणेति । पङ्कजपदघटकशक्तिप्रयोज्यपद्मत्वानवच्छिन्नविशेष्यताकपङ्कजनिकर्तृत्वादिप्रकारकान्वयबुद्धिं प्रति पद्मत्वावच्छिन्नरूढिज्ञानत्वेनेत्यर्थः । मानाभाव इति । रूढिज्ञानदशायां तादृशकुमुदबोधाभावरूपप्रमाणस्योक्तरीत्यैव चरितार्थतया तदतिरिक्तप्रमाणाभाव इत्यर्थः । ननूक्तरीत्या पद्मत्वस्य हेतुत्वे तस्य प्रयोगोपाधित्वं व्याहन्येत, प्रतिबन्धकीभूताभावप्रतियोगिधर्मस्यैव तथात्वात्, 'पङ्कजातं कुमुदमि'ति बुद्धौ पद्मत्वाभावस्य प्रतिबन्धकत्वे उक्तप्रतिबन्धककल्पनापेक्षया लाघवस्य दुष्करत्वम्, न च तस्य प्रयोगोपाधित्वविरहे का क्षतिरिति, पद्मत्वं प्रयोगोपाधिरिति प्राचीनप्रवादासङ्गतेः, अतः प्रवादस्थप्रयोगोपाधिपदस्यैतादृशार्थे तात्पर्यमाह—पद्मत्वमित्यादि । पर्यवसानादिति । तथा च प्रयोगः पङ्कजातत्वप्रकारकान्वयबोधजनकः स एवोपाधिर्धर्म इति तदर्थात् इति भावः ।

रूढेरज्ञानदशायामपि पङ्कजातत्वेन कुमुदादिबोधो न स्यात् इत्याशयेन दूषयति—तत्तुच्छमिति । अनुभवविरोधादिति । 'भूमौ पङ्कजमुत्पन्नं, तैलं पत्रं, मण्डपं

रामभद्रीटीका ।

'जातः सम्बद्धश्चेति एककाल' इति प्रवाद इत्यत आह—तदवच्छेदकत्वं वेति । तथा च तदानीमपि विशेष्यतावच्छेदकतया तादृशशाब्दस्य पद्मत्वं एवोत्पादात्, तत्र च तादात्म्येन पद्मत्वस्य सत्त्वान्न व्यभिचारः इति, भावः । प्रयोगः—पङ्कजातत्वप्रकारकप्रतीतिजनकः ।

कुमुदस्येति । पङ्कजपदादित्यादिः । नचेति हेतुत्वमित्यनेनान्वयः । योगा-

रूढिज्ञानकालीनमेव योगार्थस्य बोधं प्रत्युक्तरीत्या पद्मत्वस्य हेतुत्वम्, तथा सति रूढिधीदशायामपि तदसमानकालीनस्य पङ्कजातत्वेन कुमुदबोधस्य सामान्यसामग्रीमाहिम्ना दुर्वारतापत्तेः, रूढिज्ञानासमानकालीनतादृशबोधं प्रति विशेषतो हेत्वन्तरस्याक्लृप्तत्वात्, तत्कल्पने चातिगौरवात्।

कृष्णकान्तीटीका।

भोजयेत्याद्यनुभवविरोधापत्तेरित्यर्थः। प्रतिवध्यदिशि रूढिज्ञानकालीनत्वं प्रक्षिप्योक्तानुभवविरोधं वारयति न चेति। बोधं प्रतीति। विशेष्यतावच्छेदकत्वसम्बन्धेनेत्यादिः। उक्तरीत्या–तादात्म्यसम्बन्धेन। तदसमानकालीनस्य–रूढिज्ञानासमानकालीनस्य, सामान्यसामग्रीमहिम्ना–यादृशसामग्रीतः पङ्कजातत्वेन पद्मबोधः पद्मत्वेतरतादृशसामग्रीवशेनेत्यर्थः। दुर्वारतापत्तेरिति। कारणविरहस्य कार्यतावच्छेदकावच्छिन्नानुत्पादस्यैव नियामकतया पद्मत्वविरहेऽपि सामान्यधर्मावच्छिन्नोत्पत्तौ बाधकाभावादिति भावः। न च सामान्यसामग्र्या विशेषसामग्रीं विना न फलजनकत्वमिति वक्तुं युज्यते, तथा सति सामान्यकारणताया आनर्थक्यापत्तेः, परन्तु विशेषसामग्र्याः सामान्यसामग्रीं विना क्वचिदपि फलाजनकत्वात्सामान्यसामग्रीसहिताया एव विशेषसामग्र्याः फलजनकत्वमित्येव नियम इत्यन्यदेतत्। ननु रूढिज्ञानासमानकालीनतादृशबोधं प्रति रूढिज्ञानाभावो हेतुरिति तदभावादेव तदानीं न तादृशबोधापत्तिरत आह—रूढिज्ञानासमानकालीनेति। अक्लृप्तत्वादिति। रूढिज्ञानस्य प्रतिबन्धकत्वमते तस्यानावश्यकत्वादित्यर्थः। ननु रूढिज्ञानस्य प्रतिबन्धकत्वे तदभावस्य हेतुत्वं क्लृप्तमेव, परन्तु तन्मते पद्मत्वानवच्छिन्नविशेष्यताकत्वं कार्यतावच्छेदके निविष्टम् एतन्मते रूढिज्ञानासमानकालीनत्वमिति विशेषः, अतो दोषान्तरमाह—तत्कल्पने चेति। रूढिज्ञानासमानकालीनतादृशबोधं प्रति रूढिज्ञानाभावस्य हेतुत्वकल्पने चेत्यर्थः। पद्मत्वानवच्छिन्नविशेष्यताकत्वापेक्षया रूढिज्ञानासमानकालीनत्वस्यानेकपदार्थघटिततया गुरुत्वेन कार्यतावच्छेदकगौरवम्। अधिकं

रामभद्रीटीका।

र्थस्य–पङ्कजनिकर्तृत्वरूपार्थस्य। उक्तरीत्या–विशेष्यतावच्छेदकतासम्बन्धेन तादृशान्वयं प्रति तादात्म्यसम्बन्धेन, तदसमानकालीनस्य–शक्ति(१)ज्ञानासमानकालीनस्य, सामान्यसामग्री–आकाङ्क्षादिनिश्चयः। दुर्वारतापत्तेरिति। रूढिज्ञानसमानकालीनतादृशान्वयं प्रत्येव पद्मत्वस्य हेतुत्वादिति भावः। ननु रूढिज्ञानासमानकालीनायामपि तादृशबुद्धौ पद्मत्वभेदो हेतुर्वाच्य इति न तादृशापत्तिरित्यत आह—रूढिज्ञानेति। हेत्वन्तरस्य पद्मत्वभेदादेः। ननु तादृशापत्तिवारणान्यथानुपपत्त्यैव तदवश्यं कल्प्यमत आह तत्कल्पने चेति।

(१) रूढिज्ञानेति लि० पु० पाठः।

यदपि—पङ्कजननकर्तृषु पङ्कजादिपदानां शक्तिसत्त्वेऽपि पङ्कजपदान्न तादूरूप्येण पद्मस्य बोधः परन्तु पद्मत्वमात्रेण, योगार्थमर्यादया पङ्कजातत्वप्रकारकबोधसामान्यं प्रत्येव पद्मत्वविशिष्टे रूढिज्ञानस्य(१) लाघवेन विरोधित्वात, पद्मान्यधर्मिकत्वादेर्गौरवेण प्रतिबध्यकोट्यप्रविष्टत्वादतो योगरूढं नामैव नास्ति, युधिष्ठिरादिशब्दादपि रणस्थिरत्वादिकं योगार्थं

कृष्णकान्तीटीका।

पुना रूढिज्ञानसमानकालीनताहशबोधं प्रति पद्मत्वस्य हेतुत्वकल्पनेनेत्याशयेनोक्तमति-गौरवादिति।

वैयाकरणमतमुपन्यस्य दूषयति—यद्पीति। पङ्कजनिकर्तृष्विति बहुवचननिर्देशेन द्वन्द्वसमासो व्यञ्जितः। पङ्कजादीत्यादिना डप्रत्ययपरिग्रहः। शक्तिसत्त्वेऽपीति क्रमान्वितम्, तथा च पङ्कजपदस्य पङ्के, जनधातोर्जनौ, डप्रत्ययस्य कर्तरि शक्तिसत्त्वेऽपीत्यर्थः। तादूरूप्येण-पङ्कजनिकर्तृत्वप्रकारेण। ननु पङ्कजनिकर्तृत्वमात्र-प्रकारकबोधो मा भूत्, पद्मत्वसमभिव्याहृतेन तादूरूप्येण बोधो भवत्वेवेति भ्रमनिरासायाह—परन्त्विति। ननु पङ्कजपदमपार्थकमित्यत आह—'परन्त्विती'त्यपि-कश्चित्। मात्रपदेन पङ्कजनिकर्तृत्वव्यवच्छेदः। योगार्थमर्यादया—स्वावयवशक्त्या, तथा च स्वावयवशक्तिप्रयोज्यपङ्कजातत्वप्रकारकान्वयबोधत्वावच्छिन्नं प्रति पद्मत्वावच्छिन्नरूढिज्ञानत्वेन प्रतिबन्धकत्वम्। रूढेरज्ञानदशायां पङ्कजातत्वेन कुमुदादेः पद्मादेश्च बोधात् न प्रतिबध्याप्रसिद्धिः। पङ्कजातत्वेन शक्तिभ्रमाधीनताहशबोधे व्यभिचारवारणाय अवयवशक्तिप्रयोज्येति बोधविशेषणम्। ननु पद्मान्यधर्मिकत्वं प्रतिबध्यदिशि निःक्षिप्य पङ्कजपदस्य योगरूढत्वं स्थापयामीत्यत आह—पद्मान्यधर्मिकत्वादेरिति। गौरवेणेति। तादूरूप्येण पद्मबोधस्यानुभव-विरोधेन चेति शेषः। नास्तीति। न प्रसिध्यतीत्यर्थः। अन्यथा सिध्यसिद्धिव्याघातापत्तेः। तथा च 'रूढं च लक्षकं चैवे'त्यादिना चतुर्धाविभागव्याघात इति भावः। ननु योगरूढास्वत्वे युधिष्ठिरादिशब्दादपि रणस्थिरत्वादिना कुन्तीपुत्राद्यवगमो न स्यादित्यत इष्टापत्तिमाह—युधिष्ठिरादिशब्दादपीति। वैजात्येति। तच्छरीरवृत्तियुधिष्ठिरत्वरूपवैजात्येत्यर्थः। केचित्तु धर्मसुतत्वरूपवैजात्यप-

रामभद्रीटीका।

वैयाकरणमतमुपन्यस्य दूषयति—यदपीत्यादिना। तादूरूप्येण-पङ्कजातत्वेन। योगार्थेति। स्वावयवशक्त्या पङ्कजपदजन्यपङ्कजातत्वप्रकारकान्वयबोधत्वावच्छिन्नं प्रतीत्यर्थः। पद्मत्वविशिष्टरूढिज्ञानस्य-पङ्कजपदं पद्मे शक्तमित्येवं रूढिज्ञानस्य। नास्तीति।

[१] रामभद्रमतेन 'पद्मत्वविशिष्टरूढिज्ञानस्ये'ति समस्तपाठो द्रष्टव्यः।

परित्यज्यैव वैजात्यादिप्रकारेण(१) कुन्तीपुत्राद्यवगमात्, यदुक्तमभियुक्तैः

या वृत्तिरजहत्स्वार्था सेयमत्रोपपादिता ।
जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ॥
पङ्कजं मनसादेवी पद्मनाभो युधिष्ठिरः ॥—इति ।

तदेतद्वैयाकरणमतं पङ्कजमस्तीत्यादितः पङ्कजातं पद्ममस्तीत्याद्यनुभवस्य न्यायमीमांसादिसकलतन्त्रसिद्धत्वेन गौरवस्य प्रामाणिकत्वादनादे-

कृष्णकान्तीटीका ।

एतया वैजात्यविशेषपदं व्याचक्रुः । तन्मन्दं, धर्मसुतत्वस्य जातिरूपत्वाभावात्, तथा सति कुन्तीसुतत्वादेरपि जातित्वापत्तेः, कृष्णत्वादेर्जातित्वानुपपत्तेश्च, तत्रापि देवकीपुत्रत्वस्यैव तथात्वसम्भवात् शरीरवृत्तिकृष्णत्वादिजातौ प्रमाणासत्त्वप्रसङ्गात् । न च देवकीसुतत्वं जातिरेव, कृष्णत्वजातिस्तु तद्व्याप्येति वाच्यम् । देवकीपुत्राणामनेकत्वेन तादृशजातेः शरीरवृत्तित्वे मानाभावेन शरीरवृत्तिकृष्णत्वजातेर्व्यधिकरणत्वात् । न च कृष्णत्वजातिरप्यात्मवृत्ति, कृष्णात्मन एकत्वेनानेकवृत्तित्वाभावात् । कृष्णशरीरस्याप्येकत्वमिति तु न देश्यम्, बाल्यादिभेदेन तस्यानेकत्वात् । परन्तु देवकीसुतत्वं जातिर्देवकीसकलपुत्रसाधारणी, कृष्णत्वजातिस्तु तद्विरुद्धा कृष्णशरीरवृत्तिरिति युज्यते वक्तुम् । कुन्तीपुत्रादीत्यादिना पद्मनाभपरिग्रहः । इदं च रूढिज्ञानसत्त्वदशायां बोध्यं, तद्ज्ञानदशायां च रणस्थिरत्वादिना तद्बोधो भवत्येवेति ध्येयम् । अत्रैव श्रीपतिदत्तसंवादमाह—यदुक्तमिति । अजहत्स्वार्था—शक्य त्तिरूपेणैवानुभाविका, अत्र—ग्रन्थे, जहत्स्वार्था-शक्यावृत्तिरूपेणानुभाविका, यत्र कुत्र ? इत्याकाङ्क्षायामाह—पङ्कजमित्यादि । 'मनसादेवी'त्यलुक्समास इत्यलं ।

मतमित्यस्यानादेयमिति परेणान्वयः । अनादेयत्वे हेतुमाह—पङ्कजमस्तीत्यादित इति । गौरवस्य-रूढिज्ञानप्रतिबध्यतावच्छेदके पद्मान्यधर्मिकत्व-

रामभद्रीटीका ।

तथा च विभागव्याघात इति भावः । ननु योगरूढस्यासत्त्वे युधिष्ठिरादिशब्दात् कुन्तीपुत्राद्यवगमो न स्यात् अत आह **युधिष्ठिरादीति** । आदिना पद्मनाभादिपरिग्रहः । वैजात्यविशेषो धर्मसुतत्वादिस्तेन युधिष्ठिराद्भीमसेनादेर्नावगमः । **रणस्थिरत्वादिकमिति** । युधि तिष्ठतीति व्युत्पत्त्या तादृशयोगार्थालाभोऽलुक् समास(२) इति भावः । अत्र श्रीपतिसंवादमाह—**यदुक्तमिति** । अजहत्स्वार्था-शक्यवृत्तिरूपेणैवानुभाविका, अत्र-ग्रन्थे, जहत्स्वार्था-शक्यावृत्तिरूपेणानुभाविका । यत्र कुत्रेत्याह-पङ्कजमित्यादि-

[१] अत्र रामभद्रमतेन 'वैजात्यविशेषेणे'ति पाठस्स च कृष्णकान्तवागीशैः खण्डित इति तत्रैव द्रष्टव्यम् । [२] योगार्थत्वाभावादलुक्समास इति लि० पु० पाठः ।

यम्, अन्यथा अवयवशक्तेरपि प्रतिबध्यतायामप्रवेशापत्तेर्लाघवेन पङ्कजा-तत्वप्रकारकशाब्दसामान्यं प्रत्येव रूढिधियः प्रतिबन्धकत्वस्य सुवचत्वात् ।

(१)नन्वेवं 'द्रव्यं सरसिजमस्ती'त्यादितो द्रव्यनिष्ठं सरोजमिव द्रव्याभिन्ने सरसि जातं पद्ममपि प्रतीयेत, नामार्थयोरभेदान्वये तन्त्रस्य नाम्नोः समानविभक्तिकत्वस्यानपायादिति चेत् ।

सत्यम्, (२)सविभक्तिकनामार्थस्य नामान्तरार्थान्वये वृत्तिशब्दैकदेशा-

कृष्णकान्तोटीका ।

निवेशगौरवस्य, प्रामाणिकत्वात्—पङ्कजातं पद्ममित्याद्यनुभवान्यथानुपपत्तिप्रमाणसिद्धत्वात् । अन्यथा—सकलजनसिद्धानुभवस्याप्यपलापे । अवयवशक्तेः—अवयवशक्तिप्रयोज्यत्वस्य, प्रतिबध्यतायां—रूढिज्ञानप्रतिबध्यतावच्छेदककोटौ । सुवचत्वादिति । पङ्कजनिकर्त्तरि समुदायशक्तिभ्रमदशायां नेष्यत एव पङ्कजातत्वप्रकारकबोधः अनुभवापलापस्य तुल्यत्वादिति भावः ।

स्वमतव्यवस्थापनासमर्थो वैयाकरणो लज्जान्वितः प्रकृतमते दोषमाशङ्कते नन्वेवमित्यादिना । एवं—योगरूढस्य सत्त्वे । सरोजमिवेति । भवन्मते यथा द्रव्यनिष्ठं सरोजं प्रतीयते, तथा द्रव्याभिन्ने सरसि जातं पद्ममित्यपि प्रतीयेत इत्यर्थः । समानविभक्तिकत्वस्येति । विरुद्धविभक्तिराहित्यस्येत्यर्थः । तेन 'नीलपीतौ घटपटौ' इत्यत्र समानविभक्तिकत्वाभावेऽपि न क्षतिः ।

पूर्वपक्षस्य दृढत्वसूचनायोक्तं सत्यमिति । समाधत्ते—सविभक्तिकेति । विशेष्यतयाऽभेदसम्बन्धावच्छिन्नसविभक्तिकनामोपस्थाप्यार्थप्रकारकशाब्दबोधं प्रति वृत्तिशब्दान्यत्वसमानविभक्तिकनामोपस्थाप्यत्वं तन्त्रम् । 'राजपुरुषोऽस्ती'त्यादौ राजपदार्थस्य राजसम्बन्धिनस्तादात्म्येन पुरुषपदार्थेऽन्वयेन व्यभिचारवारणाय समानविभक्तिकेति । 'द्रव्ये सरसिजमि'त्यादौ सविभक्तिकनामोपस्थाप्यत्वस्य सत्त्वेनाभेदा-

रामभद्रीटीका ।

ना । मनसादेवीत्यप्यलुक्समासः । अन्यथा—गौरवमात्रस्याप्रामाणिकत्वे ।

नचेति । वाच्यम् इत्यग्रेऽन्वयः । एवं—योगरूढस्य नाम्नः सत्त्वे । समानविभक्तिकत्वस्येति । इदमुपलक्षणम्—विरुद्धविभक्तिराहित्यस्य चेति द्रष्टव्यम् । तेन नीलपीतौ घटौ इत्यत्र समानविभक्तिकत्वाभावेऽपि न क्षतिः । अत एवेत्याशयेन दूषयति—सविभक्तिकस्येत्यादिना । 'चैत्रस्य गुरुकुलमि'त्यादौ सामानविभक्तिकत्वाभा-

(१) अत्र राममद्रमतेन 'न चैवम्' अग्रे च 'इतिचेत्' इत्यत्र 'इतिवाच्यम्' इतिपाठो बोध्यः ।

(२) अत्रापि 'सविभक्तिकस्य' अग्रे 'वृत्तिशब्दैकदेशान्यैनैव' इत्यत्र 'वृत्तिशब्दान्येन' इति रामभद्रस्येष्टः पाठो द्रष्टव्यः ।

न्येनैव समानविभक्तिकनामान्तरेण स्मारितत्वस्य तन्त्रताथाः स्वीकार्यत्वादिति ॥ २७ ॥

---

कृष्णकान्तीटीका।

न्वयवारणाय वृत्तिशब्दैकदेशान्यैनैवेति । "पदानां प्रत्ययैर्योगः समासाश्चैव वृत्तयः" । तथा च प्रत्ययसाकाङ्क्षपदान्यत्वे सति समासान्यत्वं निविष्टमिति भावः । ननु द्वचे सरसिजमित्यत्र सरोरूपनाम्नः समासान्यत्वात् प्रत्ययसाकाङ्क्षपदान्तरत्वाच्च कुतस्तत्राभेदबोधवारणम् ? प्रत्ययसाकाङ्क्ष इत्यत्र प्रत्ययपदस्य विभक्त्यन्यप्रत्ययपरत्वमावश्यकम्, अन्यथा नीलो घट इत्यत्रापि तथान्वयानुपपत्तेरिति चेन्न । समासान्य इत्यस्य समासघटकान्यत्वार्थकत्वात् । न च समानविशेषणेनैवोपपत्तौ प्रत्ययसाकाङ्क्षपदान्यत्वनिवेशनमफलमिति वाच्यम् । प्रकृते तन्निवेश एव तात्पर्यात् । 'शोभने सारसमि'त्यादौ सरसः समानविभक्तिकनामोपस्थाप्यत्वाभावादेव शोभनादेरभेदान्वयबोधासम्भवात् । 'सुन्दरं दधी'त्यत्र शाब्दबोधोपपत्तये समानविभक्तिकेत्यस्य विरुद्धविभक्तिराहित्यार्थकताया वाच्यतया 'शोभनसारसमि'त्यादौ बोधवारणाय तन्निवेशस्यावश्यकत्वादिति वस्तुगतिः । ननु 'स्तोकं पचती'त्यादौ स्तोकपदार्थस्य पाकादावभेदान्वयेन व्यभिचारवारणाय नामार्थनिष्ठविशेष्यतायाः कार्यतावच्छेदकसम्बन्धत्वमुपगन्तव्यम् ? अत एव नामार्थान्वये इत्युक्तम् । 'नीलेन घट' इत्यादौ घटपदार्थे नीलादेरभेदान्वयवारणाय समानविभक्तिकेति नामान्तरविशेषणम् । तदर्थश्च विरुद्धविभक्तिराहित्यमित्युक्तप्रायत्वात् । 'समानविभक्तिके'त्यत्र विभक्तिपदं यथाश्रुतमेव न तु तदनुसन्धानपरम् । न च 'शोभनं दध्ना जुहोती'त्यादौ शोभनादेर्दध्यादावभेदान्वय प्रसङ्ग इति वाच्यम् । नामार्थस्याभेदेन नामान्तरार्थान्वये विरुद्धविभक्त्यनुसन्धानराहित्यस्य तन्त्रत्वात् । न च 'शोभनं तद्दधि प्राप्त' इत्यादौ शोभनादेर्दध्यादावभेदान्वयप्रसङ्ग इति वाच्यम् । असमासस्थल इव समासस्थलेऽपि तादृशबोधस्येष्टत्वात्, आनुपूर्व्याः साम्येनाकाङ्क्षाविरहस्य वक्तुमशक्यत्वात्, समानानुपूर्वीज्ञानस्य सकलकारणसमभिव्याहृतस्य क्वचित् शाब्दबोधजनकत्वं क्वचिन्नेत्येकशेषस्य वक्तुमशक्यत्वात् । अत एवाग्रे 'तत्पुरुषलक्षणविचारे लुप्तविभक्तेरनुसन्धानस्वीकारे 'समृद्धं ग्रामगत' इत्यादौ समृद्धादेर्ग्रामादावभेदान्वयप्रसङ्ग' इति वक्ष्यति । वस्तुतः सविभक्तिकेत्यत्र विभक्तिपदं लुप्तविभक्तिसाधारणम्, अत एव 'शोभनं दध्ना जुहोती'त्यादौ शोभनादेर्नाभेदान्वयः, न वा लुप्तविभक्तिस्थले व्युत्पत्त्यन्तरकल्पना । 'शोभनं तद्दधि प्राप्त' इत्यादौ निरुक्तग्रामपदोत्तरविभक्तेरनुसन्धानस्वीकारपक्षेऽपि नाभेदान्वयप्रसङ्गः, वृत्तिशब्दान्यसविभक्तिकनामोपस्थाप्यत्वाभावात् । न च 'समृद्धं ग्रामगत इत्यादावभेदान्वयप्रसङ्ग' इति वक्ष्यमाणग्रन्थासङ्गतिरिति वाच्यम्।

रामभद्रीटीका।

वादुक्तं वृत्तिशब्दान्येनेति ॥ २७ ॥

यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।
तेन तेनान्वितः स्वार्थः पदैः समधिगम्यते ॥

इति रूढ्यर्थयोगार्थयोर्युगपदुपस्थितौ तयोराकाङ्क्षादिसाचिव्यादाहत्या(१)न्वयबुद्धिस्थल एव योगार्थस्य रूढ्यर्थस्य वा नान्यत्रान्वयो, न तु तयोरेव मिथः साकाङ्क्षत्वम् अन्यत्र योगार्थस्य बोधने रूढिधियः प्रतिबन्धकत्वं वा प्रमाणाभावात्, एवञ्च यत्र योगार्थरूढिलभ्यार्थयोस्तात्प-

---

कृष्णकान्तीटीका ।

लुप्तविभक्तेरनुसन्धानस्वीकारे तत्प्रकृतिग्रामपदस्यापि तदानीमनुसन्धानात्, वृत्तिशब्दान्यग्रामपदोपस्थाप्यत्वरूपनिरुक्तहेतोस्तत्र सत्त्वात्, न हि समासघटकं यद्ग्रामपदं तदेव विग्रहघटकमिति वक्तुं युज्यते, उच्चारणभेदेन पदभेदात्, अन्यथा 'समृद्धं ग्रामगत' इत्यादावव्यभेदान्वयबोधो न स्यात्, तत्रत्यग्रामपदस्य वृत्तिघटकत्वात् इत्यादिकं तत्र विवेचनीयमिति युक्तमुत्पश्यामः ॥ २७ ॥

मणिकारमतं दर्शयितुं भूमिकामाह—यद्यदिति । आकाङ्क्षितं—साकाङ्क्षशब्दोपस्थाप्यं, योग्यं—योग्यताविशिष्टं, सन्निधानम्—आसन्नपदोपस्थाप्यत्वं प्राप्नोति । इदमुपलक्षणम्, वक्तृतात्पर्यविषयत्वेन ज्ञातमित्यपि बोध्यम् । पदैः—स्वार्थाद्युपस्थापकपदैः । समधिगम्यते—बोध्यते। इति—इत्यतः, आकाङ्क्षादिसाचिव्यात्—आकाङ्क्षादिसहकारात्, आदितः—प्रथमतः, अन्वयबुद्धिस्थल एव—अन्वयबुद्धिदशायामेव । नान्यत्र—रूढ्यर्थभिन्ने, योगार्थस्य प्रकारतया रूढ्यर्थे च योगार्थविनाकृतसमुदायशक्यतावच्छेदकस्य नान्वय इत्यर्थः। तथा चाकाङ्क्षाज्ञानादिसत्त्वे कुमुदादेः पङ्कजातत्वेन स्थलपद्मादेः पद्मत्वेन च बोधो भवत्येवेति भावः । प्रकृतमते मीमांसकमते चाननुगतत्वं व्यञ्जयति अन्यत्रेति । अन्यत्र—रूढ्यर्थभिन्ने । प्रतिबन्धकत्वं वेति न त्विति पूर्वान्वितम् । कुत इत्याकाङ्क्षायामाह—प्रमाणाभावादिति । रूढ्यर्थभिन्ने योगार्थप्रकारकान्वयबुद्धेः स्वीकृतत्वेन

रामभद्रीटीका ।

मणिकृन्मतं दर्शयितुं भूमिकामाह—यद्यदित्यादिना । स्वार्थे साकाङ्क्षं योग्य च यद्यद्वस्तु सन्निधानं पदजन्यस्मृतिविषयत्वं प्रतिपद्यते प्राप्नोति तेन तेन वस्तुनाऽन्वित एव स्वार्थः स्वोपस्थापितार्थः पदैरवगम्यतेऽनुभाव्यत इत्यर्थः । तयोः—रूढ्यर्थयोगार्थयोः । आहत्य—प्रथमतः । साकाङ्क्षत्वमिति—न तु कुमुदादौ योगार्थान्वयवारणाय मिथः साकाङ्क्षत्वं कल्प्यत इति भावः । ननु तर्हि पङ्कजपदात् कुमुदबोधो भवेत् अत आह एवं चेति । तात्पर्यज्ञानस्य शाब्दबुद्धौ हेतुत्वाङ्गीकारादाह—विरोधिसमवधाना-

---

(१) आदित इति कृष्णकान्तसंमतोऽत्र पाठो द्रष्टव्यः ।

र्य्याद्यग्रहाद्विरोधिसमवधानाद्वा न प्रथममन्वयधीस्तत्र योगार्थमर्य्यादया पङ्कजातत्वेन कुमुदादेः समुदायशक्त्या च पद्मत्वेन स्थलकमलस्य बोधो भवत्येवेति मणिकृन्मतं दर्शयति--

रूढ्यर्थेऽन्यत्र वा यत्र यदाऽऽकाङ्क्षादिनिश्चयः।
तदैव तत्र योगार्थस्यान्वयो मणिकृन्मतः ॥२८॥

समुदायशक्त्युपस्थापिते पदान्तरवृत्त्युपस्थापिते वा यत्र धर्मिणि अवान्तरवृत्तिलभ्यार्थस्य यदाकाङ्क्षा(दि)निश्चयादिस्तदैव तत्र तस्यान्वयबोध उत्पद्यत

---

कृष्णकान्तीटीका।

तत्र तादृशबुद्धयभावान्यथानुपपत्तिप्रमाणस्य सुदूरपराहतत्वादिति भावः। उपसंहरति एवञ्चेति—तयोर्मिथः साकाङ्क्षत्वविरहे रूढिधियः प्रतिबन्धकत्वविरहे च, यत्र—स्थलविशेषे, तात्पर्याद्यग्रहात्—पङ्कजपदं पङ्कजनिकर्तृत्वेन पद्मं बोधयतु इति तात्पर्यग्रहो नास्ति परन्तु पङ्कजनिकर्तृत्वेन कुमुदबोधो भवित्वति तात्पर्यग्रहस्तत्र तादृूप्येण पद्मबोधौपयिकतात्पर्यग्रहाभावात न तादृशबोध इति। ननु कुमुदबोधौपयिकतात्पर्यग्रहदशायां पद्मबोधौपयिकतात्पर्यग्रहे बाधकाभावः, तादृशतात्पर्यग्रहप्रतिबन्धककल्पने तादूरूप्येण पद्मबोधप्रतिबन्धककल्पनस्यैवोचितत्वादित्याशयेनाह विरोधीति। पद्मं पङ्कजनिकर्तृभिन्नमिति बाधादिसमवधानाद्वेत्यर्थः। न च तात्पर्यादीत्यादिना योग्यतादेः संग्रहात् बाधग्रहकाले योग्यताज्ञानविरहस्यावश्यकत्वेनास्य कल्पान्तरत्वमनुपपन्नमिति वाच्यम्। सिद्धान्तिमते बाधविरहरूपयोग्यता स्वरूपसती हेतुरित्यादिपदात् तत्संग्रहासंभवात्। न च बाधविरहस्याविशिष्टधीसामान्यहेतुत्वेन तस्य शाब्दं प्रति स्वातन्त्र्येण हेतुत्वमफलमिति वाच्यम्। इच्छाया उत्तेजकत्वानुरोधेन प्रत्यक्षादिकं प्रति पृथक् पृथक् प्रतिबन्धकताया आवश्यकत्वेन शाब्दं प्रति बाधबुद्धेः प्रतिबन्धकत्वकल्पनात्। प्रथममिति सम्पातायातं, प्राथमिकत्वस्याव्यावर्त्तकत्वात्। योगार्थमर्यादया—योगशक्त्या। कुमुदादेरिति, बोधो भवत्येवेति परेणान्वितम्।

समुदायशक्त्युपस्थापित इति, रूढ्यर्थ इत्यस्य विवरणम्। अन्यत्र—कुमुदादौ, आकाङ्क्षादीत्यादिना तात्पर्यादिपरिग्रहः। वस्तुत आकाङ्क्षानिश्चयादिरित्येव पाठः, तत्रादिना तात्पर्यनिश्चययोग्यतासत्तिपरिग्रहः। अन्यथाऽऽकाङ्क्षादिपदोत्तरादिपदेन

रामभद्रीटीका।

द्वा इति। पद्मं पङ्कजातत्वाभाववत् इत्याकारकबाधनिश्चयाद्वेत्यर्थः। कुमुदादेरिति। बोधो भवत्येवेत्यग्रेतनेनान्वयः।

अन्यत्र—कुमुदादौ। पङ्कजं पद्ममित्यत्र पद्मपदोपस्थापिते पद्मेऽन्वयो न स्यात् अत आह पदान्तरेति। तस्य—योगार्थस्य। संभूतसामग्रीकत्वात्—शाब्दसामान्यसामग्री-

सम्भूतसामग्रीकत्वात्। रूढ्यर्थभिन्ने योगार्थस्यान्वयबोधव्युदासाय तु रूढे-र्योगापहारिताप्रवादो रूढ्यर्थमात्रे योगार्थस्यान्वयबोधसामग्रीस्थलाभिप्रायक इति चिन्तामणिकृतां मतम् ॥ २८ ॥

योगरूढं विभजते—

**सामासिकं ताद्धिताक्तमिति तद्‌द्विविधम्भवेत्।**
**योगरूढं कृदन्तस्य समासत्वव्यवस्थितेः ॥२९॥**

---

कृष्णकान्तीटीका।

स्वरूपसद्धेतुभूतयोग्यतादेः परिग्रहासम्भवेन न्यूनतापत्तेः। तस्य-अवान्तरवृत्तिलभ्यार्थ-स्य। **सम्भूतसामग्रीकत्वादिति**। सम्भूता सन्धृता सामग्री येन इति बहुव्रीहिणा शाब्दसामान्यसकलकारणाधिकरणत्वादित्यर्थः। ननु रूढ्यर्थभिन्ने योगार्थस्य बोधवा-रणाय रूढेर्योगापहारित्वं प्राचैरुक्तं तदसङ्गतमित्यत आह—**रूढ्यर्थभिन्न इति**। मात्रपदेन रूढ्यर्थेतरव्यवच्छेदः, मतं-सम्मतम् तच्चास्वरससूचनाय, स च पङ्कजातत्वेन पद्मबोधदशायां तादृरूप्येण कुमुदबोधवारणाय तत्र कारणविरहकल्पनस्यावश्यकत्वेन कुमुदबोधोपपादकशक्तिभ्रमकल्पनापेक्षया लाघवविरहेणानुभवविरुद्धस्य रूढिज्ञानदशायां कुमुदादिबोधस्य स्वीकारोऽनुचित इति ॥ २८ ॥

योगरूढं विभजते **सामासिकमिति**। कारिकास्थतत्पदार्थमाह—तद्योगरू-

रामभद्रीटीका।

सत्त्वात्। ननु रूढेर्योगापहारित्वप्रवादो भज्येतेत्यत आह **रूढ्यर्थभिन्न इति**। सति रूढिज्ञाने कुमुदे तात्पर्यज्ञानादिसहस्रेणापि न कुमुदशाब्दधीरित्यनुभवेनैव (१)तैः प्रतिबध्यप्रतिबन्धकभावः स्वीक्रियते इत्यनुभवानुरोधेन क्लृप्तप्रतिबन्धकाभावरूपकारणस्य लाघवानुरोधेन दूरीकरणे प्रायो जगति कार्यकारणभावविलोपापत्तिरित्याशयेन 'मतमि'-त्युक्त्वाऽस्वरसो व्यञ्जितः।

केचित्तु—पङ्कजपदात् कुमुदधीवारणाय पङ्कजातत्वप्रकारकशाब्दसामान्यं प्रति पद्म-त्वप्रकारकप्रमाया विशेष्यतासम्बन्धेन हेतुत्वं कल्प्यते, सर्वत्र ईश्वरीयज्ञानस्य सर्वदा सत्त्वात् न दोष—इत्यपि वदन्ति।

परेतु पङ्कजपदस्य न पद्मत्वविशिष्टे शक्तिः, पङ्कजनिकर्तृ पद्मम् इत्याकारशाब्दस्तु न केवलपङ्कजपदात्, किन्तु यथाकथञ्चित् पद्मत्वोपस्थितिसहकृतपङ्कजपदात्, कुमुदादौ पङ्क-जपदप्रयोगस्तु पद्मत्वस्य पद्मत्वपदज्ञानस्य हेतुत्वाद्वा निरसनीय इति। तन्न। यथाकथञ्चि-दुपस्थितेः शाब्दबुद्धावहेतुत्वादन्यथा यथाकथञ्चित्तदुपस्थितिदशायां विनापि पदस्य वृत्ति-ज्ञानं तच्छाब्दबुध्यापत्तेरिति समासः ॥ २८ ॥

ननु तत्पदस्याव्यवहितवस्तुपरामर्शकत्वात् तद्धितान्तस्यैव द्वैविध्यभ्रमः स्यादत

---

[१] भवतेति २ पु० पाठः।

तद्-योगरूढं, सामासिकं-समासात्मकं, कृष्णसर्पादि, तद्धिताक्तं वासुदेवादि । कृदन्तस्य पङ्कजादियोगरूढस्य सामासिक एवान्तर्भाव इति नाधिक्यम् ॥ २९ ॥

यौगिकं नाम लक्षयति विभजते च—

**योगलभ्यार्थमात्रस्य बोधकं नाम यौगिकम् ।**
**समासस्तद्धिताक्तं च कृदन्तश्चेति तत्त्रिधा ॥३०॥**

यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रति हेतुस्तन्नाम तादृशार्थे यौगिकम्, योगरूढन्तु कृष्णसर्पादिपदं योगेनावच्छिन्नस्य रूढ्यर्थस्य बोधकं, न तु तन्मात्रस्य । तच्च यौगिकं त्रिविधं-समासः तद्धिताक्तं कृदन्तश्चेति । द्वन्द्वोऽपि समासः स्वघटकश-

कृष्णकान्तीटीका ।

ढमिति । ननु 'सामासिकमि'त्यत्रेकण्प्रत्ययस्य वैयर्थ्यमित्यतः सामासिकपदं व्याकुरुते समासात्मकमिति । तथा च स्वार्थे इकण्णिति भावः । तदेव किमित्याकाङ्क्षायामाह—कृष्णसर्पादीति । तच्च कृष्णाभिन्नसर्पत्वादिना कृष्णसर्पत्वरूपजातिविशेषावच्छिन्नस्य बोधकम् । आदिना लोहितशाल्यादिपरिग्रहः । वासुदेवपदमपि वसुदेवापत्यत्वेन कृष्णत्वजात्यवच्छिन्नस्य बोधकम् । आदिना गार्ग्यकाश्यपादिपरिग्रहः । ननु पङ्कजादिकृदन्तनाम्नोऽपि योगरूढत्वाद्द्विधा विभजनमसङ्गतमित्याशङ्कायामुक्तस्य कारिकापरार्द्धस्य भावार्थमाह—कृदन्तस्येत्यादिना । नाधिक्यमिति । न त्रिविधत्वमिति भावः ॥ २९ ॥

यौगिकमिति । क्रमप्राप्तमित्यादिः । कारिकापूर्वार्द्धं व्याख्याय मात्रपदव्यावृत्तिं दर्शयति यन्नामेत्यादिना न तु तन्मात्रस्येत्यन्तेन । यादृशानुपूर्व्यवच्छिन्नं स्वघटकशब्दमात्रलभ्ययादृशविशिष्टार्थविषयकशाब्दं प्रति विषयतया जनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे यौगिकत्वमिति पर्यवसितम् । तद्धिताक्तमिति । 'बहुगुड' इत्यादौ तद्धितान्तत्वाभावात् (१)तन्नोक्तमिति भावः । ननु

रामभद्रीटीका ।

आह योगरूढमिति । प्रकृते इकन्प्रत्ययस्य वैयर्थ्यादाह—सामासिकमिति ।
तथाच स्वार्थं इकन्निति भावः । ननु सरसिजादिशब्दाधिक्याद्विभागाधिक्यमत
आह कृदन्तस्येति । ॥ २९ ॥
विभागमाह समास इति । बहुगुड इत्यादौ तद्धितान्तत्वाभावादुक्तं तद्धिताक्त-
मिति । मात्रपदव्यावृत्तिमाह योगरूढमिति । तन्मात्रस्येति । योगलभ्या-
र्थमात्रस्येत्यर्थः । त्रिधेति दर्शयति—समासस्तद्धिताक्तमिति । ननु पङ्कजा-

(१) तद्धितान्तत्वम् ।

ब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयबोधकतया यौगिक एव। सर्वञ्चेदं रूढान्यत्वेन विशेषणीयम्, नातः कृष्णसर्पादौ वासुदेवादौ पङ्कजादौ च योगरूढेऽतिप्रसङ्गः। 'ब्राह्मणी-श्वश्रूः-शूद्रे'त्यादौ ङीबादेः स्त्रीत्ववाचित्वे तादृशं नाम यौगिकमेव, अन्यथा तु स्त्रीत्वादिमति तत्तदर्थे रूढमेव, नातो विभागस्य व्याघातः ॥३०॥

इतिश्रीजगदीशतर्कालङ्कारकृतौ शब्दशक्तिप्रकाशिकायां नामप्रकरणं समाप्तम्॥

---

कृष्णकान्तीटीका।

द्वन्द्वसमासस्य विशिष्टार्थबोधकत्वाभावात् तस्य यौगिकत्वं न स्यादित्यत आह—द्वन्द्वोऽपीत्यादि। धवखदिराद्यर्थस्यान्वयबोधकतया—धवखदिराद्यर्थस्य यत्किञ्चित्-क्रियान्वयबोधकतयेत्यर्थः, तथा च तत्र तादृशार्थान्वितक्रियारूपविशिष्टार्थप्रसिद्धया न यौगिकत्वानुपपत्तिरिति भावः। अत एवोक्तं "एकदैव क्रियायोगाद्भवति द्वन्द्वसंज्ञक" इति। विशेषलक्षणेऽपि रूढान्यत्वं निवेशयति सर्वं चेदमिति। इदं—यौगिकविशेषलक्षणम्, तथा च रूढान्यत्वे सति समासत्वं समासात्मकयौगिकलक्षणम्, न तु केवलसमासत्वं पङ्कजादिसमासेऽतिव्याप्तेः। अनयैव रीत्या अन्यदपि लक्षणद्वयं कार्यम्। अत एव विशेषलक्षणाक्रान्तस्यैव सामान्यलक्षणाक्रान्तत्वमिति नियमोऽप्युपपद्यत इति भावः। जात्यवच्छिन्नसङ्केतवन्नामत्वावच्छिन्नभिन्नत्वं रूढान्यत्वं, तच्च सामानाधिकरण्यसम्बन्धेन लक्षणविशेषणम्, तत्प्रयोजनं स्वयमाह—नात इति। ननु ङीबादिप्रत्ययान्तस्य यौगिकत्वात् विभागव्याघात इत्यत आह—ब्राह्मणीत्यादि। ङीबादेरित्यादिपदात् ङङ्-आप् इत्यादिप्रत्ययपरिग्रहः। तादृशब्राह्मण्यादिकं स्वमते ङीबादेः स्वरूपार्थकत्वेन ब्राह्मणपदमेव स्त्रीत्वविशिष्टब्राह्मणवाचकम्, तन्मतमाहान्यथेति—ङीबादेः स्त्रीत्वावाचित्वे, विभागव्याघातः—यौगिकनाम्नस्त्रिविधत्वव्याघात इत्यर्थः ॥ ३० ॥

इति श्रीकृष्णकान्तविद्यावागीशविरचितशब्दशक्तिप्रकाशिका-
टीकायां नामप्रकरणटीका समाप्ता ॥

दिशब्दस्य रूढ्यर्थाप्रतिसन्धानदशायां योगार्थमात्रस्यैव बोधकत्वात् तेषामपि यौगिकत्वापत्तिरत आह—सर्वं चेदं रूढान्यत्वेनेति। पङ्कजादिपदस्य पद्मत्वविशिष्टे सङ्केतितत्वेन रूढान्यत्वाभावादिति भावः। ननु ब्राह्मणीत्यादिरूढस्य नाम्नो ङीबादिप्रत्ययान्ततया ब्राह्मणजन्यस्त्रीत्वाश्रयबोधकत्वेन यौगिकत्वापत्तिरतस्तत्रेष्टापत्तिमाह—ब्राह्मणीति। अन्यथा—ङीबादिप्रत्ययस्य स्त्रीत्वाद्यवाचित्वे, स्त्रीत्ववाचित्वमि'ति प्राचां मतेन स्वमतेऽन्यथेत्युक्तम्। अनयोस्तत्त्वं स्वयमेव दर्शयिष्यते। तत्तदर्थे—ब्राह्मणजन्यस्त्रीत्वाश्रयाद्यर्थे ॥ ३० ॥

इति श्रीरामभद्रसिद्धान्तवागीशकृतायां भावार्थबोधिन्यां नामप्रकरणम् ॥

## (२) समासप्रकरणम्।

यौगिकेषु समासं लक्षयति—

**यादृशस्य महावाक्यस्यान्तस्त्वादिर्निजार्थके।**
**यादृशार्थस्य धीहेतुः स समासस्तदर्थकः॥ ३१॥**

यादृशमहावाक्योत्तरस्त्वतलादिः स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुस्तादृशं तद्वाक्यं तथाविधार्थे समासः। पाचकादिकन्तु पाककर्त्राद्यर्थकं वाक्यमपि स्वघटकानेकनामलभ्यतादृशार्थकत्वविरहान्न

कृष्णकान्तीटीका।

**यौगिकेष्विति**, निर्द्धारणे सप्तमी। **समासमिति**। क्रमप्राप्तमित्यर्थः। अन्तःशब्दोऽव्यवहितोत्तरार्थः, त्वादीत्यादिना तलादिपरिग्रहः, निजार्थकं इति स्वार्थे कप्रत्ययः, स्वार्थे इत्यर्थः, यादृशार्थस्येति षष्ठ्यर्थः प्रकारित्वम्, इत्यादिकं विसृज्य निष्कृष्टार्थमाह—**यादृशेति**। **स्वार्थस्येति**। स्वं त्वतलादि, षष्ठ्यर्थो निष्ठत्वं, अन्वयश्चास्य विषयतेत्यनेन, यादृशार्थवच्छिन्नत्वं—यादृशार्थनिष्ठप्रकारतानिरूपकत्वम्, तथाचाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्यवच्छिन्नप्रकारकत्वतलादिविशेष्यकज्ञानं यादृशार्थनिष्ठप्रकारताकत्वतलाद्यर्थविशेष्यकान्वयबोधजनकं महावाक्यघटकतादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे समासत्वमिति फलितम्। 'नीलोत्पलत्वमि'त्यादौ त्वप्रत्ययार्थविशेष्यकनीलोत्पलप्रकारकान्वयबोधे नीलोत्पलादिशब्दोत्तरत्वप्रत्ययनिश्चयत्वेन हेतुत्वान्नीलोत्पलादिभागस्य नीलाभिन्नोत्पलाद्यर्थे समासत्वम्। एवंक्रमेण सर्वत्र लक्षणसमन्वयः। ननु घटादिभागस्य वाक्यत्वाभावादेव व्युदाससम्भवात् वाक्ये महत्त्वनिवेशनमफलम्, इत्यतस्तन्निवेशं सार्थकयति **पाचकादिकं त्विति**। पाककर्त्राद्यर्थकमित्यनेन तस्य विशिष्टार्थाप्रसिद्धिभ्रमनिरासः। 'वाक्यमपी'त्यनेन वाक्यत्वेन तद्वारणासम्भवः सूचितः। स्वं—पाचकादिः, तादृशार्थकत्वविरहात्—पाककर्त्राद्यर्थकत्वविरहात्, तथाच यादृशानुपूर्वीविशेषः स्वघटकानेकनामलभ्ययादृशविशिष्टार्थबोधजनकता-

रामभद्रीटीका।

**समासमिति**। क्रमप्राप्तमिति शेषः। अन्त इत्यस्य वृत्तिरुत्तर इति। निजार्थके इत्यस्य विवरणं **स्वार्थस्येत्यादि**। नीलोत्पलत्वमित्यादौ नीलाभिन्नोत्पलस्य भाव इत्यन्वये नीलोत्पलादिवाक्योत्तरत्वतलादिनिश्चयत्वेन हेतुत्वात्तादृशस्य नीलोत्पलादिवाक्यस्य नीलाभिन्नोत्पलाद्यर्थे समासत्वमानुपूर्वीज्ञानस्य तथैव हेतुत्वादेवंक्रमेण सर्वत्र लक्षणसङ्गतिः। ननु यादृशवाक्योत्तरत्वादिः स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुस्तादृशं तद्वाक्यं तादृशार्थे समास इति लघुतरं कथं न कृतमत आह—**पाचकादिकं त्विति**। आदिना पङ्कजादिशब्दपरिग्रहः। तादृशार्थकत्वविरहात्—पाककर्त्राद्यर्थकत्वविर-

महावाक्यम् । प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वा प्रकृते वाक्यस्य महत्त्वं वाच्यम्, तेन उपकुम्भादौ नाव्याप्तिर्नैवा नीलघटत्वमित्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः । 'क्षीरपायी'त्यादिकस्तु प्रकृत्यर्थावच्छिन्नकृदर्थस्यान्वयबोधे समर्थोऽपि न प्रकृत्यर्थमात्रावच्छिन्न-

---

कृष्णकान्तीटीका ।

वच्छेदकस्तादृशानुपूर्वीमच्छब्दत्वं तथाविधार्थे महावाक्यत्वमिति भावः । वाक्यनिष्ठ-महत्त्वमपि स्वातन्त्र्येण निर्वक्ति—प्रकृत्यर्थेति । तथाच यादृशानुपूर्वीविशेषः स्वार्थधर्मिकस्वप्रकृत्यर्थमात्रप्रकारकान्वयबोधजनकतानवच्छेदकः तादृशानुपूर्वीमत्त्वं महत्त्वमिति भावः । नचैवं 'घट' इति भागस्य महत्त्वापत्तिरिष्टत्वात्, महत्त्वसत्त्वेऽपि वाक्यत्वाभावादेवातिप्रसङ्गभङ्गात्, अत एव वाक्यत्वनिवेशनमपि सफलम् । पूर्वकल्पपरित्यागे स्वयं बीजमाह —तेनेत्यादि । तेन-नामाद्यघटितमहत्त्वनिर्वचनेन । नाव्याप्तिरिति । अन्यथा निपातस्य नामत्वाभावेन अनेकनामलभ्यविशिष्टार्थकत्वविरहादव्याप्तिः स्यादिति भावः । 'उपकुम्भादावि'त्यादिना घटादेः परिग्रहः । ननु निपातस्य नामत्ववादिमते तत्र नाव्याप्तिः, तदस्वीकारपक्षेऽपि स्वघटकधातुभिन्नानेकपदलभ्यत्वं महावाक्यलक्षणे निवेशनीयम् अतो दोषान्तरमाह—नवेति । अतिप्रसङ्ग इति । तादृशानेकपदलभ्यार्थकत्वादिति भावः । एतत्कल्पे तु भावप्रत्ययार्थधर्मिकनीलघटमात्र-प्रकारकान्वयबोधस्वरूपयोग्यतया नातिप्रसङ्ग इति भावः । मात्रपदव्यावृत्तिमाह—क्षीरपायीत्यादि । आदिना ओदनभोक्तृकुम्भकारादिपरिग्रहः, प्रकृत्यर्थावच्छिन्नकृदर्थस्य-पानशीलावच्छिन्नकर्तुः, अन्वयबोधे समर्थोऽपि—अन्वयबोधस्वरूपयोग्योऽपि । न प्रकृत्यर्थमात्रावच्छिन्नस्येति । अन्वयबोधे समर्थ इति पूर्वेणान्वयः ।

रामभद्रीटीका ।

हात् । न महावाक्यमिति । तथाच तदनुक्तौ पाचकादिष्वतिव्याप्तिरिति भावः । नन्वेतावतापि 'अघटो देश' इत्यादितत्पुरुषे 'उपकुम्भाद्य'व्ययीभावे चाव्याप्तिः, तद्घटकनञादिनिपातस्य नामत्वाभावेन तादृशस्य महावाक्यत्वविरहात् अत आह—प्रकृत्यर्थमात्रेति । नचैवं 'घट'इत्यादिभागेऽतिव्याप्तिः, तस्य निरुक्तमहत्त्वविरहेऽपि वाक्यत्वविरहात् इति भावः । ननु प्राचां मते निपातानामपि नामत्वान्न तत्राव्याप्तिरत आह—नवेति । तथाच नीलघटत्वावच्छिन्नभावप्रत्ययार्थस्यान्वयबोधे नीलघटत्वभागस्य स्वरूपयोग्यत्वात् निरुक्तमहत्त्वाभावान्नातिव्याप्तिरिति भावः । ननु प्रकृत्यर्थावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वमेव वाक्यस्य महत्त्वमुच्यतामलं मात्रपदप्रवेशेनेत्यत आह—क्षीरपायीति । प्रकृत्यर्थेति । प्रकृत्यर्थावच्छिन्नस्य कृदर्थताच्छील्यस्य बोध इत्यर्थः । प्रकृत्यर्थमात्रेति । स्वप्रकृत्यर्थमात्रे इत्यर्थः । ततः—क्षीरपायीत्यादितः ।

स्य, ततः पानशीलसामान्यस्याप्रत्ययात् । 'राज्ञः पुरुषत्वमि'त्यादितो राजन्येव पुरुषभावः प्रतीयते न तु राजपुरुषस्य भावः, तद्धितानां प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वादतो 'राज्ञः पुरुषे'त्यादिभागे न प्रसङ्गः । 'पायं पायमि'त्यादिणमन्तभागस्तु स्वार्थावच्छिन्नस्य धात्वन्तरार्थस्यैवान्व-

---

कृष्णकान्तीटीका ।

ननु 'राज्ञः पुरुष' इतिभागेऽतिव्याप्तिः तस्य निरुक्तमहावाक्यत्वात्, तदुत्तरत्वतलादिप्रत्ययार्थधर्मिकस्वार्थप्रकारकबोधजनकत्वाच्चेत्यत आह—राज्ञः पुरुषत्वमिति । राजन्येवेति—एवकारो भिन्नक्रमे, तथाच राजनि पुरुषभाव एव प्रतीयत इत्यर्थः । एवकारव्यवच्छेद्यमाह—नत्विति । कुत इत्याकाङ्क्षायामाह—तद्धितानामिति । प्रकृत्यर्थमात्रान्वितस्वार्थबोधकत्वात्—प्रकृत्यर्थेतरविषयत्वानिरूपकस्वार्थविषयताकबोधजनकत्वात्, तथाच प्रकृत्यर्थकोटौ राजसम्बन्धादेर्भानासम्भवादिति भावः । न प्रसङ्ग इति । तथाच स्वार्थधर्मिकराजसम्बन्धत्वपुरुषप्रकारकान्वयबोधजनकत्वात् तथाविधार्थे 'राज्ञः पुरुष'भागो न समास इति भावः । केचित्तु त्वतलादिधर्मिकत्वनिवेशव्यावृत्तिपरतया तादृशग्रन्थं व्याचक्षते । तन्मन्दम्, राजस्वत्ववत्पुरुषरूपविशिष्टार्थकत्वाभावादेव तत्रातिव्याप्तिवारणसम्भवात्, प्रकृते विषयतात्वेनैव महावाक्यविषयत्वत्वतलादिविषयताया निवेशाच्च । ननु त्वतलादित्वेन कथं तन्निवेश इत्यत आह—पायं पायमिति । स्वार्थेति । पौनःपुन्यार्थक—णमाद्यर्थेत्यर्थः । धात्वन्तरार्थस्य-कृत्यादिरूपधात्वन्तरार्थस्य । 'पायं पायं व्रजतीत्यादितः पुनःपुनःपानकृतिसमानकालीनत्वस्य व्रजनादौ बोधनात् "णमु चाभीक्ष्ण्ये द्विश्च पद"मित्यादिकस्वापवादकानुशासनादिति केचित् । वस्तुतः स्वार्थावच्छिन्नस्य—आभीक्ष्ण्यरूपस्वार्थावच्छिन्नस्य, धात्व-

रामभद्रीटीका ।

अप्रत्ययादिति । ततः क्षीरपानशीलस्यैव प्रत्ययात् 'क्षीरपायी'त्याद्युपपदसमासस्य स्वप्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधासमर्थत्वादेव नाव्याप्तिरिति भावः । नन्वेवं निरुक्तमहावाक्यत्वस्याविशिष्टत्वात् 'राज्ञः पुरुषः' इत्यादिभागेऽतिव्याप्तिरत आह—राज्ञः पुरुषत्वमिति । प्रतीयत इति । घटस्य रूपमित्यत्रेव प्रकृते षष्ठ्या वृत्तित्वार्थकत्वादिति भावः । प्रकृत्यर्थेति । स्वप्रकृत्यर्थेत्यर्थः । बोधकत्वादिति । अन्यथा 'पृथुकस्या चाटकैर' इत्यादावपि पृथुकसम्बन्धिचटकायाः अपत्यस्य बोधापत्तेरिति भावः । नप्रसङ्गो—नातिव्याप्तिः । ननु यादृशमहावाक्योत्तरशब्दो(१) यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुः तादृशार्थकतद्वाक्यत्वमेव तादृशार्थे समासत्वमित्येवास्तु कृतं त्वतलादेर्विशेषतो निवेशेनेत्यत आह—पायमिति । स्वार्थेति । पौनःपुन्यात्मकणमाद्यर्थेत्यर्थः ।

---

(१) 'वाक्योत्तरं यच्छब्दो'-२ पु० पाठः ।

यबोधको न तु क्त्वादिप्रत्ययार्थस्य । 'प्रस्थाये'त्यादौ समासव्यपदेशो ल्य-
बादिशब्दसंस्कारप्रयोजको गौणः ॥ ३१ ॥

विभजते—

**स चायं षड्विधः कर्मधारयादिप्रभेदतः ।**
**यश्चोपपदसंज्ञोऽन्यस्तेनासौ सप्तधा मतः ॥३२॥**

---

कृष्णकान्तीटीका ।

न्तरार्थस्य-पानरूपस्य, तेन णमःप्रकृतिपाधातोर्धात्वन्तरत्वाभावेऽपि न क्षतिः । ननु 'प्रस्थाय' इत्यादौ ल्यप् न स्यात्, प्रपूर्वस्य स्थाधातोर्निरुक्तमहावाक्यत्वाभावेन समासत्वाभावात् समास एव क्त्वास्थाने तस्य विधानात् इत्यत आह-प्रस्थाय इत्यादाविति । समासव्यपदेशः-समासपदप्रयोगः, गौणः-भाक्तः, नतु शाक्त इति भावः ॥ ३१ ॥

विभजते-समासमित्यादिः । कारिकां विवृणोति स चायमिति स च-

रामभद्रीटीका ।

धात्वन्तरार्थस्येति । कृत्यादिरूपधात्वन्तरार्थस्येत्यर्थः । 'पायं पायं व्रजती'त्यादितः पुनःपुनःपानकृतिसमानकालीनत्वस्य व्रजनादौ बोधनात् 'णमु चाभीक्ष्ण्ये द्विश्च पदमि'त्यादिरूपापवादकानुशासनादिति भावः । नन्विति । तथाच तत्रातिव्याप्तिभयेन विशेषतोऽभिहितमिति भावः । ननु प्रपूर्वस्य स्थाधातोर्निरुक्तमहावाक्यत्वाभावात् समासत्वविरहेण 'प्रस्थाये'त्यादौ ल्यप् न स्यात् समास एव क्त्वास्थाने ल्यप्विधानात् अत आह—प्रस्थायेत्यादाविति । आदिना 'प्रणम्ये'त्यादेः परिग्रहः । गौणो—भाक्तः अन्यथा प्रशब्दस्य द्योतकत्वमते वस्तुवाचिनां नाम्नामेकार्थावच्छिन्नापरार्थविषयताशालिबोधजनकवाक्यस्य प्राचां मते स्वमते च समासत्वेन तद्दोषतादवस्थ्यात् । न च प्रादेर्वाचकत्वमते नायं दोषः, तथासति परस्परानन्वितपदार्थोपस्थापकद्वन्द्वेऽव्याप्तिः । एतेन—नामोपस्थाप्ये यत्र धर्मिणि प्रत्ययानुपस्थाप्ययदर्थस्य यादृशान्वयबोधं प्रति यादृशवाक्यत्वेन हेतुत्वं तादृशवाक्यत्वमेव तथाविधान्वयबोधसमासत्वम्, नीलोत्पलादिकं हि वाक्यमुत्पलादौ नीलादेरभेदान्वये तन्त्रं तादृशानुपूर्वीज्ञानत्वेन तादृशज्ञानोत्तरोत्पलधर्मिकनीलप्रकारकशाब्दं प्रति हेतुत्वात्, घटत्वेत्यादिकं न नामोपस्थाप्येऽर्थे घटादेरन्वयक्षमम्, पटुतरेत्यादिकं च नामार्थे न प्रत्ययानुपस्थापितार्थस्यान्वयक्षममिति तयोर्व्युदासः, तदुक्तम्—

प्रत्ययेनानुपस्थाप्ययादृशार्थान्वयक्षमम् ।
नामार्थे यत्र यद्वाक्यं स समासस्तथान्वये ॥—

इति प्रकारान्तरेण दुर्गसिंहादिमतपरिष्कर्त्तॄणां मतमपास्तम् । दण्डी पुरुष इत्यादौ

स चायं निरुक्तः समासः कर्मधारय१ द्विगु२ तत्पुरुष३ अव्ययीभाव-४ बहुव्रीहि५ द्वन्द्व६ भेदात् षड्विधः, यश्च कुम्भकारादिरप्युपपदसंज्ञकः७ समासोऽस्ति, तेन समं समासः सप्तविधः । सङ्काश-निभ-नीकाशादीनामिव कारादीनामपि शब्दानामुपपदार्थान्वितस्यैव स्वार्थस्य बोधकतया तथाविधनामान्तत्वमेव चैतस्य समासान्तराद्विशेषः ॥ ३२ ॥

ननु यदि षड्विधः सप्तविधो वा समासस्तदाऽस्य पञ्चविधत्वोक्तिः

---

कृष्णकान्तीटीका ।

यौगिकनामविभाजकतावच्छेदकरूपावच्छिन्नश्च, निरुक्तः-निरुक्तलक्षणाश्रयः । समासः-समासपदार्थः । केचित्तु—'स चायमि'ति कारिकास्थपाठधारणं, स इत्यस्यार्थमाह 'निरुक्त' इति, यौगिकनामविभाजकतावच्छेदकरूपावच्छिन्नः, अयमित्यस्यार्थमाह—समास इति, निरुक्तलक्षणाश्रय इति तदर्थ-इत्याहुः । ननु षड्विधत्वं कुत इत्याकाङ्क्षायामाह—कर्मधारयेत्यादि । तेनेत्यस्य तृतीयाया असावित्यदसशब्दस्य चार्थमाह तेन समं समास इति । ननूपपदसमासस्यापि तत्पुरुषतया कुतस्तेन रूपेण विभागः मिथोविरुद्धधर्माणामेव विभाजकत्वादित्यत आह—सङ्काशनिभनीकाशादीनामिवेति । तथाविधेति । उपपदार्थान्वितस्वार्थबोधकपदान्तत्वमेवेत्यर्थः । विशेषः-तत्पुरुषत्वादिविरुद्धो विभाजकः ॥ ३२ ॥

वाग्भटाद्युक्तं समासस्य पञ्चविधत्वं नास्मदुक्तविरुद्धमित्यावेदयितुं भूमिकामारचयति—नन्वित्यादि । अस्य-समासस्य, तां-पञ्चविधोक्तिम् , उपपादयति—तद्विरुद्ध-

रामभद्रीटीका ।

मतुबादिप्रत्ययोपस्थाप्यार्थान्वयक्षमेऽव्याप्तिः । न च प्रत्ययमात्रानुपस्थाप्येति वक्तव्यमिति नाव्याप्तिः, स्वोपस्थाप्यपङ्कादौ प्रत्ययमात्रानुपस्थाप्यपङ्कजनिकर्तृत्वादेरन्वयक्षमस्य पङ्कजादिपदस्य समासत्वापत्तेः, धात्वर्थधर्मिकान्वयबोधहेतोः कुम्भकाराद्युपपदसमासस्यासंग्रहापत्तेश्चेति दिक् । यत्तु निर्विभक्तिकनानापदार्थविषयताशालिबोधजनकवाक्यत्वं तदिति । तत्तुच्छम्—'कण्ठेकालः उरसिलोमे'त्यादावव्याप्तिः। न च तस्य समासप्रतिरूपकवाक्यत्वात् तदसङ्ग्रहेऽपि न क्षतिरिति वाच्यम् । विभक्तित्वस्यैकस्याभावेन तादृशनिरुक्तेः शङ्कितुमशक्यत्वादिति ध्येयम् ॥ ३१ ॥

इतरेतरसमाहारादिभेदात् अनेकविधत्वात् षड्विधत्वव्याघातादाह निरुक्त इति । समासविभाजकधर्मवानित्यर्थः, तथा च समाहारत्वादेः समासविभाजकत्वाभावान्न व्याघात इति भावः । कारिकार्थं व्याकरोति यश्चेति । ननु तत्पुरुषादस्य को विशेष इत्यत आह सङ्काशेत्यादि । उपपदार्थान्वितेति । कर्माद्युपपदार्थान्वितेत्यर्थः । तथाविधेति । उपपदार्थान्वितस्वार्थबोधकेत्यर्थः । एतस्य-उपपदसमासस्य, समासान्तरात्-तत्पुरुषसमासान्तरात् ॥ ३२ ॥

प्राचामसमस्तेऽस्यतस्तामुपपादयति—

(१)पूर्वमध्यान्त्यसर्वान्यपदप्राधान्यतः पुनः ।
प्राच्यैः पञ्चविधः प्रोक्तः समासो वाभटादिभिः ॥ ३३ ॥

[१]कश्चित्समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधान उच्यते, यथा प्राप्तजायार्द्धपिप्पलीपूर्वकायादिकस्तत्पुरुषः, यथा वा उपकुम्भमव्ययीभावः, पुरुषसिंहादिकर्मधारयश्च । [२]कश्चिन्मध्यपदार्थधर्मिकधीजनकतयैव मध्यपदप्रधानो, यथा.पटानधिकरण–प्रतियोगितानवच्छेदकेत्यादिकस्तत्पुरुषः, पटस्य न।धिकरणमित्यादिविग्रहे मध्यपदार्थस्यैव

कृष्णकान्तीटीका ।

त्वेन ज्ञापयति ।

उच्यत इति । तथाच पूर्वपदप्राधान्यं स्वघटितसमासघटकापरपदार्थविशेष्यतया स्वार्थबोधकत्वमिति भावः । जायां प्राप्त इत्यर्थे 'प्राप्तजायः' पिप्पल्या अर्द्धमित्यर्थे 'अर्धपिप्पली' कायस्य पूर्वमित्यर्थे 'पूर्वकायः' कुम्भस्य समीपमित्यर्थे 'उपकुम्भं' पुरुषः सिंह इव इत्यर्थे 'पुरुषसिंह' इति । कश्चिदिति । समास इति पूर्वेणान्वयः । मध्यपदार्थधर्मिको–मध्यपदार्थमुख्यविशेष्यक इत्यर्थः, अन्यथा त्रिपदघटितद्वन्द्वान्यसामसमासस्यैव मध्यपदप्रधानत्वापत्तेः । ननु न अधिकरणं अनधिकरणं पटस्यानधिकरणं पटानधिकरणमिति समासेनैव सामञ्जस्ये मध्यपदप्रधानसमास एव दुर्घट इति विग्रहं दर्शयन् मध्यपदप्रधानत्वं सङ्गमयति पटस्य नाधिकरणमित्यादिना । तथाच नञोऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः अधिकरणत्वावच्छिन्नप्रतियोगिताकभेदादेरप्रसिद्धेः अनधिकरणादिशब्दस्यापार्थकतया तेन समं समासासम्भवादिति भावः । इदमत्रावधेयम् । 'तदुभयमपि साध्यानधिकरणानधिकरणत्वमि'तिलक्षणव्याख्यायां गदाधरभट्टाचार्यादिभिर्नञो मध्यनिपातस्य समर्थितत्वात्, न पटस्याधिकरणं इति विग्रहेऽपि पटानधिकरणमितिसमाससम्भवात्, पटस्य न अधिकरणमितिविग्रहाकारप्रदर्शनानौचित्यमिति । नचादिपदग्राह्यः सोऽपि विग्रहो भवितुमर्हतीति वाच्यम् । तत्रत्यादिपदेन 'प्रतियोगिताया न अवच्छेदकम्' इत्यादेरेव ग्राह्यत्वात्, अन्यथा तस्यापि पूर्वमुक्तत्वात् तदाकाराप्रदर्शनेन न्यूनता-

रामभद्रीटीका ।

( प्राप्तेति । ) 'जायाम्प्राप्त' इत्यर्थे प्राप्तजायः 'पिप्पल्या अर्धमित्यर्थे' अर्धपिप्पली 'कायस्य पूर्व'मित्यर्थे पूर्वकायः 'कुम्भसामीप्यम्' इत्यर्थे उपकुम्भम् 'पुरुषः सिंह

( १ ) पूर्व-मध्य-अन्त्य-सर्व-अन्य पदार्थप्राधान्यतया पूर्वादिपदप्रधानस्समासः पञ्चविधो भवतीति वाभटादिप्राचीनवैयाकरणसंमतामिति कारिकार्थः ।

विशेष्यत्वात्, 'बहुपदे बहुव्रीहिरेवे'त्यस्य तत्पुरुषादेर्बहुनामगर्भत्वाभावे तात्पर्यमित्यग्रे व्युत्पाद्यत्वात्। [३]कश्चिदन्त्यपदार्थधर्मिकधीहेतुत्वादन्त्यपदप्रधानः, यथा राजपुरुषादिकस्तत्पुरुषो, नीलोत्पलादिकः कर्मधारयो, द्विगार्ग्याद्यव्ययीभावाश्च। [४]कश्चित्सर्वपदार्थधर्मिकबुद्धिहेतुत्वात् सर्वपद-

---

कृष्णकान्तीटीका।

पत्तेः। ननु बहुपदे कुतस्तत्पुरुषः "बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समास" इति नियमादित्यत आह—बहुपदे इति। तथाच बहुपदे इत्यत्र पदशब्दो नामार्थक इति भावः। तात्पर्यमिति। नञो नामत्वाभावादिति भावः। अन्त्यपदप्रधानकं समासं दर्शयति—कश्चिदिति। तत्समासघटकान्त्यपदार्थमुख्यविशेष्यकशाब्दधीहेतुत्वादित्यर्थः। राजपुरुष इत्यादौ नामार्थयोर्भेदान्वयस्याव्युत्पन्नतया राजपदस्य राजसम्बन्धिनि लक्षणा तस्य चाभेदसम्बन्धेन पुरुषेऽन्वयात् राजसम्बन्धी पुरुष इति शाब्दबोधः। न च व्याससमासयोस्तुल्यार्थकत्वमिति प्राचीनप्रवादभङ्ग इति वाच्यम्। तादृशप्रवादस्य कर्मधारयादिसमासाभिप्रायकत्वात्। किञ्च तुल्यार्थकत्वमित्यस्य कोऽर्थः, समानप्रकारविशेष्यकबोधजनकत्वं समानविषयकबोधजनकत्वं वा? नाद्यः, बहुव्रीह्यादिव्यासजन्यबोधेऽन्यपदार्थस्याविशेष्यत्वेन समानाकारबोधजनकत्वाभावात्। न द्वितीयः, समाहारद्वन्द्वजन्यबोधेऽधिकस्य साहित्यस्य भानात् 'तत्र' तत्र तद्भानेन नित्यसमासस्थले च व्यासाभावात् तादृशप्रवादस्यासार्वत्रिकत्वात्। स्वमते राजपदस्य राजसम्बन्धे लक्षणास्वीकारात्तत्पुरुषस्थलेऽपि तादृशप्रवादभङ्गाभावादिति। उदाहरणविशेषार्थमाह—नीलोत्पलादिक इति। नीलाभिन्नमुत्पलमित्यर्थे 'नीलोत्पलं' द्वौ गार्ग्यौ इत्यर्थे 'द्विगार्ग्यं' सर्वत्रान्त्यपदार्थस्यैव विशेष्यत्वादिति भावः। सर्वपदार्थेति।

रामभद्रीटीका।

इवे'त्यर्थे पुरुषसिंह इति। विशेष्यत्वादिति। न च न अधिकरणमनधिकरणमिति अनधिकरणपदेन सह पटस्य समासात् मध्यपदप्रधानसमासस्वीकारो निर्युक्तिक इति वाच्यम्। न अधिकरणमिति विग्रहस्याभावेन नानधिकरणमित्यस्य समासत्वाभावात्, अधिकरणत्वावच्छिन्नभेदस्यालीकतया तादृशस्याबोधकत्वादित्यवश्यं पटस्य न अधिकरणमिति विग्रहे मध्यपदप्रधानत्वमिति भावः। ननु 'बहुपदे बहुव्रीहिरेव नापरो द्वन्द्वान्यः समास' इति प्राचीनसिद्धान्तविरोध इत्यत आह—बहुपद इति। नञो नामत्वाभावादिति भावः। (राजेति।) राजसम्बन्धी पुरुष इत्यर्थे 'राजपुरुषः' नीलाभिन्नमुत्पलमित्यर्थे 'नीलोत्पलं' द्वौ गार्ग्यावित्यर्थे 'द्विगार्ग्यं' सर्वत्रैवान्त्यपदार्थविशेष्यत्वसम्भवादिति भावः। 'घटपटा'वित्यादौ घटपटविशेष्यकद्वित्वप्रकारकान्वयबोधजननात् सर्वपदप्राधान्येऽपि समाहारद्वन्द्वे प्राचां मते उत्तरपदे साहित्यं

प्रधानः यथेतरेतरद्वन्द्वो, द्वन्द्वमात्रं वा। [५]कश्चित् स्वघटकान्यपदार्थधर्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः, यथा—बहुव्रीहिः, खलेयवा(१)ऽव्ययीभावश्च। तदेवं पञ्च भेदानादायैव पञ्चविधत्वं प्राच्यैरुक्तमतो न विरोधः।

नित्यानित्यभेदेन समासस्य द्वैविध्यमप्यास्ति, यदुक्तं जयादित्येन(२)—

**विभक्तिमात्रप्रक्षेपान्निजान्तर्गतनामसु।**
**स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकौ॥इति।**

स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यार्थस्याबोधः स नित्यः

---

कृष्णकान्तटीका।

स्वघटकसर्वपदार्थेत्यर्थः। इतरेतरद्वन्द्व इति। 'पाणिपादमि'त्यादिसमाहारद्वन्द्वउत्तरपदस्य लक्षणायाः प्राच्यैः स्वीकारात्, तत्र साहित्यविशेष्यक एवान्वयबोध इत्यत इतरेत्युक्तम्। स्वयं तदस्वीकारात् स्वमतानुसारेणाह—द्वन्द्वमात्रं वेति। अन्यपदार्थधर्मिकधीहेतुत्वं सर्वत्र समासे अस्तीति तेन रूपेण विभागानुपपत्तिरतः स्वघटक इति। उदाहरणवैशद्यार्थमाह खल इति। खले यवा यदा इत्यादिविग्रहेण तत्र कालस्यैव विशेष्यतया भानादिति भावः। उपसंहरति—तदेवमिति। न विरोध इति। प्रकारान्तरेण विभागस्य प्रकान्तरेण विभागाविरुद्धत्वादिति भावः।

अत एव कैश्चित् समासस्य द्वैविध्यमुच्यते, तदपि न विरुद्धमित्यभिप्रायेणाह—नित्यानित्यभेदेनेति। तत्र जयादित्यसंवादमाह—यदुक्तमिति।

व्याचष्टे स्वान्तर्गतेति। तथा च यत्समासस्य स्वघटकयादृशानुपूर्वीप्रकारकज्ञानजन्यबोधविषययादृशार्थबोधं प्रति स्वघटकविभक्तिमद्यावन्नामघटितानुपूर्वीप्रकारकज्ञानस्य तत्त्वेनाहेतुत्वं तादृशानुपूर्वीमत्समासस्तादृशार्थे नित्यसमास इत्यर्थः। न च 'निर्मक्षिकाऽसुर' इत्यादिस्थलेऽनेकत्वरूपस्यापि यावत्त्वस्याप्रसिद्धिरिति वाच्यम्।

रामभद्रीटीका।

लक्षणाय 'पाणिपादमि'त्यत्र पाणिपादसाहित्याश्रयबोधनात् सर्वपदप्राधान्यं दुर्घटमित्यत आह—इतरेतरेति। स्वमते लक्षणायास्तत्राभावादाह—द्वन्द्वमात्रं वेति। अन्यत्वस्य केवलान्वयित्वादसम्भव इत्यत आह स्वघटकान्येति। बहुव्रीहिरिति। 'चित्रगुरि'त्यादौ चित्रा गौर्यस्येति विग्रहात् चित्रगोस्वामिनो बोधनादिति भावः। खलेयवमिति। 'खले यवा यदे'त्यादि विग्रहेण कालस्यैव विशेष्यत्वादिति भावः। तदेवमिति। तस्मादेवंक्रमेणेत्यर्थः।

प्रसङ्गादाह—नित्यानित्येत्यादिना। यल्लभ्यस्य—समासलभ्यस्य, वैजात्यादेरि-

---

(१) खलेयवमिति रामभद्रस्येष्टः पाठः।

(२) पाणिनीयसूत्रवृत्तिकाशिकाकारेण।

समासः। यथा- कृष्णसर्पनिर्मक्षिकासुरादिः, 'कृष्णः सर्पो' 'मक्षिकाया निः' 'न सुर' इत्यादितस्तल्लभ्यस्य वैजात्यादेरप्रत्ययात्। यल्लभ्यस्य च बोधः सोऽनित्यसमासः। यथा-राजपुरुषपूर्वकायादिः, तल्लभ्यार्थस्य 'राज्ञः पुरुषः' 'पूर्वं कायस्ये'त्यादिवाक्यादपि प्रतीतेः। 'स्फुरद्वाणी, चलच्चैत्र' इत्यादिकः कर्मधारयोऽप्यनित्य एव समासः, स्फुरन्ती वाणीत्यादिविग्रहस्य वाण्यादौ

---

कृष्णकान्तीटीका।

स्वघटकनामत्वव्यापकविभक्तिघटितानुपूर्वीप्रकारकेत्यस्य वक्तव्यत्वात्। यद्यपि नञो नामत्वाभावेन 'न सुर' इत्यादौ स्वघटकनामत्वव्यापकविभक्तिघटितानुपूर्वीप्रकारकज्ञानत्वेन वैजात्यावच्छिन्नविषयकबोधं प्रतिहेतुत्वमस्त्येव, अन्यथा सविभक्तिकासुरादिशब्दादपि तादृशवैजात्यावच्छिन्नस्य बोधो न स्यात्, तथापि तादृशवैजात्यावच्छिन्नविषयकबोधे सविभक्तिकासुरादिपदज्ञानस्याहेतुत्वात् न किञ्चिदनुपपन्नमिति। वैजात्यादावित्यादिनाऽभावविरोधाद्यखण्डधर्मपरिग्रहः। यल्लभ्यस्य च बोध इति। तथा च यत्समासस्य स्वघटकानुपूर्वीप्रकारकज्ञानजन्यविषयकतादृशार्थबोधं प्रति स्वघटकनामत्वव्यापकविभक्तिघटितानुपूर्वीप्रकारकज्ञानस्य तत्त्वेन हेतुत्वं, तादृशानुपूर्वीमत्समासस्तादृशार्थेऽनित्यसमासः। इदं च व्याससमासयोस्तुल्यार्थकत्वमादृत्य, अन्यथा राजसम्बन्ध्यभिन्नपुरुषबोधे राज्ञः पुरुष इत्याद्यानुपूर्वीप्रकारकज्ञानस्याहेतुत्वादव्याप्त्यापत्तेः। प्रतीतेरिति। तथा चोभयानुपूर्वीप्रकारकज्ञानमेव तादृशबोधे हेतुरिति भावः। ननु स्फुरद्वाणीत्यादेरनित्यसमासत्वं न स्यात्, प्रथमान्तपदोपस्थाप्यार्थविशेष्यकशतृजर्थप्रकारकशाब्दबोधस्य प्राच्यैरनङ्गीकारात्, "वर्त्तमाने शतृशानजावप्रथमैकाधिकरणामन्त्रितयो"रित्यनुशासनात् 'स्फुरन्ती वाणी'त्यादेर्विग्रहस्यासम्भवादित्यत आह-स्फुरद्वाणीत्यादि। तदर्थप्रकाशकत्वात्-समासस्यार्थप्रकाशकत्वात्, तथा च तादृशबोधे शतृजर्थस्योद्देश्यदिशि निविष्टत्वेन विधेयत्वाभावात्, धर्मितावच्छेदकादिव्यावृत्तविषयताया एव विधेयत्वात्, अन्यथा रूपवान् पर्वतो वह्निमानित्यादौ पर्वते रूपमनुमिनोमीत्यनुव्यवसायापत्तेः, अनुमित्यर्थकधातुयोगे विधेयत्वस्य विधेयित्वस्य वा कर्मप्रत्ययार्थत्वादिति भावः। ननु सूत्रेऽप्रथमेत्यादिना प्रथमान्तपदोपस्थाप्यार्थविशेष्यकशतृजर्थप्रकारकबोधमात्रानभ्युपगमः सूचितः, अन्यथोक्तरीत्या सर्वत्रैव तादृशबोधासम्भवेन निषेधवैफल्यात्, चलदेक इत्यादेस्तथाप्यसङ्ग्रहाच्च, चलदभिन्ने एकत्वविशिष्टे एकत्वान्वये चलदेक इत्यादेर्निरा-

रामभद्रीटीका।

इत्यादिनाऽभावविरोधादेः परिग्रहः। प्रतीतेरिति। न च नामार्थयोरभेदान्यसम्बन्धेनाऽन्वयस्याव्युत्पन्नत्वात् राजपुरुष इत्यत्र राजसम्बन्धिनि लक्षणाया आवश्यकतया विग्रह-

स्फुरदादिविधेयकबोधाजनकत्वेऽपि स्फुरदभिन्नवाण्यादावेकत्वादिबोधकत्वमादायैव तदर्थप्रकाशकत्वात्, स्फुरन्तीं वाणीमित्यादिवाक्यस्यैव तत्र विग्रहत्वसम्भवाच्च, विग्रह एव समासलभ्यार्थस्य बोधकत्वं तन्त्रं, न तु समासे विग्रहार्थस्य, विग्रहलभ्ययोर्लिङ्गसंख्ययोर्व्यञ्जकवैधुर्य्येण प्रायशः समासाबोध्यत्वात्। अत एव यत्र समासे तयोर्व्यञ्जकसद्भावस्तत्रावगमोऽपि, यथा 'जरतीचित्रगुर्जनः, प्रियातिसा पुरुष' इत्यादौ स्त्रीत्वस्य स्त्री-

---

कृष्णकान्तीटीका।

काङ्क्षत्वेन विग्रहत्वासम्भवात् समाधानान्तरमाह–स्फुरन्तीमित्यादिना। आदिना चलन्तमेकं चैत्रं वा इत्यादेः सङ्ग्रहः। ननु तादृशवाक्यस्य विग्रहत्वमेव न सम्भवति व्याससमासयोस्तुल्यार्थकत्वनियमेन तल्लभ्यकर्मत्वादेः समासेनाबोधनादित्यत आह विग्रह एवेति। तन्त्रमिति परेणान्वयः, विग्रहत्वनियतमिति तदर्थः। विग्रहार्थस्येति। बोधकत्वं समासे तन्त्रं, समासत्वं तन्नियतमिति समुदितार्थः। समासत्वस्य विग्रहार्थबोधकत्वानियतत्वे व्यभिचारं हेतुमाह–विग्रहलभ्ययोरिति। व्यञ्जकवैधुर्य्येण–बोधकविरहेण। प्रायश इत्यस्य स्वयमेव फलमाह—अत एवेति। लिङ्गसंख्ययोः समासबोध्यत्वस्यासार्वत्रिकत्वादेवेत्यर्थः। तयोः–लिङ्गसंख्ययोः। तत्र–समासे, तयोरित्यनुषज्यते। कुत्र इत्याकाङ्क्षायामाह–यथेति। जरती चित्रा गौर्यस्येत्यर्थः, प्रियास्ति-

रामभद्रीटीका।

शाक्यतः समासलभ्यार्थस्याप्रतीतिरिति वाच्यम्। स्वमते 'राजपुरुष' इत्यादौ राजसम्बन्ध एव लक्षणाया व्याससमासयोस्तुल्यार्थकत्वात्, 'नामार्थयोरि'त्यादिनियमे च निपातातिरिक्तत्वमिव समासातिरिक्तत्वं विशेषणीयमिति, अत एव 'राजपुरुष इत्यत्र राजसम्बन्धे लक्षणे'ति शब्दमणिरिति भावः। ननूक्तक्रमेणानित्यसमासत्वे 'स्फुरद्वाणी'त्यादेस्तथात्वं न स्यात् शतृजर्थविधेयकप्रथमान्तोपस्थाप्यार्थविशेष्यकशाब्दस्य प्राचामनङ्गीकारात्, 'वर्तमाने शतृशानजावप्रथमे'त्याद्यनुशासनात् 'स्फुरन्ती वाणी'त्यादेर्विग्रहत्वासम्भवादत आह—स्फुरदिति। तदर्थप्रकाशकत्वात्—समासलभ्यार्थप्रकाशकत्वात्। ननु 'चलदेक' इत्यादौ अव्याप्तिः, चलन् एक इत्यादेर्विग्रहत्वासम्भवाच्चलदभिन्न एकत्वविशिष्टे एकत्वस्य बोधने तादृशस्य निराकाङ्क्षत्वादत आह—स्फुरन्तीमिति। आदिना 'चलन्तमेकमि'त्यादेः परिग्रहः। ननु यत्समासलभ्यार्थस्य विग्रहवाक्यात् प्रतीतिर्जायते स एवानित्यसमासो न तु विग्रहलभ्यार्थस्य बोधकत्वं यत्र समास इत्यत्र किं विनिगमकमत आह—विग्रह एवेति। तन्त्रमिति। अनित्यसमासत्वे तन्त्रमित्यर्थः। विग्रहार्थस्येति। बोधकत्वं तन्त्रमिति प्राक्तनेनान्वयः। व्यञ्जकवैधुर्यं–बोधकत्वविरहः। अबोध्यत्वादिति। तथाचेदमेव विनिगमकमिति भावः। प्रायश इत्यस्य व्यावृत्तिमाह—अत एवेति। तयोः–लिङ्गसंख्ययोः। स्त्रीत्वस्येत्यवगम इति पूर्वोक्तेनान्वयः। तदभि-

प्रत्यय-तिस्रादेशयोस्तदभिव्यञ्जकयोः सत्त्वात्, यथा वा 'अक्षपरि, शलाकापरि, प्रिययुवया, हस्त्यश्वमि'त्यादावेकत्वादेः, अक्षशलाकयोरेकत्व एवाव्ययीभावस्य, युष्मदस्मदोर्द्वित्व एव युवावाद्यादेशस्य, सेनाङ्गानां बहुत्व एव समाहारद्वन्द्वस्य विधानात् । तदुक्तमभियुक्तैः—

सङ्ख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत् ।

---

कृष्णकान्तीटीका ।

स्रो यस्येत्यर्थे जरतीचित्रगुः, प्रियत्रिसेति समासः । अत्र न पुंवद्भावः, उत्तरपदे एव तद्विधानात्, स्त्रीत्वस्यावगम इति पूर्वेणान्वयः । नन्वत्र कथं व्यञ्जकसद्भाव इत्यत आह—स्त्रीप्रत्ययेति । तदभिव्यञ्जकयोः-लिङ्गव्यञ्जकयोः। संख्याव्यंजकसद्भावस्थलमाह-यथा वेति । एकस्याः शलाकाया द्यूतेऽन्यथापातनमित्यर्थे 'शलाकापरि' प्रियौ युवां यस्यास्तया इत्यर्थे 'प्रिययुवया' हस्तिनामश्वानां समाहार इत्यर्थे 'हस्त्यश्वमि'ति । एकत्वादेरित्यादिपदात द्वित्वबहुत्वयोः परिग्रहः। अक्षशलाकयोरेकत्व एवेति। "अक्षशलाकयोरेकत्व(१)" इत्यानुशासनेन एकत्वे वर्त्तमानयोरक्षशलाकयोर्द्यूते अन्यथा पातनमित्यर्थे परिणा सहाव्ययीभावस्य व्युत्पन्नत्वादिति भावः । अव्ययीभावस्येति । विधानादिति परेणान्वयः । एवमग्रेऽपि। द्वित्व एवेति। "युवावौ द्विवाचिष्वि(२)"त्यनुशासनादिति भावः। बहुत्व एवेति। "प्राणितुर्यकाङ्गानां सेनाङ्गानां च बहुत्वे(३)" इत्यनुशासनादितिभावः। अत्र वैयाकरणसंवादमाह-तदुक्तमिति । अव्यक्ता-समासजन्यशाब्दबोधाविषयः । प्रातरादिवदिति।यथा प्रातरादिगतसंख्या प्रातरादिशब्दजन्यशाब्दबोधाविषयस्तथेत्यर्थः । यत्र समासे सङ्ख्यादेर्व्यञ्जकं किञ्चिदास्ते तत्र संख्या

रामभद्रीटीका ।

व्यञ्जकयोः-स्त्रीत्वाभिव्यञ्जकयोः । सत्त्वादिति । 'प्रियास्तिस्रो यस्ये'ति विग्रहे प्रियतिसेति, 'त्रिचतुरोस्त्रियामि'त्यनुशासनात् तिस्रादेशस्यापि स्त्रीत्वाभिव्यञ्जकत्वादिति भावः। संख्याव्यञ्जकत्वं दर्शयति—यथावेति । एकया शलकया द्यूतेऽन्यथापातनमित्यर्थे 'शलाकापरि' प्रियौ युवां यस्या इति विग्रहे 'प्रिययुवा' हस्तीनामश्वानां च समाहार इति विग्रहे 'हस्त्यश्वमि'ति । एकत्वादेरिति, अवगम इति प्राक्तनेनान्वयः । एकत्व एवेति । अक्षशलाकयोरेकत्वे इत्यनुशासन एवेत्यर्थः । तथा च एकत्वे वर्त्तमानयोः अक्षशलाकयोर्द्यूतेऽन्यथापातने परिणा सहाव्ययीभावस्य व्युत्पन्नत्वादिति भावः । युवाद्यादेशस्येति । 'युवावौ द्विवाचिष्वि'त्यनुशासनादिति भावः । अत्र वैयाकरणसंवादमाह तदुक्तमिति । यत्र कुत्रत्याह शलाकापरीति । उसर्थैकत्वमिति । उसावयविना

---

(१) अक्षशलाकासंख्याः परिणा (२।१।१०) इति पा० सूत्रम् ।

(२) युवावौ द्विवचने इति (७।२।८८) पा० सूत्रम् ।

(३) द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् इति (२।४।२) पा० सूत्रम् ।

यत्र तु व्यञ्जकं किञ्चित्तत्र सङ्ख्या प्रकाशते ॥

शलाकापरि हस्त्यश्वं पूर्वकायोऽर्द्धपिप्पलीति ।

पूर्वादेरर्द्धस्य च ङसर्थैकत्वमन्तर्भाव्यैवावयविना तत्पुरुषस्य व्युत्पन्नत्वात् । 'सरसिजा'दौ 'कण्ठेकालादौ' चालुक्समासे सुपः संख्यावगमेऽपि न क्षतिः । तत्र व्यञ्जकसुपः सत्त्वेऽपि संख्यापि न बुध्यत इति तु समासशक्तिवादिनः पातञ्जलाः ॥ ३३ ॥

समासेषु कर्मधारयं लक्षयति--

---

कृष्णकान्तीटीका।

प्रकाशते, बोधविषयो भवतीत्यर्थः। कुत्रेत्याकाङ्क्षायामाह–शलाकापरि हस्त्यश्वमिति।शलाकादिगतैकत्व एवाव्ययीभावस्य, हस्त्यश्वगतबहुत्व एव द्वन्द्वस्य, कायादिगतैकत्व एवार्द्धशब्दस्य, नपुंसकत्व एव च तत्पुरुषस्य व्युत्पन्नत्वादिति भावः।ननु पूर्वकाय इत्यादौ कथमेकत्वस्य, अर्द्धपिप्पलीत्यादौ पिप्पल्येकत्वस्य, अर्द्धादौ नपुंसकत्वस्य च प्रतीतिरित्यत आह—पूर्वादेरिति । पूर्वादिवाचकशब्दादेस्तत्पुरुषस्य व्युत्पन्नत्वादिति परेणान्वयः । अर्द्धस्य नपुंसकलिङ्गार्द्धशब्दस्य चेत्यर्थः । ङसर्थैकत्वं–कायादिशब्दोत्तरङस्विभक्त्यर्थमेकत्वम् , अवयविना–अवयववाचकेन सहेत्यर्थः। व्युत्पन्नत्वात्–उक्तानुशासनादिति भावः । ननु कण्ठेकाल–सरसिजाद्यलुक्समासे नित्यसमासत्वं न स्यात्, कण्ठकालसरोजेत्यादिसमासबोध्यार्थबोधे विभक्तिघटितोक्तानुपूर्वीप्रकारकज्ञानस्यापि हेतुत्वादित्यतस्तत्रेष्टापत्तिमाह—सरसिजादाविति । केचित्तु–जरतीचित्रगुरित्यत्र स्त्रीत्वस्येव, कण्ठेकाल इत्यादावपि एकत्वव्यञ्जकैकवचनस्य सत्त्वात्तस्यापि नित्यसमासत्वं न स्यादित्यतस्तत्रेष्टापत्तिमाह–सरसिजादाविति–इत्याहुः । तन्मन्दं, नित्यसमासलक्षणस्य संख्यादिव्यञ्जकसत्त्वाघटितत्वेन तादृशावतारणिकाया असम्भवात् । तादृशवाक्यस्य नित्यसमासत्ववादिनां मतमाह—तत्रेति । सरसिजादावित्यर्थः । न बुध्यते इति । तेषां मते यौगिकत्वाभावात् सरसिजादेरिति भावः ॥ ३३ ॥

कर्मधारयलक्षणस्यावतरणिकामाह—समासेष्विति, निर्धारणे सप्तमी । कर्म-

रामभद्रीटीका ।

सह पूर्वादेर्नपुंसकस्यार्द्धस्य च तत्पुरुषाद्यनुशासनादिति भावः। ननु 'जरतीचित्रगुरि'त्यत्र स्त्रीत्वस्येव 'कण्ठेकाल' इत्यादावपि एकत्वव्यञ्जकैकवचनस्य सत्त्वात् तस्यापि अनित्यसमासत्वं स्यादतस्तत्रेष्टापत्तिमाह सरसिजादाविति । तादृशवाक्यस्य नित्यसमासत्ववादिनां मत माह तत्रेति ॥ ३३ ॥

(१)क्रमिकं यन्नामयुगमेकार्थेऽन्यार्थबोधकम् ।
तादात्म्येन भवेदेष समासः कर्मधारयः ॥३४॥

क्रमिकं यन्नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्मिणि तादात्म्येनापरनाम्नोऽर्थस्यान्वयबोधं प्रति समर्थं तादृशं नामद्वयं कर्मधारयः । 'नीलोत्पलमि'त्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः । तथा 'पुरुषसिंह' इत्यादावपि पुरुषादावुत्तरपदलक्ष्यस्य सिंहादिसदृशस्य, पुरुषः सिंहः इवेत्यादिविग्रहे "प्रायेणोपमेयस्योपमानैरिति(२)" कर्मधारया-

कृष्णकान्तोटीका ।

धारयमिति । क्रमप्राप्तमित्यादिः । व्याचष्टे—क्रमिकमिति । यन्नामद्वयमिति । तथा चाव्यवहितोत्तरत्वसम्बन्धेन यन्नामविशिष्टयन्नामत्वं तादात्म्यसम्बन्धावच्छिन्नतन्नामार्थप्रकारतानिरूपिततन्नामार्थविशेष्यताशालियादृशशाब्दबोधं प्रति स्वरूपयोग्यतावच्छेदकं (तन्नामत्वं) निरुक्तसम्बन्धेन तादृशबोधे कर्मधारयसमासत्वमिति निष्कर्षः । लक्ष्ये लक्षणं सङ्गमयति नीलोत्पलमित्यादाविति । अन्वय इति । नीलोत्पलभागस्य तादृशबोधे कर्मधारयसमासत्वमिति शेषः । एवमग्रेऽपि । ननु 'पुरुषसिंह'इत्यादौ पुरुषे तादात्म्येन सिंहस्य बाधितत्वेनान्वयासम्भवादव्याप्तिः, तत्पुरुषादावतिव्याप्तिवारणाय लक्षणे यथार्थबोधस्यैव निवेशनीयत्वादित्यत आह—तथेति । पुरुषपदलक्षितस्य पुंस्त्वविशिष्टनरसदृशस्य सिंहादौ तादात्म्येनान्वयस्थले 'पुरुषसिंह' इत्यस्य, पुरुषादौ सिंहपदलक्षितस्य सिंहसदृशस्यान्वयबोधस्थले 'सिंहपुरुष' इत्यस्य च न समासत्वम् उपमेयपूर्वकोपमानपदस्य कर्मधारयानुशासनात् , तत्सूचनाय पूर्वपदलक्षितस्येति विहायोत्तरपदलक्षितस्येत्युक्तम् । यत्रोत्तरपदस्यैवोपमानत्वं तत्रैव तथा समास इत्यत्रानुशासनरूपप्रमाणमाह पुरुषः सिंह इवेति । इत्यादिविग्रहे इति सावधारणम् , तथा

रामभद्रोटीका ।

एकार्थेऽन्यार्थबोधकमित्यस्य वृत्तिस्तयोरित्यादिः । लक्ष्ये लक्षणं योजयति नीलोत्पलमितीति । ननु 'पुरुषसिंह' इत्यादौ तादात्म्येन सिंहादेरनन्वयादव्याप्तिरत आह पुरुषादाविति । सिंहादिपदे तत्सदृशे शक्त्यभावादाह उत्तरपदलक्ष्यस्येति । सिंहादिसदृशस्येति । तादात्म्येन पुरुषपदार्थेऽन्वय इति शेषः । ननु इदमव्यु-

(१) तादात्म्यसम्बन्धेन पूर्वनामार्थप्रकारकोत्तरनामार्थविशेष्यकशाब्दबोधजनकं क्रमिकनामद्वयं कर्मधारयसमास इति कारिकार्थः । समासप्रयुक्तलक्षणाशून्यतुल्याधिकरणकनामद्वयघटितसमासत्वं कर्मधारयत्वम्, 'चित्रगू राजपुरुष' इत्यादौ समासप्रयुक्तलक्षणासत्त्वात्, 'नीलघटयोरभेद' इत्यादौ च तुल्याधिकरणपदद्वयाभावाच्च नातिव्याप्तिरिति जयरामपंचाननभट्टाचार्याः । विग्रहे समासे च ययोः पदयोस्तुल्याधिकरणत्वं तदुभयपदघटितसमासत्वम्, विग्रहसमासयोरन्यतरत्र ययोस्तुल्याधिकरणत्वं तदुभयभिन्नपदद्वयघटितसमासत्वं वा कर्मधारयत्वमित्यन्ये ।

(२) अत्र 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ( २।१।५६ ) इति पाणिनीयं सूत्रम् ।

नुशासनात् । कुम्भस्य समीपमित्याद्यर्थक'स्तूपकुम्भा'दिर्न तादात्म्ये-नान्वयबोधकः, 'प्रबलमपद्रव्यमि'त्यादेः सङ्ख्याय नामपदस्य धातु-भिन्नोपलक्षकत्वात्, सार्थकसामान्यपरत्वेऽपि क्षत्यभावाच्च । 'नील-मुत्पलमित्या'दिकं(१) तु समानविभक्तिकं नामद्वयं स्वार्थयोरभेदान्वयं

कृष्णकान्तीटीका ।

च पुरुष इव सिंह इति विग्रहे, सिंह इव पुरुष इति विग्रहे च न तादृशसमास इति भावः । न च "प्रायेणोपमेयस्योपमानैः"रित्यनुशासने उपमेयस्य पूर्वत्वं कुत इति वाच्यम् । उपमेयस्येति षष्ठीनिर्देशादेव तस्य पूर्वपदत्वप्राप्तेः, "षष्ठ्याः पूर्वस्यैव" इति परिशिष्टानुशासनात् । तादात्म्येनेत्यस्य व्यावृत्तिमाह कुम्भस्येति । उपश-ब्दस्य सामीप्यलक्षणास्थले तादृशकर्मधारय इष्ट एवेत्यत आह इत्याद्यर्थक इति । न तादात्म्येनान्वयबोधक इति । किन्तु निरूपितत्वेनेति शेषः । ननु स्वमते प्रादेर्नामत्वाभावात् निरुक्ताव्ययीभावेऽतिव्याप्तिरेव नास्ति कुतस्तादात्म्येनेत्यस्य व्यावृत्तिदानमित्यत आह प्रबलमित्यादि । प्रकृष्टं बलम्, अपकृष्टं द्रव्यम् इत्याद्यर्थे प्रबलादेः कर्मधारयत्वरक्षार्थं लक्षणस्थनामपदस्य धातुभिन्नपरत्वस्यावश्यक-त्वादिति भावः । ननु नामपदस्य धातुभिन्नपरत्वे "स्तोकनम्रा स्तनाभ्या"मित्यादौ कर्मधारयो न स्यात्, तत्र नामधात्वर्थ एव स्तोकस्याभेदान्वयादित्यत आह—सा-र्थकसामान्येति । क्षत्यभावाच्चेति । 'सुपचतो'त्यादौ शोभनादेः पाकादावभेदा-न्वयेऽपि तस्य समाससामान्यलक्षणानाक्रान्तत्वेनातिव्याप्त्यभावात्, विशेषलक्षणे सामान्यलक्षणाश्रयत्वे सतीति विशेषणस्यावश्यकत्वादिति । अव्यवहितोत्तरत्वसम्ब-न्धेन वैशिष्ट्यरूपक्रमिकत्वनिवेशस्य व्यावृत्तिमाह—नीलमुत्पलमित्यादाविति । समानविभक्तिकमिति अभेदान्वयबोधसम्पादकम्, न क्रमिकं—नाव्यवहितोत्तरत्व-सम्बन्धेन नीलपदवदुत्पलपदम्, अव्यवधानांशनिवेशेऽप्येतद्वारणासम्भव इत्यत आह—

रामभद्रीटीका ।

स्वमत आह पुरुष इत्यादि । तादात्म्येनेत्यस्य व्यावृत्तिमाह कुम्भस्येति । कुम्भसंयोगिसंयुक्तत्वादेस्तत्राबोधनादिति भावः । ननु कर्मधारयनिरुक्तेर्नामघटितत्वे प्रब-लमित्यादौ कर्मधारयसमासो न स्यात् स्वमते प्रादेर्नामत्वविरहात् अत आह प्रबल-मिति । नन्वेवं नामपदस्य धातुभिन्नार्थकत्वे 'स्तोकनम्रे'त्यादौ समासो न स्यात् नाम-घटकधात्वर्थे(२) एव स्तोकादेस्तत्र तादात्म्येनान्वयादत आह सार्थकसामान्येति । प्रादयस्तूपसर्गा वाचका न द्योतका इति मतेनेदम् । क्रमिकपदस्य व्यावृत्तिमाह नीलमि-

(१) मित्यादाविति कृष्णकान्तसंमतोऽत्र पाठो द्रष्टव्यः ।
(२) नामधात्वर्थे इति २ पु० पाठः ।

बोधयदपि न क्रामिकं, विभक्त्या व्यवधानात् । यदि च—तादात्म्येन नीला-दिनामार्थस्यान्वयबुद्धौ नीलादिनामोत्तरनामोपस्थाप्यत्वं तन्त्रमतो न तत्रा-भेदसम्बन्धेन नीलादेरन्वयः, परन्तु विशेषणविभक्त्युपस्थापिते तादात्म्य एवाधेयत्वेन, 'नीलघटपटावि'त्यादौ च नीलपदाव्यवहितेन घटपटेत्येवं द्व-न्द्वात्मकनाम्नैवोपस्थापिते पटे नीलस्य तादात्म्येनान्वयान्न व्यभिचारः,

---

कृष्णकान्तीटीका ।

विभक्त्या व्यवधानादिति । नन्वत्र तादात्म्यस्य विशेषणविभक्त्यर्थतया तस्य प्रकारतया भानात् अतिव्याप्तिविरहेण क्रमिकत्वमनर्थकमित्यत्रेष्टापत्तिमाह—यदि चेत्यादिना । ननु विशेषणविभक्तेरभेदार्थकत्वं न युक्तिसहं, तथा च तत्राभेदेनैवान्वयो भवितुमर्हति, 'यद्वा विशेषणविभक्तिरभेदार्थिका' इत्यादिग्रन्थस्तु विभक्तेरभेदार्थकत्वं सम्पादयन्नपि तस्य प्रकारतया भानं न सम्पादयति । न च प्रत्ययस्य प्रकृत्यर्थान्वित-स्वार्थबोधकत्वव्युत्पत्तेः प्रकारतालाभ इति वाच्यम् । तादृशव्युत्पत्तेः संसर्गतागर्भत्वे-ऽपि क्षत्यभावादित्यतो नामार्थस्याभेदान्वयप्रयोजकत्वमाह—नीलादिनामार्थस्येति । तन्त्रं—प्रयोजकम्, अवश्यवक्तव्यमिति शेषः, अन्यथा 'द्रव्ये सरसिजमि'त्यादौ द्रव्यसर-सोरभेदान्वयबोधापत्तेः, तत्प्रयोजकस्य समानविभक्तिकत्वस्य सत्त्वादिति भावः । अत इति । यतः नामार्थप्रकारकाभेदान्वयबोधे निरुक्तोपस्थाप्यत्वं तन्त्रम्, अत इत्यर्थः । तत्र—नीलमुत्पलमित्यादिविग्रहस्थले, उत्पलपदार्थे इत्यपि कश्चित् । ननु तत्र कीदृग्बोध इत्याकाङ्क्षायामाह—परन्त्विति । आधेयत्वेनेति । नीला-देरन्वय इति पूर्वेणान्वयः, तथा च नीलतादात्म्यवदुत्पलमित्याकारकस्तत्र बोध इति भावः । ननु नामार्थप्रकारकाभेदान्वयबोधे निरुक्तोपस्थाप्यत्वं न तन्त्रं, नीलघटपटावित्यादावभेदसम्बन्धेन नीलप्रकारकबोधस्य पटेऽपि सत्त्वेन तत्र नील-पदोत्तरनामोपस्थाप्यत्वाभावाद्व्यभिचारापत्तेः, तत्राव्यवधानांशानिवेशे नीलमुत्पल-मित्यादावपि तादृशबोधो भवत्येवेत्यत आह—नीलघटेत्यादि । ननु तथापि 'स्तोकं पचति, धान्येन धनं, प्रकृत्या पटुरि'त्यादौ स्तोकधान्यप्रकृत्यादीनां पाक-धन-पटुत्वादावभेदसंसर्गेणान्वयेन तत्र निरुक्तोपस्थाप्यत्वाभावाद् व्यभिचार

रामभद्रीटीका ।

त्यादिना । क्रामिकपदं न देयमेवेत्याशयेनाह यदीति । तन्त्रमिति । लाघवान्न तु समानविभक्तिकनामोत्तरनामोपस्थाप्यत्वं तन्त्रं गौरवादिति भावः । तत्र—नीलमुत्पल-मित्यत्र । आधेयत्वेनेति । अन्वय इति पूर्वेणान्वयः । नीलतादात्म्यवत् उत्पलमित्ये-व तत्रान्वयात्, अत एवाकाङ्क्षाग्रन्थे 'यद्वा विशेषणविभक्तिरभेदार्थिके'त्युक्तमिति भावः । ननु 'नीलघटपटावि'त्यत्र घटपदव्यवहिते पटे नीलादेस्तादात्म्येनान्वयादुक्तव्याप्तौ व्यभि-चार इत्यत आह नीलघटपटाविति । ननु 'स्तोकं पचती'त्यादौ स्तोकादेः पाकादौ

'स्तोकं पचति, धान्येन धनं, प्रकृत्या पटुरि'त्यादावपि स्तोकादेर्न धात्वाद्यर्थे तादात्म्येनान्वयः, किन्तु द्वितीयाद्यर्थे तादात्म्य एवाधेयत्वेन—इत्यादिकं विभाव्यते, तदा क्रमिकत्वमनुपादेयमेव । 'राजपुरुष' इत्यादिकस्तु तत्पुरुषो न पुरुषे पूर्वपदलक्षितराजसम्बन्धिनस्तादात्म्येनान्वयबोधकः समासविग्रहयोस्तुल्यार्थकत्वहान्यापत्तेः, परन्तु राजसम्बन्धस्यैव, अत एव 'राजपुरुष इत्यादौ पूर्वपदे षष्ठ्यर्थसम्बन्धे लक्षणे'ति मणिकृदुक्तमपि सङ्गच्छते । यथा च नामार्थयोर्भेदेनान्वयेऽपि न क्षतिस्तथोपरिष्टाद्वक्ष्यते ।

---

कृष्णकान्तीटीका ।

इत्यत आह—स्तोकं पचतीत्यादि । क्रमिकत्वमनुपादेयमेवेति । इदमापाततः, विशेषणविभक्तेरभेदार्थकत्वं न युक्तिसहमित्युक्तम्, निरुक्तोपस्थाप्यत्वमपि न तादृशबोधे तन्त्रम्, अपितु सविभक्तिकनामार्थप्रकारकाभेदान्वयबोधे समानविभक्तिकवृत्तिशब्दान्यनामोपस्थाप्यत्वं तन्त्रमतो 'द्रव्ये सरसिजमि'त्यादावभेदेन नान्वयबोध इति नव्यमते क्रमिकत्वं देयमेवेति ध्येयम् । ननु 'राजपुरुष' इत्यादिवत्पुरुषेऽतिव्याप्तिः, नामार्थयोर्भेदान्वयस्याव्युत्पन्नतया राजपदस्य राजसम्बन्धिनि लक्षणाया आवश्यकत्वेन राजपदार्थस्य राजसम्बन्धिनोऽभेदान्वयबोधजनकत्वादित्यत आह—राजपुरुष इत्यादि । तुल्यार्थकत्वहान्यापत्तेरिति । अत्र तुल्यत्वं नान्यूनानतिरिक्तविषयकत्वं, विग्रहबोध्यलिङ्गसंख्यादेः प्रायेण समासाबोध्यत्वात्, किन्त्वनतिरिक्तविषयकत्वमिति नानुपपत्तिः । तदा कस्यान्वयबोध इत्याकाङ्क्षायामाह—परन्त्विति । ननु समासे षष्ठीविभक्तेरभावात् राजसम्बन्धोपस्थितिरेव दुर्घटेत्यत आह—अत एवेति । पुरुषे राजसम्बन्धान्वयबोधस्यावश्यकत्वादेवेत्यर्थः । पूर्वपद इति सप्तम्यर्थो निरूपितत्वं, तस्य लक्षणेत्यत्रान्वयः । संबन्धस्य षष्ठ्यर्थकत्वकथनात् विग्रहजन्यबोधविषयानतिरिक्तत्वं संबन्धस्य व्यञ्जितम् । सङ्गच्छत इति । तथाच सम्बन्धोपस्थितिर्न दुर्घटेति भावः । ननु नामार्थयोर्भेदान्वयस्वीकारे सिद्धान्तविरोध इत्यत आह—यथाचेति । उपरिष्टात्–तत्पुरुषलक्षणव्याख्यायाम् । वक्ष्यत

रामभद्रीटोका ।

तादात्म्येनान्वयात् व्यभिचारः, स्तोकादिपदोत्तरनामोपस्थाप्यत्वाभावादत आह स्तोकं पचतीति । आधेयत्वेनेति । स्तोकादेरन्वय इति प्राक्तनेनान्वयः । ननु 'राजपुरुष' इत्यादितत्पुरुषे लक्षणमिदमतिव्याप्तमत आह राजपुरुष इत्यादीति । तुल्यार्थकत्वम्–अन्यूनानतिरिक्तविषयकबोधजनकत्वम्, अत एव–व्याससमासयोरन्यूनानतिरिक्तविषयकबोधजनकत्वादेव । ननु नामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयबोधस्य सुदूरपराहतत्वात् कथमेवमित्यत आह यथाचेति । तथा च नामार्थयोरभेदान्यसम्ब-

किञ्चिद्विशिष्ट(१)सुबर्थानवच्छिन्नस्यैव वा तादात्म्येनान्वयबोधकत्वमुक्तनिरुक्तौ निवेश्यम् ।

न चैवमपि 'पञ्चपुल्या'दिद्विगौ 'द्विगार्ग्यं गच्छत' इत्यादिस्थलीये

कृष्णकान्तीटीका ।

इति । तथाच 'नामार्थयोरि'त्यादौ(२) निपातातिरिक्तत्वमिव तत्पुरुषातिरिक्तत्वमपि विशेषणं वक्ष्यत इत्यर्थः, अन्यथा घटो नास्तीत्यादौ प्रतियोगितासम्बन्धेनाभावे घटान्वयानुपपत्त्या तत्रापि लक्षणास्वीकारापत्तिरिति भावः । तत्पुरुषातिरिक्तत्वविशेषणासहिष्णुं प्रत्याह—किञ्चिद्विशिष्टेति । केचित्तु—तत्पुरुषातिरिक्तत्वनिवेशे गौरवादाह—किञ्चिद्विशिष्टेति—इत्याहुः । तन्मन्दम्, तत्र तन्निवेशापेक्षया लक्षणेऽनवच्छिन्नान्तनिवेशेऽतीवगौरवादिति । सुबर्थेति । तत्पुरुषविग्रहघटकसुबर्थेति यावत् । तत्रापि सुबर्थत्वं न निविष्टं प्रयोजनाभावादिति तु न वाच्यम्, तत्तदर्थानवच्छिन्नत्वनिवेशे राजसम्बन्धिपुरुष इति कर्मधारयेऽव्याप्तेः । न च सुबर्थत्वं वस्तुगत्या तत्तत्सुप्प्रतिपाद्यत्वम्, अन्यथा निरुक्ततत्पुरुषजन्यबोधे विग्रहस्थसुब्जन्यसम्बन्धोपस्थितेरसहकारित्वेन 'तथोपस्थितिसहकारेणे'त्यस्य वक्तुमशक्यत्वेनातिव्याप्तिवारणासम्भवात्, तथाचोक्ताव्याप्तिस्तदवस्थैवेति वाच्यम् । तत्तत्पुरुषान्यत्वनिवेश एव तात्पर्यात् । ऋजवस्तु—अर्थानवच्छिन्नत्वनिवेशोऽसम्भवः, नीलत्वादेरप्यर्थत्वात्, प्रत्ययार्थानवच्छिन्नत्वनिवेशे दण्डिपुरुष इति कर्मधारयेऽव्याप्तिः, राजसम्बन्धिपुरुष इत्यादावव्याप्तिवारणाय किञ्चिद्विशिष्टेति सुब्विशेषणं' तत्पुरुषविग्रहस्थ इति तदर्थं—इत्याहुः । तन्मन्दम्, राजसम्बन्धिपुरुष इति कर्मधारयविषयराजसम्बन्धस्यैव तत्पुरुषविग्रहसुपा प्रतिपादनेनोक्ताव्याप्तिवारणासम्भवादिति ध्येयम् ।

पञ्चानां पुलानां समाहार इत्यर्थे 'पञ्चपुली' द्विगुः, द्वौ गार्ग्यौ इत्यर्थे 'द्विगार्ग्यं'

रामभद्रीटीका ।

न्धेनान्वये निराकाङ्क्षत्वमित्यत्र निपातातिरिक्तत्वमिव तत्पुरुषातिरिक्तत्वमपि विशेषणमग्रे वक्ष्यते, अन्यथा घटो नास्तीत्यादौ घटस्य प्रतियोगितासंसर्गेणाभावेऽन्वयानुपपत्तिरिति भावः । ननूक्तव्याप्तौ समासातिरिक्तत्वविशेषणापेक्षया 'राजपुरुष' इत्यत्र पूर्वपदे राजसम्बन्धिनि लक्षणाऽस्तु तथा चातिव्याप्तिस्तदवस्थैवेति तुल्यविषयताशालिबोधजनकत्वादेव व्याससमासयोस्तुल्यार्थकत्वसम्भवादित्याशयेनाह किञ्चिन्निष्ठेति । उक्तनिरुक्तौ—कर्मधारयनिरुक्तौ ।

स्वमते द्विगोः कर्मधारत्वेऽपि न क्षतिरित्याशयेनाह द्विगार्ग्यमिति । तद-

(१) अत्र 'किञ्चिन्निष्ठे'ति रामभद्रसंमतः पाठो बोध्यः ।
(२) निपातातिरिक्तनामार्थयोर्भेदान्वयबोधस्याव्युत्पन्नत्वादित्यादिनियमे इत्यर्थः ।

द्वितयाद्यभिन्नगार्ग्यादिबोधकाव्ययीभावे चातिव्याप्तिः, तदन्यत्वेनापि विशेषणीयत्वात्। अत्र च 'मानुषब्राह्मणो ब्राह्मणमानुष' इत्याद्यप्रयोगाद्विशेषणविशेष्ययोर्यत्र मिथस्तादात्म्येन व्यभिचारस्तत्रैव कर्मधारयः साधुः। प्रमेयधूम इत्यादौ तु 'नरस्य शरीरं, राहोः शिर' इत्यादाविव तादात्म्यसम्बन्धार्थकषष्ठ्या तत्पुरुष एवेति (१)वृद्धाः।

'चन्दनतरुर्विन्ध्यगिरिर्वसन्तसमय' इत्यादिप्रयोगस्य प्रामाणिकत्वात् विशेष्यस्यैव विशेषणव्यभिचारित्वं (अत्र) कर्मधारये तन्त्रं, न तु विशेषणस्यापि

---

कृष्णकान्तीटीका।

मित्यव्ययीभावः। तदन्यत्वं–ताभ्यामन्यत्वम्, तत्तदव्ययीभावद्विगुभिन्नत्वमिति यावत्। विशेषणीयत्वादिति। निरुक्तलक्षणस्येत्यादिः। नन्वेवं 'ब्राह्मणमानुषः मानुषब्राह्मण' इत्यादिकर्मधारयः कथं न स्यात् इत्याकाङ्क्षायां प्राचीनसमाधानमाह–अत्र चेति। इति वृद्धा इति परेणान्वयः, वदन्तीति शेषः। साधुरिति। तथा च लक्षणे स्वव्यभिचार्यर्थे तद्व्यभिचारिणः स्वस्यान्वयबोधकत्वं निवेशनीयमिति भावः। ननु 'प्रमेयधूम' इत्यत्राव्याप्तिः, प्रमेयभेदाप्रसिद्ध्या तद्व्यभिचाराप्रसिद्धेरित्यत आह–प्रमेयधूम इति। तत्पुरुष एवेति। तथाचालक्ष्यमेव तत्, कुतस्तत्राव्याप्तिरिति भावः।

नव्यमतमाह–चन्दनतरुरित्यादि। प्रामाणिकत्वात्–साधुत्वात्। विशेष्यस्यैवेति। षष्ठ्यर्थो निष्ठत्वम्, अन्वयश्चास्य व्यभिचारित्वमित्यनेन। (अत्रेति

रामभद्रीटीका।

न्यत्वेनेति। द्विगोरव्ययीभावस्य चान्यत्वेनेत्यर्थः। स्थलविशेषान्तर्भावेण कर्मधारयस्यासाधुता प्राचां संमता अत स्तथैवाह अत्रेत्यादिना। नन्वेवं 'प्रमेयधूम' इत्यादौ कर्मधारयो न स्यात् विशेषणविशेष्ययोर्मिथो व्यभिचाराभावात् अतस्तत्रेष्टापत्तिमाह प्रमेयधूम इति। आदिना प्रमेयवह्निरित्याद्युपग्रहः। ननु नरत्वजातेरात्मवृत्तित्वमते तत्रत्यषष्ठ्यास्तादात्म्यसम्बन्धार्थकत्वं बाधितमत आह राहोरिति। मस्तकविशेषस्यैव राहुपदार्थत्वादिति भावः।(२)

इति महावृद्धा इत्यनेनास्वरसं दर्शयन्नव्यमतमाह चन्दनतरुरित्यादि। तत्र विशेष्यविशेषणयोः परस्परं व्यभिचारादिति भावः। तद्व्यभिचारित्वं–विशेष्यव्य-

---

(१) 'महावृद्धा' इत्यत्र रामभद्रसंमतः पाठः।

(२) अत्र 'इति महामहोपाध्यायरामभद्रसिद्धान्तवागीशविरचिता शब्दशक्तिप्रकाशिका सुबोधिनी समाप्ता। गोप्यः किमाचरतु पङ्कुशलस्मरे शूद्रादासो दशधरसुधामपि गोपिकानां सुभक्तेस्वयं वदवशिष्टहृदसां दर्शयन्नव्ये'ति अधिकः सर्वथाऽशुद्धः लेखकप्रमादेन मध्य एव लिखितः २ पुस्तके पाठो वर्तते।

तद्व्यभिचारित्वम् । 'पुरुषोत्तम' इत्यत्र चोत्तमत्वं न नित्यज्ञानादिमत्त्वम्, किन्तु भ्रमविधुरत्वम्, अत एव तत्र पुरुषस्येव पुरुषेऽपि तस्य व्यभिचारसत्त्वात् 'उत्तमपुरुष' इत्यपि कर्मधारयः साधुरिति तु नव्याः ।

तदाद्युत्तरपदकः कर्मधारयः प्रायशो नेष्यते, 'नीलतदस्ती'त्यादितो जात्वपि नीलोत्पलादेरस्तित्वाद्यप्रतीतेः ।

---

कृष्णकान्तीटीका ।

सप्तम्यर्थस्तादात्म्यं कर्मधारयान्वयि । ) न चैवं 'ब्राह्मणमानुष' इति प्रयोगः कर्मधारयत्वेन साधुः स्यादिति वाच्यम् । इष्टापत्तेः, प्रत्युत 'मानुषब्राह्मण' इत्यादिकमपि तत्पुरुषत्वेन प्रामाणिकमेव । प्राचीनमते 'चन्दनतरु'रित्यादिकं तथा प्रामाणिकमेवेति ध्येयम् । ननु विशेष्यस्य विशेषणव्यभिचारित्ववत् क्वचित् विशेषणस्यापि विशेष्यव्यभिचारित्वं तन्त्रं वक्तव्यम्, अन्यथा पुरुषोत्तम इति कर्मधारयानुपपत्तिः । तथा च पुरुषत्वं न पुंस्त्वरूपम्, उत्तमपदार्थे नित्यज्ञानादिमति तदाश्रये भेदबाधात् कर्मधारयो नेष्यत एव सर्वैरित्यव्यासिद्धान्तासंगतेः, नाप्यात्मत्वरूपं, सुखसमवायिकारणतावच्छेदकतया सिद्धाया आत्मत्वजातेः परमात्मन्यसत्त्वादुक्तदोषप्रसक्तत्वात्, नापि परमात्मत्वरूपम्, तद्धि नित्यज्ञानादिमत्त्वं, निरुपाधिपरदुःखप्रहरणत्वं वा ? आद्ये उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्येन निराकाङ्क्षत्वप्रसङ्गात्, द्वितीये विशेषणस्य विशेष्यव्यभिचारित्वस्य तन्त्रत्ववादिमते तस्य तथात्वानुपपत्तेः, किन्तु, स्त्रीनपुंसकत्वशून्यत्वं ध्वंसरहितत्वं वा तत्, उत्तमभिन्नस्य पुरुषस्य सम्भवेऽपि पुरुषभिन्नस्योत्तमस्यासम्भवात् इत्यत आह—पुरुषोत्तम इति । अत एव—भ्रमशून्यत्वस्योत्तमपदार्थत्वादेव । पुरुषस्येव पुरुषनिरूपितस्येव वा, पुरुषेऽपि पुरुषनिष्ठस्य तस्योत्तमनिरूपितस्योत्तमनिष्ठस्य च व्यभिचारस्य सत्त्वादित्यर्थः । अपिना पुरुषोत्तमपरिग्रहः । अत एव दुर्गसिंहेनापि कर्मधारयोदाहरणमध्ये "उत्तमपुरुषः पुरुषोत्तम इति विशेषणं परं स्या"दित्युक्तम् ।

'तद्धनं तद्घट' इत्यादौ तदादिपूर्वपदकः कर्मधारयः सर्वैरिष्यते इत्यत उक्तं—तदाद्युत्तरपदक इति । नेष्यते इति, बुधैरिति शेषः । कुत इत्याकाङ्क्षायामाह—नीलतदस्तीत्यादित इति । जात्वपि—कदाचिदपि ।

रामभद्रीटीका ।

भिचारित्वम् । नन्वेवं 'पुरुषोत्तम' इत्यत्र विशेष्ये विशेषणव्यभिचाराभावात् कर्मधारयः कथमित्याह पुरुषोत्तम इति । तथा च भ्रमविधुरे घटादौ पुरुषत्वस्य व्यभिचारसत्त्वात् तादृशकर्मधारयो नाव्युत्पन्न इति भावः । अत एवेति । यत एव भ्रमविधुरस्तत्र उत्तमपदस्यार्थोऽत एवेत्यर्थः । तत्र—भ्रमविधुरत्वे । तस्य—भ्रमविधुरत्वस्य । ब्राह्मणमानुष इत्यादिकस्तु कर्मधारय इष्यत एवेति हृदयम् ।

पक्वयद्भोजनं रम्यमामतद्भक्षनं वृथा ।
नीलयद्रस आस्वाद्यः कटुतद्रूपमीक्ष्यते ॥

इत्यादिप्रयोगात् क्वचिदिष्यतेऽपि, प्रयुक्तन्तु जुमरनन्दिना परमः स 'इत्याद्यर्थे 'परमसः' 'परमता'वित्यादि । तत्पुरुषोऽप्येतेन व्याख्यातः ।

---

कृष्णकान्तीटीका ।

अप्रतीतेरिति । तथा च निरुक्तलक्षणस्य तत्रागमनादिति भावः । तदाद्युत्तरपदकः कर्मधारयः प्रायो नेष्यत इत्यत्र प्रायःपदव्यावृत्तिमाह—पक्वयद्भोजनमिति । पक्वं यस्य भोजनं रम्यमित्यर्थः । यदुत्तरपदककर्मधारयस्थलमुक्त्वा तदुत्तरपदकमपि तमाह—आमतद्भक्षनमिति । यथार्थस्थल इवायथार्थस्थलेऽपि तदाद्युत्तरपदक-कर्मधारयो भवतीति सूचनायाह—नीलयद्रस इत्यादि । रसे नीलाभेदस्य, रूपे कटुत्वभेदस्य च बाधितत्वात् अयथार्थत्वसम्पादनाय वैपरीत्येनोक्तम् । केचित्तु—एतदुभ-यमपि यथार्थबोधाभिप्रायेणोदाहृतम्, तथाहि नीलस्य तस्य रस आस्वाद्यः कटोस्तस्य रूपं ईक्ष्यते इत्यर्थ—इत्याहुः । तन्न, तथासति उदाहरणचतुष्टयदानस्यानाभासत्वा-पत्तेः । अत एव "कटुतद्रस आस्वाद्यः नीलतद्रूपमीक्ष्यते" इत्येवपाठः, विपरीतपाठस्तु प्रामादिक इति बालप्रलपितमपास्तम् । विशेषणे विशेष्यव्यभिचाराभावाच्च कर्मधा-रयस्यासंभव इति संप्रदायविदः । तदपि न, नीलतदिति कर्मधारयोत्तरं रसशब्देन सह पुनः कर्मधारयस्याभिप्रेतत्वे तदाद्युत्तरपदकत्वं विनापि तदुपपत्तेः । तद्रस इति कर्म-धारयोत्तरमपि नीलेन सह कर्मधारयेऽपि तादृशप्रयोगसंपत्तेः । वस्तुतो नीलतस्य रसः कटुतस्य रूपमित्यादि कर्मधारयोत्तरतत्पुरुष एवाभिप्रेतः, नतु कर्मधारयोत्तरं कर्मधा-रयो बाधितत्वात्, अत एव वैपरीत्यं नोक्तं, प्रयोगबाहुल्यन्तु व्युत्पत्तिवैशद्यार्थमैच्छि-कमिति तु परमार्थः । ईदृक्प्रयोगे प्राचीनस्वरसमप्याह—प्रयुक्तन्त्विति । समा-सान्तरभ्रमनिराकरणायेत्याद्यर्थे इत्युक्तम् । आदिना—'परमौ तौ' इत्याद्यर्थपरिग्रहः । इत्यादीत्यादिना 'परमते' इत्यादिपरिग्रहः । कर्मधारयवत् तदाद्युत्तरपदकस्तत्पुरु-षोऽपि नाङ्गीक्रियते, अङ्गीक्रियते च प्रयोगानुसारादित्याह—तत्पुरुषोऽप्येतेन व्या-ख्यात इति । तथाच "पादपद्मं शिवायद्धि, विधृतं शंभुतद्धृदि" इत्यादिप्रयोगात् क्वचिदिष्यतेऽपीति भावः ।

रामभद्रीटीका ।

प्रयोगानुसारादिष्यत इत्यतः प्रायश इत्युक्तम् । अत एवाह पक्वयदित्यादि । पक्वाभिन्नस्य यस्य भोजनं रम्यम्, आमाभिन्नस्य तस्य भोजनं वृथत्यर्थः । ननु वैया-करणप्रयुक्तत्वात्तादृशप्रयो गोऽव्युत्पन्न इत्यत आह प्रयुक्तं त्विति ।

ननु विशेष्यतया नामार्थप्रकारकान्वयबुद्धिमात्रं प्रत्येव नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रं, न तु तादात्म्यसम्बन्धावच्छिन्नतत्प्रकारकबुद्धिं प्रति(१) गौरवात्, अतो नामार्थयोर्नीलोत्पलयोरन्वयासम्भवात् कर्मधारयादिकः समासो न यौगिकः, किन्तु नीलोत्पलत्वादिविशिष्टे रूढ एव, तदुक्तं भर्तृहरिणा—

अबुधान् प्रत्युपायाश्च विहिताः प्रतिपत्तये ।
शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोः ॥ इति वैयाकरणाः ।

---

कृष्णकान्तीटीका ।

समासशक्तिवादिनां मतमाह—विशेष्यतयेति । विशेष्यतासंबन्धेन नामार्थनिष्ठप्रकारताकेत्यर्थः । बुद्धिमात्रं—बुद्धिसामान्यम्, एवकारव्यवच्छेद्यमाह—नत्विति । तथा—नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रम् । गौरवात्—कार्यतावच्छेदकगौरवादित्यर्थः । ननु 'नीलोत्पलमि'त्यादौ व्यभिचारात् तादृशगौरवं फलमुखतया न दोषायेत्यतस्तस्य फलमुखत्वं निराकुर्वन्नुपसंहरति अत इत्यादि । तथा च निरुक्तव्यभिचारस्य प्रकारान्तरेण वारणसंभवे तस्य फलमुखत्वाभावादिति भावः । रूढ एवेति—तथाच नीलोत्पलशब्दात् कस्यापि नामार्थस्योत्पलादौ विशेष्यतयाऽनन्वयेनाव्यभिचारादिति भावः । ननु समासस्य रूढत्वं न केनाप्युक्तमित्यत उक्तं तदुक्तमित्यादि । अबुधान्—अपण्डितान् प्रति, उपाया विहिताः—कथिताः, प्रतिपत्तये—ज्ञानाय इत्येको ग्रन्थः । ननु समासे शक्तिस्वीकारे तस्य वाक्यत्वं न स्यात्, योगेन विशिष्टबोधजनकपदसमूहस्यैव वाक्यत्वात्, यदुक्तं परिशिष्टकृता "समर्थः पदसमूहो वाक्य"मिति इत्यत्रेष्टापत्तिमाह—शब्दान्तरत्वादिति । योगेनार्थप्रतिपादक-

रामभद्रीटीका ।

समासशक्तिवादिनां मतमाशङ्कते नन्विति । विशेष्यतयेति । विशेष्यतया तन्नामार्थप्रकारकान्वयबुद्धिसामान्यं प्रति तन्नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रमित्यर्थः। घटमित्यादौ घटप्रकारककर्मत्वविशेष्यकान्वयबुद्धौ घटादिनामोत्तराऽमादिविभक्त्युपस्थाप्यत्वस्य कर्मत्वादौ सत्त्वादिति भावः। ननु विशेष्यतया तादात्म्यसम्बन्धावच्छिन्नतन्नामार्थप्रकारकान्वयबुद्धिं प्रति तन्नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रं वाच्यम्, अतो नीलोत्पलमित्यादिसमासस्य न यौगिकत्वं नीलादिनामार्थस्याभेदसम्बन्धेनोत्पलादौ प्रकारत्वादत आह नत्विति । तत्प्रकारकबुद्धिं प्रतीति(२) । तन्नामोत्तरविभक्त्युपस्थाप्यत्वं तन्त्रमित्यनुषज्यते । गौरवादिति । कार्यतावच्छेदकगौरवादित्यर्थः । रूढ एवेति । तथा च नामार्थेते

---

(१) अत्र 'तथा' इत्यधिकमिष्टं कृष्णकान्तस्य ।
(२) प्रकारकान्वयबुद्धिं प्रतीति २ पु० पाठः ।

तन्मन्दम्, 'नीलोत्पलमि'त्यादौ समुदाये रूढ्यप्रतिसन्धानेऽपि नीला-दिप्रत्येकपदोपस्थितया तयोस्तादात्म्येनान्वयबोधस्यानुभाविकत्वेन गौरवस्य प्रामाणिकत्वात्, अन्यथा नामार्थस्यान्वयबोधसामान्यं प्रत्येव नामोत्तर-नामोपस्थाप्यत्वं तन्त्रमुररीकृत्य 'नीलमानयेत्या'दौ नामार्थसुबर्थयोर्नान्वय-बोधः, परन्तु सुबन्तभागस्य नीलविशिष्टकर्मत्वादौ रूढिरेवेत्यपि किन्न रोचयेः। न च समासस्याशक्तत्वे 'नीलो द्रव्यञ्च घट' इत्यादाविव 'नील घटो द्रव्यमि'त्यादावपि घटे धर्मिण्येकत्र द्वयमिति न्यायेन नीलद्रव्ययो-स्तादात्म्येनान्वयापत्तिरिति वाच्यम्। नामार्थस्य मुख्यविशेष्यताक इव

---

कृष्णकान्तीटीका।

शब्दभिन्नत्वात्। 'अत्यन्तमि'ति भेदविशेषणत्वात् 'स्तोकं पाक' इतिवद् द्वितीया। केचित्तु-शब्दान्तरत्वादित्यस्य विग्रहवाक्यभिन्नत्वादित्यर्थ-इत्याहुः। तन्न, समास-स्य यौगिकत्वेऽपि विग्रहवाक्यभिन्नत्वात् तस्य रूढत्वासम्पादकत्वात्।

वैयाकरणमतं दूषयति-तन्मन्दमिति। प्रामाणिकत्वादिति। तथाच तदानीं तादृशबोधस्यानुभविकत्वेन व्यभिचारवारणार्थं कार्यतावच्छेदकगौरवस्यागत्या स्वीका-रात् कुतः समासस्य रूढत्वमिति भावः। प्रामाणिकगौरवस्यापि दोषत्वे प्रतिबन्धि माह-अन्यथेति। किं न रोचयेति। तथाचात्र यथा व्यभिचारवारणाय नामार्थ-धर्मिकत्वं गौरवग्रस्तमपि कार्यतावच्छेदके निवेश्यते, तथात्रापीति भावः। वैयाकर-णः स्वमतव्यवस्थापनाशक्तोऽपि न्यायमते दोषमाशङ्कते न चेति। वाच्यमिति परे-णान्वयः। अन्वयापत्तिरिति। समासस्य शक्तत्वे तु नीलघटभागस्य नीलाभिन्नघ-टवाचकतया तादृशघट एव द्रव्यान्वय इति भावः। शङ्कां निरस्यति नामार्थस्येति। मुख्यविशेषताक इवेति। यथा नामार्थविशेष्यताकबोधे प्रथमान्तत्वं तन्त्रं तथेत्य-र्थः। नामार्थस्येत्यस्य तादात्म्यसंसर्गावच्छिन्नविधेयताकेऽपीत्यत्रापि सम्बन्धः, तथा-च तन्नामार्थनिष्ठतादात्म्यसम्बन्धावच्छिन्नविधेयतासम्बन्धेन शाब्दबोधं प्रति प्रथमा-

रामभद्रीटीका।

न व्याघात इति भावः। अत्र प्राचां सम्वादमाह तदुक्तमिति। शब्दान्तरत्वात्—विग्रहवाक्यभिन्नगर्भत्वात्।

प्रामाणिकं गौरवं न दोषायेत्याशयेन शङ्कां निरस्यति नीलोत्पलमित्यादिना। अन्यथा-प्रामाणिकगौरवस्यापि दोषत्वे। तन्त्रमुररीकृत्य-लाघवात्स्वीकृत्य, अन्वयबोधं किं-न रोचयेः इत्यग्रिमेणान्वयः। ननु नीलवृत्तिकर्मत्वानुभवात्तादृशलाघवमपि त्यज्यत इत्यत आह परन्त्विति। रूढिरेवेति। नीलोत्पलमित्यादाविव युक्तेस्तौल्यादिति भावः। ननु 'नीलघटो द्रव्यमि'त्यादौ नीलस्यापि तादात्म्येन विधेयत्वादुक्तनियमो व्यभिचारीत्यत

तादात्म्यावच्छिन्नविधेयताकेऽपि बोधे नाम्नः प्रथमान्तत्वस्य तन्त्रत्वात् । विधेयत्वन्तु विषयतानवच्छेदकत्वान्यप्रकारत्वं प्रकारताप्रभेदो वेत्यन्यदेतत् । 'पटमि'त्यादौ तु कर्मत्वादौ पटादिर्न तादात्म्येन विधेय इति न तत्र व्यभिचारः ।

---

कृष्णकान्तीटीका।

तत्तन्नामोपस्थाप्यत्वं तन्त्रमित्यर्थः । उक्तस्थले नीलस्यातथात्वात् न तादृशसम्बन्धेन शाब्दबोधापत्तिरिति भावः। ननु प्रथमान्तत्वं यद्यव्यवहितपूर्वत्वसम्बन्धेन प्रथमाविशिष्टत्वं, तदा 'इदं दधी'त्यादौ व्यभिचारापत्तेः दधिपदस्य तादृशप्रथमान्तत्वाभावात्, यदि च तादृशसम्बन्धेन प्रथमोपस्थितिमदुपस्थितिकत्वं,तदा उक्तापत्तिवारणासम्भवात्, तत्र नीलपदेऽपि तादृशप्रथमान्तत्वात्, तथापि प्रथमाजन्यस्वार्थोपस्थितिसहकार्युपस्थितिकत्वं तत्, तथाच'इदं दधि' इत्यादौ प्रथमाजन्योपस्थितिसहकारित्वान्न व्यभिचारः । 'नीलघटो द्रव्यमि'त्यादौ नीलपदोत्तरलुप्तप्रथमाजन्योपस्थितेरनपेक्षितत्वेन नीलपदजन्यनीलपदार्थोपस्थितेः तत्सहकारित्वाभावेन नीलपदस्य तथात्वाभावात् उक्तापत्त्यसम्भवादिति ध्येयम् । 'चैत्रः पचती'त्यादौ आख्यातार्थकृतौ 'घट' इत्यादौ सुबर्थैकत्वादौ च व्यभिचारवारणाय नामार्थनिष्ठेति विधेयताविशेषणम् ।' चत्रस्य धनमि'त्यादौ चैत्रे व्यभिचारवारणाय तादात्म्यसम्बन्धावच्छिन्नेति । विशेष्ये विशेष्यतावच्छेदके वा व्यभिचारवारणाय विषयतामुपेक्ष्य विधेयतानिवेशः।ननु धर्मितावच्छेदकस्यापि विधेयत्वेन तत्र व्यभिचारो दुर्वार इत्यत आह—विधेयत्वन्त्विति । विशेष्यतादिवारणाय प्रकारत्वमिति । अवच्छेदकत्वं प्रकारताव्यव्याप्यमितिमतानुसारेणेदम्, अन्यथा प्रकारतायां तद्भेदनिवेशवैयर्थ्यापत्तेः । इतरबाधप्रयुक्तमहानसीयवह्निमानित्यनुमितिविधेयत्वस्य महानसीयवह्नावभावात् आह—प्रकारताप्रभेदो वेति । पृथिव्यामितरभेद इत्यनुमितिविधेयत्वं साध्ये नास्तीति मतानुसारेणेदम् । तादात्म्यसम्बन्धावच्छिन्नत्वस्य स्वयं व्यावृत्तिमाह—पटमित्यादाविति । न च 'नीलोत्पलमि'त्यादौ व्यभिचार इति वाच्यम् । तत्रैकत्वस्यैव विधेयत्वात् । न चैवं नामार्थस्य तादात्म्येन विधेयत्वासिद्धिः, 'अयं घट' इत्यादावेकत्वविशिष्टेदमर्थस्य घटादावेव तत्सम्बन्धेन प्रकारत्वात् ।

रामभद्रीटीका ।

आह विधेयत्वमिति। नीलस्य तत्र विशेष्यतावच्छेदकत्वात्, अन्यथा तत्रापि द्रव्यं शाब्दयामीतिवत् नीलमित्यनुव्यवसायापत्तेरिति भावः । इतरबाधादिप्रयुक्तस्य महानसीयत्वादिप्रकारस्यापि विषयतावच्छेदकत्वादेकत्र द्वयमिति न्यायेन वा महानसीयत्वस्य (यत्र) भानं तत्रातिव्याप्तिरित्यत आह—प्रकारताप्रभेद इति । तादात्म्यावच्छिन्नेत्यस्य व्यावृत्तिमाह—पटमित्यादाविति ।

ननु नीलं पीतञ्चोत्पलं यत्र इत्यर्थे 'नीलपीतोत्पलं सर' इत्यादिको बहुव्रीहिरिव, नीलं पीतञ्चोत्पलमित्यर्थे 'नीलपीतोत्पलं पुष्पमि'त्यादिकः कर्मधारयोऽप्येकत्र द्वयमिति न्यायेन नीलपीताभ्यामवच्छिन्नोत्पलनिष्ठधर्मिताकधीजनकः कथं न स्यादिति चेन्न। "बहुपदे बहुव्रीहिरेव नेतरो द्वन्द्वान्यः समासः" इत्यनुशिष्टिबलेन बहुव्रीहेरेव स्वनिविष्टनामद्वयोपस्थाप्यार्थद्वयावच्छिन्नतादृशनामान्तरार्थनिष्ठाविषयताकबोधं प्रति हेतुत्वेन समासान्तरस्य तादृशधियं प्रत्यसमर्थत्वात्। "नीलपीतोत्पले रम्ये, पीतनीलोत्पलाश्रित"मित्यादौ तु नीलोत्पलं पीतोत्पलञ्च रम्यमित्याकारक एवान्वयबोधो, न तु नीलं पीतञ्च यदुत्पलं तद्रम्यमित्याकारः। अत एव

---

कृष्णकान्तीटीका।

शङ्कते नन्विति। कथं न स्यादिति। अत्र नीलादेर्विधेयत्वाभावेन निरुक्तकार्यकारणभावेनापि वारणासम्भवादिति भावः। समाधत्ते चेन्नेति। स्वनिविष्टेति। स्वं बहुव्रीहिः। तादृशेति। स्वनिविष्टेत्यर्थः। समासान्तरस्य—बहुव्रीहिभिन्नसमासस्य, तादृशधियं प्रति—स्वनिविष्टनामद्वयोपस्थाप्यार्थद्वयावच्छिन्नतादृशनामान्तरार्थविषयताकबोधं प्रतीत्यर्थः। असमर्थत्वादिति। तथाचाकाङ्क्षाज्ञानकारणतासंकोचेन तादृशसमासवारणादिति भावः। ननु नीलं पीतं च उत्पलं रम्यमित्याद्यर्थे 'नीलपीतोत्पले रम्ये' इत्यादिप्रयोगात् तादृशकारणतासंकोचो दुर्घट इत्यत आह नीलपीतोत्पल इति। इत्याकार एवान्वयबोध इत्येवकारव्यवच्छेद्यमाह नत्विति। तथा च नीलञ्च पीतञ्च ते नीलपीते, नीलपीते च ते उत्पले चेति द्वन्द्वानन्तरं कर्मधारय इति भावः। अस्य कर्मधारयत्वाभावे युक्तिमाह अत एवेति। तादृशप्र-

रामभद्रीटीका।

नीलपीतोत्पलमित्यत्र विशिष्टवैशिष्ट्यावगाहित्वे बाधादाह—एकत्रेति। (१)तादृशेति। स्वघटकनामान्तरेत्यर्थः। बहुव्रीहेरेव—त्रिपदादिबहुव्रीहेरेव। समासान्तरस्य—निरुक्तबहुव्रीहिभिन्नस्य। तादृशधियं—नीलं पीतं च यदुत्पलमित्याकारकाधियम्। ननु 'नीलपीतोत्पले रम्ये' इत्यादौ तादृशानुभवात् समासान्तरस्यापि समर्थत्वं स्यादत आह—नीलपीतोत्पल इति। इत्याकारो बोध इति पूर्वेणान्वयः। ननु व्याससमासयोस्तुल्यार्थकतया नीलञ्च तत् पीतं चेत्यादिकर्मधारयविषया नीलोत्पलं पीतोत्पलं च रम्यमित्यनुभवो नीलपीतोत्पले रम्ये इत्यादावनुपपन्न अत आह—अत एवेति। यत एव तादृशबोधो नाभ्युत्पन्नोऽत एवेत्यर्थः। ननु घटानधिकरणमित्यादितत्पुरुषस्य स्वघटकनामद्वयोपस्थाप्यार्थद्वया-

---

१) एतत्प्रतीकव्याख्यानं ग्रन्थक्रमानुरोधेन बहुव्रीहेरेवेत्यस्य टीकानन्तरं सङ्गतमिति द्रष्टव्यम्।

द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धसूचनार्थं नीलपीते च ते उत्पले चेत्यादिकमेव तत्र विग्रहं वर्णयन्ति, न तु नीलं पीतञ्च तदुत्पलञ्चेत्यादिकम् । घटस्य नाधिकरणमित्यादिविग्रहे 'घटानधिकरणमि'त्यादिकस्तु मध्यपदप्रधानस्तत्पुरुषो न बहुनामगर्भो नवैकत्र द्वयमितिन्यायेन स्वार्थस्य बोधक इति सम्प्रदायविदः ॥

स्यादेतत् समासानां समुदायशक्तत्वे 'वाचस्पतिर्मितायाः, स श्यामे कण्ठेव्रणः पुमान्' इत्यादौ वाचि मितायाः, कण्ठे च श्यामादेर्नाभेदेनान्वयो वागादेः पदार्थैकदेशत्वेन तत्र पदार्थान्तरस्य 'पशुरपशुर्ग-

---

कृष्णकान्तोटीका ।

योगस्य निरुक्तसमूहालम्बनबोधजनकत्वादेवेत्यर्थः । प्रत्येकाभिसम्बन्धसूचनार्थमित्यस्य वर्णयन्तीत्यनेनैवान्वयः । तथाचास्य त्रिपदकर्मधारयत्वे द्वन्द्वात् परस्य प्रत्येकाभिसम्बन्धस्थलतया तत्समासप्रदर्शनं प्राचामसङ्गतं स्यादिति भावः । एवकारव्यवच्छेद्यमाह नत्विति । तदुत्पलं चेति विग्रहं वर्णयन्तीति पूर्वेणान्वयः । ननु घटानधिकरणमित्यादितत्पुरुषस्यापि स्वघटकनामद्वयोपस्थाप्यार्थद्वयावच्छिन्नस्वघटकनामान्तरार्थविषयताकबोधजनकतया नोक्तनियम इत्यत आह घटस्यानधिकरणमित्यादि । विग्रह इति अनधिकरणशब्देन सह समासे नियमभङ्गप्रसक्तिरेव नास्तीत्यतो विग्रहपर्यन्तं प्रदर्शितम् । न बहुनामगर्भ इति । नञो नामत्वाभावात् । तस्य तथात्वेऽप्याह नवेति । तथा चैकत्र द्वयमिति रीत्या नामार्थद्वयावच्छिन्नत्वस्य तत्र निविष्टत्वेन नानुपपत्तिरिति भावः ।

समासशक्तिवादी पुनः शङ्कते स्यादेतदिति । एतद्दूषणं स्यादित्यर्थः । मितायाः इति नाभेदेनान्वयः, कथमित्याकाङ्क्षायामाह वागादेरिति । तत्र—वागादौ । पदार्थान्तरस्येति । निराकाङ्क्षत्वादिति परेणान्वयः । तत्र दृष्टान्तमाह पशुरपशुरित्यादि । नन्वत्रायोग्यत्वादेव न शाब्दबोध इति तु नाशङ्कनीयम् । पशुपदार्थैक-

रामभद्रीटीका ।

वच्छिन्नस्वघटकनामान्तरार्थनिष्ठविषयताकबोधं प्रति समर्थतया तादृशानुशासनमसिद्धमत आह घटस्य नाधिकरणमिति । न चानधिकरणपदेन घटपदस्य समास इति त्रिपदसमास एव नेति वाच्यम् । प्रागुक्तसमाधित्वादिति भावः । नञादेर्नामत्वाङ्गीकारमते त्वाह नवेति । तत्र विशिष्टवैशिष्ट्यावगाहिताया अनुभवसिद्धत्वादिति भावः । 'एकत्र द्वयमि'त्यादिन्यायेन बोधकत्वानुरोधेन त्रिपदादिबहुव्रीहेरावश्यकत्वादिति स्वयं वक्ष्यमाणत्वादिति हृदयम् ।

समासानां यौगिकत्वे वाचस्पतिर्मितायाः इत्यत्र वाचिमितायाः कण्ठे श्यामस्य चा-

गनं समवेतमि'त्यादाविव निराकाङ्क्षत्वात् , एवं 'पत्न्या द्विजातिस्वाध्या-यो, जटाभिस्तापसस्पृहे'त्यादौ पत्नीसहभावस्य द्विजातौ जटावैशिष्ट्य-च तापसे भेदेनापि नान्वयो यथा'ऽऽकाशमभिघातादि'त्यादौ, यौगिकत्वे तु तत्र तत्र तथाविधान्वयो दुर्वारो वाक्प्रभृतेः पदार्थत्वादिति चेन्न ।

वृत्त्यैकदेशपदस्यार्थे सम्बन्धस्य कारकस्य वा बोधकान्यविभक्तेः स्वा-र्थानुभावकतायां निराकाङ्क्षत्वादेव तस्य निरस्तत्वात् , अत एव 'चैत्रस्य गुरुकुलं, शरैः शातितपत्रक' इत्यादौ गुर्वादिपदस्य वृत्त्यकदेशत्वेऽपि

---

कृष्णकान्तीटीका ।

देशस्य पशुत्वस्य शब्दसमवायिकारणरूपगगनपदार्थैकदेशस्य च शब्दस्य पश्वादिभिन्न-तया समवेततया च योग्यतानपायाव । पदार्थैकदेशे पदार्थान्तरस्याभेदेनान्वये निराका-ङ्क्षत्वमुक्त्वा भेदेनान्वयेऽपि तदाह एवमिति । तत्र दृष्टान्तमाह यथेति । आका-शपदार्थैक देशे शब्देऽभिघातप्रयोज्यत्वस्य भेदेन यथा नान्वयस्तथेत्यर्थः । उपसंहरति यौगिकत्वे त्विति । तत्रतत्र—तयोस्तयोः स्थलयोः । तथाविधान्वयः—वाक्प्रभृतौ सितादेरभेदान्वयः ।

अत्र समाधत्ते चेन्नेति । वृत्त्यैकदेशेति । प्रत्ययान्तपदसमासैकदेशेत्यर्थः । 'पदानां प्रत्ययैर्योगः समासश्चेह वृत्तयः' इत्यनुशिष्टेः । प्रत्ययोऽत्र विभक्ति-भिन्नो ग्राह्यः, अन्यथा 'नीलं घटं, स्तोकं पचती'त्यादौ प्रत्ययान्तपदैकदेशार्थे घटपाकादौ नीलस्तोकादेरन्वयो न स्यादिति भावः । 'चैत्रस्य दासभार्येय'मि'त्यादौ सम्बन्धस्य 'शरैः शातितपत्रोऽय'मि'त्यादौ कारकस्य बोधकविभक्तेः स्वार्थानुभा-वकतायां साकाङ्क्षत्वादन्यान्तम् । अन्यत्वनिवेशस्य स्वयं व्यावृत्तिमभिदधाति—

रामभद्रीटीका ।

भेदान्वयो दुर्वार इति समासशक्तिवादी शङ्कते—स्यादेतदिति । एतद्दूषणं स्यादित्य-र्थः । तत्र—वाक्प्रभृतौ । पदार्थान्तरस्येति । अन्वय इत्यादेः निराकाङ्क्षत्वादित्यग्रेऽन्व-यः । पशुपदार्थैकदेशस्य पशुत्वस्य पशुभिन्नतया गगनपदार्थैकदेशस्य शब्दस्य समवेत-तया चायोग्यत्वासम्भवादाह निराकाङ्क्षत्वादिति । ननु समासस्याशक्तत्वेऽभेद-सम्बन्धेनान्वये निराकाङ्क्षत्वं न तु भेदसम्बन्धेनात आह—एवमिति । यथाकाश-मिति । आकाशपदार्थैकदेशस्य शब्दस्याभिघातजन्यत्वेनापि नान्वय इत्यर्थः । तत्र तत्र—वाक्प्रभृतौ द्विजातिप्रभृतौ वा, तथाविधान्वयो—अभेदेन भेदेन वान्वयः, पदार्थ-त्वात्—त्वन्मते पदार्थत्वात् ।

वृत्त्येति । पदानां पदयोर्वा योगः कृत्तद्धितक्यजादिप्रत्ययान्तम्, समासाश्च वृत्तयः, प्रत्ययशब्देन विभक्तिभिन्नप्रत्ययो ग्राह्यः, नातो 'नीलघटं, स्तोकं पचती'त्यादौ तदेकदेशे

तदर्थे षष्ठ्यर्थसम्बन्धस्य तृतीयाद्यर्थकरणत्वादेश्चान्वयः सर्वसिद्धः, समासस्येव क्यजादिप्रत्ययान्तस्यापि वृत्तित्वात्,

परिष्कृतायाः सततं यस्तु वाचस्पतीयते ।
सम्पदा जटया वापि पुत्रीयति स पुरुषः ॥

इत्यादेरपि वागाद्यंशे परिष्कृतादेः पुत्राद्यंशे च सम्पदादेः सहभावादेर्बोधकतायां न सामर्थ्यम् , अत एव

प्रतियोगिपदादन्यद्यदन्यत् कारकादपि ।
वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यते ॥

---

कृष्णकान्तीटीका ।

अत एवेति । अन्यान्तनिवेशादेवेत्यर्थः । तदर्थे—वृत्त्येकदेशपदार्थे गुर्वादौ, करणत्वादेरित्यादिना कारकान्तरपरिग्रहः । वृत्तित्वादिति । न सामर्थ्यमिति परेणान्वयः । 'पदानां प्रत्ययैर्योग' इत्यादिशाब्दिकस्मृतेरिति भावः । ननूक्तस्थले वाचि परिष्कृतादेः समासस्यैकदेशत्वादेव न भवतीति इदं क्यजादिप्रत्ययान्तस्य वृत्तित्वं न साधयेदित्यतः स्थलान्तरमाह—सम्पदा जटया वापीति । इत्यादेरपीति न सामर्थ्यमिति परेणान्वयः । परिष्कृतादेरिति । अभेदेनेत्यादिः, तच्च बोधकतायामित्यन्वयि । सहभावादेरित्यादिना वैशिष्ट्यपरिग्रहः । सम्पदादिपदोत्तरतृतीयायाः सहार्थत्वस्येव विशेषणार्थत्वस्यापि सम्भवात् । क्वचित् सहभावादिबोधकतायामिति पाठः, स च न सन्दर्भशुद्धः, तथासति समस्तैकदेशबोधकतायामित्यत्र परिष्कृतादेरनन्वयापत्तेः । नच सहभावादीत्यादिना अभेदपरिग्रहः, अभेदेनेति प्राक् पूरणीयम् , आदिपदार्थे च परिष्कृतादेरित्यस्यान्वय इति न किञ्चिदनुपपन्नमिति वाच्यम् । तथासति अभेदसहभावादिबोधकताया इत्यस्यैव वक्तुमुचितत्वात् । अत्र शाब्दिकसंवादं प्रमाणयति अतएवेति । प्रतियोगिपदात्—षष्ठ्यर्थसम्बन्धप्रतियोगिवाचकपदोपस्थाप्यात्, कारकात्—कारकविभक्त्यन्तपदोपस्थाप्यादित्यर्थः । यथाश्रुतन्तु न सङ्गच्छते, सम्बन्धकारकयोरपि तथात्वेन तयोरपि वृत्त्येकदेशार्थेऽन्वयानुपपत्तेरिति सम्प्रदायविदः । वस्तुतस्तु—प्रतियोगिपदात्—सम्बन्धात्, प्रतियोगिना पदं ज्ञानं यस्येति व्युत्पत्तेः, अथवा पद्यते ज्ञायतेऽ-

रामभद्रीटीका ।

घटे पाके च नलिस्तोकादेरन्वयेऽपि क्षतिरत एव वक्ष्यति—पुत्रीयतीति । विभक्तौ सम्बन्धकारकयोर्बोधकान्यत्वस्य फलमाह—अत एवेति । यत एव तदन्यत्वं विशेषणमत एवेत्यर्थः । क्यजादीति । पुत्रीयतीत्यादिप्रत्ययान्तस्येत्यर्थः । ननु वाचस्पतीयत इत्यत्र समासत्वेनापि वृत्तित्वादाह—सम्पदेत्यादि । अत्र शाब्दिकसम्वादमाह—अत एवेति ॥ ३४ ॥

इत्यपि पठन्ति । 'कर्म चाण्डालयोगोत्थं कुरु पापक्षयं मम'त्यत्र च योगोत्थमित्यस्य योगप्रयोज्यमित्यर्थः, स चाभेदेन पापक्षयेऽन्वितः ।

यस्मिन् राशिगते सूर्ये विपत्तिं यान्ति मानवाः ।
तेषां तत्रैव कर्त्तव्याः पिण्डदानादिकाः क्रियाः ॥

इति वचनन्तु अमूलम् , समूलत्वे तु 'यस्मिन् राशौ गते सूर्ये' इत्येव तत्र पाठ इत्यास्तां विस्तरः ॥ ३४ ॥

---

कृष्णकान्तीटीका ।

नेन, पदं ज्ञापकं, ज्ञापकं प्रतियोगिपदं यस्येति व्युत्पत्तेः स्वीकारात् प्रतियोगिविशिष्टज्ञानजन्यं सम्बन्धिज्ञानमिति यावत् , सम्बन्धज्ञाने सम्बन्धिद्वयज्ञानस्य हेतुत्वात्, कारकादिति तु यथाश्रुतमेव-इति तु परमार्थः ।

ननु-उत्तिष्ठ गम्यतां राहो त्यज्यतां चन्द्रसङ्गमः ।
कर्म चाण्डालयोगोत्थं कुरुपापक्षयं मम ॥—

इत्यत्र पापक्षयैकदेशे पापे कथं योगोत्थपदोपस्थाप्यस्य योगजन्यत्वस्यान्वयः, कथं वा योगोत्थपदोत्तरं द्वितीया इत्यत आह कर्मचाण्डालेति । योगप्रयोज्यमितीति । योगः सूर्येण चन्द्रेण च सह राहोः सम्बन्धः, तत्प्रयोज्यत्वञ्च प्रतियोगिद्वारा पापक्षये बोध्यम् , प्रतियोगिताया ध्वंसं प्रति तादात्म्येन प्रतियोगिनो हेतुत्वादिति भावः । केचित्तु-ममेत्यव्ययं, ममपापेत्यनेन योगोत्थान्तस्य कर्मधारयात्, तथा च 'कर्मचाण्डालयोगोत्थममपापक्षयं कुरु' इति पाठं कल्पयन्ति । तच्चिन्त्यम् । वस्तुतस्तु-क्षयमिति कर्तृविहितल्प्रत्ययनिष्पन्नं, तथा च चाण्डालयोगोत्थं चन्द्रराहुसम्बन्धजन्यं दुरदृष्टरूपं कर्म क्षयं ध्वस्तं कुरु इत्यर्थः—इत्यन्यापरिशीलितः पन्थाः । ननु तथापि—

यस्मिन् राशिगते सूर्ये विपत्तिं यान्ति मानवाः ।
तेषां तत्रैव कर्तव्याः पिण्डदानादिकाः क्रियाः ॥

"उदकक्रिया" इत्यपि क्वचित् पाठः,—इति वचने कथं यत्पदार्थस्य वृत्त्येकदेशे राशावन्वयः ? इत्यत आह यस्मिन्नित्यादि । अमूलमिति । पुराणाद्यनन्तर्गतमित्यर्थः । ननु तस्य पुराणाद्यनन्तर्गतत्वे किं मानम् ? आधुनिकग्रन्थकृदुद्धृतत्वमेव तदिति तु रिक्तं वचः, विध्यनुपयुक्तवचनादौ व्यभिचारात्, तत्तत्पुराणादावदृष्टत्वस्य च विवादग्रस्तत्वादित्यत आह समूलत्वे त्विति । इत्येव पाठ इति । तथा च राशेर्वृत्त्यैकदेशत्वाभावान्नानुपपत्तिरिति भावः ॥ ३४ ॥

द्विगुं लक्षयति—

**(१)संख्याशब्दयुतं नाम तदलक्ष्यार्थबोधकम् ।**
**अभेदेनैव यत्स्वार्थे स द्विगुस्त्रिविधो मतः ॥ ३५ ॥**

संख्यावच्छिन्नशक्तयत्पदोत्तरत्वविशिष्टं यन्नाम स्वार्थधर्मिकं तादात्म्येन तदलक्ष्यार्थस्यान्वयबोधं प्रति समर्थं तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थभिन्नस्वार्थे द्विगुरुच्यते । 'त्रिकटु त्रिभुवन चतुर्युग चतुर्वर्ग पञ्चगव्य पञ्चामृत षड्रस षट्पदार्थ सप्तर्षि अष्टनाग अष्टवसु नवग्रह दशमूल एकादशरुद्र द्वादशादित्येत्या'दिकस्तु कर्मधारयः शु-

---

कृष्णकान्तीटीका ।

द्विगुमिति । क्रमप्राप्तमित्यादिः । विवृणोति संख्येति । तथाच कारिकास्थसंख्याशब्देत्यस्य संख्यावच्छिन्नशक्तशब्देत्यर्थः । युतशब्दस्यार्थमाह उत्तरत्वविशिष्टमिति । स्वार्थधर्मिकमिति । तथाच स्वार्थे इति सप्तम्या विशेष्यत्वमर्थः। अभेदेनेत्यस्यार्थमाह तादात्म्येनेति । तदलक्ष्यार्थबोधस्योपधायकतानिवेशे प्रयोजनविरहश्चाव्याप्तिश्चातः स्वरूपयोग्यतां निवेशयति अन्वयबोधं प्रति समर्थमिति । तथाच समासत्वे सति यादृशानुपूर्वीप्रकारकज्ञानं स्वघटकसंख्यावच्छिन्नशक्तनामोत्तरयादृशनामप्रतिपाद्ययादृशार्थधर्मिकतादात्म्यसम्बन्धावच्छिन्नतादृशनामलक्ष्यार्थभिन्नयादृशार्थनिष्ठप्रकारताकान्वयबोधजनकं, तादृशानुपूर्वीमच्छब्दत्वं—तादृशनामतादृशार्थभिन्नतादृशनाम तादृशार्थद्विगुत्वमिति निष्कृष्टार्थः । 'पञ्च मूलानी'ति विग्रहेऽतिव्याप्तिवारणाय सत्यन्तम् । 'नीलोत्पले'ति कर्मधारयेऽतिव्याप्तिवारणाय संख्यावच्छिन्नशक्तपदोत्तरेति । 'मूलपञ्चके'ति कर्मधारयेऽतिव्याप्तिवारणायोत्तरत्वम् । "पञ्चभार्या द्रौपदीयं धर्मिष्ठातिपतिव्रता" इत्यत्र पञ्चभार्या इतिभागेऽतिव्याप्तिरतस्तादात्म्यसम्बन्धावच्छिन्नेति प्रकारताविशेषणम् । अन्यत् स्वयमूह्यम् । लक्ष्यार्थभिन्न इत्यस्य व्यावृत्तिं स्वयमाह त्रिकटुत्रिभुवनेति । व्युत्पत्तिवैशद्यार्थं प्रयोगवैशद्यं प्रदर्शितम् । न पूर्वपदालक्ष्यार्थस्य बोधक इति । न पूर्वपदलक्ष्यार्थबोधक इत्यर्थः । ननु त्रिकटुप्रभृति-

रामभद्रीटीका ।

द्विगुं—क्रमप्राप्तम्, स समास इत्यर्थः । नातो दश ब्राह्मणा इत्यादिवाक्येऽव्याप्तिः । युतमित्यस्य व्याख्योत्तरत्वविशिष्टमिति । तदलक्ष्यार्थबोधकमित्यस्य व्यावृत्तिं दर्शयति—त्रिकट्वादीत्यादिना । द्वादशादित्यादीत्यादिना पञ्चाम्रेत्यादेः परिग्रहः ।

---

(१) लक्षकभिन्नसंख्याबोधकनामोत्तरं यन्नाम स्वार्थधर्मिकतादात्म्यसम्बन्धावच्छिन्नमुख्यार्थान्वयबोधं प्रति स्वरूपयोग्यं तन्नामविशिष्टं तन्नाम द्विगुरिति कारिकार्थः । संज्ञाविषयान्यत्वे सति संख्यावाचकपूर्वपदकतुल्याधिकरणसमासो द्विगुरिति भावः ।

ण्ठ्यादिपर्य्याप्तत्रित्वावच्छिन्नबोधकतया न पूर्वपदालक्ष्यार्थस्य बोधकस्त्रि-कटुप्रभृतिभ्यः कटुत्रयादिसामान्यप्रतीतेः । 'पञ्चमूली'त्यादौ तु मूलपञ्चक-त्वेनैव मूलविशेषे तात्पर्य्यं न तु विशेषरूपेणापि, अत एव

कण्टकार्य्यादिकं स्वल्पं गाम्भीर्यादि च यन्महत् ।

पञ्चमूलं तदुभयं दशमूलमुदाहृतम् ॥

इत्यादिकस्ताद्रूप्येण बोधस्थलीयप्रयोगः, "वर्षाकाले मघर्क्षेण युक्ता चापि त्रयोदशी"त्यादिवदेकवचनस्य साधुत्वसम्भवात् । द्वयो रूपमित्या-द्यर्थे 'द्विरूपा'दिपदं नाभेदेन द्विप्रभृतेरनुभावकम् , एकत्वसंख्यया विशिष्टं

---

कृष्णकान्तीटीका ।

भिः कदाचित् त्रिकटुसामान्यस्यापि बोधनात्तत्रातिव्याप्तिरेवेत्यत आह त्रिकटु-प्रभृतिभ्य इति । लक्ष्ये लक्षणं सङ्गमयति--पञ्चमूलीत्यादि । तात्पर्यमिति । तथाच तात्पर्यवशादेव विशेषभानं न तु तत्रापि लक्षणादर इति भावः । एवकारव्य-वच्छेद्यमाह--नत्विति । न मूलविशेषे तात्पर्यमिति पूर्वेणान्वयः । ननु विशेषरूपेण तात्पर्यस्थलेऽपि द्विगुर्भवत्येव इति तदलक्ष्यार्थेति ( पदं ) व्यर्थमित्यतस्तादृशस्थले द्विगोरभावं दर्शयन् तादृशतात्पर्याभावं दर्शयति अतएवेति । तात्पर्यविशेषस्य नियामकत्वादेवेत्यर्थः, ताद्रूप्येण--विशेषरूपेण । प्रयोग इति । अन्यथा पञ्चमूली-त्येव प्रयोगः स्यादिति भावः । ननु तर्हि कथमेकवचनान्तता इत्यत आह--वर्षाकाल इत्यादि । साधुत्वसम्भवादिति । तथाच मघानां त्रयोदशीनाञ्च नानात्वेऽपि यथैकवचनान्तता तथाऽत्रापीति भावः । तादात्म्यनिवेशव्यावृत्तिं स्वयमाह--द्वयो रूपमिति । इत्याद्यर्थ इत्यन्तेन कर्मधारयत्वनिराकरणम् । नन्वेकघट इत्यादिकर्मधारयेऽतिव्याप्तिरित्यत आह--एकत्वेति । तदवच्छिन्नस्य--एकत्वावच्छिन्नस्य, तथा च संख्यावच्छिन्नेत्यत्र संख्यानिष्ठावच्छेदकत्वं पर्याप्ति-सम्बन्धावच्छिन्नं वाच्यमिति भावः । यदि चैकत्वमेकस्मिन्नेव पर्याप्तं न तु द्वित्वमि-

रामभद्रीटीका ।

ननु लक्षणमिदं लक्ष्याप्रसिद्ध्या अप्रसिद्धम्, अतो लक्ष्यं दर्शयति-पञ्चमूलीत्यादावि-ति । अतएव-तात्पर्यस्य नियामकत्वादेव । दशमूलमित्यादि । उदाहृतमित्यादिना 'पञ्चगव्येन शुध्यती'त्यादेः सङ्ग्रहः । ताद्रूप्येण-कण्टकार्यादिमूलपर्याप्तपञ्चत्वेन । अन्य-था पञ्चमूलीत्यादिरेव तत्र प्रयोगः स्यादिति भावः । ननु 'पञ्चमूलमित्यत्र' विशेषरूपेण तात्पर्योपस्थितौ पञ्चमूलानीत्येव स्यात् न तु पञ्चमूलमत आह—वर्षाकाल इति । अभेदेनेत्यस्य व्यावृत्तिमाह—द्वयो रूपमिति । ननु एकघट इत्यादिकर्मधारयेऽति-व्याप्तिरत आह--एकत्वेति । न बोधकमिति । तथाच 'पर्याप्तिसम्बन्धेन संख्या,

बोधयदपि एकपदं न पर्य्याप्तिसंसर्गेण तदवच्छिन्नस्य बोधकम् , द्वित-यादिपदं पर्य्याप्त्या द्वित्वावच्छिन्नं प्रतिपादयदपि न तत्र शक्तं वाक्य-त्वात्, अतो 'नैकघटद्वितयपटे'त्यादिकर्मधारयेऽतिप्रसङ्गः । "सप्तशती पठ्यतामि"त्यादौ च यद्यपि शते धर्मिणि सप्तानामभेदेन नान्वयो बाधि-तत्वात्' नापि सप्तपदलक्षितस्य सप्तगुणितस्य द्विगुत्वहान्यापत्तेः, तथापि शतपदार्थैकदेशे शतत्वसंख्यायां, तस्याः सप्तत्वसम्भवादिति वदन्ति ।' 'द्विगार्ग्यं गच्छत' इत्याद्यव्ययीभाववारणन्तु पूर्ववत् ।

कृष्णकान्तीटीका ।

त्यादिप्रतीतिबलादेकत्वस्यापि पर्याप्तिः स्वीक्रियते इति विभाव्यते, तदा व्यासज्य-वृत्तिधर्मावच्छिन्नपर्याप्तिसम्बन्धावच्छिन्नावच्छेदकत्वं वाच्यमिति । संख्यावच्छिन्नशक्ते-स्तत्र शक्तिनिवेशव्यावृत्तिमाह—द्वितयादिपदमिति । तत्र शक्तं-पर्याप्तिसम्बन्धा-वच्छिन्नत्वनिष्ठावच्छेदकताकशक्तिनिरूपकम् । शक्त्यभावे बीजमाह—वाक्यत्वा-दिति । उपसंहरति अत इति । ननु 'सप्तशती पठ्यतामि'त्यादौ सप्तशतीत्यस्य द्विगुत्वानुपपत्तिः, सप्तपदशक्याभेदस्य शतत्वसंख्याविशिष्टे शते बाधात् , सप्तपदस्य सप्तगुणितपरत्वे तस्य लक्ष्यार्थभिन्नत्वाभावादित्याशंक्य परिहरति—सप्तशतीत्यादि । पदार्थैकदेशे-शतपदार्थैकदेशे, तस्याः—शतत्वसंख्यायाः । सप्तत्वसम्भवादिति । न च गुणानां गुणवृत्तित्वाभावात् कथमेतदिति वाच्यम् । समवायेनैव गुणानां गुणवृ-त्तित्वानङ्गीकारात् पर्याप्तिसम्बन्धेन तेषां तथात्वे बाधकाभावात् । अन्ये तु समवाये-नेव पर्याप्तिसम्बन्धेनापि गुणानां गुणवृत्तित्वं नाङ्गीक्रियते, संख्यागतद्वित्वादिकन्तु अपेक्षाबुद्धिविशेषविषयत्वरूपं नतु संख्यारूपमिति न किञ्चिदनुपपन्नमित्याहुः । व्युत्प-त्तिवैचित्र्येण एकदेशान्वयस्वीकार इत्यावेदनाय 'वदन्ती'त्युक्तम् । ननु द्वौ गार्ग्यौ इत्याद्यर्थे 'द्विगार्ग्यमि'त्यव्ययीभावेऽतिव्याप्तिरित्यत आह—द्विगार्ग्यमिति। द्विगार्ग्य-मित्यस्यैकवचनान्तत्वे द्वित्वविशिष्टभेदबाधात् द्विवचनान्तत्वप्रतिपादनायाह गच्छतः

रामभद्रीटीका ।

वाच्छिन्नशक्यपदे'त्यादिकं विवक्षितमेकत्वादेः पर्याप्तत्वे मानाभावात् , भावे विलक्षणपर्या-प्तिर्निवेश्या एकत्वव्यावृत्तेरिति भावः । शक्तमित्यस्य प्रयोजनमाह—द्वितयादीति ।' तत्र-द्वित्वावच्छिन्ने । वाक्यत्वादिति । वाक्ये शक्तेरभावादिति भावः । 'सप्तशती'-त्यादावव्याप्तिमाशंक्य निराकरोति सप्तशतीत्यादिना । द्विगुत्वहान्यापत्तेरिति । पूर्वपदालक्ष्यार्थस्य बोधे एव द्विगोः साधुत्वादिति भावः । शतत्वसंख्यायां सप्तानाम-न्वय इत्यनुषज्यते । तस्याः-शतत्वसंख्यायाः, व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽप्यन्वयस्य साधुत्वादत एव 'वदन्ती'त्युक्तम् । ननु द्वितयाभिन्नगार्ग्यादिबोधकस्य द्विगार्ग्यमित्याद्य-

स चायं द्विगुस्त्रिविधः- तद्धितार्थ १ उत्तरपद २ समाहार ३ भेदात् ॥ ३५ ॥

तत्र [१] तद्धितार्थं द्विगुं लक्षयति—

**तद्धितार्थान्वितस्वार्थस्तद्धितार्थद्विगुर्मतः ।**

**तद्धितार्थे लाक्षणिकस्वान्त्यनामा त्वसर्वगः ॥ ३६ ॥**

यो द्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः स तद्धितार्थद्विगुः । 'द्विमुद्रो वृष' इत्यादौ द्वाभ्यां मुद्राभ्यां क्रीतस्य, 'द्विवर्षा गौ'रित्यादौ द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य, 'द्विदलं पवित्रमि'त्यादौ द्वाभ्यां दलाभ्यां निर्मितस्य 'द्विगुञ्जं स्वर्णमि'त्यादौ द्वाभ्यां गुञ्जाभ्यां तुलितस्य, 'त्रिकाण्डः पुरुष' इत्यादौ त्रिभिः काण्डैः परिमितस्य, 'पञ्चकपाल(१)श्चरुरि'त्यादौ पञ्चभिः कपालैः संस्कृतस्य बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात् । परिशिष्टकृतां मतेनेदम् ।

---

कृष्णकान्तीटीका।

इति । पूर्ववदिति । यथा कर्मधारयलक्षणे तत्पुरुषान्यत्वं तथाऽत्रापि अव्ययीभावा-द्न्यत्वस्य निवेश्यत्वादिति भावः । कारिकाशेषचरणं व्याकुरुते स चायमिति ॥ ३५ ॥

तत्र-तेषु मध्ये । कारिकापूर्वार्द्धेन तद्धितार्थद्विगुं लक्षयन् परार्द्धेन परमतं निराकुर्वन् कारिकामाह—तद्धितार्थान्वितेति । विवृणोति यो द्विगुरिति । तथाच द्विगुत्वे सति यादृशानुपूर्वीप्रकारकज्ञानत्वं स्वाश्रयो तत्त्वेनोपस्थिततद्धितार्थोपस्थाप्ययादृशार्थविशेष्यकयादृशार्थप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशतद्धितार्थे तादृशार्थप्रकारकान्वयबोधे ( तद्धितार्थ )द्विगुत्वमिति निष्कृष्टार्थः । उदाहरति—द्विमुद्र इति । क्रीतस्य इत्यादिषष्ठ्यन्तानां षण्णां बोधन इत्यत्रान्वयः । व्युत्पत्तिवैशद्याय उदाहरणवैशद्यं दर्शितम् । लुप्तस्यैव ठगादीति । "द्विगोस्तद्धितस्यानपत्ये" इति सूत्रेण अनादेर्लुक् । परमतस्य निराकार्यत्वात् स्वोक्तस्य प्रामाण्यसम्पादनाय परिशिष्टकृतां मतेनेदमिति ।

रामभद्रीटीका।

व्ययीभावस्योक्तलक्षणसत्त्वादतिव्याप्तिरत आह—द्विगावयमिति । पूर्ववदिति । इहाप्यव्ययीभावभिन्नत्वेन विशेषणीयत्वादिति भावः । विधात्रयं दर्शयति—स चायमिति ३६

---

( १ ) अत्र समासस्यैव संस्कृतोऽर्थः, कपालपदस्यैव वा कपालसंस्कृतोऽर्थः, तत्र व्युत्पत्तिवैचित्र्याद्भेदेनैकदेशे कपाले पञ्चाभेदान्वयात् पञ्चाभिन्नकपालसंस्कृत इति शाब्दबोधः, तद्धितार्थस्य समासादिनाऽभिधानादुक्तार्थत्वान्न तद्धितार्थप्रत्यय इति जयरामपञ्चाननभट्टाचार्याः । किं स्वग्रे लक्षणावादिवैयाकरणमतखण्डनान्नैयायिकैः समासे शक्त्यस्वीकाराच्च नैतद्युक्तमिति जगदीशेनोपेक्षितमिति ध्येयम् ।

'उक्तप्रयोगेषु द्विगोरन्तिमनाम्नैव क्रीतादिरूपार्थो लक्ष्यते,न तु लुप्तछगादिरप्यपेक्ष्यतेऽतस्तद्धितार्थलाक्षणिकस्वान्त्यनामको द्विगुरेव तद्धितार्थद्विगुरि'ति फणिभाष्यमतन्तु न युक्तम् , असर्वगत्वात्—'पाञ्चपुरुषिरि'त्यादौ पञ्चानां पुरुषाणामपत्यस्य, 'पञ्चगर्गरूप्यो गौरि'त्यादौ पञ्चानां गर्गाणां भूतपूर्वस्य बोधने तद्धितेनैव स्वार्थस्यापत्यप्रभृतेरुपस्थापनात , 'द्विस्वर्णमुद्रः पशुरि'त्यादावुत्तरपदस्य शक्तिविरहेण क्रीताद्यर्थे लाक्षणिकत्वायोगाच्च ॥ ३६ ॥

[२]उत्तरपदद्विगुं लक्षयति--

स्वान्तर्निविष्टशब्दाभ्यां शब्दान्तरसमासगः।
यो द्विगुः शाब्दिकैरुक्तः स उत्तरपदद्विगुः॥ ३७॥

---

कृष्णकान्तीटीका ।

फणिभाष्यकृतां मतं दूषयितुमाह—उक्तप्रयागेष्वित्यादि । पूर्वपदस्य तादृशार्थलक्षकत्वेऽन्त्यपदस्य निरर्थकत्वापत्तेराह—अन्तिमेति । उपसंहरति—अत इति । स्वान्त्यनामकः—स्वघटकान्त्यनामकः। दूषयति—न युक्तमिति । असर्वगत्वात—स्थलविशेषेऽव्याप्तत्वात, कुत इत्याकाङ्क्षायामाह—पाञ्चपुरुषिरित्यादाविति । अपत्यस्येति बोधने इति परेणान्वयः। अपत्यप्रभृतेरुपस्थापनादिति । तथाच तत्र द्विगावव्याप्तिरिति भावः । ननु उक्तस्थले लक्षणया पुरुषापत्यादेरुपस्थापनात तदेकदेशे व्युत्पत्तिवैचित्र्येण पञ्चपदार्थस्यान्वयसम्भवादिणादिप्रत्ययस्याकाङ्क्षासम्पादकत्वान्नाव्याप्तिरत आह—द्विस्वर्णमुद्रः पशुरित्यादि । स्वर्णमुद्र इत्यस्य वाक्यतया शक्तिविरहादिति भावः । तद्घटकवर्णानां शक्तिमत्त्वेन तदेकतरवर्णस्य लक्षणया क्रीतादेर्बोधसम्भवात फणिभाष्यकृतां मते न कोऽपि दोष इति तु विभावनीयम् ॥ ३६ ॥

उत्तरपदद्विगुं लक्षयतीति । उत्तरपदद्विगुलक्षणानुकूलव्यापारवान् कारिका।

रामभद्रीटीका ।

तत्र—तेषुमध्ये ।

कारिकाशेषार्द्धं व्याकरोति—उक्तप्रयोगेष्विति । स्वान्त्यनामकः—स्वघटकान्त्यनामकः। स्वशक्यं दर्शयति—पाञ्चपुरुषिरित्यादिना। ननु तत्रापि पुरुषादिपदेनैव लक्षणयाऽपत्यादेरुपस्थापनात व्युत्पत्तिवैचित्र्येण पुरुषादिपदार्थैकदेशे पञ्चपदार्थस्याभेदेनान्वयसम्भवादिणादिप्रत्ययस्याकाङ्क्षासम्पादकमात्रत्वमतो नाव्याप्तिरत आह—द्विस्वर्णमुद्र इति । उत्तरपदस्य स्वर्णमुद्र इत्यस्य । शक्तिविरहेणेति । वाक्यत्वादिति शेषः ॥ ३६ ॥

यो द्विगुः स्वघटकनामभ्यां सह साकाङ्क्षनामान्तरेण समासस्यान्तर्गतः स उत्तरपदद्विगुः। यथा पञ्च गावो धनमस्येत्यादिविग्रहे 'पञ्चगवधनः(१) पुरुष' इत्यादौ बहुव्रीह्यादिनिविष्टः पञ्चगवादिः ॥ ३७ ॥

[३]समाहारद्विगुं लक्षयति--

**स्वार्थान्वितसमाहारलक्षकस्वान्त्यशब्दकः।**
**उक्ताभ्यामितरः किं वा समाहारद्विगुर्द्विगुः ॥३८॥**

स्वोपस्थाप्यार्थस्य समाहारलक्षको यदीयान्त्यशब्दः स द्विगुः समाहा-

कृष्णकान्तीटीका।

कार इत्यर्थः। विवृणोति—यो द्विगुरिति। तथाच द्विगुत्वाश्रयत्वे सति यः स्वाभिन्नसमासघटकत्वघटकान्यपदसाकाङ्क्षपदद्वयघटितस्तत्त्वमुत्तरपदद्विगुत्वमिति पर्यवसितमिति प्राञ्चः। तदसत्, स्वाभिन्नत्वस्य स्वघटितत्वस्य च वैयर्थ्यापत्तेः, परन्तु द्विगुत्वाश्रयत्वे सति स्वघटकनामद्वयसाकाङ्क्षनामान्तरघटितसमासघटकत्वं तथा। घटितत्वञ्च—तद्विषयकप्रतीत्यविषयत्वम्, घटकत्वञ्च—तद्विषयिताव्यापकविषयिताकत्वम्। लक्ष्ये लक्षणं सङ्गमयति—यथेति। द्विगुत्वसम्पादकतुल्याधिकरणत्वस्य घटकनामद्वयसाकाङ्क्षत्वस्य च व्यञ्जनाय तादृशविग्रहः प्रदर्शितः। धनमस्येत्यादीत्यादिपदात् पञ्च जना दासा यस्येत्यादिविग्रहपरिग्रहः, इत्यादावित्यादिपदात् 'पञ्चजनदास' इत्यादिपरिग्रहः। 'बहुव्रीह्यादी'त्यादिना स्थलान्तरीयबहुव्रीहिपरिग्रहः, न तु समासान्तरस्य कर्मधारयतत्पुरुषाव्ययीभावानां त्रिपदाघटितत्वात्, द्वन्द्वस्य त्रिपदघटितत्वेऽप्यभेदाबोधकत्वात् ॥ ३७ ॥

समाहारद्विगुं व्याख्यातुमुत्थापयति—समाहारद्विगुं लक्षयतीत्यादिना। प्रथमलक्षणं व्याचक्षाणः स्वार्थ इत्यस्यार्थमाह—स्वोपस्थाप्यार्थस्येति। अन्वितत्वं लक्षणे न निविष्टं किन्तु फलकथनमत एव विवरणे तत्परित्यक्तम्, तथाच द्विगुत्वाश्रयत्वे सति स्वोपस्थाप्यार्थसमाहारलक्षकान्त्यपदकत्वं समाहारद्विगुत्वमिति प्रथमलक्षणार्थः। तथाविधकर्मधारयेऽतिव्याप्तिवारणाय सत्यन्तम्। उत्तरपदद्विगावतिव्याप्तिवारणाय विशेष्यदलम्। पूर्वपदलक्षकपदघटितद्विगावतिव्याप्तिवारणाय अन्त्येति। ननु अन्त्यपदत्वस्य किञ्चिदपेक्षया पूर्वपदेऽपि सत्त्वात्तन्निवेशोऽपि तद्दोषतादवस्थ्यमिति चेन्न। स्वघटकपदाव्यवहितोत्तरत्वरूपान्त्यत्वस्य निवेश्यत्वात्, पूर्वपदघटकचरमव-

रामभद्रीटीका।

उत्तरपदद्विगुमिति। क्रमप्राप्तमिति शेषः ३७ ॥

(१) अत्र पञ्चगावो धनं यस्येति विग्रहेऽन्तर्वर्तिद्विगुमवलम्ब्य राजादित्वादच्प्रत्ययः, समुदायस्तु बहुव्रीहिः, पञ्चगवाभिन्नधनसम्बन्धीति च शाब्दबोधो बोध्यः।

रद्विगुः। (१)'पञ्चपुली'त्यत्र हि योगलभ्यानां पञ्चाभिन्नपुलानां समाहारः परस्थपुलशब्देन लक्ष्यते, न तु तत्र द्विगोः शक्तिरन्यलभ्ये शक्त्ययोगात्, अत एव न लक्षणापि शक्यसम्बन्धस्यैव लक्षणात्वेन वाक्ये तदसम्भवात्।

यदि च–'पञ्चपुली'त्यतः पञ्चानां पुलानामेव बोधो न तु तत्समाहारस्यापि, अत एव 'पञ्चपुलीं छिनत्ती'त्यादिकः प्रयोगः प्रमाणम्, अन्यथा समूहात्मनः समाहारस्य च्छिदाद्यसम्भवेन तदयोग्यत्वापत्तेः, पुलादेर्द्वित्वबहुत्वे-

कृष्णकान्तीटीका।

र्णाव्यवहितोत्तरत्वस्यान्त्यपदघटकादिवर्णे सत्त्वेऽपि पदत्वाश्रयाव्यवहितोत्तरत्वस्य पदत्वाश्रयेऽक्षतत्वात्, पदत्वस्य वर्णसमुदाये वृत्तित्वात्। लक्ष्ये लक्षणं सङ्गमयन् कारिकास्थस्वार्थशब्दस्य यथाश्रुतार्थपरित्यागे बीजमाह—पञ्चपुलीत्यादि। हि–यतः, परस्थः—स्वघटकपदोत्तरस्थः, तत्र–पञ्चपुलसमाहारे। अयोगादिति। तदेकदेशपञ्चपुलादेः पञ्चपुलादिशब्दशक्यत्वात्, समाहारमात्रे शक्तिस्वीकारे पञ्चपुलादेर्बोधासम्भवादिति भावः। इदमुपलक्षणम्—वाक्यत्वादित्यपि बोध्यम्। अत एव–तत्र द्विगोः शक्त्यभावादेव, तदसम्भवात्—शक्याप्रसिद्ध्या लक्षणाया असम्भवादित्यर्थः।

शङ्कते—यदि चेति, इति सूक्ष्ममीक्ष्यत इति परेणान्वयः। अत एव–पञ्चपुलीत्यत्र समाहारस्याबोधादेव। प्रमाणमिति। आकाङ्क्षायोग्यतादिमत्त्वादिति भावः। अन्यथा–तस्य समाहारबोधकत्वे, तदयोग्यतापत्तेः—'पञ्चपुलीं छिनत्ती'ति वाक्यस्यायोग्यतापत्तेरित्यर्थः। ननु पुलादेर्बहुत्वेन एकवचनप्रतिपाद्य एकत्वविशिष्टे कर्मताबोधने भवन्मतेऽपि तदयोग्यमित्यत आह–पुलादेरिति। आनुशासनिकमिति। तथा चाकाङ्क्षासम्पादकमेवैकवचनं न तु तदर्थस्य शाब्दबोधे भानमिति भावः। त-

रामभद्रीटीका।

लक्ष्ये लक्षणं योजयति पञ्चमूलीत्यादिना। तत्र—पञ्चमूलसमाहारे। शक्त्ययोगादिति। प्रकारान्तरालभ्यस्यैव शक्यत्वादिति भावः। अत एव—द्विगोः शक्त्यभावादेव, तदसम्भवात्–लक्षणाया असम्भवात्।

कारिकाशेषार्द्धं व्याकर्तुं सूत्रास्वरसं दर्शयति—यदि चेत्यादिना सूक्ष्ममीक्ष्यते इत्यन्तेन। ननु तत्र समाहारबोधे किं बाधकमत आह–अत एवेति। अन्यथा—पञ्चमूलादिसमाहारस्य बोधे। तदयोग्यत्वेति। पञ्चमूलीं छिनत्तीत्यस्याप्र-

(१) अत्र रामभद्रमतेन 'पञ्चमूली'ति पाठो बोध्यः। एवमग्रेऽपि। अत्र च पात्रादीभिन्नादन्तद्विगुत्वादीप्रत्ययो बोध्यः। द्विगुविशेषलक्षणपदार्थाः स्फुटतया नोक्ताः।

ऽप्येकवचनत्वानुशासनिकं दारादेर्बहुवचनवदुपपद्यते, न च द्रव्यप्राधान्ये 'पञ्चखट्वी'त्यादौ ह्रस्वो न स्यात्, गोशब्दस्येव स्त्रीप्रत्ययस्यापि समासान्त्यस्योपसर्जनस्यैव तद्विधानादिति वाच्यम् , समाहारसंज्ञकद्विगोरन्त्यस्य स्त्रीप्रत्ययस्य पृथगेव ह्रस्वविधिर्वक्तव्यत्वात् , प्रयोगानुसारित्वात् कल्पनायाः, 'पञ्चपाचकी'त्यादावव्याप्तिश्च, तत्रोत्तरपदस्य वाक्यत्वेन लक्षकत्वायोगात्—इति सूक्ष्ममीक्ष्यते, तदा पूर्वनिरुक्ताभ्यां तद्धितार्थोत्तरपदद्विगुभ्यां भिन्नद्विगुरेव समाहारद्विगुर्बोध्यः । एवञ्च द्विगोः कर्मधारयान्तर्गतत्वेऽपि न क्षतिरिति तु विभावनीयम् ॥ ३८ ॥

तत्पुरुषं लक्षयति—

**(१)यदीयेन सुबर्थेन युतयद्बोधनक्षमः ।**

---

कृष्णकान्तीटीका ।

रेव दृष्टान्तेन द्रढयति—दारादेर्बहुवचनवदिति । शङ्कते—न चेति । तद्विधानात्—ह्रस्वविधानात्, द्रव्यप्राधान्ये उपसर्जनत्वासम्भवादिति भावः । ननु पृथग्ह्रस्वविधेः कल्पने गौरवमत आह—पञ्चपाचकीति । बोध्य इति कारिकापरार्द्धव्याख्या । तथाच तद्धितार्थोत्तरपदद्विगुभिन्नो यो द्विगुः स समाहारद्विगुरित्यर्थः । ननु पञ्चाभिन्नपुलमात्रबोधने समाहारद्विगुसमासस्य कर्मधारयत्वापत्तिरत आह—एवञ्चेति । न क्षतिरिति । संख्यावाचिनामार्थविषयकबोधजनकत्वरूपोपाधिभेदमादायैव षड्धा विभागोपपत्तिरिति भावः ॥ ३८ ॥

रामभद्रीटीका ।

माणतापत्तेरित्यर्थः । ननु मूलादेर्बहुत्वेन एकान्तर्भावेन कर्मताबोधने स्वभावत एवायोग्यत्वात्तदापत्तिर्न समाहारबोधे बाधिकेत्यत आह—**मूलादेरिति** । तथाच न स्वभावात् अयोग्यत्वमिति भावः । **तद्विधानादिति** । ह्रस्वविधानादित्यर्थः । समाहारबोधने तु उपसर्जनतया ह्रस्वविधिर्निराबाध इति । नन्वेवं कल्पनागौरवमत आह—**पञ्चपाचकीति** । पूर्वनिरुक्ताभ्यामित्यस्य विशेषणं तद्धितार्थोत्तरेति । ननु तत्र पंचाभिन्नमूलमात्रबोधे कर्मधारयत्वापत्तिरत आह—**एवञ्चेति** । **न क्षतिरिति** । संख्यावाचिनामार्थविषयताशालिबोधजनकतारूपोपाधिभेदमादायैव षड्विधत्वसम्भवात् इत्याशयेन विभावनीयमित्युक्तम् ॥ ३८ ॥

---

(१) समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामपदकसमासत्वं तत्पुरुषत्वम् । 'पञ्चफली'त्यादिवादणाय सत्यन्तम् , 'नीलोत्पलादि' वारणाय लुप्तेत्यादि, 'अब्राह्मणमि'त्याद्यव्ययीभाववारणाय पूर्वेति, क्वचित् । एतन्मते तु यन्नामोत्तरसुबर्थावच्छिन्नयदर्थबोधजनकत्वरूपयोग्यत्वं तत्पुरुषत्वमिति श्लोकार्थो बोध्यः ।

**यः समासस्तस्य तत्र स तत्पुरुष उच्यते ॥ ३९ ॥**

यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः स तदर्थस्य तदर्थे तत्पुरुषः, न तु 'यन्नामोत्तरं यन्नाम यदर्थगतसुबर्थावच्छिन्नस्य यत्स्वार्थस्य बोधकं तदुत्तरं तन्नामैव तदर्थयोस्तत्पुरुषः' 'पूर्वकायोऽर्द्धपिप्पली'त्यादावव्याप्तेः। 'स्तोकपक्वे'त्यादौ क्रिया-

कृष्णकान्तीटीका।

क्रमप्राप्तं तत्पुरुषलक्षणं व्याख्यातुमुत्थापयति तत्पुरुषं लक्षयतीति। विष्णोति यदर्थगतेनेति। विशेषणे तृतीयाऽव्यञ्जनाय विशिष्टस्येत्युक्तम्। तस्य तत्र इत्येतयोर्विवरणं तदर्थस्य तदर्थे इति। तथाच यादृशानुपूर्वीप्रकारकज्ञानं यदर्थविशेषितसुबर्थावच्छिन्नयदर्थविशेष्यकान्वयबोधजनकं तदर्थविषयतानिरूपितसुबर्थविषयतानिरूपितयदर्थविषयताशालिबोधजनकमिति यावत्, तादृशानुपूर्वीमत्समासत्वं तदर्थस्य तदर्थे तत्पुरुषत्वमिति निष्कर्षः। राज्ञः पुरुष इति व्यासवारणाय समासत्वनिवेशः। स्वमते व्याससमासयोस्तुल्यार्थकत्वरक्षणाय राजपदस्य राजसम्बन्धे लक्षणास्वीकारात् नामार्थयोर्भेदान्वयस्य तत्पुरुषातिरिक्तस्थल एवास्वीकाराच्चासम्भवः। सुबर्थविषयता तु संसर्गविषयताऽन्या ग्राह्याऽतो विशेषणविभक्तेरभेदार्थकत्वेऽपि 'नीलोत्पलमि'त्यत्र नातिव्याप्तिः। तन्मते यदर्थविशेषितसुबर्थावच्छिन्नतादात्म्यसम्बन्धावच्छिन्नप्रकारताकयदर्थविशेष्यकबोधो निवेशनीय इति विशेषः। नानामतसाधारणैकलक्षणस्यासम्भवेऽपि न क्षतिः। वस्तुतस्तु तादृशसुबर्थविषयतानिरूपितयदर्थविषयतानिवेशादुभयसाधारण्यं सम्भवतीति ध्येयम्। कस्यचिन्मतं निरस्यति नत्विति। अव्याप्तेरिति। कायादिपदार्थे पूर्वादिपदार्थस्याबोधनादिति भावः। ननु 'स्तोकपक्वे'त्यादिद्वितीयातत्पुरुषेऽव्याप्तिः तज्जन्यबोधे सुबर्थस्याप्रकारत्वादित्यत आह—स्तोकेत्यादि। ननु तत्पुरुष इत्युक्तौ तदा कः समास इत्याकाङ्क्षा स्यादतः कर्मधारय एवेत्युक्तम्, एवकारेण तत्पुरुषव्यवच्छेदः।

रामभद्रीटीका।

तस्य तत्र इत्यस्य वृत्तिः—तदर्थस्य तदर्थे इति। तत्पुरुष इति। राजपुरुष इत्यत्र राजपदार्थगतसुबर्थसम्बन्धावच्छिन्नपुरुषपदार्थस्यान्वयबोधं प्रति राजपुरुष इत्यानुपूर्व्याः स्वरूपयोग्यतया लक्षणसङ्गतिः, ततो राजसम्बन्धवान् पुरुष इत्येवंप्रतीतिः, स्वमते नामार्थयोः समासादन्यत्र भेदेनान्वये निराकाङ्क्षत्वादिति भावः। कस्यचिन्मतं निरस्यति—नत्वित्यादिना। यन्नामोत्तरं—यन्नामोत्तरत्वविशिष्टम्, पूर्वकाय इत्यादौ कायस्य पूर्वं इत्यनुभवात् कायपदार्थे सुबर्थावच्छिन्नपूर्वपदार्थस्याबोधनादिति भावः। सुबर्थेनेत्यस्य व्यावृत्तिमाह-स्तोकपक्वेति। स्तोकं पक्तत्यौदीवमेह, कर्मधारयसुबर्थस्याप्रकारत्वादन्यथा तत्रातिव्याप्तेरिति भावः। ननु पक्तृपदार्थैकदेशे पाके स्तोकपदार्थ-

विशेषणैः कर्मधारय एव, 'महाकविर्महाविज्ञ' इत्यादौ कवित्वादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया तथात्वसम्भवात्। 'स्तोकं पक्वे'त्यादौ अमस्तादात्म्यवाचित्वे तु तत्पुरुषः सम्भवत्येव। 'क्रियाविशेषणैः समास एवाव्युत्पन्न' इति तु न देश्यम्, "स्तोकनम्रा स्तनाभ्या"मित्यादेः कालिदासाद्यैः प्रयुक्तत्वात्। द्विगौ कर्मधारये च शाब्दिकानां तत्पुरुषत्वव्यपदेशः पदसंस्कारार्थो गौणः॥ ३९॥

तत्पुरुषं विभजते—

---

कृष्णकान्तीटीका।

नन्वेकपदार्थेऽपरपदार्थस्याभेदसम्बन्धेनान्वयबोधजनकत्वाभावात् कुतः कर्मधारयत्वमित्यत आह—महाकविरित्यादि। तथात्वसम्भवात्-कर्मधारयत्वसम्भवात्, तथाच तत्र नामार्थत्वं नामजन्यबोधविषयतामात्रं निविष्टमिति भावः। क्रियाविशेषणपदोत्तरद्वितीयाया अभेदार्थकत्वमते कथं न तत्पुरुष इत्याकाङ्क्षायां तन्मते इष्टापत्तिमाह—स्तोकमित्यादि। तन्मते तादात्म्यस्यासंसर्गत्वेन तदर्थे तदर्थस्याप्रकारत्वेन कर्मधारयत्वासम्भवादिति भावः। ननु क्रियाविशेषणैः समास एव न स्वीक्रियत इत्यनर्थक एवैतावान् विचार इत्यत आह—क्रियाविशेषण इति। ननुक्ततत्पुरुषत्वस्य द्विगुत्वकर्मधारयत्वविरुद्धत्वा'न्महाराज' इत्यादेरदन्तता न स्यात् "प्रागुक्तो विधिस्तत्पुरुष एव" इति नियमादित्यत आह—द्विगावित्यादि। पदनिष्पत्त्यर्थं गौणो-भाक्तः। तत्र तत्पुरुषत्वं बहुव्रीहिद्वन्द्वाव्ययीभावान्यसमासत्वं, तत्पुरुषद्विगुकर्मधारयान्यतमत्वं वा निविष्टमिति भावः॥ ३९॥

विभाजकलक्षणानि व्याख्यातुमुपक्रमते-तत्पुरुषं विभजत इति। द्वितीया-

रामभद्रीटीका।

स्यान्वये निराकाङ्क्षत्वात् कर्मधारय एवासाधुरित्यत आह महाकविरिति। कवित्वादावित्यादिपदात् ज्ञानस्य परिग्रहः। तथा च प्रकृतमहच्छब्दस्य प्रकर्षवाचित्वात् प्रकृष्टकवित्वाद्याश्रय इत्यनुभवात् एकदेशान्वयेऽपि साकाङ्क्षत्वमिति भावः। तथात्वं-कर्मधारयत्वम्, इत्यादौ-इत्यादिविग्रहे, तत्पुरुषः सम्भवत्येवेति। उपाधेरसाङ्कर्यादिति भावः। अव्युत्पन्न इति। तथाच सुबर्थेनेति विशेषणमयुक्तमिति। इत्यादेरित्यादिना नितान्तक्षाम इत्यादेः परिग्रहः। प्रयुक्तत्वादिति। तथाच कर्मधारयवारणाय सुबर्थेनेति विशेषणमिति भावः। नन्वेवं 'तत्पुरुषावुभावि'त्यनुशासनविरोध इत्यत आह—द्विगाविति। व्यपदेशो-व्यवहारः। पदसंस्कारार्थ इति। अन्यथा 'प्रागुक्तो विधिस्तत्पुरुष एवे'ति नियमात् महाराजेति कर्मधारयसमासेऽदन्तता न स्यादिति भावः॥ ३९॥

एषस्तत्पुरुषः। एतस्य-तत्पुरुषस्य। ननु मिथो विरुद्धधर्मवत्तया विभागस्य साधुः

**द्वितीयादिसुबर्थस्य भेदादेव(१) च षड्विधः ।**
**क्रियान्वयी द्वितीयादेरर्थः प्रायोऽत्र योजितः ॥ ४ ॥**

'ग्रामगतः चैत्रनीतः ब्राह्मणदत्तः वृक्षपतितः चैत्रधनं मैत्रगतिः गृहस्थित' इत्यादौ द्वितीयादिसुबर्थस्य कर्मत्वकर्तृत्वादेर्बोधभेदादेतस्य द्वितीयातृतीयादितत्पुरुषत्वेन षड्भेदाः, स्वघटकैकपदार्थनिष्ठद्वितीयार्थावच्छिन्नापरपदार्थबोधकसमासादेर्धर्मषट्कस्य सुवचत्वात् ।

इयांस्तु विशेषो-यदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः, 'पीठं परितः, पुण्येन सुखं, शमाय विद्या, दण्डाद् घटः, गवां कृष्णा स-

---

कृष्णकान्तीटीका ।

दितत्पुरुषादीनां लक्ष्याणि दर्शयन् लक्षणानि विभाजकरूपाणि आह—ग्रामगत इत्यादि । ननु सुबर्थभेदो न तत्पुरुषविभाजकोऽतिप्रसङ्गादतः कारिकास्थसुबर्थबोधपरतया तत्पदं व्याचष्टे—सुबर्थस्येति । यदर्थगतेत्यादिबोधभेदात्–बोधघटिततत्तद्धर्मभेदात् 'बोध एव विशेषो यत्र' इति व्युत्पत्तेः । स्वनिरूपितयदर्थविशेष्यताकत्वं षष्ठ्यर्थः, तथाच यदर्थगतद्वितीयार्थावच्छिन्नविषयकबोधकसमासत्वं द्वितीयातत्पुरुषत्वम् । एवं तृतीयादितत्पुरुषत्वम्, तान्येव विभाजकानीति भावः । निष्कृष्टार्थमाह—स्वघटकैकेति । निष्ठेति । घटकेत्यर्थः, 'ग्रामगत' इत्यादौ ग्रामादिपदस्य स्वमते ग्रामकर्मतालक्षकत्वात् । केचित्तु—ननु मिथो विरुद्धधर्मवत्त्वस्य विभागस्य साधुत्वात् कथमेतदित्यत आह स्वघटकैकेति—इत्याहुः । धर्मषट्कस्य–विभाजकधर्मषट्कस्य ।

कारिकापरार्द्धं व्याकरोति–इयांस्त्विति । यद्यस्मात्, एतेष्विति अत्रेत्यस्य विवरणम् । धात्वर्थान्वय्येवेति । तथाच क्रियान्वयीति सावधारणनिर्देशः । इत्यपाठस्तु प्रामादिकः । द्वितीयायाः पदत्वेन तत्र पदार्थस्यान्वयासम्भवात् । क्रियान्वितार्थबोधकत्वमत्र क्रियान्वयित्वमिति केचित् । योजित इत्यस्यार्थमाह–घटक इति । एवकारव्यवच्छेद्यमाह–पीठं परित इति । कर्मप्रवचनीययोगे द्वितीया(२), सा तु न कार-

रामभद्रीटीका ।

स्वात् कथमेवमत आह—स्वघटकेति । आदिना स्वघटकैकपदार्थनिष्ठतृतीयाद्यर्थावच्छिन्नापरपदार्थविषयताशालिबोधकसमासत्वादेः संग्रहः ।

कारिकाशेषार्द्धं व्याकरोति—इयांस्त्विति । अत्रेत्यस्य व्याख्यानमेतेष्विति । प्रायःपदस्य व्यावृत्तिं दर्शयति पीठमित्यादिना । असाधुत्वादिति । कारकविभ-

---

(१) 'एव' इति रामभद्र सम्मतोऽत्र पाठो बोध्यः । प्रायशो धात्वर्थान्वितद्वितीयादिसुबर्थभेद एव द्वितीयादितत्पुरुषविशेषप्रयोजक इति श्लोकार्थः ।

(२) कर्मप्रवचनीययुक्ते द्वितीया २।३।८ इति पाणिनीयं सूत्रम् ।

म्पन्नक्षीरा, तिलेषु तैलमि'त्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् । 'वर्षसुखी लोष्टकाणः कुण्डलहिरण्यं घटान्यः कुवेरबलिः कर्मकुशल' इत्यादौ तु तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः ।

ननु 'ग्रामगत' इत्यत्र गतौ ग्रामकर्मत्वस्य 'राजपुरुष' इत्यत्र च पुरुषे राजसम्बन्धस्यावगमो न ग्रामादिपदेभ्यो लुप्तसुपः स्मरणात्, तल्लोपमजानतोऽप्यन्वयबोधात्, 'समृद्धं ग्रामगत' इत्यादितः समृद्धग्रामयोरभेदान्वयधीप्रसङ्गाच्च, 'सम्पन्नं दधि पश्ये'त्यादाविव तत्रापि नामार्थयोरभेदान्व-

कृष्णकान्तीटीका ।

कविभक्तिरिति भावः । 'पुण्येन सुखमि'त्यत्र हेतौ(१) तृतीया, 'शमाय विद्या' इत्यादौ तादर्थ्ये(२) चतुर्थी, तथाच एतासां कारकविभक्तित्वाभावात् न तदर्थमादाय तत्पुरुषः साधुरिति भावः । प्रायःपदस्य प्रयोजनमाह—वर्षसुखीत्यादि। विशेषविधेरिति । तथाच विशेषविधिं विना कारकविभक्त्यन्तर्भावेणैव तत्पुरुष इति भावः ।

शङ्कते—नन्विति । तल्लोपमजानत इति। ग्रामादिपदोत्तरत्वेन सुपोऽनुभवरहितस्येत्यर्थः, स्मरणहेतुभूतानुभवविरहेण स्मरणायोगादिति भावः । यथाश्रुतन्तु न सङ्गच्छते, तत्स्मरणे तल्लोपज्ञानस्याहेतुत्वादिति ध्येयम् । यदि च तादृशानुभवरहितस्यान्वयबोध एव न जायत इत्युच्यते तदाऽप्याह—समृद्धमिति । ननु नामार्थयोरभेदान्वये नाम्नोः समानविभक्तिकत्वस्य तन्त्रत्वात् प्रकृते ग्रामपदस्य सविभक्तिकत्वाभावात् कथमापत्तिरित्याशङ्क्य तत्र समानविभक्तिकत्वं न तन्त्रम्, अपि तु समानविभक्तिप्रतिसन्धानम्, अन्यथा 'सम्पन्नं दधि पश्ये'त्यादौ अभेदान्वयबोधो न स्यात्, तच्च प्रकृतेऽप्यक्षतमित्याह—सम्पन्नं दधीत्यादि । न च 'द्रव्ये सरसिजमि'त्यत्राभेदान्व-

रामभद्रीटीका ।

क्त्यन्तर्भावेणैव तत्पुरुषस्य साधुत्वादिति भावः । नन्वेवं 'वर्षसुखी'त्यादितत्पुरुषो न स्यात्तत्र द्वितीयादेः क्रियानन्वयित्वेन कारकविभक्तित्वादत आह वर्षसुखीत्यादि । तथाच विशेषविधिं विना कारकविभक्त्यन्तर्भावेणैव तत्पुरुषस्य साधुत्वनियमादिति भावः । विशेषविधिश्च प्रयोगानुरोधित्वात् कल्पनीय इति द्रष्टव्यम् ।

लक्षणासम्भवमाशङ्कते—नन्विति । स्मरणादिति । ग्रामकर्मत्वादेर्नावगम इत्यन्वयः । तल्लोपं—सुपो लोपम् । नन्वनुभवबलात् लुप्तरूपं प्रतिसन्धायैवान्वयबोधो, अन्यथा लक्षणाप्रतिसन्धानरहितस्यापि ततोऽर्थप्रत्यय इत्यपि बाधकं स्यादत आह समृद्धमिति । ननु अभेदान्वयधीकारणस्य समानविभक्तिकत्वस्य तत्राभावात् कथमेवमत आह—सम्पन्नमिति । तत्रापि—समृद्धं ग्रामगत इत्यत्रापि । अविशिष्टत्वा

(१) हेतौ २।३।२३ इति पाणिनीयं सूत्रम् । (२) 'तादर्थ्ये चतुर्थी वाच्या' इति वार्तिकम् ।

यबोधोपयुक्तस्य नाम्नोः सामानविभक्तिप्रतिसन्धानस्याविशिष्टत्वात्। नापि ग्रामादिपदस्य ग्रामकर्मत्वादिलक्षकत्वात्, अभेदान्यसम्बन्धेन नामार्थस्यान्वयबोधं प्रत्यनुकूलस्य नामोत्तरविभक्त्युपस्थाप्यत्वस्य तादृशप्रत्ययोपस्थाप्यत्वस्य वा गत्यादावसत्त्वात्। न च ग्रामादिपदलक्षितस्य ग्रामकर्मकादेरेव तत्र गत्यादौ तादात्म्येनान्वय इति साम्प्रदायिकानां मतमेव साम्प्रतम्। तत्पुरुषस्यापि समस्यमानपदार्थयोरभेदान्वयबोधकत्वे कर्मधा-

---

कृष्णकान्तीटीका।

यवारणाय वृत्तिशब्दान्यसमानविभक्तिकपदोपस्थाप्यत्वस्य नामार्थयोरभेदान्वयबोधे तन्त्रत्वस्य वक्तव्यत्वात् कथमेतदिति वाच्यम्। तस्य समानविभक्तिकनामार्थद्वयोरभेदान्वयस्थल एव तन्त्रत्वात्, प्रकृते ग्रामपदस्य समानविभक्तिकत्वाभावेनापत्तिसम्भवादित्यभिप्रायः। इदमत्रावधेयम्—नामार्थद्वयोरभेदान्वयस्थलमात्र एव तस्य तन्त्रत्वोक्तौ न कोऽपि दोषः, आपत्तिदानाय स्थलसङ्कोचस्यान्याय्यत्वादिति। पुनः शङ्कते—नापीति। लक्षकत्वादिति। ग्रामकर्मत्वादेरवगम इति पूर्वेणान्वयः, तथाच लुप्तविभक्तेः समासस्थले स्मरणाकल्पनादिति नोक्तापत्तिः। दूषयति—अभेदान्येति। विशेष्यतया अभेदातिरिक्तसंसर्गेण तन्नामार्थप्रकारकान्वयबुद्धौ तन्नामोत्तरविभक्त्युपस्थाप्यत्वस्य हेतुत्वादिति भावः। 'नीलोत्पलमि'त्यादौ व्यभिचारवारणायाभेदान्येति। 'पौत्र' इत्यादौ तद्धितार्थे भेदान्वयेन व्यभिचारादाह—तादृशेति। नामोत्तरेत्यर्थः। शङ्कते—न चेति। साम्प्रतमिति परेणान्वयः। दूषयति—तत्पुरुषस्यापीति। कर्मधारयत्वापत्तेरिति। एकार्थेऽपरार्थस्य तादात्म्येनान्वयबोधकक्रमिकनामद्वयस्यैव कर्मधारयत्वादिति भावः। ननु तत्पुरुषस्य कर्मधारयत्वेऽपि न क्षतिः, उपाधिभेदेनैव विभागोपपत्तेः, अत एव किञ्चिन्निष्ठसुबर्थानवच्छिन्नत्वं निवेशितम् इति यदि ब्रूयात्,

रामभद्रीटीका।

दिति। तथाचाभेदबुद्धौ न समानविभक्तिकत्वं तन्त्रमपि तु तत्वेन प्रतिसन्धीयमानत्वं, तच्च तत्राप्यस्ति 'संपन्नं दधिपश्ये'त्याद्यनुरोधात्, एवं च निरुक्तबोधने ग्रामगतश्चैत्र इत्यादेः स्वरूपायोग्यत्वादसम्भव इति भावः। लक्षकत्वादिति। ग्रामकर्मत्वादेरवगम इति पूर्वमनुषज्यते। शङ्कां निरस्यति—अभेदेति। विशेष्यतया अभेदातिरिक्तसंसर्गकतन्नामार्थप्रकारकान्वयबुद्धौ अनुकूलस्य तन्नामोत्तरविभक्त्युपस्थाप्यत्वस्येत्यर्थः। नीलोत्पलमित्यादौ अभेदान्वये नील नामोत्तरविभक्त्युपस्थाप्यत्वाभावादाहाभेदान्येति। औपगवः पुमान् पौत्रः पुत्रीयती'त्यादौ तद्धिताद्यर्थे उपगुपुत्रादेरन्वये व्यभिचारादाह—तादृशेति। तत्र—ग्रामगत इत्यत्र। ननु तत्पुरुषस्यापि कर्मधारयत्वे न क्षतिरुपाधिभेदेन भेदव्यवहारसम्भवादत एव कर्मधारयनिरुक्तौ किञ्चिन्निष्ठसुबर्थानवच्छिन्नत्वं निवेशितमिति यदि उच्यते तदाऽप्याह—

रयत्वापत्तेः, ग्रामं गतः राज्ञः पुरुष इत्यादिविग्रहस्य समासतुल्यार्थकत्व-हान्यापत्तेश्चेति चेन्न ।

प्रत्ययान्ततत्तन्नामार्थस्यैव भेदेनान्वयबोधं प्रति तत्तन्नामोत्तरप्रत्ययोपस्थाप्यतायास्तन्त्रत्वोपगमेन 'ग्रामगत' इत्यादौ ग्रामादिपदलक्षितस्य ग्रामकर्मत्वादेर्गत्यादौ भेदेनान्वये बाधकाभावात् । न चैवं 'गतो ग्रामे'त्यत्रापि ग्रामपदलक्षितस्य ग्रामकर्मत्वादेर्गत्यादौ भेदेनान्वयबोधप्रसङ्गः, प्रत्ययान्तान्यतत्तन्नामोपस्थाप्यार्थस्यान्वयबोधसामान्यं प्रत्येवोत्सर्गतस्तादृशतत्तन्नामोत्तरनामोपस्थाप्यत्वस्य हेतुत्वेन तदसम्भवात् । अत एवा'ऽर्द्धपिप्पलीच्छेद' इत्यादौ पूर्वपदप्रधानत्वेनानुशिष्टस्य तत्पुरुषादेरन्त्यपदार्थानां पिप्पलीप्रभृ-

कृष्णकान्तीटीका ।

तत्राऽप्याह-ग्राममित्यादि । हान्यापत्तेश्चेति । विग्रहाधीनबोधे ग्रामकर्मत्वादेरप्रकारत्वादिति भावः । इदञ्च व्याससमासयोस्तुल्यार्थकत्ववादिवैयाकरणमतानुसारेण ।

समाधत्ते--चेन्नेति । तन्त्रत्वेति । कार्यकारणभावस्य फलानुरोधित्वादिति भावः । बाधकाभावादिति । समासघटकनाम्नः प्रत्ययान्तत्वाभावादिति भावः । शङ्कते--न चैवमिति । एवं-कार्यतावच्छेदकघटकनाम्नि प्रत्ययान्तत्वनिवेशे । प्रसङ्ग इति । तत्र ग्रामपदस्य प्रत्ययान्तत्वाभावेन तादृशबोधस्य निरुक्तकार्यतावच्छेदकानाक्रान्तत्वादिति भावः । विशेष्यतया प्रत्ययान्तान्यतत्तन्नामार्थप्रकारकान्वयबोधं प्रति बाधकं विना प्रत्ययान्तान्यतत्तन्नामोत्तरनामोपस्थाप्यत्वस्य हेतुत्वं स्वीकृत्य समाधत्ते-प्रत्ययान्तान्येत्यादि । बाधकं विनेत्यस्य फलमाह---अत एवेति । बाधकं विनेति निवेशादेवेत्यर्थः । पिप्पलीपदस्य प्रत्ययान्तान्यत्वरक्षार्थं छेद इति । बाधकव्यञ्जनार्थं पूर्वपदप्रधानत्वेनानुशिष्टस्येति । तथाच तत्र तदन्वये तादृशानुशासनमेव

रामभद्रीटीका ।

ग्राममिति । तथाच ग्रामं गत इत्यादौ ग्रामकर्मत्वादेर्ग्रामगत इत्यादौ ग्रामकर्मकादेः प्रकारतया भानान्न तयोस्तुल्यार्थत्वमिति भावः ।

बाधकाभावादिति । तथाच समासे ग्रामादिपदस्य प्रत्ययान्तत्वाभावादेव तादृशान्वये बाधकाभावात् नासम्भवः । नचेति । प्रसङ्ग इत्यनेनान्वयः । एवं—निरुक्तनियमाङ्गीकारे । अन्वयबोधसामान्यमिति । विशेष्यतासम्बन्धेनेत्यादि । उत्सर्गतो-बाधकं विना । तादृशेति । प्रत्ययान्तान्येत्यर्थः । उत्सर्गत इत्यस्य फलमाह—अत एवेत्यादिना । इत्यादावित्यादिना पूर्वकायरूपमित्यस्य संग्रहः । प्रत्ययान्तान्यत्वसम्पत्तये छेद इत्युक्तम् । पूर्वपदप्रधानत्वेन-पूर्वपदार्थविशेष्यकबोधजनकत्वेन ।

तीनामर्द्धाद्यर्थे 'घटपटमठानामि'त्यादौ च सर्वपदप्रधानत्वेन द्वन्द्व-स्यानन्त्यपदार्थानां घटादीनां सुबर्थेऽन्वयः, तथा 'बहुगुडो द्राक्षे'त्यादौ गु-ड़ादीनामपि बहुजर्थे प्रकृत्यर्थस्येपदसमासौ नाम्नः प्राग्बहुचो विधानादिति ।

ननु यदि नामार्थयोरपि भेदेनान्वयो व्युत्पन्नस्तर्हि 'ग्रामगत' इत्यादौ कर्मत्वादिसंसर्गेण ग्रामादेरेव गत्यादावन्वयोऽस्तु, कृतं ग्रामादिशब्दस्य ग्रामकर्मत्वादिलक्षणयेति चेत्। सत्यम्, विग्रहवाक्यानां समाससमानार्थक-त्वरक्षणाय तत्र लक्षणास्वीकारात्। माऽस्तु वा ग्रामादिपदस्य तत्कर्मत्वादौ लक्षणा, कर्मत्वादिसंसर्गेणैव ग्रामादेर्गत्यादावन्वयसम्भवात्तथापि न क्षतिः, 'ग्रामं गत' इत्यादिविग्रहस्यापि कर्मत्वार्थकद्वितीयाद्यनुसन्धानवशा(१)देव क-र्मत्वादिसंसर्गेण गत्यादौ ग्रामाद्यन्वयबोधकतया समाससमानार्थकत्वसम्भवात्, 'ग्राममि'त्यादौ कर्मत्वादिधर्मिकान्वयबोधानुरोधेन द्वितीयादेः कर्मत्वाद्यर्थक-

---

कृष्णकान्तीटीका।

बाधकमिति भावः। अर्द्धाद्यर्थे इति। अन्वय इति परेणान्वयः। ननु तत्तन्नामा-व्यवहितनामोपस्थाप्यत्वस्य हेतुत्वोक्तौ न कोऽपि दोषः, अव्यवहितत्वं पूर्वोत्तरसाधारणं कथञ्चिन्निर्वाच्यमित्यतः स्थलान्तरमाह—घटपटमठानामित्यादावित्यादि। सर्व-पदप्रधानत्वेनेति कथनात् अनन्त्यपदार्थानां सुबर्थेऽन्वयस्यावश्यकत्वं सूचितम्। ननु सुबर्थान्यविशेष्यतया प्रत्ययान्तान्यतत्तन्नामोपस्थाप्यार्थप्रकारकान्वयबोधसामान्यं प्रति तत्तन्नामाव्यवहितनामोपस्थाप्यत्वस्य हेतुत्वोक्तौ न कोऽपि दोष इत्यत आह—तथेति। अन्वय इत्यर्थः। विधानादिति। तथाचात्र सुबर्थबहुजर्थेषु तत्तन्नामोत्तर-नामोपस्थाप्यत्वाभावेनोत्सर्गत इत्यस्या निवेशे व्यभिचारः स्यादिति भावः।

शङ्कते—नन्वित्यादि। समाधत्ते— चेत् सत्यमिति। विग्रहस्थले कर्मत्वादी-नां संसर्गस्याभानादिति भावः। कर्मत्वादिसम्बन्धेन ग्रामादेरन्वयस्वीकारेऽपि विग्र-हसमासयोस्तुल्यार्थकत्वं सम्पादयति—न क्षतिरिति। लक्षणे सुबर्थप्रकारकत्वस्या-निवेशादिति भावः। अनुसन्धानं—समभिव्याहारः। सम्भवादिति। विभक्त्यर्थ-स्य प्रकारतया भानानियमादिति भावः। नन्वेवं कर्मत्वार्थकत्वं द्वितीयाया अफलमि-

रामभद्रीटीका।

पाचकधनमित्यादौ पाचकादिशब्दस्य वाक्यत्वेन लक्षणायोगात् अव्याप्ति-रत आह—माऽस्तुवेति, लक्षणान्वितम्। नन्वेवं व्याससमासयोस्तुल्यार्थकत्वं व्याह-न्येतेत्यत आह—ग्राममित्यादि। उपसन्दानं—समभिव्याहारः। ननु तर्हि द्वि-

---

(१) रामभद्रमतेनाऽत्र 'उपसन्दानवशाद्' इति पाठो द्रष्टव्यः।

त्वात् । अत एव 'ऽघटः पट' इत्यादावन्यस्य, 'असुरो दैत्य' इत्यादौ विरोधिनः, 'अनिक्षुः शर' इत्यादौ सदृशस्य, 'अब्राह्मणो वार्द्धुषिक' इत्यादावपकृष्टस्य, 'अनुदरमुदरन्तरुण्या' इत्यादौ स्वरूपस्य वाचकेन नञ्निपातेन स्वार्थे प्रतियोगित्वादिसम्बन्धेनैव घटादेरनुभावनेऽपि तत्रत्यतत्पुरुषे नाव्याप्तिः। पटस्याभाव इत्यर्थे प्रसज्य(ज्य)नञा अव्ययीभाव एव समासः प्रमाणम्, तेना'पटं वर्त्तत' इत्याद्येव तत्र प्रयोगः, तत्पुरुषस्योत्तरपदलिङ्गकत्वनियमात्

---

कृष्णकान्तीटीका ।

त्यत आह—ग्राममित्यादाविति । अत एव-लक्षणे विषयत्वमात्रनिवेशादेवेत्यर्थः । केचित्तु लक्षणान्तरपरित्यागबीजतयैव तद्वर्णयन्ति, तन्मन्दम्—तद्बीजस्य पूर्वकाय इत्यादावप्रसङ्गस्य पूर्वमेव दर्शितत्वात् । अन्यस्येत्यादि षष्ठ्यन्तपञ्चकस्य वाचकेन नञ्निपातेन इत्यत्रान्वयः, तस्य चानुभावनेऽपीत्यत्रान्वयः । स्वार्थे-नञर्थेऽन्यादौ, प्रतियोगित्वादित्यादीना कर्मत्व-निरूपितत्वा-ऽऽधेयत्व-तादात्म्यानां परिग्रहः । घटादेरित्यादिना असुरेक्षुब्राह्मणोदराणां परिग्रहः । विरोधिनः-द्वेषिणः । सदृशस्येति। शरे इक्षुसादृश्यं मधुररसवत्त्वेन बोध्यम्। 'अब्राह्मणो वार्द्धुषिक' इत्यादौ ब्राह्मणवृत्तिप्रकर्षरहित इत्यर्थः। ननु शूद्रेऽपि तादृशप्रयोगः स्यात् ब्राह्मणवृत्तिप्रकर्षाभावस्य तत्रापि सत्त्वादिति चेन्न । अपकृष्टस्य तादात्म्येन ब्राह्मणादावन्वयात् न तथा प्रयोगः। नाव्याप्तिरिति । अन्यथा प्रकारतानिविशेऽव्याप्तिः स्यादिति भावः । ननु नञर्थस्य षड्विधत्वात् कथं पञ्च प्रयोगा दर्शिता इत्याकाङ्क्षायामाह—पटस्याभाव इति । कथन्तानिवृत्त्यर्थमाह—तेनेति । तत्पुरुषेऽपि तादृशः प्रयोगः कथं न स्यादित्यत आह—तत्पुरुषस्येति । तथा च तत्पुरुषत्वे पुंलिङ्गत्वापत्ति-

रामभद्रीटीका ।

तीयादेः कर्मताबोधकत्वे किं मानमत आह—ग्राममित्यादाविति । समाससमानार्थकत्वं-समाससमानविषयताशालिबोधजनकत्वम्, नतु प्रकारान्तर्भावोऽतोऽपि तन्नियमोपपत्तेरिति ध्येयम् । अतएव-द्वितीयकल्पस्यादृतत्वादेव । अपकृष्टस्येति । 'द्रौणिर्मर्यादया हीनो ब्राह्मणो नैष दुर्मतिरि'त्यादि प्रयोगदृष्ट्याऽपकर्षार्थकत्वं नञाभिहितम् इति भावः । प्रतियोगित्वादीत्यादिना विरोधित्वादिसंग्रहः । एवकारेण प्रकारविधया भाननिरासः । नाव्याप्तिरिति । अन्यथा तेषु प्रतियोगित्वादिसम्बन्धेन घटादिभेदविशिष्टाभिन्नपटादिरित्यन्वयस्यानुभविकत्वादव्याप्तिः स्यादिति भावः । एवं च लक्षणे सुबर्थावच्छिन्नत्वं सुबर्थविषयतामात्रं न तु प्रकारतापर्यन्तमित्यवधेयम् । अपटमित्यव्ययीभावेऽतिव्याप्तिस्तत्रापि सम्बन्धविधया प्रतियोगित्वस्य भानादत आह—पटस्याभाव इति । अव्ययपूर्वभागकत्वे सति स्त्रीलिङ्गरहितसमासस्यैव अव्ययीभावत्वात्, तथाच तदन्यत्वं लक्षणे प्रवेश्यम् इति नाव्याप्तिरिति भावः । नियमादिति ।

इति वृद्धाः ।

प्रसह्य(ज्य)नञाऽप्यपट इत्यादिकस्तत्पुरुष एव साधुर्नाव्ययीभावः, नञ्तत्पुरुषविधेस्तदपवादकत्वात्, अत एव "वादिनामविवाद इत्यादिकः किरणावल्यादौ पुंसि प्रयोग" इति तु पक्षधरमिश्राः । युज्यते चोत्तरः कल्पः । न चेदेवं —

दर्शिते राजमातङ्गास्तस्यैवामी तुरङ्गमाः ।
चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना ॥

इत्यादौ राजसम्बन्धादे राजादिपदलक्षकत्वे तदेकदेशस्य राजादेस्तदा

---

कृष्णकान्तीटीका ।

रिति भावः ।

ननु अव्ययपूर्वभागकत्वे सति स्त्रीलिङ्गरहितसमासस्यैवाव्ययीभावत्वात् अपटमित्यव्ययीभावेऽतिव्याप्तिरेवेति तद्वारणायाव्ययीभावान्यत्वं लक्षणे निवेशनीयं तदपेक्षया तस्य तत्पुरुषत्वस्वीकार एवोचितः, उपाधेयसङ्करेऽप्युपाध्यसङ्करात् विभागव्याघातविरहेण तत्राव्ययीभावत्वमपि । न चैवं तत्पुरुषस्योत्तरपदलिङ्गकत्वनियमो भज्येतेति वाच्यम् । नियमभङ्गभयस्य तत्पुरुषत्वस्थितावबाधकत्वात्, अकारणमित्यस्योभयात्मकत्वे बाधकाभावाच्च, इत्यतोऽव्ययीभावापवादकत्वं तत्पुरुषस्य स्वीकृत्य लक्षणे तदन्यत्वं न निवेश्यते इत्यभिप्रायेणापट इति पुंल्लिङ्गप्रयोगस्यैव साधुतामभिदधतां मिश्राणां मतमाह—प्रसह्यनञापीत्यादिना । तस्य तदपवादकत्वे प्रमाणमाह—अत एवेत्यादिना । तथाच वृद्धमतापेक्षया एतन्मतस्य सौष्ठवदर्शनेन स्वस्यापि मिश्रमते निर्भरो व्यञ्जित इति भावः । तत्पुरुषे द्वितीयाद्यर्थस्य सम्बन्धविधया भानकल्पे युक्त्यन्तरमाह—युज्यते चेति । न चेदेवमिति । तत्पुरुषे द्वितीयाद्यर्थस्य सम्बन्धविधया भानं यदि न तदेत्यर्थः । तस्यैव—राज्ञ एव, तत्र—ग्रामे, राजसम्बन्धादेरित्यादिना ग्रामकर्मत्वादेः परिग्रहः, राजादीत्यादिना ग्रामादिपरिग्रहः, एवमग्रेऽपि । तदेकदेशस्य—राजादिपदलक्ष्यार्थैकदेशस्य,

रामभद्रीटीका ।

तत्पुरुषे ह्येतदापत्तेः । अव्ययीभावभिन्नत्वं न विशेष्यमित्याशयेनाह—प्रसज्येति । तदपवादकत्वात्—अव्ययीभावापवादकत्वात् । ननु 'अपट' इत्यत्र पर्युदासनञा तत्पुरुषो न तु प्रसज्यनञेति यदि ब्रूयात्तदाह—अत एवेति । पर्युदासनञा तत्पुरुषस्वीकारे विवादभेदस्य वादिवृत्तित्वात्तल्लिखनस्योन्मत्तप्रलपितत्वापत्तेरिति ध्येयम् । द्वितीयकल्पे युक्त्यन्तरमाह—युज्यत इति । कर्मत्वादेः सम्बन्धविधया द्वितीयादितत्पुरुषे भानकल्प इत्यर्थः । तदेकदेशस्य—राजादिपदलक्ष्यार्थैकदेशस्य, तदा—तच्छब्देन । विशेषणविधया पूर्वो-

परामर्शो न स्यात्, विशेष्यविधया वृत्त्या पूर्वोपस्थापितस्यैवार्थस्य परामर्शकत्वात् तदादिशब्दानाम्,

न हि 'प्रजावतीयं मे त्वं तस्मै देहि कम्बलम् ।
नीलो मणिर्गुणः सो'ऽत्र भ्रात्रादिर्बोध्यते तदा ॥

कृष्णकान्तीटीका।

तदा-तच्छब्देन, कुत इत्याकाङ्क्षायामाह-विशेष्यविधयेत्यादि। "भूतलं घटवत् अत्र शब्दो वैशेषिको गुणः" इत्यादौ करणत्व (समवाय?) सम्बन्धेन पूर्वोपस्थापितस्य गगनस्य तदा परामर्शापत्तेरतो वृत्त्या इत्युक्तम् । "कीर्तिस्तस्यैव सर्वत्र निर्मलज्ञानवान् कविः" इत्यादौ तच्छब्दस्य कविपरामर्शकत्ववारणाय पूर्वेति । न च योजनाव्यत्यासेन यत्पदाध्याहारेण च ततस्तत्परामर्शकत्वसम्भवादुक्तनियमो व्यभिचारीति वाच्यम् । तत्र तत्र नियमसङ्कोचात् । अत्र श्रीपतिसंवादमाह—न हीति । बोध्यत इति परेणान्वयः । इयं-मे भ्रातृजाया, तस्मै-भ्रात्रे, स-मणिः, भ्रात्रादीत्यादिना मणिपरिग्रहः । इदमापाततः, तच्छब्दस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नशक्ततया तात्पर्यादिसत्त्वे तत्र तत्र तादृशबोधो भवत्येव, अन्यथा "पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा" इत्यादावसङ्गत्यापत्तेर्दुरुद्धरत्वात् । वस्तुतस्तु विशेष्यविधया इत्यस्य वृत्तिज्ञानविशेष्यविधया इत्यर्थः । पूर्वोपस्थापितस्यैवेति एवकारो भिन्नक्रमे, तथा च वृत्तिज्ञानविशेष्यविधयैव पूर्वोपस्थापितस्येत्यर्थः । तथा च तदादिशब्दानां पूर्वोपस्थापितस्य पदार्थैकदेशस्य परामर्शकता नास्तीत्यभिप्रायः । इदमपि तदादेः प्रक्रान्तत्वावितावादिनां प्राचां मतमालम्ब्योक्तम्, तदादेर्बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नशक्तिवादिनां नव्यानां मते तु पूर्वोपस्थित्यादेरनपेक्षणात् । तत्र प्राचीनसंवादमाह—न हीत्यादि । नहीत्यस्य बोध्यते इत्यत्रान्वयः । तदा-तच्छब्देन, भ्रात्रादेः पदार्थैकदेशत्वादिति । न चैवं "नीलो मणिर्गुणः सोऽत्र" इत्यादौ मण्यादेः पदार्थैकदेशत्वाभावेन तदादेस्तत्परामर्शकतानिषेधः प्राचामसङ्गत इति वाच्यम् । तत्र मणिपदस्य मणिसम्बन्धिनि लाक्षणिकतया मणेरपि पदार्थैकदेशत्वात् । न च स्वमते तत्पुरुषे लक्षणाविरहात् प्राचीनकारिकाया अपि स्वयमुत्थापनमसङ्गतमिति वाच्यम्, स्वमते भ्रात्रादिरित्यादिपदेन नीलगुणस्य परामर्शात्, अनुपपत्तिविरहान्नीलपदस्य नीलगुणविशिष्टपरतया नीलगुणस्य पदार्थैकदेशत्वात् । न च 'नीलो मणिगुणः सोऽत्र' इत्येव पाठः सम्प्रदायसिद्धः, तत्र गुणपदस्य नीलगुणपरत्वात् । एतेन विशेष्यविधया इत्यस्य यथाश्रुतार्थमभिप्रेत्य शक्तिविचारे गदाधरभट्टाचार्येण "पटोलपत्रं पित्त-

रामभद्रीटीका ।

पस्थापितार्थस्य परामर्शकत्वं नानुभवासिद्धं तदादेरित्यत्र श्रीपतिसंवादमाह-नहीति । बोध्यत इत्यन्वयः । प्रजावती-भ्रातृजाया, तस्मै-भ्रात्रे, तदा-तच्छब्देन ।

नन्वेवंरीत्या "निषादस्थपतिं याजयेदिति" श्रुतौ निषादानां स्थपतिरिति व्युत्पत्त्या न तत्पुरुषः, परन्तु निषादः स्थपतिरित्यर्थे कर्मधारय एवेति सिद्धान्तो व्याहन्येत, तत्पुरुषे भक्तिभिया हि तत्र कर्मधारयस्वीकारस्तन्मूलको निषादस्याधानेऽपूर्वविद्याप्रयोगश्च कल्प्यते, कल्प्यते च निषादीयतत्तदध्ययनेऽपूर्वंनिषेधविधिबाधात् 'स्त्रीशूद्रौ नाधीयतामि'तिऽश्रुतौ तत्तदध्ययनेतराध्ययनपरत्वं धातोः, शूद्रपदस्य त्रैवर्णि-

कृष्णकान्तीटीका।

त्व'' मित्यत्र विशेषणतया उपस्थितस्य पटोलस्य परामर्शकत्वेन जगदीशलिखनमसंगतमि''त्युक्तं तदपि प्रत्युक्तम्, अत एव बहुव्रीहिलक्षणविचारावसरे लक्षणाद्वयस्वीकर्तृमतदूषणे "चित्रगुः पुरुषस्तस्याः सञ्चारोऽतिमनोहरः" इत्यादौ तदादेर्गवादिपरामर्शकत्वापत्तिः, पदार्थैकदेशपरामर्शकताया एव तदादेरव्युत्पन्नत्वादित्यनेन स्वयमेव स्पष्टोक्तम्।

शङ्कते—नन्विति। एवं—तत्पुरुषे लक्षणाविरहे, सिद्धान्तो—मीमांसासिद्धान्तः। व्याहन्येतेति। कथं व्याघात इत्याङ्कायामाह—तत्पुरुष इति। भक्तिर्लक्षणा, हि-यतः, तत्र—निरुक्तश्रुतौ, तन्मूलकः-कर्मधारयस्वीकारमूलकः। प्रयोग इति परेणान्वयः। अधाने—ग्रहणे, अपूर्वाविद्याप्रयोगः—अप्राप्तवेदविद्याध्ययनम्, कल्प्यते-विधिशेषतयाऽनुमीयते। कल्पान्तरमाह—कल्प्यते चेति। श्रुताविति सप्तम्यर्थो घटकत्वम्, अन्वयश्चास्य धातोरित्यनेन, तथा च निरुक्तश्रु तघटकधातोर्निषादीयतत्तदध्ययनेतराध्ययनपरत्वं लल्प्यते वक्तुरभिप्रायविषयतयाऽनुमीयत इत्यर्थः। नन्वेवं निषादस्याध्ययनेऽपि न निषेधविधिबाधः स्त्रीशूद्रयोरेव तन्निषेधादित्यत आह—शूद्रपदस्येति। त्रैवर्णिकेत्यादि। ब्राह्मणक्षत्रियवैश्यान्योपलक्षकत्वादित्यर्थः। न च शूद्रपदस्य त्रैवर्णिकान्यपरत्वेनैवोपपत्तौ किं धातोरध्ययनविशेषपरत्वकल्पनेनेति वाच्यम्। तथा सति निषादस्य वेदसामान्याध्ययनाधिकारापत्तेः। ननु तत्पुरुषे लक्षणाविरहेऽपि

रामभद्रीटीका।

द्वितीयकल्पोपरि शङ्कते—नन्वेवमिति। एवं—तत्पुरुषे लक्षणाविरहे। सिद्धान्तो—मीमांसकसिद्धान्तः। भक्तिः—लक्षणा। तत्र—निषादस्थपतिरित्यत्र। तन्मूलकः—कर्मधारयस्वीकारमूलकः। आधाने—ग्रहणे। अपूर्वविद्याप्रयोगो—अप्राप्तवेदविद्याध्ययनम्। ननु तत्र (यद्यत्र?) कर्मधारयस्तदा 'स्त्रीशूद्रौ वेदं नाधीयेताम्' इत्यादिश्रुतिविरोधः। न च निषादेतरस्त्रीशूद्रयोरध्ययननिषेधकमिदमिति वाच्यम्। निषादस्यापि वेदसामान्याध्ययनापत्तेरत आह—कल्प्यते चेति। धातोरिति। अधिपूर्वस्येण्धातोरित्यर्थः। श्रुतिघटकस्येत्यादिः। नन्वेवं निषादस्याध्ययनेऽपि न निषेधबाधः कुतस्तत्तदध्ययनेतराध्ययनपरत्वं धातोरत आह-शूद्रपदस्येति। उक्तश्रुतिघटकेत्यादिः। त्रैवर्णिकान्येति। ब्राह्मणां

कान्योपलक्षकत्वात् । यदि च कर्मधारय इव तत्पुरुषेऽपि न लक्षणा, तदा तत्पुरुष एव तत्रोचितस्त्रैवर्णिकस्यैव निषादीयस्थपतित्वेन प्राप्तावपूर्व-(१)विद्याप्रयुक्तेस्तन्मूलकानिषेधविधिसङ्कोचस्य चाकल्प्यत्वादिति चेन्न ।

तत्पुरुषे लक्षणापक्षेऽपि किमिति कर्मधारय एव तत्राभ्युपेयते न तु तत्पुरुषः, निषादानां स्थपतिरिति व्युत्पत्त्या निषादस्थपतिपदान्निषाद-सम्बन्धवत्त्वेन स्थपत्यनुभवसहस्रस्य सर्वसिद्धत्वेन तदनुरोधाल्लक्षणायाः

---

कृष्णकान्तोटीका।

कथमेतत् सर्वं नोपपद्यत इत्यत आह—यदि चेत्यादि । तत्र-निषादस्थपतिमि-त्यत्र । औचित्ये हेतुमाह—त्रैवर्णिकस्यैवेति । एवकारेण तदन्यस्य व्यवच्छेदः । प्राप्ताविति । त्रैवर्णिकोऽपि निषादानां स्थपतिर्भवितुमर्हतीति भावः । अपूर्ववि-द्याप्रयुक्तेरिति—अकल्प्यत्वादिति परेणान्वयः, त्रैवर्णिकत्वेऽधिकारित्वस्य प्राप्त-त्वादिति भावः । तन्मूलकेति । अपूर्वविद्याप्रयुक्तिकल्पनामूलकेत्यर्थः । निषेधविधि-सङ्कोचस्य-निरुक्तश्रुतिवटकधातोरध्ययनविशेषपरत्वस्येत्यर्थः । तथा च तत्र तत्पुरुष-स्वीकारे कल्पनालाघवमेव बीजमिति तादृशसिद्धान्तो व्याहत एवेति पूर्वपक्षो निर्व्यूढः ।

समाधत्ते—तत्पुरुष इति । किमिति । तत्पुरुषे लक्षणासत्त्वेऽपि अपूर्वविद्या-प्रयुक्तेर्निषेधविधिसङ्कोचस्य चाकल्प्यत्वेन लाघवस्याक्षततया कर्मधारयापेक्षया त-त्पुरुषस्यौचित्यमेवेति तत्पुरुषत्यागस्य निर्बीजतया भवन्मतेऽपि तुल्यत्वमिति भावः । ननु तत्पुरुषे लक्षणायाः कल्प्यत्वमेव तत्त्यागबीजमित्यत आह:—निषादानामिति । अनुभवसहस्रस्येति तादृशानुभवस्य दार्ढ्यप्रदर्शनार्थमुक्तम् । तदनुरोधेन—तादृशानुभ-वानुरोधेन। क्लृप्तत्वादिति।वेदातिरिक्तस्थले इत्यादिः, तथा च तत्र लक्षणायाः क्लृप्त-त्वमेव नेति तदपि न तत्त्यागबीजं भवितुमर्हतीति भावः।ननु तादृशबोधे निषादस्थपतिप दस्य निराकाङ्क्षत्वात् न कुत्रापि तादृशबोधः सम्भवतीति किमनुरोधेन उक्तलक्षणा-

रामभद्रोटीका ।

द्विवर्णत्रयान्येत्यर्थः । तथाच बाधस्तदवस्थ इति भावः । उपलक्षकत्वादिति । अन्यथा म्लेच्छादीनां वेदाध्ययनापत्तेरिति भावः । नामार्थयोरभेदान्वयस्यैव व्युत्पन्नत्वा-द्यदि चेत्युक्तम् । अक्लृप्तविद्याप्रयुक्तेरकल्प्यत्वादिति अग्रेऽन्वयः । तन्मूलकेति । अक्लृप्तविद्याप्रयुक्तिमूलकेत्यर्थः ।

व्युत्पत्त्या-विग्रहेण । सहस्रस्येति सम्पातायातम् । तदनुरोधात्-तादृशानुभ

---

(१) अत्र रामभद्रमते 'अक्लृप्तविद्ये'ति पाठो बोध्यः ।

(१)क्लृप्तत्वेन तत्कल्पनाभयस्यासम्भवात्, न हि निषादस्थपत्यादिपदं निषादादिसम्बन्धवत्तया स्थपत्यादिबोधने निराकाङ्क्षम्, तथासति निराकाङ्क्षत्वादेव तत्पुरुषत्वासम्भवेन लक्षणापत्तेस्तद्बाधकतयोपन्यासानौचित्यात्।

(२)अथ(वा) बाधकं विना मुख्यार्थे एव श्रुतीनां प्रामाण्यं न तु प्रमाणान्तराविषयेऽपि लक्ष्यार्थे, "मुख्ये हि शब्दस्वरस" इत्यादिमीमांसया तथैव सम्प्रतिपत्तेरिति चेत्, तर्हि बाधकासत्त्वे कर्मधारयविधयैव वेदानां

---

कृष्णकान्तटीका।

या आवश्यकत्वमित्यत आह—न हीति। हि—यस्मात्, नेत्यस्य निराकाङ्क्षत्वमित्यत्रान्वयः, कुत इत्यत आह—तथासतीति। तद्बाधकत्वेन—तत्पुरुषबाधकत्वेन।

ननु मुख्यार्थे एव श्रुतीनां प्रामाण्यं न तु लक्ष्यार्थे, मुख्ये हि शब्दस्वरस इति मीमांसासिद्धान्तत्वात्, तथाचेदमेव लक्षणापक्षे तत्पुरुषपरित्यागबीजमित्यत आह अथ वेति। केचित्तु—तत्र कर्मधारयस्वीकारे बीजाभावात् तादृशसिद्धान्तप्रवादोऽपि निर्युक्तिकत्वादश्रद्धेय इति बाधकान्तरं निराकुर्वन् तत्र तत्पुरुषमेव व्यवस्थापयति—अथ वेत्यादि—इति प्राहुः। बाधकं विनेति। "जपहोमौ च गङ्गायामनन्तफलदायकौ" इत्यादौ मुख्यार्थे श्रुतीनामप्रामाण्यादाह—बाधकं विनेति। मुख्यार्थे एवेति। शक्यार्थे एवेत्यर्थः। एवकारव्यवच्छेद्यमाह—न त्विति। सामान्यतो लक्ष्यार्थस्य व्यवच्छेद्यत्वे, "जपहोमौ च गङ्गायामि"त्यादौ गङ्गापदलक्ष्यार्थे तीरेऽपि श्रुतीनां प्रामाण्यादसङ्गतिरिति। प्रमाणान्तराविषय इति। एतद्वाक्यातिरिक्तप्रमाणाविषय इति तदर्थः। अन्यत्राक्लृप्तलक्षणाके अर्थे इति समुदितार्थः, तथा च गङ्गापदस्य तीरलक्षणाया गङ्गायां घोषः प्रतिवसति इत्यादावेव क्लृप्तत्वादिति भावः। ननु "मुख्ये हि शब्दस्वरस" इति मीमांसासिद्धान्तग्रन्थस्य सावधारणपरत्वस्यावश्यकत्वात् तद्व्यवच्छेद्यः सामान्यतो लक्ष्यार्थ इति तादृशग्रन्थासङ्गतिरित्यत आह।—मुख्ये हीत्यादि। मीमांसया—मीमांसाग्रन्थेन, तथैव—उक्तार्थस्यैव, संप्रतिपत्तेस्तात्पर्यादिवशात् बोधनादित्यर्थः। तथा च तत्पुरुषे लक्षणापक्षे इदमेव तत्त्यागे बीजमिति भावः। प्रतिबन्दिमुद्रया समाधत्ते—तर्हीत्यादि। बाधकासत्त्व इति। बाधका-

रामभद्रीटीका।

धानुरोधात्। तत्कल्पनाभयस्य—लक्षणाकल्पनाभयस्य। शङ्कते—नहीति। निराकाङ्क्षमित्यन्वितम्। तथाच तादृशान्वये तादृशानुपूर्व्या अबोधकत्वादेवापूर्वविद्याप्रयुक्तिः कल्प्यते नतु लक्षणाभयेनेति भावः। परिहरति तथासतीति। तद्बाधकतया—तत्पुरुषबाधकतया।

---

(१) अत्र कृष्णकान्तमते 'तदनुरोधेन लक्षणायाः क्लृप्तत्वात्' इति पाठो द्रष्टव्यः।

(२) रामभद्रमते 'अथ बाधकमि'त्येवं पाठः।

प्रामाण्यं न तु प्रमाणान्तराविषयेऽपि तत्पुरुषविधया, कर्मधारयात् समासान्तरस्य दौर्बल्यमित्यादिमीमांसया तथैव सम्प्रतिपत्तेरित्यपि किन्न रोचयेः । तत्पुरुषाद्बहुव्रीहेर्जघन्यत्वमित्यत्राप्युक्तैव रीतिरनुसर्त्तव्या, न हि बहुव्रीहौ समस्तपदानां लाक्षणिकत्वादेव ततो दुर्बलत्वम्, एकपदमात्रलक्षणयापि बहुव्रीहेर्व्यवस्थाप्यत्वादित्यास्तां विस्तरः ॥ ४० ॥

---

कृष्णकान्तीटीका ।

सत्त्वे क्वचित् तत्पुरुषविधयापि प्रामाण्यं, यथा—"चन्द्रसूर्यग्रहे स्नानं श्राद्धं-दानं तथा जपम्" इत्यादौ 'पिंडं दद्याद्गयाशिरे' इत्यादौ च तत्पुरुष एव इत्यत उक्तम्—बाधकासत्त्व इति। एवकारव्यवच्छेद्यमाह—न त्विति । निरुक्तस्थले तत्पुरुषविधयापि प्रामाण्यमत उक्तम् प्रमाणान्तराविषय इति। तत्पुरुषातिरिक्तसमाससम्पादकप्रमाणाविषये, कर्मधारयार्थप्रतिपादकयोग्यतादिप्रमाणविषय इति यावत्, यत्र कर्मधारये न किञ्चिद्बाधकं तत्र इति निष्कृष्टार्थः । क्वचित्प्रमाणान्तरविषय इति नञ्रहितः पाठः, तत्र एतद्वाक्यातिरिक्ततत्पुरुषसम्पादकयुक्तिविषय इत्यभिप्रायेणोक्त एवार्थः । तथा च तत्पुरुषे विभक्तिविरहे तत्पुरुषत्यागे युक्तिसम्भवे इति भावः । ननु कर्मधारयात् समासान्तरस्य दौर्बल्यमिति मीमांसया तत्पुरुषस्य दुर्बलत्वं प्रतिपादितं, तद्बीजन्तु लक्षणैवेति भवन्मते तादृशग्रन्थोऽसङ्गत इत्याह—कर्मधारयादिति । तथैव—निरुक्तार्थस्यैव, सम्प्रतिपत्तेस्तात्पर्यादिवशेन प्रतिपादनात् । किन्नरोचयेरिति । तथा च तेषां निर्युक्तिकप्रवादस्याश्रद्धेयत्वात् अपूर्वविधाप्रयुक्त्यादिकल्पनागौरवाच्च तत्पुरुष एव उचित इति गूढाभिप्रायः । नन्वेवं भवन्मते तत्पुरुषाद्बहुव्रीहेर्जघन्यत्वे सर्वपदलक्षणाबीजं न स्यादित्यत्रेष्टापत्तिमाह—तत्पुरुषादिति। उक्तेति। तथा च तेषां निर्युक्तिकत्वप्रवादो न श्रद्धेय इति, परन्तु कल्पनागौरवादिसत्त्वे तदेव तदसत्त्वे वक्तुरभिप्राय एव बहुव्रीहित्यागे बीजमिति रीतिरित्यर्थः । लक्षणाया बीजत्वमते दूषणमाह—न हीति । व्यवस्थाप्यत्वादिति । चित्रगुरित्यादौ गोपदस्यैव चित्राभिन्नगोस्वामिनि लक्षणा पदान्तरस्य तात्पर्यग्राहकत्वमित्यस्य वक्ष्यमाणत्वादित्यर्थः ॥ ४० ॥

रामभद्रीटीका ।

पुनः शङ्कते अथेति । 'जपयज्ञौ च गङ्गायां अनन्तफलदायकावि'त्यादौ मुख्यार्थे श्रुतीनामप्रामाण्यादाह—बाधकामिति। प्रमाणान्तराविषये—एतद्वाक्यातिरिक्तप्रमाणाविषये । तथैव-मुख्यार्थे श्रुतीनां प्रामाण्येनैव । न रोचयेरिति । तथाच निर्युक्तिकस्तु प्रवादो न श्रद्धेयस्तेषामिति भावः । उक्तैव रीतिरिति । सम्भवति बहुव्रीहौ किमिति तत्पुरुषोऽभ्युपेयत इत्यत आह—नहीति । ततस्तत्पुरुषात् ॥ ४० ॥

अव्ययीभावं लक्षयति—

**(१)उत्तरार्थान्वितस्वार्थाव्ययपूर्वस्तु यो भवेत्।**
**समासः सोऽव्ययीभावः स्त्रीपुंल्लिङ्गविवर्जितः ॥४१॥**

य समासः स्वोत्तरपदोपदापस्थाप्येन पदार्थेनान्वितस्य यदर्थस्य बोधकाव्ययपूर्वभागकः स तद्विशिष्टस्य तदर्थस्य बोधनेऽव्ययीभावः। 'गृहे निर्मक्षिकम्, उपकुम्भमि'त्यादौ हि मक्षिकाया अभावः, कुम्भादेश्च सामीप्यादिर्मक्षिकादिपदप्राग्वर्तिना निराद्यव्ययेनानुभाव्यते। 'अर्द्धशरीरमि'त्यादौ उत्तरपदार्थान्वितस्वार्थबोधकमप्यर्धपदं नाव्ययम्। 'निर्मक्षिका भूमिः, निर्मनुष्यो देश' इत्यादौ तु मक्षिकादेरभाववन्तं बोधयन्नपि निर्मक्षिकादिकस्तत्पुरुषो न तादृशार्थे स्त्रीपुंल्लिङ्गकार्यविधुर इ-

---

कृष्णकान्तीटीका।

अव्ययीभावलक्षणस्यावतरणिकामाह—अव्ययीभावं लक्षयतीति। अव्ययीभावलक्षणप्रतिपत्त्यनुकूलव्यापारवान् ग्रन्थकार इति शेषः। विवृणोति—यः समास इति। तथा च यादृशानुपूर्वीस्वघटकोत्तरपदप्रतिपाद्ययादृशार्थनिष्ठप्रकारतानिरूपित-यादृशार्थविशेष्यताकबोधजनकतावच्छेदकाव्ययपूर्वभागकत्वे सति स्त्रीपुंलिङ्गकार्यविधुरत्वे च सति तादृशानुपूर्वीमत्समासत्वं तादृशार्थान्विततादृशार्थस्य बोधनेऽव्ययीभावत्व-मिति निष्कर्षः। स्वपदं लक्ष्यत्वेनाभिमतपरम्। लक्ष्ये लक्षणं योजयति—गृह इति। प्राग्वर्तिना इत्यनेन अव्ययपूर्वभागकत्वं मक्षिकादेरुत्तरपदार्थत्वं व्यञ्जितम्। अव्य-यपूर्वभागकत्वनिवेशव्यावृत्तिमाह—अर्द्धशरीरमित्यादाविति। आदिना अर्द्धपिप्प-लल्यादिग्रहः। स्त्रीपुंल्लिङ्गकार्यविधुरत्वनिवेशव्यावृत्तिमाह—निर्मक्षिका भूमिरिति। पुमित्यस्य व्यावृत्तिमाह—निर्मनुष्यो देश इति। तादृशार्थे—निर्मक्षिकादेरभावव-

रामभद्रीटीका।

अव्ययीभावमिति। क्रमप्राप्तमिति शेषः। स्वोत्तरेति। स्वघटकोत्तरेत्यर्थः। लक्ष्ये लक्षणं योजयति—गृह इत्यादिना। ननु स्वोत्तरपदोपस्थाप्यार्थान्वितार्थबोधक-पूर्वभागकत्वमेवास्तु कृतमव्ययत्वनिवेशेनेत्यत आह—अर्द्धशरीरमिति। बोधक-मिति। शरीरार्द्धमित्येव तत्रान्वयादिति भावः। नाव्ययमिति। तथाच तादृशत-त्पुरुषेऽतिव्याप्तिभयेनैव तन्निवेशितमिति भावः। स्त्रीपुंल्लिङ्गविवर्जित इत्यस्य व्यावृत्तिमा-ह निर्मक्षिकेति। तादृशार्थे मक्षिकादेरभाववत्तारूपार्थबोधने तत्पुरुषस्य परप(२)दलि-

---

(१) नियमतोऽव्ययपूर्वपदार्थविशेष्यकबोधजनकसमासत्वमव्ययीभावत्वमित्यर्थः।

(२) उत्तरपदेति २ पु. पाठः।

ति तत्र न प्रसङ्गः ॥ ४१ ॥

नन्वेकस्याक्षस्य शलाकाया वा द्यूतेऽन्यथापातनमित्यर्थेऽ'क्षपरि शलाकापरि' इत्यव्ययीभावेऽव्याप्तिस्तस्याव्ययगर्भत्वेऽपि तत्पूर्वकत्वाभावात्, एवं द्वौ गार्ग्यावित्यर्थे 'द्विगार्ग्यं गच्छत' इत्यादौ, द्वाभ्यां दण्डाभ्यामित्यर्थे 'द्विदण्डि प्रहरती'त्यादौ, तिसृणां यमुनानां समाहार इत्यर्थे 'त्रियमुनं स्नाती'त्यादौ, लोहिता गङ्गा यस्मिन्नित्यर्थे 'लोहितगङ्गं देश' इत्यादौ, दण्डेन

---

कृष्णकान्तीटीका।

त्वरूपार्थे, तत्पुरुषस्य उत्तरपदलिङ्गकत्वादिति भावः। तत्र-निरुक्ततत्पुरुषे, प्रसङ्गोऽतिप्रसङ्गः ॥ ४१ ॥

अव्ययीभावलक्षणप्रतिपादककारिकान्तरमवतारयितुं भूमिकामारचयन् पूर्वकारिकायां दोषमाह-नन्विति। एकस्याक्षस्यान्यथा पातनम्, एकस्याः शलाकाया अन्यथा पातनमिति लिङ्गव्यत्यासेनान्वयः। अव्याप्तौ हेतुमाह—तस्येति। ननु अव्ययगर्भत्वमेव निवेशनीयं न त्वव्ययपूर्वभागकत्वमित्यत आह—एवमिति। द्विगार्ग्यमित्यव्ययीभावस्य द्विवचन एवानुशासितत्वाद्द्विवचनान्तप्रतिपादनाय गच्छत इति क्रियापदमुक्तम्। वस्तुतो द्वौ गार्ग्यौ इति विग्रहप्रदर्शनेनैव तस्य द्विवचनान्तप्रतिपत्तेः वस्तुगतिमनुरुध्यैव क्रियापदस्योल्लेखः। न च तस्य प्रथमान्तत्वप्रतिपत्तये तदुपादानमिति वाच्यम्। तस्य द्वितीयान्तत्वेऽपि अनुशासनविरोधाभावात् तत्प्रतिपत्तेरकिञ्चित्करत्वात्। सामान्यतो द्विवचनान्तसंख्यावाचकाव्ययीभावेऽव्याप्तिमुक्त्वा कारणार्थकतथाविधाव्ययीभावेऽव्याप्तिमाह—द्वाभ्यां दण्डाभ्यामिति। कारकस्य क्रियापदनियतत्वात् प्रहरतीति क्रियापदमुक्तम्। समाहारार्थकेऽपि तादृशि तामाह-तिसृणामिति। उत्सर्गतः प्रथमान्तमेव तत् साधु न तु द्वितीयाद्यन्तमिति भ्रमनिराकरणाय अस्तीत्यनुक्त्वा स्नातीत्युक्तम्। ननु संख्याशब्दभिन्नत्वे सति यदव्ययभिन्नं तदन्यगर्भत्वमेव निवेश्यमित्यत आह—लोहिता गङ्गा यस्मिन्निति। स्थलमित्याद्युक्तौ तस्याव्ययीभावत्वप्रतिपादनं न सम्भवतीति देश इत्युक्तम्। देशबोधकेऽव्याप्तिमुक्त्वा क्रियाबोधकेऽपि तामाह—दण्डेनेति। मिथः-परस्परं, तच्च प्रहारान्वितं, समानकालीनत्वं कत्रार्थः, तथा च दण्डकरणकपरस्परप्रहारकालीनवृत्तिमदित्यर्थः। प्रहारक्रि-

रामभद्रीटीका।

ञ्जकत्वनियमादिति भावः। तत्र-तत्पुरुषे। प्रसङ्गोऽतिप्रसङ्गः ॥ ४१ ॥

ननु तर्हि अव्ययगर्भकत्वमेव निवेशनीयं न त्वव्ययपूर्वगर्भकत्वमत आह—एवं द्वाविति। ननु संख्याशक्तपदान्यत्वे सत्यव्ययभिन्नं यत् तदन्यगर्भकत्वमेवाव्ययगर्भकत्वं वाच्यम्, अतो न द्विगार्ग्यद्विदंड्यादावव्याप्तिरित्यत आह—लोहितेति। द्वि-

मिथः प्रहृत्य रणं वृत्तमित्यर्थे 'दण्डादण्डि रणमि'त्यादौ, केशेषु मिथः प्रगृह्य वृत्तमित्याद्यर्थे 'केशाकेशि युद्धमि'त्यादौ, खले यवा यदा, संहृता यवा यदा, तिष्ठन्तो गावो यदेत्याद्यर्थे 'खलेयवं, संहृतयवं, तिष्ठद्गु वा काल' इत्यादौ, द्विगार्ग्य—द्विदण्ड्यादिष्वपि, तेष्वव्ययगर्भत्वस्याप्यभावादतः प्रकारान्तरेण निर्वक्ति--

**अमादेशं विना श्रूयमाणषष्ठी न बोधिका ।**
**स्वार्थे यदर्थस्य यद्वा सोऽव्ययीभाव इष्यते ॥ ४७ ॥**

अमादेशं विना श्रूयमाणषष्ठी स्वार्थे यत्समासार्थस्यान्वयबोधं प्रत्य-

---

कृष्णकान्तीटीका ।

यागर्भितार्थके तामुक्त्वा ग्रहणक्रियाघटितार्थकेऽपि तामाह—केशेष्विति । केशाधिकरणकग्रहणगर्भितार्थ एव तस्य साधुत्वात् केशं केशमिति नोक्तम् । क्रियाविशेषबोधकेऽव्ययीभावेऽव्याप्तिमुक्त्वा कालविशेषबोधके तामाह-खले यवा यदा इति । इत्याद्यर्थे—खले यवमित्यादौ, एवमग्रेऽपि । काल इति स्थलत्रय एव सम्बध्यते । द्विगार्ग्य—द्विदण्ड्यादिष्वपीति । अव्याप्तिरिति पूर्वेणान्वयः । अत—उक्तस्थलेष्वव्याप्तितः ।

यदर्थस्य इत्यस्य विवरणं यत्समासार्थस्येति । फलोपधायकतारूपकारणताया निवेशे तादृशबोधानुपधायके समासान्तरेऽतिव्याप्तिरिति स्वरूपयोग्यत्वमेव निविष्टमित्यभिप्रायेणाह—असमर्था इति । तथा च यादृशः शब्दः समासत्वे सति स्ववृत्त्यमादेशाव्यवहितपूर्ववर्त्तित्वविशिष्ट यादृशानुपूर्वीप्रकारकज्ञानं श्रूयमाणषष्ठ्यर्थधर्मिकस्वीययादृशार्थप्रकारकान्वयबोधं प्रत्यसमर्थन्तादृशानुपूर्वीमांस्तादृशशब्दस्तादृशार्थेऽव्ययीभाव इति पर्यवसितार्थः । वैशिष्ट्यञ्च स्वसामानाधिकरण्यसम्बन्धेनानुपूर्व्याम् । उपकुम्भमित्यस्य कुम्भभागेऽतिव्याप्तिः कुम्भसामीप्यबोधकाव्ययीभावलक्षणस्य तत्र गमनादतः सत्यन्तम् । अमादेशं विनापि अकारन्ताव्ययीभावस्य तृतीयापञ्चमीसप्तम्याद्यर्थधर्मिकस्वार्थबोधक्षमत्वात् तत्राव्याप्तिरिति सुबर्थमपहाय षष्ठ्यर्थेत्युक्तम् इति स्वयमेव वक्ष्यते । अनकारान्ताव्ययीभावमात्रस्यामादेशं विनापि लुप्तषष्ठ्यर्थबोधक्षमत्वात् तत्राव्याप्तिः अतः श्रूयमाणेति षष्ठीविशेषणम् । केचित्तु—'नीलोत्पलरूपमि'त्यादौ लक्षणया नीलोत्पलसम्बन्धस्य भानात् लुप्तषष्ठ्यर्थधर्मिकस्वार्थबोधाक्षमत्वेन कर्मधार-

रामभद्रीटीका ।

दंडयादिष्वपीति अव्याप्तिरिति प्राक्तनमनुषज्यते ।

ननु षष्ठी स्वार्थे अमादेशं विना यत्समासार्थस्यान्वये न समर्था इत्येवो-

समर्था स एव वाऽव्ययीभावः। श्रूयमाणैव षष्ठी स्वार्थे समासान्तरार्थस्यान्वयबोधने समर्था न तु लुप्तापि । कृतयोरक्षपरि व्यर्थत्वमित्यादौ त्वव्ययीभावार्थस्य लुप्तापि, कृतयोरेकाक्षान्यथापातनयोर्निष्फलत्वमित्यन्वये

कृष्णकान्तटीका।

यादावतिव्याप्तिरतः श्रूयमाणेति । तथा च श्रूयमाणषष्ठ्यर्थधर्मिकस्वार्थबोधक्षमत्वात् तत्र नातिव्याप्तिरिति–आहुः । तन्मन्दम् । आनुपूर्व्या ऐक्ये नीलोत्पलत्वरूपानुपूर्व्याः षष्ठ्यर्थधर्मिकस्वार्थबोधजनकतावच्छेदकत्वात् अतिव्याप्त्यसम्भवात्। न चैवं लुप्तापीत्यन्तग्रन्थेन लुप्तषष्ठीमादाय समासान्तरेऽतिव्याप्तेरेव प्रत्यायनात् तादृशग्रन्थासङ्गतिरिति वाच्यम् । समासान्तरार्थस्येत्यस्याकारान्ताव्ययीभावाभिन्नाव्ययीभावार्थस्याव्ययीभावविशेषार्थस्येति यावत् , बोधने असमर्था इत्येव पाठः, तथा च 'उपवधु' इत्यादौ लुप्तषष्ठ्यास्तादृशबोधसमर्थत्वादव्याप्तिरित्यर्थकरणात् । वस्तुतस्तु अमादेशसहकारेण श्रूयमाणा षष्ठी स्वार्थे यादृशानुपूर्व्यवच्छिन्नीययादृशार्थबोधेऽसमर्था समासत्वे सति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थेऽव्ययीभावत्वमित्यर्थे यथाश्रुतमेव सम्यगिति ध्येयम् । ननु षष्ठीत्वावच्छेदेन तादृशबोधासमर्थत्वं वाच्यं, न तु श्रूयमाणत्वमतो नातिव्याप्तिरित्यव्याप्तिमाह—कृतयोरिति । नव्यास्तु—यथाश्रुतलक्षणे 'श्रूयमाणैव' इत्यादिग्रन्थेनातिव्याप्तिः प्रतिपादिता तद्वारणाय आनुपूर्वीघटितलक्षणकरणेऽपि दोषमाह कृतयोरिति–प्राहुः । उच्छृङ्खलास्तु–श्रूयमाणैवेत्येवकारफलमाह–कृतयोरिति। लुप्तापीति समर्था इत्यनुषज्यते । लुप्तषष्ठ्यैवेति। अन्यथा कृतयोरिति षष्ठ्या प सम्बन्धप्रत्यायनात् श्रूयमाणत्वनिवेशेऽपि अक्षपरिभागेऽतिव्याप्त्यापत्तेरिति भाव–इत्याहुः । तदसुद्धं, विशेषणविभक्तेर्निरर्थकत्वात् । विशेषणषष्ठ्याः कथञ्चित् सम्बन्धार्थकत्वेऽपि तत्र विशेष्यस्यान्वयासम्भवात् प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः । ग्रन्थकृता लक्षणवाक्ये एवकारस्यानुक्तत्वादेवकारार्थनिवेशस्य ग्रन्थकृदनभिप्रेतत्वात् प्रयोजनविरहाच्च न किञ्चिदेतत् । अक्षपरि व्यर्थत्वमित्यस्य समस्तत्वेन लक्षणयैव तत्सम्बन्धप्रत्यायनात् तत्र श्रूयमाणत्वनिवेशव्यावृत्तिर्न संभवतीति भ्रमनिरासाय कृतयोरिति।तदुक्तौ तु एकदेशान्वयस्वीकारात् तादृशभ्रमो न सम्भवतीति भावः। लुप्तापीति । अपिरेवार्थे लुप्तैवेत्यर्थः । अत एव लुप्तषष्ठ्यैवेत्येवकारसम्वलित उत्तरग्रन्थोऽपि सङ्गच्छते, तथा च श्रूयमाणत्वानिवेशे लुप्तषष्ठ्यास्तादृशबोधसमर्थत्वादक्ष-

रामभद्रीटीका।

व्यतामत आह–श्रूयमाणैवेति । ननु लुप्तापीति । समर्था इत्यनुषञ्जनीयम् । 'नीलोत्पलरूपमि'त्यादौ हि लुप्तषष्ठीतस्तत्सम्बन्धानुभवात् नीलोत्पलसम्बन्धादिलक्षणयैव तदुपपत्तेरिति, तथाच समासान्तरव्यावर्त्तनाय श्रूयमाणत्वं निवेशितमिति भावः । श्रूयमाणैवेत्येवकारपर्यन्तानुधावनस्य फलमाह––कृतयोरिति । लुप्ता-

लुप्तषष्ठ्यैव पातनस्य सम्बन्धप्रत्यायनात् । 'स्निग्धस्योपगङ्गं पावित्र्यमि'-त्यादौ स्निग्धस्य गङ्गासमीपस्य पवित्रत्वमित्याद्यन्वये समीपादेः सम्बन्धः श्रुतयाऽप्यमादेशवशादेव षष्ठ्याऽनुभाव्यत इति न तत्रोपगङ्गाद्यव्ययीभावेऽव्याप्तिः । 'अनुगङ्गेन सञ्चारः, उपगङ्गेषु पूतत्वम्, उपकुम्भादानीत-मि'त्यादावमादेशं विनापि श्रूयमाणाभिस्तृतीयासप्तम्यादिसुब्भिरव्ययीभा-

कृष्णकान्तीटीका ।

परिभागेऽव्याप्तिरिति भावः । इदमुपलक्षणम्, अनकारान्ताव्ययीभावमात्रेऽव्याप्तिर्द्र-ष्टव्या । अमादेशं विनेत्यस्य व्यावृत्तिमाह स्निग्धस्येति । समीपादेः सम्बन्धः श्रुतयापि षष्ठ्या अमादेशवशादेव अमादेशसहकारादेव, अनुभाव्यत इति योजना । तथा च स्निग्धपदोत्तरश्रुतषष्ठ्या गङ्गासमीपत्वेबोधस्वरूपयोग्यत्वादव्याप्तिः, तदुपा-दाने च अमादेशासहकृतषष्ठ्यास्तादृशबोधस्वरूपायोग्यत्वान्नाव्याप्तिरिति भावः । इदन्त्ववधातव्यम्-विशेषणपदोत्तरषष्ठ्यास्तादृशबोधस्वरूपायोग्यत्वादव्ययीभावोत्तर-षष्ठ्याः श्रूयमाणत्वाभावादव्याप्तिरेव न सम्भवतीत्यमादेशं विना इत्यनर्थकमिति । यदि चैकदेशस्यापि विशिष्टान्वयबोधस्वरूपयोग्यत्वात् विशेषणषष्ठ्या अपि तादृश-विशिष्टान्वयबोधस्वरूपयोग्यत्वं, तच्च अमादेशसहकारादेव, स्निग्धस्योपगङ्गं पावित्र्य-मित्यतः कदाचिदपि तादृशबोधानुदयेन अमादेशसहकृतषष्ठ्यास्तादृशबोधस्वरू-पायोग्यत्वादित्युच्यते, तदा 'सुन्दरस्य उपवधु पूतत्वमि'त्यत्र उपवधुभागेऽव्या-प्तिस्तदुपादानेऽपि दुर्वारा इति । स्वार्थधर्मिकयादृशानुपूर्व्यवच्छिन्नार्थप्रकार-कबोधत्वावच्छिन्नजन्यताया एव लक्षणघटकत्वस्यावश्यकत्वेन विशेषणषष्ठ्या अतथा-त्वेन निरुक्ताव्याप्त्यसम्भवात् अमादेशं विनेत्यस्य व्यर्थताया दुर्वारत्वात् इत्य-लं पल्लवितेन । सामान्यतः सुपमपहाय षष्ठीपर्यन्तनिवेशव्यावृत्तिमाह-अनुगङ्गेनेत्या-दि । "वा तृतीयासप्तम्यो"रिति सूत्रेणामादेशस्य वैकल्पिकविधानात् तृतीयान्त-स्थलमुक्त्वा सप्तम्यन्तस्थलमाह-उपगङ्गेष्विति । कारकविभक्तिस्थलमुक्त्वा उपप-दविभक्तिस्थलमाह--उपगङ्गेष्वितीत्यपि कश्चित् । "अव्ययीभावादकारान्ताद्वि-भक्तीनामपञ्चम्या" इति सूत्रेण पञ्चमीभिन्नविभक्तीनामम्विधानात् पञ्चम्यन्तस्थलमा-

रामभद्रीटीका ।

पीति । समर्थेत्यनुषज्यते । लुप्तषष्ठ्यैवेति । अन्यथा कृतयोरिति षष्ठ्या सम्बन्धप्रत्यायनादक्षपरीत्यव्ययीभावेऽव्याप्त्यापत्तेरिति भावः । अमादेशं विनेत्य-स्य व्यावृत्तिमाह--स्निग्धस्येति । तत्रेति सप्तम्यर्थो घटकत्वम् । ननु श्रूय-माणसुबित्येवोच्यतामलं षष्ठीपर्यन्तानुधावनेनेत्यत आह—अनुगङ्गेनेत्यादिना । 'तृतीयासप्तम्योरपंचम्या' इत्यनुशासनेन तृतीयादेरपि अव्ययीभावार्थस्यान्वये समर्थत्वात्

वार्थस्य करणत्वाधिकरणत्वादिकं बोध्यत इति षष्ठीपर्यन्तानुसरणम् ॥ ४२ ॥

बहुव्रीहिं लक्षयति—

**बहुव्रीहिः स्वगर्भार्थसम्बन्धित्वेन बोधकः ।**
**निरूढया लक्षणया स्वांशज्ञापकशब्दवान् ॥ ४३ ॥**

समास इति प्रकृतम्, तथा च स्वांशस्य निरूढलक्षणया ज्ञापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य सम्बन्धित्वप्रकारेणान्वयबोधं प्रति समर्थः समासः स्वगर्भतादृशार्थसम्बन्धिबोधने बहुव्रीहिरित्यर्थः । 'आरूढवानरो

---

कृष्णकान्तीटीका ।

ह–उपकुम्भादानीतमिति । अधिकरणत्वादीत्यादिना अवधित्वपरिग्रहः ॥ ४२ ॥

बहुव्रीहिं लक्षयतीति । बहुव्रीहिलक्षणानुकूलव्यापारवान् ग्रन्थकृदिति भावः । शुक्लस्य सम्बन्धी घट इत्यसमासवाक्येऽतिव्याप्तिवारणाय लक्षणे समासत्वनिवेशस्यावश्यकत्वात्तदनुपादाने ग्रन्थकर्तुर्न्यूनत्वमिति तत्परिहारायाह—समास इति । प्रकृतं–प्रकरणलब्धम् । विवृणोति–तथा चेति । तथा च समासत्वे सति यादृशार्थधर्मिकयादृशार्थघटितार्थसम्बन्धित्वप्रकारकान्वयबोधं प्रति यादृशार्थबोधजनकतावच्छेदकानुपूर्वीघटितयादृशानुपूर्वीप्रकारकज्ञानं स्वरूपयोग्यं निरूढलक्षणाधीनतादृशार्थबोधजनकतावच्छेदकानुपूर्वीघटिततादृशानुपूर्वीमच्छब्दत्वं तादृशार्थघटितार्थसम्बन्धित्वप्रकारकान्वयबोधे बहुव्रीहित्वमिति पर्यवसितार्थः । सत्यन्तं–लक्षणविशेषणम् । लक्ष्ये लक्षणं सङ्गमयति—आरूढेति, बहुव्रीहिं बोधयतीति परे·

रामभद्रीटीका ।

तत्राव्याप्तिवारणाय षष्ठीपर्यन्तानुसरणमिति भावः ॥ ४२ ॥

बहुव्रीहिं क्रमप्राप्तमिति शेषः । स्वांशज्ञापकशब्दघटितत्वात् निरूढलक्षणया स्वगर्भार्थसम्बन्धित्वेन च बोधकत्वात् विग्रहवाक्यानामपि बहुव्रीहित्वापत्तेराह समास इतीति। प्रकृतं–(प्र)क्रमप्राप्तम्। तथा च (१)तेषामसमासत्वादेव न तदापत्तिरिति भावः। कारिकां व्याकरोति तथाचेत्यादिना । स्वांशाभिन्नं ज्ञापकभ्रमं निरस्यति स्वांशस्येति । स्वधनसम्बन्धीत्यादितत्पुरुषस्यापि समासकालीनत्वादिना निरूढलक्षणया ज्ञापकशब्दवत्त्वादाह शब्देन घटित इति । द्वितीयाद्यन्तान्यपदार्थभेदेन बहुव्रीहेर्नानाविधतया तेषु क्रमेण योजयति–आरूढ इत्यादिना धर्मिणामवगम इत्यन्तेन ।

(१) शुक्लस्य सम्बन्धी घट इत्यसमासवाक्यानामित्यर्थः ।

वृक्ष' इत्यत्रारूढो वानरो यमिति व्युत्पत्त्या स्वकर्मकारोहणकर्तृवानरसम्बन्धित्वेन वृक्षं, 'पीतपयस्कं पात्रमि'त्यत्र पीतं पयो येन इति रीत्या स्वकरणकपानकर्मजलसम्बन्धित्वेन पात्रं, 'पक्वतण्डुलश्चैत्र' इत्यत्र पक्वस्तण्डुलो येनेति दिशा स्वकर्तृकपाककर्मतण्डुलसम्बन्धित्वेन चैत्रं, 'दत्तदक्षिणो द्विज' इत्यत्र दत्ता दक्षिणा यस्मै इति क्रमेण स्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धित्वेन द्विजं, 'पतितपत्रस्तरुरि'त्यत्र पतितं पत्रं यस्मादिति-विग्रहेण स्वापादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुं, 'चित्रगुश्चैत्र'इत्यत्र चित्रा गौर्यस्येति वाक्यानुसारेण चित्राभिन्नस्वगोसम्बन्धित्वेन चैत्रं, 'रक्तपटः काय' इत्यत्र रक्तः पटो यत्रेति व्युत्पत्त्या रक्ताभिन्नस्ववृत्तिपटसम्ब-

---

कृष्णकान्तीटीका।

णान्वयः। एवमग्रेऽपि। द्वितीयान्ताद्यन्यपदार्थभेदेन बहुव्रीहेर्नानात्वात् क्रमेण तत्तदुदाहरणान्याह—पीतपयस्कमिति। आरूढो वानरो यमित्यस्य स्वकर्मकारोहणकर्त्रभिन्नो वानर इति व्यासस्यार्थः। पीतं पयो येन इत्यस्य स्वकरणकपानकर्माभिन्नं पय इति व्यासस्यार्थः। ऊर्ध्वसंयोगानुकूलव्यापार आरोहणम्, द्रवद्रव्यगलाधःसंयोगानुकूलव्यापारः पानं, पात्रमुखसंयोगद्वारा तत्र पात्रस्य करणत्वं बोध्यम्। एवं पीतं पयो येन इति व्युत्पत्त्या स्वकर्तृकपानकर्मजलसम्बन्धित्वेन जनं, पीतपयस्को जन इति बहुव्रीहिः, पीतं पयो यस्या इति व्युत्पत्त्या स्वावधिकपानकर्मजलसम्बन्धित्वेन पानकर्मस्वीयजलसम्बन्धित्वेन वा नदीं पीतपयस्का नदीति बहुव्रीहिर्बोधयतीत्यपि बोध्यम्। पक्वस्तण्डुलो येनेत्यस्य स्वकर्तृकपाककर्माभिन्नस्तण्डुल इति विग्रहस्यार्थः। दत्ता दक्षिणा यस्मा इत्यस्य स्वसम्प्रदानकदानकर्माभिन्ना दक्षिणेति विग्रहस्यार्थः। तण्डुलावयवविभागानुकूलव्यापारस्तादृशशिथिलाख्यसंयोगानुकूलव्यापार एव पाकः, तण्डुलपदस्य तण्डुलावयवे लक्षणा। स्वस्वत्वध्वंसानुकूलपरस्वत्वप्रकारकेच्छा दानम्। पतितं पत्रं यस्मादित्यस्य स्वापादानकातीतपतनकर्माभिन्नं पत्रमिति व्यासस्यार्थः, पतनत्वन्तु गुरुत्वजन्यतावच्छेदकतया सिद्धो जातिविशेषः। केचित्तु अधःसंयोगानुकूलव्यापारः पतनमित्याहुः। तन्न, तथासति पतधातोः सकर्मकत्वापत्तेः। यदि च नरकपतित इति द्वितीयातत्पुरुषोदाहरणदातृदुर्गसिंह इव तस्य सकर्मकत्वमिच्छन्ति, तदा तदपि साधीय इति दिशाऽन्यदवसेयम्। एकविभक्त्यन्तान्यपदार्थ-

रामभद्रीटीका।

व्याससमासयोः समानार्थकत्वमावेदयितुमाह—आरूढो वानरो यमिति। व्युत्पत्त्या–विग्रहेण। वृक्षमिति। बहुव्रीहिर्बोधयतीत्यतिदूरेणान्वयः। एवमग्रेऽपि। तत्र रुह-

न्धित्वेन कायम्, एवं 'बाणच्छिन्नकरो नर' इत्यादावपि बाणेन छिन्नः करो येन यस्य वा इत्यादिविग्रहेण बाणकरणस्वकर्तृकच्छिदाकर्मकरसम्बन्धित्वादिना नरादिकं बहुव्रीहिर्बोधयतीति सर्वत्रैव स्वगर्भतत्तदर्थसम्बन्धित्वेन धर्मिणामवगमः। 'दक्षिणपूर्वा, पूर्वोत्तरे'त्यादिविदिग्बहुव्रीहिस्थले दक्षिणया पूर्वा यस्या इत्यादिविग्रहेण स्वपार्श्वस्थदक्षिणसहितपूर्वसम्बन्धित्वादिना आग्नेयीप्रभृतीनां विदिशां बोधः। 'अस्तिक्षीरा, नास्ति-

---

कृष्णकान्तटीका।

विशेष्यकबोधजनकबहुव्रीहेस्तावत्पर्यादिवशादन्यविभक्त्यन्तान्यपदार्थविशेष्यकत्वं सम्भवतीत्यावेदनायाह—एवमिति। अत एवोक्तं येन यस्य वेति। येनेत्यन्तविग्रहे स्वकर्तृकबाणकरणकच्छिदाकर्मसम्बन्धित्वेन, यस्येत्यन्तविग्रहे च बाणकरणकच्छिदाकर्मकस्वकरसम्बन्धित्वेन नरादिकं बहुव्रीहिर्बोधयतीत्युक्तौ ग्रन्थगौरवं स्यादतो निरुक्तप्रकारद्वयसाधारणरूपेणैकदैव प्रकारद्वयमुक्तं, न तु ताद्रूप्येण शाब्दे भानमिति ध्येयम्। केचित्तु—यस्येति विग्रहाभिप्रायेण 'करणके'त्याद्युक्तम्, येनेति विग्रहाभिप्रायेणादिपदमुक्तम्, तथा चादिपदात् स्वकर्तृकबाणकरणकच्छिदाकर्मकरसम्बन्धित्वपरिग्रह—इत्याहुः। तच्च करसम्बन्धित्वादिनेत्यतः स्वकरसम्बन्धित्वादिपाठकल्पनं विना न शोभते लक्षणे स्वगर्भार्थसम्बन्धित्वप्रकारताया एव निविष्टत्वात्। उपसंहरति—सर्वत्रैवेति। प्रथमान्तान्यपदार्थबहुव्रीहेरपसिद्धान्तत्वात्।

"विदिक्तथे"ति यदनुशासनं प्राच्यरुक्तं, तन्न सङ्गच्छते इत्याशङ्क्य तदपि प्रथमान्तान्यपदार्थत्वं विनैवोपपादयति—दक्षिणपूर्वेत्यादिना। आदिपदेन पूर्वया उत्तरा यस्येति विग्रहपरिग्रहः। "विदिक्तथे"त्यादिना स्वपार्श्वस्थपूर्वसहितोत्तरसम्बन्धिविदिगादिपरिग्रहः। प्रभृतिपदादैशान्यादिपरिग्रहः, तासां दक्षिणस्याश्च पूर्वस्याश्च दिशः समीपवर्तित्वादिति भावः। नन्वाख्यातान्तेन समासाभावात् कथमस्तिक्षीरेति बहुव्रीहिस्तदस्वीकारे प्राचीनानां लिखनविरोध इत्यतः प्रकारान्तरेण तदुपपादयति—अस्तिक्षीरेत्यादि। किमेतावताऽऽख्यातेन समासः स्वीकृत इत्यत

रामभद्रीटीका।

धातुना स्वकर्मकारोहणस्य क्तप्रत्ययेन कर्तुर्वानरपदेन च वानरसम्बन्धिन उपस्थापनादेतेषामाकाङ्क्षादिवशात् ताद्रूप्येण वृक्षादेर्बोध इति। विशिष्य द्वितीयाद्यन्तान्यपदार्थविशेष्यकबोधजनकस्य विशिष्य तादृशविग्रहान्तर्भावेण निर्दिष्टत्वे एकविभक्त्यन्तान्यपदार्थविशेष्यकबोधजनकस्यान्याविभक्त्यन्तान्यपदार्थविशेष्यकबोधजनकत्वमेव बहुव्रीहेः कदाचिन्न स्यादिति भ्रमं निराकर्तुमाह—एवमिति। अत एवोक्तं येन यस्य वेति। एवं विदिग्बहुव्रीहावपि लक्षणं योजयति दक्षिणपूर्वेत्यादिना। व्युत्पत्तिवैषम्यवारणार्थमन्यत्रापि लक्ष्ये लक्षणं योजयति—अस्तीत्यादिना। नन्वाख्यातेन समासोऽव्युत्पन्नो

क्षीरा गौरि'त्यादावप्यस्ति क्षीरं यस्या इत्यादिविग्रहेणास्तित्ववत्स्वक्षीर-सम्बन्धित्वादिप्रकारेण गवादेरवगतिः । इयांस्तु विशेषो—यत्तत्रैकेषां मतेऽस्तीत्यादिकं तिङन्तमन्येषां तत्प्रतिरूपकाव्ययमिति(१)। उप समीपे दश येषामिति समीपगणितार्थकषष्ठ्या विग्रहात् 'उपदशाः शकुनय' इत्यादौ स्वसमीपगणितदशसम्बन्धित्वेन नवानामेकादशानाञ्च पक्षिणामवगमः ।

तत्र दशशब्दस्य दशत्वलक्षणया स्वपर्य्याप्तसंख्यासमीपगणितदशत्वसम्बन्धित्वेनैव नवादेर्बोध इति दुर्गप्रभृतयः। अधिका दश येषामित्यादिविग्रहे 'अधिकदशाः पुरुषा' इत्यादावपि स्वपर्य्याप्तसंख्याधिकदशवृत्तिसंख्यापर्य्याप्त्यधिकरणदशसम्बधित्वेन नवादिपुंसां प्रत्ययः । द्वौ त्रयो वा येषां इत्यन्यतरार्थकवाशब्देन विग्रहे "द्वित्राः पवित्राः परमा" इत्यादौ द्वित्र्यन्यतरपर्य्याप्तस्वपर्य्याप्तसंख्यासम्बन्धित्वेन द्वयोस्त्रयाणां वा

---

कृष्णकान्तीटीका।

आह—इयांस्त्विति। एकेषाम्—वैयाकरणानाम्, अन्येषां तत्प्रतिरूपकं—आख्याताऽन्तास्तितादेः प्रतिरूपकम्। उपेत्यस्य विवरणं समीप इति। समीपगणितार्थकषष्ठ्या इति।

समासस्थदशशब्दस्य समीपपरिगणितदशत्वावच्छिन्ने निरूढलक्षणाज्ञापनाय दुर्गसिंहप्रभृतीनां मतमाह—तत्रेति। उपदशेति समासस्थले, लक्षणया इत्यस्य निरूढया इत्यादिः। स्वपर्य्याप्तेति, स्वं अन्यपदार्थो नरादिः, स्ववृत्तिसंख्येत्युक्तावष्टादेरपि बोधः स्यादतः स्वपर्य्याप्ते'त्युक्तम्। न चाष्टादेः स्ववृत्तिसंख्यासमीपगणितदशत्वसम्बन्धित्वाभावान्न तद्बोध इति वाच्यम्। अष्टादेरपि दशत्वस्य यथाकथञ्चित्सम्बन्धवत्त्वात्। यदि च दशत्वसमीपगणितसंख्यापर्य्याप्त्यधिकरणरूपः सम्बन्धः प्रवेश्यते, तदा पर्य्याप्त्यनिवेशेऽपि न क्षतिरिति ध्येयम्। स्वपर्य्याप्तसंख्याधिकेति। पर्य्याप्त्यनिवेशेऽष्टादेरपि बोधः स्यादतस्तन्निवेशः। उदीच्यपर्य्याप्त्यनिवेशे एका-

रामभद्रीटीका।

धात्वर्थनामार्थयोर्भेदेनान्वयोऽप्यव्युत्पन्नश्चेत्यत आह—इयांस्त्विति। एकेषां—धात्वर्थनामार्थयोर्भेदेनान्वयस्वीकर्तॄणाम्, तथाचाश्रयतासम्बन्धेन तत्र धात्वर्थस्यान्वय इति भावः। तत्प्रतिरूपकं—तिङन्तप्रतिरूपकम्। उपेत्यस्य विवरणं समीप इति।

दुर्गप्रभृतिमतमाह—तत्र दशशब्दस्येति। नवादेरिति। पक्षिणामित्यनुषज्यते। अधिकदशवृत्तिसंख्येति। दशादिपदसमभिव्याहारेण दशत्वादिसंख्ये-

पवित्राणां बोधः, 'पटे घटे वा घटत्वमि'त्याद्यनुरोधेन वाकारस्यान्यतरार्थकताया व्युत्पाद्यत्वात्, तस्य च वृत्तौ गतार्थत्वादश्रुतिः। पञ्च षड् वा येषामित्यादिविग्रहात् 'पञ्चषाः पुरुषा' इत्यादावप्युक्तरीत्यैवान्वयो द्रष्टव्यः।

परे तु द्वौ वा त्रयो वा येषामित्यादिविग्रहे वाशब्दस्य संशयकोट्यर्थकतया 'द्वित्रा' इत्यादिबहुव्रीहेः स्वधर्मिकसंशयकोटितापन्नद्वित्रि-

---

कृष्णकान्तीटीका।

दशपर्याप्तसंख्याधिकदशवृत्तित्वाद्दशत्वसंख्याश्रयसम्बन्धित्वेनैकादशादेर्बोधः स्यादतस्तन्निवेशः। ननु वाशब्दस्यान्यतरार्थकत्वं न दृष्टचरमित्यत आह—पटे घटे वेति। व्युत्पाद्यत्वादिति। तथा च घटत्वं घटपटान्यतरवृत्तीत्येव तत्र शाब्दबोध इति तदनुरोधेन वाकारस्यान्यतरार्थकत्वमवश्यमङ्गीकर्त्तव्यम्, अन्यथा परोक्षज्ञानस्यानाहार्यत्वानिश्चयत्वनियमाच्चतुष्कोटिकसंशयस्यानभ्युपगमाच्च घटत्वं घटवृत्ति पटवृत्ति चेति शाब्दानुदयेन तादृशवाक्यस्यापार्थकत्वापत्तेरिति भावः। ननु व्यासे वाकारश्रवणात् समासे कथं तस्याश्रुतिरित्यत आह—तस्य च वृत्ताविति। तस्य—वाकारस्य, वृत्तौ—निरूढलक्षणायां, गतार्थत्वान्निविष्टार्थत्वात्। तत्र द्वित्र्यन्यतरशब्दस्य निरूढलक्षणया द्वित्र्यन्यतरपर्याप्तत्वसंख्यासम्बन्धिन एव बोधादिति भावः। न च चित्रगुरित्यादौ तात्पर्यग्राहकचित्रादिपदस्येतरस्य कथं स्थितिरिति वाच्यम्। तस्य तात्पर्यग्राहकत्वाकल्पनात्, फलानुरोधित्वात् कल्पनाया इति भावः। पञ्च षड्वेति। उक्तरीत्यैवेति। पञ्चषडन्यतरपर्याप्तत्वसंख्यासम्बन्धित्वेन पञ्चानां षण्णां वा बोध इति भावः।

केषाञ्चिन्मतमाह—परे त्विति। स्वधर्मिकेति। स्वमन्यपदार्थो द्वित्वादिसंख्याश्रयः, द्वित्रिसम्बन्धित्वेन—द्वित्रिसंख्याया आश्रयत्वसम्बन्धवत्त्वेन।

रामभद्रीटीका।

त्यर्थस्तेन न तत्र स्वपर्याप्तसंख्याधिकदेशवृत्त्यैकादशत्वादिसंख्यापर्याप्त्यधिकरणसम्बन्धित्वेन नवादेर्बोधः। ननु वाशब्दस्यान्यन्तरार्थकत्वं न दृष्टचरमत आह घटे पटे वेति। ननु यत्पदान्ययत्पदान्तर्भावेन विग्रहः तदन्तर्भावेण समासस्य साधुतया वाशब्दान्तर्भावेणापि न कथं समासवाक्यमत आह—तस्य चेति। वाशब्दस्य चेत्यर्थः। वृत्तौ—विवरणे। अश्रुतिरिति। समासवाक्य इति शेषः। अन्यथा चपदान्तर्भावेणापि द्वन्द्वप्रसंगादिति भावः। उक्तरीत्येति। पञ्चषडन्यतरपर्याप्तसंख्यासम्बन्धित्वेन पञ्चानां षण्णां वा प्रत्यय इत्यर्थः।

श्रीपतिमतमाह परे त्विति। अत एव संशयेऽनुशासनमिति। संशयकोट्यर्थकतयेति। स्थाणुर्वा पुरुषो वा इत्यादौ तथा दर्शनादिति भावः। भावद्वयकोटिक

सम्बन्धित्वेन द्विप्रभृतिबोधकत्वमित्याहुः(१)। द्वित्रयो येषामितिवि-ग्रहे तु द्विशब्दस्य द्विगुणितवाचित्वेन द्विगुणितत्रिपर्य्याप्तत्ववृत्तिसं-ख्यासम्बन्धित्वेन 'द्वित्रा रसा' इत्यादौ षण्णामवगमः । सुजन्तर्भावे-णैव विग्रहस्य व्युत्पन्नत्वाच्च पञ्च कृत्वो दश येषामित्यर्थे 'पञ्चदशा' इत्या-दिको न समासः, सर्वत्रोक्तबहुव्रीहौ राजादित्वादतिचरमस्वरादेर्लोपः ।

'स्वधनसम्बन्धी चैत्र' इत्यादौ स्वधनस्य सम्बन्धीति व्युत्पत्त्या स्व-गर्भार्थस्य सम्बन्धित्वेन चैत्रं बोधयन्नपि तत्पुरुषो न स्वांशस्य निरूढ़-

---

कृष्णकान्तीटीका ।

आहुरित्यस्वरससूचनाय, स च तादृशबहुव्रीहिमात्रस्यापि बोधापत्तिरूपस्तद्धर्मिक-स्यापि द्वित्वादिसंशयस्य सम्भवात्तादृशसंख्याश्रयत्वस्यापि तत्र सत्त्वात् । न च स्वपर्य्याप्तद्वित्वादिसम्बन्धिनि लक्षणास्वीकारान्नैष दोष इति वाच्यम् । द्वयोस्त्रिषु वा द्वित्रिसंख्ययोरुभयोरपर्य्याप्तत्वात् तादृशबोधस्य भ्रमत्वापत्तेः, द्वित्व-त्रित्वान्यतरस्मिन् स्वपर्य्याप्तस्य व्यासेऽन्यतरबोधकपदाभावेन निवेशासम्भवात् । व्यासवाक्यात् स्वघटकयत्पदोपस्थापिततादृशार्थमुख्यविशेष्यकशाब्दबोधो भव-ति समासस्थतादृशबोधकपदस्यैव स्वघटिततादृशार्थसम्बन्धिलक्षणाया एव निरू-ढ़त्वात् । त्रिपर्य्याप्तत्ववृत्तिसंख्येति । पर्य्याप्त्यनिवेशे पञ्चानामपि बोधः स्या-दतस्तन्निवेशः । अन्यत् प्रागुक्तप्रायम् । ननु द्वित्रयो येषामिति सुजन्तर्भावेण स्वी-कारे कृत्वसादितद्धितान्तर्भावेणापि विग्रहे बाधकाभावात्तादृशविग्रहस्थले समासः स्यादित्याशङ्कां निराचिकीर्षुराह—सुजन्तर्भावेणैवेति । एवकारेण तद्धितान्तरव्य-वच्छेदः । व्युत्पन्नत्वाच्चेति चस्त्वर्थे, कल्पनायाः फलानुरोधित्वादिति भावः । सर्वत्रेति । 'उपदशा अधिकदशा द्वित्रा पञ्चषा' इत्यादिषु सर्वत्रेत्यर्थः ।

निरूढलक्षणया स्वांशज्ञापकपदघटितत्वनिवेशव्यावृत्तिमाह—स्वधनसम्बन्धी-

रामभद्रीटीका ।

संशयसत्त्वे बलवत्तरप्रमाणाभावात्तत्रापि चतुष्कोटिक एव संशय इति । द्वित्रा इत्यादौ च-भावस्य संशयकोटिकतयाऽनुभवस्य बाधितत्वात् इत्याशयेनाहुरित्युक्त्वाऽस्वरसो व्यंजितः ।

इति श्रीनवद्वीपीय महामहोपाध्याय श्रीरामभद्रसिद्धान्तवागीशभट्टाचार्यविरचिता शब्दशक्तिप्रकाशिकाप्रबोधिनी समाप्ता ॥

---

(१) वस्तुतो द्वित्रास्तिष्ठन्तीत्यादितो द्वौ वा त्रयो वा तिष्ठन्तीति न संशयः, शब्दस्य तत्रासाम-र्थ्यात्, द्वौ त्रयस्तिष्ठन्तीति च न निश्चयः द्वयोः सत्त्वे भ्रमत्वापातादिति द्वित्र्यन्यतरे सन्तीति बोध इति जयरामपञ्चाननभट्टाचार्याः ।

लक्षणया प्रत्यायकपदेन घटितः । तथा आधुनिकलक्षणया स्वपटबोधकेन पटपदेन गर्भितः 'पटसम्बन्धी'त्यादिरपि । 'मातृभक्त' इत्यादिकस्तु तत्पुरुषः स्वमातृत्वेन निरूढलक्षणया बोधकेन विशेषितोऽपि न तत्सम्बन्धित्वेन बोधकः ।

न च द्वौ मुनी, त्रयो वा मुनयो यस्येति वक्तृत्वार्थकषष्ठ्या विग्रहे स्ववक्तृमुनिद्वयादिसम्बन्धित्वेन बोधके 'द्विमुनि, त्रिमुनि वा ग्रन्थ' इत्यादौ द्विमुन्याद्यव्ययीभावे, स्वमातृसम्बन्धित्वेन बोधके 'मातृसम्बन्धी'त्यादितत्पुरुषे चातिव्याप्तिः, तदन्यत्वेनापि विशेषणीयत्वात् ।

इदमत्रावधातव्यम्—'चित्रगुरस्ती'त्यादौ चित्राभिन्नस्वगोसम्बन्धिप्रभृतीनां प्रतीत्यर्थं न चित्रगुसमुदायस्य लक्षणा, तस्य वाक्यत्वेन लक्षकत्वायोगात्, वाक्ये लक्षणायाः प्रागेव परास्तत्वात् । न च चित्रपदमेव

---

कृष्णकान्तीटीका ।

त्यादि । घटित इति । तत्र स्वपदेन स्वस्य षष्ठ्यादिनिरूपितत्वस्य, सम्बन्धिपदेन सम्बन्धिन उपस्थापनादिति लक्षणाया अस्वीकारादिति भावः । निरूढ इत्यस्य व्यावृत्तिमाह—तथेति । न निरूढलक्षणाया स्वांशज्ञापकपदघटित इत्यर्थः । लक्षणाया निरूढत्वञ्च—आजानिकत्वम्, अनादितात्पर्यमूलकत्वमिति यावत् । स्वघटितार्थसम्बन्धित्वप्रकारतानिवेशव्यावृत्तिमाह—मातृभक्त इति । तत्र भजधात्वर्थभुक्तौ विषयितासम्बन्धेन मातुरन्वयात् तत्सम्बन्धिनि लक्षणाया अनावश्यकत्वादिति भावः । ननु मातृभक्त इत्यत्र नातिव्याप्तिः, निरूढ इत्यस्य बोध इत्यनेनान्वयस्य कर्त्तव्यत्वादिति चेन्न । तस्य लक्षणान्तरत्वात्, यत्र गोपदस्य स्वीयत्वविशिष्टे आधुनिकी लक्षणा, गोसम्बन्धिनि निरूढा तत्रापि बहुव्रीहिप्रसङ्गाच्च ।

शङ्कते—न चेति अतिव्याप्तिरिति परेणान्वयः । अव्ययीभाव इति । नन्वत्र सम्बन्धित्वप्रकारकान्वयबोधे मानाभावः, स्ववक्तृमुनिद्वयकत्वेनैवान्वयबोध इति यदुच्यते तदाऽऽह—स्वमातृसम्बन्धित्वेनेति । समाधत्ते—तदन्यत्वेनापीति । विशेषणीयत्वादिति, लक्षणस्येत्यादिः ।

बहुव्रीहिस्थकिम्पदस्य कुत्र लक्षणेति विवेचयति इदमत्रावधातव्यमिति । तस्य—चित्रगुसमुदायस्य । लक्षकत्वायोगादिति—वाक्यस्य कुत्राप्यशक्ततया शक्यसम्बन्धरूपाया लक्षणाया असम्भवादिति भावः । अत एव "यादृशार्थस्य सम्बन्धवति शक्तन्तु यद्भवेत् । तत्र तल्लक्षकं नाम तच्छक्तिविधुरं यदी"ति स्वयमुक्तम् । ननु लक्षणा शक्यसम्बन्धरूपैव न परन्त्वतिरिक्तेति वाक्यमपि लक्षकं भवत्येव, कथम-

तत्र चित्राभिन्नस्वगोसम्बन्धिलक्षकं, गोपदन्तु तादृशार्थे तात्पर्य्यग्राहकं लक्षणाया निरूढत्वसम्पादकं वेति वाच्यम्। चित्रपदस्य प्रथमान्तत्वाभावेन तदर्थेऽस्तित्वाद्यन्वयस्यानुपपत्तेः, प्रथमान्तपदोपस्थाप्यस्यैव भावनाविशेष्यत्वात्, अन्यथा 'राजपुरुषोऽस्ती'त्यादावपि राजन्यस्तित्वान्वयप्रसङ्गात्, प्रकृत्यर्थ एव सुपः संख्याबोधकत्वव्युत्पत्तेः, गोपदोत्तरप्रथमया चित्रपदोपस्थाप्ये चित्राभिन्नस्वगोसम्बन्धिन्येकत्वबोधनायोगाच्च।

यत्तु—गोपदमेव तादृशगोसम्बन्धिलक्षकं, चित्रपदन्तु तत्र तात्पर्य्यादिग्राहकम्—इति मणिकाराद्युक्तम्, तन्न युक्तम्—पूर्वपदार्थसाकाङ्क्षस्यैव स्वार्थस्योपसर्जनतायां गोपदस्य ह्रस्वविधानात् चित्रपदार्थेन समं तदर्थस्यानन्वये तदनुपपत्तेः, अन्यथा 'गौरस्ती'त्यादावपि चित्राभिन्नस्वगोसम्बन्धित्वेन गोपदस्य लक्षणायामुदन्तत्वापत्तेः। न च नामोत्तरवर्त्तिन एव गोपदस्य स्वार्थोपसर्जनताय। ह्रस्वविधिः, यत्र गोपदेन लक्षणयोपस्थापिते

---

कृष्णकान्तीटीका।

यथा गभीरायां नद्यां घोष इत्यादौ गभीरनदीतीरस्यानुभव इत्यत आह—वाक्ये लक्षणाया इति। प्रागेवेति। लक्षणाविचारे मीमांसकमतदूषणे 'तन्ने'त्यादिग्रन्थेनेत्यर्थः। समासादन्यत्र नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात्, गभीरायां नद्यामित्यत्र नद्यामिति भागस्य तादृशतीरकलक्षकत्वे घोषादावाधेयत्वेन तदन्वयानुपपत्तिरिति दोषस्य तत्र दत्तत्वादिति भावः। शङ्कते—न चेति। तात्पर्यज्ञानहेतुतायाः स्वयमनङ्गीकारादाह—लक्षणाया इति। दूषयति चित्रपदस्येति। कुत इत्यत आह—प्रथमान्तपदोपस्थाप्यस्यैवेति। अत्र प्रथमान्तत्वं स्वोत्तरत्वेनोपस्थितप्रथमाकत्वम्, अतो 'दध्यस्ती'त्यादौ दधिपदस्य यथाश्रुतप्रथमान्तत्वाभावेऽपि न क्षतिः। तादृशनियमे विप्रतिपन्नं प्रत्याह—अन्यथेति। उक्तनियमानङ्गीकार इत्यर्थः। प्रसङ्गादिति प्रतिबन्देरनुत्तरत्वादाह—प्रकृत्यर्थ एवेति। एकत्वबोधनायोगाच्चेति। अन्यथा गङ्गायां घोषावित्यत्र द्वित्वस्य तीरान्वयप्रसङ्गात्।

चिन्तामणिकृन्मतमाह—यत्त्विति। गोपदमेवेत्येवकारेण चित्रादिपदव्यवच्छेदः। तादृशेति। चित्राभिन्नेत्यर्थः, तथा च प्रकृत्यर्थ एव सुपः संख्याबोधकत्वमिति व्युत्पत्तिभङ्गोऽपि नास्तीति भावः। तदर्थस्य—गोपदार्थस्य, तदनुपपत्तेरित्यर्थः। "गोरप्रधानस्यान्तस्य स्त्रियामादादीनाञ्चेति ह्रस्व" इति सूत्रेऽन्तशब्देनैव पूर्वपदार्थसाकाङ्क्षस्वार्थकत्वप्रतीतेरिति भावः। ननु स्वार्थोपसर्जनगोपदस्यैव ह्रस्वविधानम्, अतो नोक्तदोष इत्यत आह—अन्यथेति। उदन्तत्वापत्तेरिति। न चेति—ह्रस्व-

चित्राभिन्नस्वगोसम्बन्धिन्यभेदेन चित्रपदस्यान्वयस्तत्र 'चित्रगवोऽस्ती'-त्यादिकर्मधारयेऽपि गोपदस्य ह्रस्वप्रसङ्गात् । वस्तुतः 'कृतपाकश्चैत्र' इत्यादौ स्वकृतिविषयपाकसम्बन्धित्वादिना चैत्राद्यवगमः पूर्वपदस्य परपदस्य वा लक्षणया न सम्भवदुक्तिकस्तयोरशक्तत्वेन तद्भक्तत्वायोगात् । न च तत्र कादिवर्णस्य स्वरूपशक्तस्य घञादिप्रत्ययस्य वा स्वकृतिविषयपाकसम्बन्धिनि लक्षणा, तन्निरूढत्वसम्पादकञ्च शब्दान्तरमिति साम्प्रतम् । कृतादिपदेभ्यः स्वार्थानुपस्थितावपि तदन्वयबोधप्रसङ्गात्, घञादिमात्रस्य नामत्वाभावेन तन्मात्रोपस्थाप्यार्थे सुबर्थान्वयायोगात्, प्रकृत्यर्थावच्छिन्नस्यैव कृदर्थस्य पदार्थान्तरेऽन्वयबुद्धेर्व्युत्पन्नत्वाच्च । (१)तस्माच्चित्रगुरित्यत्र गोपदं स्वगोसम्बन्धिलक्षकं, तदेकदेशे च

कृष्णकान्तीटीका ।

विधिरिति परेणान्वयः । ह्रस्वप्रसङ्गादिति । तत्र गोपदस्य नामोत्तरवर्त्तित्वादप्रधानत्वाच्च । ननु निरूढलक्षणया स्वार्थोपसर्जनतायां ह्रस्वविधानान्नैष दोष इत्यत आह—वस्तुत इति । पूर्वपदस्य—कृतपदस्य,—परपदस्य—पाकपदस्य, तयोः—पूर्वपरपदयोः । अशक्तत्वेनेति । वाक्यत्वादित्यादिः । तद्भक्तत्वायोगात्—तल्लक्षकत्वायोगादित्यर्थः । शङ्कते—न चेति । स्वरूपशक्तस्य—कत्वावच्छिन्नशक्तस्येत्यर्थः । ननु कादिवर्णस्य स्वरूपशक्तत्वेऽपि तादृशशक्त्यग्रहकाले तथाविधशाब्दानुपपत्तिः, लक्षणाग्रहस्य शक्तिग्रहाधीनत्वादित्यत आह—घञादीति । शाब्दबोधात् पूर्वं तच्छक्तिज्ञानस्यावश्यकत्वादिति भावः । ननु तथासत्येतत्सकलपदानां वैयर्थ्यम्, तात्पर्यज्ञानस्य शाब्दहेतुतायाः पूर्वं दूषितत्वात्तात्पर्यग्राहकत्वकल्पनस्यासम्भवादत आह—तन्निरूढत्वेति । उक्तलक्षणाया निरूढत्वेत्यर्थः । दूषयति—कृतादिपदेभ्य इति । स्वार्थेति । कृतिविषयाद्यनुपस्थितावपीत्यर्थः । तादृशबोधप्रसङ्गस्येष्टत्वेऽप्याह—घञादीति । मात्रपदेन प्रकृत्यसमभिव्याहारः सूचितः । नामत्वाभावेनेति । प्रकृतिसहितघञाद्यन्तभागस्यैव कृदन्तनामत्वादिति भावः । तन्मात्रोपस्थाप्येति । घञादिमात्रोपस्थाप्यकृतिविषयपाकसम्बधिनीति यावत् । सुबर्थस्यैकत्वादेरन्वयायोगादित्यर्थः । कुत इत्यत आह—प्रकृत्यर्थावच्छिन्नस्यैवेति । व्युत्पन्नत्वाच्चेति । अन्यथा पक्ता गच्छतीत्यादितोऽपि कर्त्ता गच्छतीति बोधापत्तेरिति भावः ।

(१) अन्यपदार्थप्रधानो बहुव्रीहिः, विग्रहवाक्याद्यत्पदार्थे यत्प्रतियोगिकसम्बन्धाश्रयत्वं भासते तत्पदार्थवृत्तिसम्बन्धप्रतियोगिनि तत्र लक्षणास्वीकारात् । तथाहि—चित्रा गौर्यस्येति विग्रहवाक्याच्चित्राभिन्ना गौश्चैत्रादिस्वत्वाश्रय इत्यन्वयबोधाच्चित्रगुरिति समासे गोपदे चित्रगोवृत्तिस्वत्वप्रतियोगिनि ल-

गवि तादात्म्येन चित्रपदस्यान्वयः। न च गोधार्मिकान्वयबुद्धौ तद्धर्मिकवृत्तिज्ञानत्वेन हेतुत्वात् पदार्थैकदेशे गवि चित्रस्यान्वयो दुर्घटः, 'चित्रव्रजोऽस्ती'त्यादौ गोस्थानरूपस्य व्रजस्यैकदेशे गवि चित्रस्यानन्वयेन तादृशव्युत्पत्तेरावश्यकत्वादिति वाच्यम्। 'घटशून्यं, चैत्रनप्ते'त्यादितत्पुरुषे भेदेनेव चित्रगुप्रभृतिबहुव्रीहावप्यभेदेन पदार्थैकदेशधर्मिकान्वयबोधस्य व्युत्पत्तिवैचित्र्येण सम्भवात्, फलानुरोधित्वात् कल्पनायाः। प्राच्यैरपि 'सुन्दरराजपुरुष' इत्यादावभेदेन सुन्दरादेः पदार्थैकदेशे राजन्यन्वयबुद्धेः स्वीकाराच्च।

यत्तु--गोपदं तत्र स्वकीयगोत्वेन सम्बन्धित्वेन च लक्षकमतश्चित्रस्य गोपदार्थे एव स्वकीये गवि, तस्य च सम्बन्धिनि अन्वयान्न पदार्थैकदेशान्वयित्वम्, एकपदार्थयोश्च मिथोऽन्वयः कृतिवर्त्त-

कृष्णकान्तीटीका।

उपसंहरति—तस्मादिति। दुर्घट इति। गोधर्मिकवृत्तिज्ञानविरहादिति भावः। गोपदार्थधर्मिकान्वयबुद्धौ गोपदार्थधर्मिकस्य गोमुख्यविशेष्यकान्वयबुद्धौ च गोधर्मिकस्य वृत्तिज्ञानस्य हेतुत्वोक्तौ नासम्भवोऽतो दुर्घटत्वमुक्तम्। एकदेशान्वयास्वीकारे युक्तिमाह—चित्रव्रजोऽस्तीत्यादाविति। तादृशव्युत्पत्तेरिति। "पदार्थः पदार्थ एवान्वेति, न तु पदार्थैकदेश" इति व्युत्पत्तेरित्यर्थः। 'घटशून्यमि'त्यत्र शून्यपदार्थोऽत्यन्ताभाववत्, तदेकदेशेऽत्यन्ताभावे प्रतियोगितासम्बन्धेनान्वयः। 'चैत्रनप्ता' इत्यादौ नप्तृपदार्थस्य च दुहितृपुत्रस्यैकदेशे जन्यत्वे निरूपकत्वसम्बन्धेन चैत्रस्यान्वयः। आदिपदा'च्चैत्रप्रजावती, मैत्रश्याल' इत्यादिसंग्रहः। भेदेनेवेति। अभेदातिरिक्तसम्बन्धेनेवेत्यर्थः। अभेदेनाभेदसम्बधेन। वैचित्र्येणेति। "तत्पुरुषबहुव्रीह्यघटकः पदार्थः (पदार्थः) पदार्थं एवान्वेती"ति व्युत्पत्तेः स्वीकारादिति भावः। ननु भेदसम्बन्धेन क्वचिदन्वयबोधस्वीकारेऽप्यभेदसम्बन्धेन तस्य केनाप्यनङ्गीकारादिदमसङ्गतमित्यत आह—प्राच्यैरिति।

तस्य च-गोश्च। नन्वेकपदोपस्थाप्ययोरर्थयोर्मिथोऽन्वयोऽव्युत्पन्न इत्यत आह—एकपदार्थयोरिति। कृतिवर्त्तमानत्वयोरिवेति। यथा 'पचती'त्या-

क्षणा चित्रपदं तात्पर्यग्राहकम् इति जयरामपञ्चाननाः। केचित्तु चित्रापदं चित्रास्वामिपरम्, गोपदं गोस्वामिपरम्, चित्रास्वामी गोस्वामीति बोधः। चित्रात्वेन गोत्वेन चैकस्यैव भानम् 'व्यक्तिवचनानामि'ति न्यायादतो नातिप्रसङ्ग इत्याहुः। तन्न युक्तं तादृशबोधस्याननुभविकत्वात् शोभनचित्रगुरितित्रिपदबहुव्रीहावसंभवाच्च।

मानत्वयोरिव नाव्युत्पन्न—इति । तन्मदन्म्, तथासति "चित्रगुः पुरुषस्तस्याः सञ्चारोऽतिमनोहर" इत्यादौ तदादेः स्वकीयगवादिपरामर्शकत्वापत्तेः, पदार्थैकदेशस्यैव परामर्शकतायास्तदादावव्युत्पन्नत्वादिति । एवञ्चा'रूढवानरो वृक्ष' इत्यादावपि रुहधातुना स्वकर्मकारोहणस्य, क्तेन कर्तुः वानरपदेन च वानरसम्बन्धिन उपस्थापनादमीषामाकाङ्क्षादिघीसाचिव्यादेव स्वकर्मकारोहणकर्त्रभिन्नवानरसम्बन्धित्वादिना वृक्षादेर्बोध इत्यास्तां विस्तरः ॥ ४३ ॥

न चारूढो वानरो यस्य वृक्षमित्यादिविग्रहादारूढवानरपदं स्वकीयवृक्षारूढवानरसम्बन्धित्वेन ग्रामादिकं बोधयदपि बहुव्रीहिः स्यादतस्तादृग्वाक्यस्य विग्रहत्वं खण्डयन्नाह——

**अस्यैकं प्रथमान्तं सत् सुबन्तैरितरैः सह ।**
**यदा भेदसुबन्तेन साकाङ्क्षं नाम विग्रहः ॥ ४४ ॥**

अस्य बहुव्रीहेर्घटकमेकं नाम प्रथमान्तं सत्सुबन्तैरितरनामभिः सह

---

कृष्णकान्तीटीका ।

दावाख्यातार्थयोः कृतिवर्त्तमानत्वयोः परस्परमन्वयस्तथात्रापीति भावः । अव्युत्पन्नत्वादिति । अस्मन्मते च गवादेरेकदेशत्वान्न तत्परामर्शकत्वापत्तिरिति भावः । इदमत्रावधेयम्—तत्पदस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नशक्तत्वादेकदेशपरामर्शकत्वमस्त्येव, कथमन्यथा

पटोलपत्रं पित्तघ्नं, नाडी तस्य कफापहा ।
फलं तस्य त्रिदोषघ्नं, मूलं तस्य विरेचकम् ॥

इत्यत्र तत्पदस्य पटोलपरामर्शकत्वमिति भवन्मतेऽपि तदापत्तिः समाना, समानं समाधानञ्चेति । न'न्वारूढवानर' इत्यत्रोक्तदिशा वानरपदस्य तत्सम्बन्धिनि लक्षकत्वेऽपि स्वांशज्ञापकत्वासम्भवादारूढ इत्यस्य वाक्यत्वेन लक्षकत्वायोगात् ततस्तादृक्शाब्दबोधोऽनुपपन्न इति तत्र तमुपपादयति—एवञ्चेति । बहुव्रीहावेकदेशान्वयस्य युक्तिसिद्धत्वे चेत्यर्थः । साचिव्यादेव—सहकारादेव ॥ ४३ ॥

यस्येति । षष्ठ्यर्थो वृत्तिः, सा च वृक्षेऽन्विता ।

विग्रहलक्षणमाह—अस्यैकमिति । विवृणोति—अस्य बहुव्रीहेरिति । तथा च यद्बहुव्रीहिघटकं यन्नाम प्रथमान्तीभूय स्वघटकघटवन्तसकलनामसाकाङ्क्षभेदार्थकपदवत्तयच्छब्दसाकाङ्क्षम् तादृशं तन्नाम तद्बहुव्रीहौ विग्रहः कथ्यत इत्यर्थः ।

भेदार्थकसुबन्तयच्छब्देन साकाङ्क्षं विग्रहः कथ्यते। नचोक्तवाक्ये तथा, सुबन्तस्यापि यदस्तत्र वृक्षपदेनैव साकाङ्क्षत्वात्। आरूढो वानरो य इत्यादौ तु यच्छब्दो न भेदार्थकसुबन्त इति न तादृशस्यापि वाक्यस्यार्थे बहुव्रीहिः। पतितस्य धनं यस्य दण्डाद्घटो यस्मादित्यादिकस्तु समानार्थकसुब्द्वयीमन्तर्भाव्य न बहुव्रीहिविग्रहः, सम्प्रदायविरोधात्। एवं घटेन पटो यत्रेत्यादिकः सहाद्यर्थमन्तर्भाव्यापि। सुबन्तैरिति तु सम्भवाभिप्रायम्, तेना'घटो देश' इत्यादिबहुव्रीहेर्न घटो यत्रेत्यादिविग्रहेण नञादेः सुबन्तत्वाभावेऽपि नाव्याप्तिः। 'सपुत्र' इत्यादौ तु सह पुत्रो येनेत्यादिरेव विग्रहो, न तु पुत्रेण सहेत्यादिरन्यपदार्थाप्राप्तेः। 'सघटो देश' इत्यादौ च सह घटो येनेत्यादिविग्रहे सहार्थो वैशिष्ट्यं, न तु सामानाधिकरण्यम्, घटे देशस्य तद्बाधात्। 'जीवत्पितृक' इत्यादेस्तु जीवन्

---

कृष्णकान्तोटीका।

नचेति। उक्तेति। आरूढो वानरो यस्य वृक्षमिति वाक्ये, तथा-निरुक्तविग्रहत्वम्, कुत इत्यत आह—सुबन्तस्येति। सुबन्तस्य-भेदार्थकसुबन्तस्य, यदः-यच्छब्दस्य, एवकारेण स्वघटकसुबन्तसकलनामव्यवच्छेदः। भेदार्थकत्वव्यावृत्तिमाह—आरूढ इति। ननु तस्य विग्रहत्वे का क्षतिरित्यत आह—इति नेति। विरोधादिति। तथा च समानार्थकसुब्द्वयाघटितत्वमपि लक्षणविशेषणमिति भावः। न च समानाधिकरणबहुव्रीहियोग्यवाक्यमात्रस्यैव समानार्थकप्रथमाद्वयघटितत्वात्तत्राव्याप्तिरिति वाच्यम्। प्रथमान्यतादृशसुब्द्वयाघटितत्वस्यैव निवेश्यत्वात्। चैत्रस्य धनं यस्मादित्यादिविग्रहेऽव्याप्तिवारणाय समानार्थकेति सुब्द्वयविशेषणम्, तदर्थश्च तुल्यार्थकशब्दोत्तरत्वमतः पतितस्येत्यादौ पतितपदोत्तरषष्ठ्याः स्वामित्वार्थकत्वविरहेऽपि न क्षतिः, एवञ्च विग्रहलक्षणे भेदार्थकत्वं सुब्विशेषणमावश्यकम्। एवं सहाद्यर्थकसुबघटितत्वमपि विशेषणं देयमिति। न च दक्षिणया पुत्री यस्या इति विग्रहेऽव्याप्तिर्विशेषविधानादिति मामकीनोऽभिनवः पन्थाः। अन्तर्भाव्यापीति। न विग्रह इत्यादेरनुषङ्गः। सम्भवाभिप्रायमिति। तथा च सुबन्तत्वेनोपस्थितिमत्त्वमेव लक्षणे निविष्टमिति भावः। कुत इत्यत आह—तेनेति। इत्यादिरेवेति। सहशब्देनैवैकक्रियान्वयित्वरूपसाहित्यबोधात् पुत्रकर्तृकक्रियाजातीयस्वक्रियासम्बन्धित्वेन पितुरवगमः, अप्राप्तेः-अज्ञानात्। सहशब्दस्य यत्र न तादृशार्थकत्वं तत्रापि बहुव्रीहिरित्याह—सघट इति। तद्बाधात्-सामानाधिकरण्यबाधात्। ननु प्रथमान्तपदोपस्थाप्यार्थधर्मिकशत्रन्तपदार्थविधेयकबोधानङ्गीकारात् जीवन् पिता यस्येति विग्रहो न सम्भवतीत्यत आह—

पिता यस्येति विग्रहो यस्य च पिता जीवान्नित्येवं जीवद्विधेयकान्वये निराकाङ्क्षोऽपि जीवदभिन्नः पिता यदीय इत्यन्वय एव साकाङ्क्षः।

इदन्तु बोध्यम्-यत्र विग्रहवाक्ये सुबन्तयदः क्रियासाकाङ्क्षत्वसम्भव स्तत्र तदर्थान्वितक्रियागर्भित एवार्थे विना बाधकं बहुव्रीहिर्व्युत्पन्नः, तेन गन्तव्यो ग्रामो यस्येति विग्रहे गन्तव्यग्रामश्चैत्र इत्यादितः स्वकर्तृकगतिकर्म-ग्रामसम्बन्धित्वेनैव चैत्रादेरौत्सर्गिको बोधः, कदाचित्तु-तात्पर्य्यादिवशा-द्गन्तव्याभिन्नस्वकीयग्रामसम्बन्धित्वेन। यत्र तु यदस्तत्साकाङ्क्षत्वासम्भव-स्तत्र विशेषविध्यसत्त्वे यन्नामार्थमुख्यविशेष्यको विग्रहवाक्याद्बोधः सुबन्त-यदर्थान्वितन्नामार्थगर्भित एवार्थे, अत एव धनी दासो यस्येत्यर्थे यदीयधन-वान् दासस्तस्य 'धनिदासकोऽयमि'त्यादितो नावगमः, किन्तु धनवत्त्व-दाससम्बन्धिन एव। चन्द्रश्चूडायां यस्येत्यादिकस्तु विग्रहो न यदीय-श्चन्द्रश्चूडायामित्यर्थकः, किन्तु यदीयचूडायां चन्द्र इत्यर्थकस्तादृशार्थे एव सप्तम्यन्तेनेन्द्वादेर्विशेषतो बहुव्रीहिविधानात्, तेन 'चन्द्रचूडः शिव' इ-त्यादौ स्वचूडावृत्तिचन्द्रसम्बन्धित्वेन शिवस्यावगमो न तु चूडावृत्तिस्व-कीयचन्द्रसम्बन्धित्वेन तस्य गगनादेर्वा बोधः। ससम्बन्धिकपदार्थस्य वि-शेषणत्वस्थले तु सुबन्तयदर्थान्वितेन तादृशपदस्यार्थेन गर्भितेऽपि, अत एव

---

कृष्णकान्तीटीका।

जीवदिति। इत्यन्वय एव साकाङ्क्ष इति। तथा च जीवत उद्देश्यतावच्छेदकत्वे-न विधेयत्वाभावान्नानुपपत्तिगन्धोऽपीति भावः।

तदर्थान्वितक्रियेति। यदर्थान्वितेत्यर्थः। बाधकं विनेत्यस्य फलमाह—कदा-चित्त्विति। सम्बन्धित्वेनेति बोध इति पूर्वेणान्वयः। तत्साकाङ्क्षत्वासम्भवः-क्रियासाकाङ्क्षत्वासम्भवः। एवार्थ इति। बहुव्रीहिर्व्युत्पन्न इति पूर्वेणान्वयः, एवमग्रेऽपि। तस्येति नावगम इति परेणान्वयः। सम्बन्धिन एवेति अवगम इति पूर्वेणान्वयः। विशेषविध्यसत्त्व इत्यस्य फलमाह-चन्द्र इति। तस्य-शिवस्य, अवगम इति पूर्वेणान्वयः। ननु तेन रूपेण बोधे का क्षतिः? शिवस्यान्यप-दार्थत्वाविशेषात्तादृशानुव्यवसायस्यापि सन्दिग्धत्वादित्यत आह—गगनादेर्वेति। तथा च चन्द्रचूडशब्दात् प्रथमात्मकगगनबोधः कदाचिदपि न जायते, सोऽपि स्यादिति भावः। ससम्बन्धिकेति। नियतप्रतियोगिसाकाङ्क्षपदार्थस्येत्यर्थः। तादृशेति। ससम्बन्धिकेत्यर्थः, गर्भितेऽपीत्यर्थे बहुव्रीहिर्व्युत्पन्न इत्यनुषज्यते,

"चैत्रः पुत्रकृतोत्कर्षः" इत्यादौ स्वपुत्रकृतोत्कर्षवानेव चैत्रादिः प्रतीयते, न त्वन्यदीयपुत्रकृतोत्कर्षाश्रयः ॥ ४४ ॥

बहुव्रीहिं विभजते-

तदतद्गुणसंविज्ञानौ द्वौ भेदौ, तदादिमः ।
विग्रहस्य विशेष्यो यस्तद्विशेषणकबोधकृत् ॥४५॥

तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च बहुव्रीहेर्द्वौ भेदौ । तत्र विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो योऽर्थस्तद्विशेष्यकबोधकृद्बहुव्रीहिः तयोरादिमस्तद्गुणसंविज्ञानः, तस्य स्वार्थगुणीभूतस्य सम्यग्विशेष्यविधया विज्ञानं यस्मादिति व्युत्पत्त्या सान्वयसंज्ञाकत्वात्, तद्भिन्नश्चातद्गुणसंविज्ञानश्चरम इत्यर्थाद्गम्यते । 'घटस्वरूपः पदार्थः' इत्यादितो हि

---

कृष्णकान्तीटीका ।

अत एव-तादृशार्थे बहुव्रीहेर्व्युत्पन्नत्वादेवेत्यर्थः । प्रतीयत इति । विग्रहे छबन्तयदर्थचैत्रसम्बन्धस्य ससम्बन्धिकपदार्थपुत्रादिविशेषणत्वादिति भावः । अन्यत्र साधुत्वे का क्षतिरित्यत आह—न त्विति ॥ ४४ ॥

बहुव्रीहिविभाजकरूपनिरूपककारिकावतारणिकामाह—बहुव्रीहिमित्यादिना । विवृणोति तद्गुणसंविज्ञानेति । तथा च कारिकायां तच्चातद्गुणसंविज्ञानश्च तौ तदतद्गुणसंविज्ञानौ, तत्पदेन समभिव्याहारवशात् तद्गुणसंविज्ञानस्यैव बोधनात् कथकानां तथैव व्युत्पत्तेरिति भावः । अत एव "संसर्गान्योन्याभावभेदत" इत्यपि सङ्गच्छते । कारिकास्थविग्रहपदस्य विग्रहवाक्यपरतया व्याचष्टे—विग्रहवाक्यस्येति । वाक्यस्य विशेष्यत्वासम्भवात् तस्य व्यापारानुबन्धित्वसूचनायाह-विशेष्यविधयेति । तदादिम इति भागं व्याचष्टे—तयोरिति । तद्गुणसंविज्ञान इत्यस्य व्युत्पत्तिमभिदधान एव स्वोक्तलक्षणस्य स्वरसंसिद्धत्वं सम्पादयन्नाह—तस्येत्यादि । स्वार्थेति, स्वं बहुव्रीहिः, तदर्थप्रकारीभूतस्येत्यर्थः । तत्पदस्य बुद्धिस्थवाचकत्वादिति भावः । समित्यस्यार्थमाह सम्यगिति, तन्निकृष्टार्थमाह—विशेष्यविधयेति । सान्वयसंज्ञाकत्वादन्वर्थसंज्ञाकत्वादित्यर्थः । तदन्तिमलक्षणस्यानुक्तत्वान्न्यूनतापरिहारायाह—तद्भिन्नश्चेति । तद्गुणसंविज्ञानभिन्न इत्यर्थः । चरम इत्यनुपज्यते, तथा च तयोश्चरमश्चातद्गुणसंविज्ञानस्तद्गुणसंविज्ञानभिन्न इत्यर्थः । अर्थादिति । प्रतियोगिज्ञाने सति तद्भिन्नस्य सुग्रहत्वात् प्रतियोगिनिरूपणे तन्निरूपणस्यानावश्यकत्वादिति भावः । तथा च स्वघटकविग्रहवाक्यप्रयोज्यबोधमुख्यविशेष्यकबोधजनकबहुव्रीहित्वं तद्गुणसंविज्ञानलक्षणं, तदन्यबहुव्रीहित्वमतद्गुणसंविज्ञानलक्षणमिति फलितम् । लक्ष्ये

घटः स्वरूपं यस्येति विग्रहस्थले स्वस्वरूपाभिन्नघटसम्बन्धित्वेन घटाभिन्नस्वस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलसमेव विशेष्यविधया बोध्यते। घटस्य स्वरूपं यस्मादिति विग्रहे च विग्रहस्य यद्विशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाभिन्नघटसम्बन्धित्वेन। 'कुटादिर्गण' इत्यादिरपि कुट आदिर्यस्येति व्युत्पत्त्या कुटाभिन्नस्य स्वधर्मिकव्यवस्थाधर्मिणः सम्बन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञान एव बहुव्रीहिः(१) ॥ ४५ ॥

प्राचां मतेन तद्गुणसंविज्ञानबहुव्रीहिमन्यथा निर्वक्ति—

**यः स्वार्थघटकार्थस्य स्वार्थान्वयिनि बोधने।**
**अनुकूलो बहुव्रिहिः स तयोरथवाऽऽदिमः ॥ ४६ ॥**

यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्यार्थस्यान्वयबोधने

कृष्णकान्तीटीका।

लक्षणं सङ्गमयति—घटस्वरूप इति। हि—यस्मात्, अन्वयश्चास्य बोध्यत इत्यत्र। उद्देश्यवाचकपदस्य पूर्ववर्त्तित्वानियमाभिप्रायेणाह—घटाभि' ति। अलक्ष्ये लक्षणागमनव्याजेन चरमविशेष्यत्वे मुख्यविशेष्यत्वनिवेशव्यावृत्तिं व्यञ्जयति घटस्येति। विशेष्यं घटभिन्नस्वरूपम्, अन्यद्दण्डादि। सम्बन्धित्वेनेति। इदमुपलक्षणं, घटाभिन्नस्वजन्यसम्बन्धित्वेनेत्यपि बोध्यम्। इति न तत्र प्रसङ्ग इति पूरणीयम्, तथा च मुख्यत्वानिवेशे घटस्य स्वरूपस्य वा विशेष्यत्वानपायादतिव्याप्तिरिति भावः। ननु तन्निवेशे कुटादीत्यादिबहुव्रीहावव्याप्तिस्तत्र स्वार्थविशेषणस्य कुटो मुख्यविशेष्यतयाऽभानादित्यत आह—कुटादिर्गण इति। व्यवस्था—ज्ञानं, व्यवस्थाधर्मिणोऽन्नादिपदार्थत्वमिति भावः। तच्चापेक्षात्मकम्। कुटमपीति। तथा च तल्लक्षणे तद्विशेष्यक इत्यत्र तन्मात्रविशेष्यकत्वं मया न निवेशितं येनाव्याप्तिः स्यादिति भावः ॥ ४५ ॥

प्राचीनमते लक्षणान्तरस्योक्तत्वात् तस्यावतारणिकामाह—प्राचामित्यादि। विवृणोति—यो बहुव्रीहिरिति। तथा च स्वघटकार्थविषयतानिरूपितविषयतावच्छिन्नविषयतानिरूपितस्वार्थविषयताशालिबोधजनकत्वं तद्गुणसंविज्ञानत्वं पर्यवसितमिति भावः। एतन्मते तस्य स्वार्थघटकस्य गुणस्य विशेषणस्य सम्यक् स्वार्थान्वयिनि प्रकारतया ज्ञानं यस्मादिति व्युत्पत्तिर्बोध्या।

(१) अत्र कुटाभिन्नस्वधर्मिकज्ञानधर्मिसम्बन्धित्वादिनाऽऽदिपदे लक्षणा, लक्ष्यतावच्छेदकस्यापि कुटादेर्विशेष्यान्वयिधात्वादिनाऽन्वयात्तद्गुणत्वम्, लक्षणाया अजहत्स्वार्थात्वञ्च बोध्यम्।

समर्थः स तयोस्तदतद्गुणसंविज्ञानयोरादिमः। 'लम्बकर्णमानय, हारग्रीवं पश्ये'त्यादौ हि बहुव्रीहिर्लम्बस्वकर्णसम्बन्धिनः, स्वग्रीवावृत्तिहारसम्बन्धिनश्च स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृश-कर्ण-हारादेरपि व्युत्पत्तिवैचित्र्येणान्वयबोधने समर्थ इत्येवंविध एव तद्गुण-संविज्ञानस्तद्भिन्न एव चार्थादतद्गुणसंविज्ञानः, यथा 'दृष्टसागरमानय' इत्यादीति प्राचां मतम् ॥ ४६ ॥

व्युत्पत्तिवैशद्यार्थमन्यथापि पुनर्विभजते--

स्वान्तर्निविष्टाद्वित्र्यादिनामभिर्विग्रहात् पुनः।
बहुव्रीहिर्बहुविधो द्विपद-त्रिपदादिकः ॥ ४७ ॥

द्वि त्रि-चतुरादिभिरेव स्वघटकनामभिर्विग्रहवशात् द्विपद-त्रिपदचतुष्पदादिको बहुव्रीहिर्बोध्यः। चित्रा गौर्यस्येति विग्रहात् 'चित्रगुरि'त्यादौ द्विपदस्यैव, जरती चित्रा गौर्यस्य, महन्नीलमुत्पलं यत्रेत्यादिविग्रहात् 'जरतीचित्रगुश्चैत्रो' 'महन्नीलोत्पला सरिदि'त्यादौ त्रिपदस्यापि बहुव्रीहे-

---

कृष्णकान्तीटीका।

लक्ष्ये लक्षणं सङ्गमयति—लम्बकर्णमानयेत्यादि। ननु 'लम्बकर्णमानये'त्यत्र कर्मत्वादौ तस्यान्वये मानाभावः, तादृशवाक्यश्रवणानन्तरं तदानयनं न स्यादिति तु न देश्यम्, पुरुषानयनस्य तदानयननियतत्वादित्यत आह—हारग्रीवमिति। अत्र हारं विनापि पुरुषानयनसम्भवात्तत्र तदन्वयस्यावश्यकत्वमिति भावः। हि-यस्मात्, अन्वयश्चास्य बोधने समर्थ इत्यत्र। इतीति। अतः इत्यर्थः। एकत्र विशेषणत्वेनोपस्थितस्यान्यत्रान्वयासम्भवात् प्रकृत्यर्थान्वितस्वार्थबोधकत्वेन प्रत्ययस्य व्युत्पन्नत्वाच्चाह—व्युत्पत्तिवैचित्र्येणेति। अन्तिमस्य लक्षणमाह—तद्भिन्न एव चेति। उदाहरणमाह—यथेति। 'चित्रगुमानये'त्यादौ तादृशबोधौपयिकयोग्यतादिसत्त्वादाह-दृष्टेति। तथा चात्र योग्यताविरहेण तादृशबोधसमर्थत्वाभावान्न तद्गुणसंविज्ञानत्वप्रसक्तिरिति भावः ॥ ४६ ॥

ननु बहुव्रीहेरेवं विभजने द्विपदादेरविभाजकत्वात् कथमभियुक्तानां तद्रूपेण कथाथामुपन्यास इति तद्रूपाणां विभाजकत्वव्यञ्जककारिकावतरणिकामाह—व्युत्पत्तिवैशद्यार्थमिति। विवृणोति—द्वि-त्रिचतुरादिभिरिति। तथा च स्वघटकनामद्वयघटितविग्रहको बहुव्रीहिर्द्विपदः, एवं त्रिपदादिकं निर्वाच्यमिति फलितम्। ननु त्रिपदादिबहुव्रीहिरेवासिद्धः, 'मत्तबहुमातङ्ग'मित्यादौ कर्मधारयोत्तरं द्विपदबहुव्रीहेरेव तादृशार्थकत्वसम्भवादित्यतस्त्रिपदादित्वं तत्र सम्पादयति—चित्रा गौर्यस्येत्यादिना

रावश्यकत्वात्, जरती चित्रगवी यस्य, महन्नीलोत्पलं यत्रेति, द्विपदविग्रहे जरतीशब्दे पुंवद्भावस्य महच्छब्दे चाकारस्य प्रसङ्गादुत्तरपदे तयोर्विधानात् समासान्तपदस्य चोत्तरपदत्वात्, एकत्र द्वयमिति न्यायेन गवि चित्रजरत्योरभेदानुभवस्योक्तरीत्या सम्पादयितुमशक्यत्वेन तदर्थमेव त्रिपदादिबहुव्रीहेरावश्यकत्वाच्च ॥ ४७ ॥

द्वन्द्वं लक्षयति—

**यद्यदर्थकयन्नामव्यूहो यद्यत्प्रकारके ।**
**बोधे समर्थः स द्वन्द्वः(१) समासस्तावदर्थकः ॥४८॥**

यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निश्चयस्तत्तदर्थ-

---

कृष्णकान्तीटीका।

आवश्यकत्वादित्यन्तेन । कथमित्याकाङ्क्षायामाह—जरतीत्यादि । प्रसङ्गादिति । ननु तत्स्वीकारेऽपि कथं न तयोः प्रसङ्ग इत्यत आह—उत्तरेति । पद इत्यस्य पर इति शेषः । "भाषितपुंस्कादनूङ्पूरण्यादिषु स्त्रियां तुल्याधिकरणे" इति पुंवद्भावानुशासनात् "आकारो महतः कार्यस्तुल्याधिकरणे पदे" (२)इत्याकारानुशासनाच्चेति भावः । ननु चित्रापदनीलपदयोरपि स्वापेक्षयोत्तरत्वमस्त्येवेति तत्स्वीकारेऽपि कथन्न प्रसङ्ग इत्यत आह—समासान्तेति । ननु कर्मधारयाघटकनामान्तराव्यवहितोत्तरनाम्नि तयोर्विधानं वक्तव्यमित्यत आह—एकत्र द्वयमिति । तथा चानुभवानुरोधेनैव त्रिपदिबहुव्रीहेः स्वीकारः, अन्यथाऽन्यपदार्थबोधार्थं बहुव्रीहिसामान्यस्य स्वीकारो न स्यादिति भावः । इदमुपलक्षणम्—द्वितीयाद्यन्तान्यपदार्थत्वमपि विभाजकं बोध्यम्, यदुक्तं भर्तृहरिणा—

यत्सुबन्तयदर्थेनान्वितः स्यात्तस्य विग्रहे ।
नामार्थस्तत्सुबन्तान्यपदार्थोऽसौ निगद्यते ॥ इति

स्वघटककश्चिन्नामार्थो यस्य बहुव्रीहेर्विग्रहघटकयत्सुबन्तार्थयदर्थेनान्वितः स्यात् तत् सुबन्तान्यपदार्थत्वेनासौ कथ्यते इति तदर्थः ॥ ४७ ॥

द्वन्द्वलक्षणप्रतिपादककारिकावतारणिकामाह—द्वन्द्वमिति । क्रमप्राप्तमित्यादिः । विवृणोति—यद्यदर्थोपस्थापकस्येति । तथा च स्वघटकयद्यन्नामोपस्थाप्ययद्य-

---

(१) परस्परानन्वितसमस्यमाननिखिलपदार्थबोधकसमासत्वं द्वन्द्वव्यवहारविषयत्वं वा द्वन्द्वसमासत्वमिति तत्त्वम् ।

(२) अत्र 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु (६।३।३४) इति 'आन्महतः समानाधिकरणजातीययोः' (६।३।४६) इति च पा० सूत्रम् ।

प्रकारकान्वयबोधं प्रति तत्त्वेन समर्थस्तादृशनामनिवह एव तावदर्थको द्वन्द्वसमासः। 'पाणिपादं वादय (धावय?), धवखदिरौ छिन्धी'त्यादौ हि कर्मत्वाद्यंशे करचरणादिप्रकारकान्वयबोधं प्रत्यमादिधर्मिकः करचरणाद्युपस्थापकस्य पाणपादादिक्रमिकनामस्तोमस्याऽव्यवहितोत्तरत्वसम्बन्धेन निश्चयः कारणम्, अतः पाणिपादादिसमुदायः करचरणादितत्तदर्थे द्वन्द्वः।

यत्तु—पाणिपादमित्यादौ समाहारद्वन्द्वे सर्वत्रोत्तरपदे पाणिपादादिसाहित्ये लक्षणा, अत एव नित्यं तत्रैकवचनं समाहारस्यैकत्वात्, पदान्तरन्तु तादृशलक्षणाया निरूढत्वसम्पादकं, तथाविधसाहित्यस्य च स्वाश्रयनिष्ठत्वादिसम्बन्धेनैव द्वितीयाद्यर्थकर्मत्वादौ साकाङ्क्षत्वात् पाणिपादं वादयेत्यादेर्नायोग्यत्वम्—इति प्राच्यैरुक्तम्,

---

कृष्णकान्तीटीका।

दर्थप्रकारकान्वयबोधं प्रति यादृशानुपूर्वीप्रकारकनिश्चयत्वेन हेतुत्वं तादृशानुपूर्वीमत्त्वसमासत्वं तत्तदर्थबोधे द्वन्द्वत्वमिति पर्यवसितार्थः। 'पाणिपादं वादये'त्यत्र पाणिपादमिति प्रतीकेऽतिव्याप्तिरतः समासत्वनिवेशः। 'धवखदिरौ छिन्धी'त्यत्र धवेतिभागेऽतिव्याप्तिवारणाय आनुपूर्वीनिवेशः। न च तस्य समासत्वाभावादेव नातिव्याप्तिरिति वाच्यम्। तथापि घटपटावित्यस्य कुड्यकुशूलबोधने द्वन्द्वापत्तेः, समूहालम्बननिश्चयस्य तादृशबोधं प्रति हेतुत्वात्। न च तादृशबोधत्वावच्छिन्नजन्यतानिवेशान्नोक्तदोष इति वाच्यम्। अमसाधारण्याय निरूप्यनिरूपकनिवेशस्यावश्यकत्वेन विशिष्टवाक्यार्थबोधत्वस्य जन्यतानवच्छेदकत्वादूव्यापकत्वनिवेशापेक्षया स्वरूपसम्बन्धरूपावच्छेदकत्वघटितलक्षणस्य लघुत्वादिति भावः। लक्ष्ये लक्षणं योजयति—पाणिपादमिति। द्वन्द्वस्य द्वैविध्यात् समाहारद्वन्द्वमुक्त्वेतरेतरद्वन्द्वमप्याह—धवखदिराविति। हि—यस्मात्, तच्च कारणमित्यन्वयि।

प्राचां मतं दूषयन् तदुपन्यस्यति—यत्त्विति। लक्षणायां युक्तिमाह—अत एवेति। साहित्ये लक्षणास्वीकारादेव। ननु लक्षणास्वीकारेऽपि कथमुपष्टम्भसङ्गतिरित्यत आह—समाहारस्येति। एकत्वादिति। तथा च लक्षणां विनोभयबोधकत्वेन द्विवचनप्रसक्तावेकवचनानुपपत्तेरित्युपष्टम्भसङ्गतिरिति भावः। ननु पादादिपदस्य पाणिपादादिसाहित्ये लक्षणास्वीकारे पाण्यादिपदं व्यर्थमित्यत आह—पदान्तरन्त्विति। निरूढेति। स्वयं तात्पर्यज्ञानहेतुताया अनङ्गीकारात् तात्पर्यग्राहकत्वं नोक्तमिति। द्वितीयाद्यर्थकर्मत्वादेः साहित्यनिष्ठत्वाभावेऽपि तत्याग्योग्यत्वं वारयति—तथाविधेति। पाणिपादसाहित्यस्येत्यर्थः। साकाङ्क्षत्वादन्वयनिरूपकत्वात्, यथाश्रुते आकाङ्क्षायाः शब्दनिष्ठत्वेनासङ्गत्यापत्तेः।

तन्न युक्तम्-तुल्यवदेकक्रियान्वयित्वं बुद्धिविशेषविशेष्यत्वं वा पाणिपादयोः साहित्यं, तस्य च नानात्वसम्भवेन तद्गतद्वित्वादिबोधार्थं समाहारद्वन्द्वादपि द्विवचनाद्यापत्तेर्दुर्वारत्वात् । साहित्यस्य द्वित्वबहुत्वेऽपि न समाहारद्वन्द्वस्य द्विवचनादिसाकाङ्क्षत्वन्तादृशद्विगोरिवेति चेत्, तर्हि पाणिपादप्रभृतीनां नानात्वेऽपि न तदर्थकस्य द्वन्द्वस्य द्विवचनाद्याकाङ्क्षत्वमित्येव वक्तुमुचितं कृतं साहित्ये भक्त्या, 'हस्त्यश्वं धनमि'त्यादेरयोग्यताया दुर्वारतापाताच्च-नामार्थयोर्भेदान्वयाव्युत्पन्नत्वेन हस्तिनामश्वानाञ्च साहित्यस्य स्वाश्रयत्वादिसम्बन्धेन धनादावन्वयायोगात्, तादृशसाहित्ये धनादेरभेदविरहाच्च । समाहारपरिभाषा तु क्लीबलिङ्गत्वनित्यैकवचनत्वादिपदसंस्कारोपयोगितयैवोपपन्ना, न द्वन्द्वस्यार्थव्यवस्थापिका ।

---

कृष्णकान्तीटीका ।

दूषयति—तन्न युक्तमिति । तुल्यवदिति । एकजातीयक्रियानिरूपिताकांक्षादेकजातीयसंसर्गनिरूपकत्वम् । बुद्धिविशेषेति । नानैकत्वप्रकारकबुद्धीत्यर्थः । द्वित्वादिबोधार्थमिति । तथा च यत्र तादृशसाहित्यगतद्वित्वान्वये तात्पर्यं तत्र समाहारद्वन्द्वस्यापि द्विवचनान्ततापत्तेरिति भावः । शङ्कते—साहित्यस्येति । बहुत्वेऽपि नानात्वेऽपीत्यर्थः । तादृशेति । समाहारेत्यर्थः, "द्वन्द्वैकत्वम्" "तथा द्विगो"रित्यनुशासनवशात्तथैव कल्पनादिति भावः । वक्तुमुचितमिति । युक्तेस्तौल्यादितिशेषः । भक्त्या-लक्षणया । ननु पाणिपादं न द्रव्यमित्यनुभवानुरोधेन तत्र भक्तिरावश्यकी । न च तादृशानुभव एवाप्रामाणिकः,प्रामाणिकस्तु पाणिपादं द्रव्यमित्येवान्वय (नुभव?) इति वाच्यम् । अनुभवापलापे पदार्थमात्रस्यापि खण्डनसम्भवात्, स्वाश्रयनिरूपिततादात्म्यसम्बन्धेन द्रव्ये पाणिपादान्वयस्थल एव तादृशप्रयोगसम्भवाच्चेत्यत आह—हस्त्यश्वं धनमित्यादि । दुर्वारतापाताच्चेति । धनादौ निरुक्तसाहित्यस्याभेदविरहादिति भावः । ननु स्वाश्रयत्वसम्बन्धेन धनादौ हस्त्यश्वसाहित्यस्यान्वयसम्भवान्नायोग्यत्वमित्यत आह—नामार्थयोरिति । ननु साहित्यस्य धनादावभेदविरहेऽपि तादृशसाहित्ये धनस्यैवाभेदान्वयो भवितुमर्हतीत्यभिमानं निराकर्त्तुमाह—तादृशेति । केचित्तु ननु नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वेऽप्यभेदान्वये बाधकाभावाच्चेत्यत आह तादृशेतीत्याहुः । तन्मन्दम्, 'अयोग्यताया दुर्वारत्वादि'ति ग्रन्थेन चरितार्थतया पुनस्तादृशाशङ्कनस्य सन्दर्भविरुद्धत्वात्, तथा सति साहित्यस्याभेदवि हाच्चेत्येव लिखनस्यौचित्याच्च । परे तु अयोग्यताया इत्यस्य स्वरूपसम्बन्धेनायोग्यत्ताया इत्यर्थं इत्याहुः । तन्न, लिखनानौचित्यस्य तादवस्थ्यात् । नन्वेवं तस्य समाहाराबोधकत्वे

एतेन—'धवखदिरावि'त्यादावितरेतरद्वन्द्वेऽप्युत्तरपदे धवखदिरसाहित्याश्रये लक्षणा, अन्यथा द्विवचनादेः प्रकृत्यर्थतावच्छेदकवत्येव पर्याप्तिसम्बन्धेन स्वार्थद्वित्वाद्यनुभावकत्वव्युत्पत्तेर्धवखदिरावित्यतो धवद्वयस्य खदिरद्वयस्य च प्रतीत्यापत्तेः—इति मीमांसकानां मतमप्यपास्तम्।

तुल्यवदेकक्रियान्वयित्वं धवखदिरविशेष्यकधीविशेषाविशेष्यत्वं वा धवखदिरयोः साहित्यं, तदाश्रयश्च धवद्वयादिकमपीति तादृशसाहित्याश्रयलक्षकत्वपक्षेऽपि धवखदिरावित्यतो धवद्वयादिबोधस्य दुर्वारतापत्तेः। न च त्रितयाविशेष्यकधवखदिरधर्मिकधीविशेष्यत्वमेव प्रकृते धवखदिरयोः साहित्यं, तच्च न धवद्वयादेरिति वाच्यम्। तादृशसाहित्यान्वयस्यानुभवेनास्पर्शात्। तस्मात् यत्र नानाधर्माणां प्रकृत्यर्थतावच्छेदकत्वं तत्र तत्तद्धर्मावच्छिन्ने समुदित एव पर्याप्तिसम्बन्धेन द्वित्वादिबोधने द्विवचनादिकं साकाङ्क्षम् न तु तादृशैकधर्मावच्छिन्नं परित्यज्य तथाविधापरधर्मावच्छिन्ने, यतो धवखदिरावित्यादितो धवयोः खदिरयोश्च बोधप्रसङ्ग

---

कृष्णकान्तीटीका।

समाहारसंज्ञायाः किं फलमित्यत आह-समाहारेति। तथा च समाहारबोधार्थं न तत्संज्ञा, किन्तु एकत्वादिविधानार्थमेवेति भावः। अर्थव्यवस्थापिका—समाहारार्थकत्वज्ञापिका।

मीमांसकमतं दूषयति—एतेनेत्यादिना। वक्ष्यमाणदोषेणेत्यर्थः। अन्यथा-तादृशलक्षणाया अस्वीकारे, द्विवचनादेरित्यादिना बहुवचनपरिग्रहः। प्रकृत्यर्थतावच्छेदकेति। प्रकृतिजन्यबोधविशेष्यतावच्छेदकेत्यर्थः, एवकारेण वस्तुगत्या प्रकृत्यर्थीभूतव्यवच्छेदः। ननु धवखदिरोभयगतद्वित्वस्य समवायसम्बन्धेन प्रत्येकं धवत्वादिविशिष्टेऽपि सत्वात् धवत्वादेरप्रकृत्यर्थतावच्छेदकत्वेऽपि नैतद्व्युत्पत्तिबाध इत्यत आह—पर्याप्तिसम्बन्धेनेति। अन्यथैकपदार्थतात्पर्येऽपि द्विवचनापत्तेरिति भावः।

दुर्वारतापत्तेरिति। योग्यतासत्वादिति भावः। शङ्कते-न चेति। त्रितयाविशेष्यकेति। तथा च धवौ खदिरावित्यादिज्ञानमादाय न द्वयोः प्रकृत्यर्थतावच्छेदकत्वमिति भावः। प्रकृते-धवखदिरावित्यत्र। एतेन 'धवखदिरपलाशा' इत्यत्र चतुष्टयाविशेष्यकेति बोध्यम्। अस्पर्शाद्विषयीकरणात्, भवद्विधानामपीति शेषः। अन्यथा कस्यापि साहित्यस्य स्वमतेऽभानात्तादृशसाहित्यादेरसङ्गतत्वापत्तेः। उपसंहरति—तस्मादिति। तथाविधेति। प्रकृत्यर्थतावच्छेदकेत्यर्थः। तथा चैकधर्मस्य तथात्व-

इति तत्त्वम् ।

'घटघटे'त्यादिकस्य 'घटकलसे'त्यादिकस्य 'घटतद्घटे'त्यादिकस्य च क्रमिकनामस्तोमस्य निश्चयत्वेन घटादेरन्वयबोधं प्रत्यहेतुत्वमतो न तादृङ्-नामनिवहो घटाद्यर्थे द्वन्द्वः। अत एव समस्यमानपदार्थयोस्तत्त्वावच्छेदकयोर्वा यत्र मिथो भेदस्तत्रैव द्वन्द्वस्य साधुत्वसूचनाय "चार्थे द्वन्द्व" (२।२।२९ ) इति पाणिनिः प्राह। अत एव भेदगर्भसमुच्चयार्थकं शब्दमन्तर्भाव्य धवश्च खदिरश्चेत्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः, समुपाददते च तत्र मिथो भेद-प्राप्त्यर्थश्चकारद्वयम् । 'पीततत्पटयोस्तादात्म्यमि'त्यादौ तत्पटादेः पीताद्य-

---

कृष्णकान्तीटीका ।

स्थल एवोक्तव्युत्पत्तेरिति भावः । तत्त्वमिति । तथा च साहित्ये भक्तिं विनाऽप्य-न्वयसम्भवात् कृतं तादृशसाहित्ये भक्त्येति भावः ।

यद्यत्प्रकारताबोधसमर्थत्वनिवेशव्यावृत्तिमाह—घटघटेत्यादिकस्येति । एक-घटतात्पर्यकस्येति शेषः, एवमग्रेऽपि, सम्प्रदायविदः । तन्न, वीप्साया अनिवेशे-ऽपि घटप्रकारकान्वयबोधं प्रति घटघट इत्यानुपूर्वीप्रकारकनिश्चयत्वेनाहेतुत्वादति-व्याप्त्यसम्भवात् , निष्कृष्टे च समासत्वाभावादेव तत्प्रसक्त्यभावाच्च । वस्तुतस्तु कर्म-धारयाद्यन्यत्वे सति तदर्थकनामस्तोमत्वं तदर्थकद्वन्द्वत्वमिति कुतो न कृतमित्याकाङ्क्षा-यामाह—घटघटेत्यादि । द्वन्द्व इति । तथा च भवन्मते स द्वन्द्वः स्यादिति भाव इति तु परमार्थः । नव्यास्तु वीप्साया अप्रवेशे घटघट इत्यादिसप्तमीतत्पुरुषेऽतिव्या-प्तिः, तस्य घटवृत्तिघटप्रकारकान्वयबुद्धावपि तादृशनिश्चयत्वेन हेतुत्वात् समासत्वाच्चे-त्याशङ्क्य तादृशान्वयबुद्धौ तेन रूपेण हेतुत्वेऽपि स्वघटकनामोपस्थाप्यैकार्थप्रका-रतानिरूपितविशेष्यतावच्छिन्नापरार्थप्रकारतानिरूपितविशेष्यताकबुद्धौ तेनाहेतुत्वान्न प्रसङ्ग इत्याह 'घटघट' इत्यादीति प्राहुः । 'नीलोत्पलेति'कर्मधारयस्य नीलाभि-न्नोत्पलाद्यर्थकद्वन्द्वापत्तिवारणाय वीप्साप्रवेश इति तत्त्वम् । अत एवैकतात्पर्यक-'घट-घट' इत्यादेर्द्वन्द्वत्वाभावादेवेति सम्प्रदायः । लक्षणान्तरं परित्यज्यैतादृशलक्षणादेवेति वस्तुगतिः । यद्यत्प्रकारकेत्यत्र वीप्साप्रवेशादेवेत्यर्थ इति तु नव्याः । 'अप्येकदन्त-हेरम्ब' इत्यादौ द्वन्द्वोपपत्त्यर्थमाह—तत्त्वावच्छेदकयोरिति । समस्यमानपदार्थता-वच्छेदकयोरित्यर्थः । चार्थं इति । परस्परभिन्नार्थ इति तदर्थः, चशब्दस्य भेदगर्भसमु-च्चयबोधकत्वादिति भावः । अस्य—द्वन्द्वस्य,समुपाददते इति वृद्धा इति पूर्वेणान्वयः। पदार्थतावच्छेदकभेदवत् पदभेदस्यापि द्वन्द्वनियामकत्वम् , कथमन्यथा पीततत्पटयोस्ता-दात्म्यमिति प्रयोग इति वैयाकरणा वदन्ति । तन्मन्दम्, तत्र पदार्थतावच्छेदकभेद-स्यापि सत्त्वात् पदभेदस्य तन्नियामकत्वाभावेऽपि न क्षतिरित्याह—पीतेत्यादि । एक-

भिन्नत्वेऽपि पीतत्व-तत्पटत्वयोः पदार्थतावच्छेदकयोरस्त्येव भेदः, सुबर्थस्तु द्वित्वं न तत्र प्रकृत्यर्थेऽन्वेति पर्याप्तिसम्बन्धेन पीततत्पटे तस्य बाधात्, सुबर्थद्वित्वादेस्तादृशसम्बन्धेनैव प्रकृत्यर्थसाकाङ्क्षत्वात्, परन्तु प्रकृत्यर्थतावच्छेदकयोः पीतत्वतत्पटत्वयोरेव व्युत्पत्तिवैचित्र्यात्, अत एव "द्व्यणुकारम्भकसंयोगनाशेभ्यः कार्यद्रव्यं नश्यतीति"भाष्यस्य योग्यतासम्पत्तये सुबर्थैकत्वस्य कार्यद्रव्यत्वेऽन्वयमाभीप्सुनाऽऽचार्येण(१) "जात्यभिप्रायकमेकवचन"मिति गुणकिरणावल्यामभिहितम् । अत एव च "श्यालाः स्युर्भ्रातरः पत्न्याः, स्वामिनो देवृदेवरौ"(२)इत्यत्र द्विवचनमहिम्ना स्वामिनो भ्रातरौ देवृदेवरोभयपदवाच्या इत्यर्थः सुभूत्यादिसिद्धः सङ्गच्छते । यदि च-पटद्वयासत्त्वे ऽपि भूतले 'पीतपटावि'त्यादिकः प्रयोगः स्यात् पीतत्वपटत्वोभयाश्रयस्य तत्र सत्त्वात्, एवं पीतपटयोर-

कृष्णकान्ती टीका ।

तात्पर्यकत्वसूचनाय तादात्म्यमुक्तम् । अस्त्येव भेद इति । तथा च किं पदभेदस्य-तथात्वमुच्यते इति भावः । ननु पदार्थैकदेशे पदार्थान्वयासम्भवात्तत्र द्वित्वान्वयानुपपत्तिरित्यत आह—सुबर्थस्त्विति । तत्र—पीतपटयोरित्यत्र, प्रकृत्यर्थे—पीते पटे च, तादृशसम्बन्धेन—पर्याप्तिसम्बन्धेन, एवकारेण स्वाश्रयवृत्तित्वस्वरूपादिसम्बन्धव्यवच्छेदः । साकाङ्क्षत्वादिति । तथा च पर्याप्तिसम्बन्धेन प्रकृत्यर्थसाकांक्षत्वनियमेऽपि सम्बन्धान्तरेण प्रकृत्यर्थतावच्छेदकसाकाङ्क्षत्वे बाधकाभावः । नन्वेतावता प्रकृते किमायातमित्यत आह—परन्त्विति । पीतत्वतत्पटत्वयोरेवेति । द्वित्वसत्त्वेऽपीत्यनुषज्यते । व्युत्पत्तिवैचित्र्यादिति । "पदार्थः पदार्थ एवान्वेति न तु पदार्थैकदेश" इतिव्युत्पत्तेः सङ्कोचादित्यर्थः । पदार्थस्य पदार्थतावच्छेदकान्वयो न दृष्टचर इत्यत आह—अत एवेति । द्व्यणुकारम्भकेति । परमाणुद्वयसंयोगनाशेभ्य इत्यर्थः । कार्यद्रव्यं—त्रसरेण्वादिकम् । योग्यतासम्पत्तय इति । कार्यद्रव्याणामनेकत्वात्तत्रैकत्वस्य बाधादिति भावः । ननु तत्र द्रव्यपदं तादृशद्रव्यत्वपरं, तस्य च स्वाश्रयप्रतियोगित्वसम्बन्धेन नाशेऽन्वय इत्येव जात्यभिप्रायकमित्यस्याभिप्राय इति यदुच्यते, तदाप्याह—अत एव चेति । सङ्गच्छत इति परेणान्वयः । सुभूतिः—कोषटिप्पनी, तथा च तत्र द्वित्वस्य पदार्थतावच्छेदकपद एवान्वयात्तादृशव्युत्पत्तिसंकोचस्यावश्यकत्वादिति भावः । शङ्कते—यदि चेति । इति सूक्ष्ममीक्ष्यत इति परेणान्वयः । कुत इत्यत आह—पीतत्वेति । इष्टापत्तावप्याह—

(१) उदयनाचार्येण । (२) (अमरकोश मनुष्यवर्ग श्लो० ३२)

भेद इत्यादितः शुद्धपटत्वादेरबोधप्रसङ्गश्च, तदर्थे सुपर्थद्वित्वस्य प्रकारत्वात् इत्यादि सूक्ष्ममीक्ष्यते, तदा 'गोदौ ग्राम' इत्यादाविव साधुत्वार्थमेव तत्र द्विवचनमिति वदन्ति । 'विद्यतिविन्दतिविनत्तीनामनिट्' इत्यत्र विद्यत्यादिशब्दो न विदधातुत्वेनोपस्थापकः, किन्तु सत्ताद्यर्थकताद्दशधातुत्वेनैव । मृगपाण्डरयोः पदार्थयोर्भेदेऽपि 'हरिणहरिणावि'त्यप्रयोगात् समानशब्दयोर्द्वन्द्वप्रसक्तावेकशेषो व्युत्पत्तिसिद्धस्तेन 'हारणीवि'त्यत्र लुप्तः श्रुताभ्यामेव हरिणपदाभ्यामुपस्थितयोर्मृगपाण्डरयोर्बोधः । 'हरी नमस्यावि'त्यत्राप्युक्तरीत्यैव हरिपदाभ्यां विष्णुचन्द्रयोरवगतिः, अन्यथा 'हरिहरी नमस्यावि'त्यपि प्रयोगापत्तेः । हरी च हरयश्चेति विग्रहस्थले तु यत्र 'हरय' इत्यादितः समस्यमानपदार्थानामवान्तरसंख्यावगमस्तत्र तत्तत्संख्यावच्छिन्नस्वार्थलक्षकस्य लुप्तस्य हर्यादिपदस्योत्तरत्वेन प्रतिसंहितमेव हर्यादिपदं तथाविधस्वार्थस्य लक्षणया बोधकम्, तदप्रतिसन्धाने तु श्रुतमेव हरिपदं विष्णुद्वयस्य सिंहत्रयस्य चैकया लक्षणया शक्तिभ्रान्त्यैव वा । न

कृष्णकान्तीटीका ।

एवमिति । शुद्धेति । द्वित्वानवच्छिन्नेत्यर्थः । तदर्थे—पटत्वादिरूपार्थे । समाधत्ते तदेति । गोदाविति । ग्रामवाचकगोदशब्दस्य द्विवचनमात्रसाकाङ्क्षत्वादिति भावः । साधुत्वार्थमिति । आनुपूर्वीरूपाकाङ्क्षासम्पादनार्थमिति भावः । न विद्धातुत्वेनेति । तथा सत्यानुपूर्व्या ऐक्येन पदार्थतावच्छेदकभेदासत्त्वाद्द्वन्द्वानुपपत्तिः स्यादिति भावः । ताद्दशेति विदेत्यर्थः, तथा च सत्तालाभविचाराणां पदार्थतावच्छेदककोटिप्रविष्टत्वात् पदार्थतावच्छेदकभेदसत्त्वेन द्वन्द्वो नानुपपन्न इति भावः । समानशब्दयोरेकानुपूर्वीकयोः शब्दयोः । प्रयोजनमाह—तेनेति । लुप्तहरिपदस्मरणेनैव । ननु द्विवचनादिमात्रसाकाङ्क्षं प्रकृत्यन्तरमेवं स्वीक्रियते किमेकशेषादरेणेत्यत आह—अन्यथेति । एकशेषानादर इत्यर्थः । ननु प्रकृत्यन्तरास्वीकारे हरी च हरयश्चेति विग्रहे 'हरय' इत्यादितः सिंहत्रय-विष्णुद्वयबोधो न स्यात, लुप्तहरिपदस्मरणेऽपि सङ्ख्यावाचकवाच्यभावात् सङ्ख्याऽवगमो न स्यादतस्तदप्युपपादयति-हरी चेति । तत्तदित्यादि । द्वित्वसङ्ख्यावच्छिन्नविष्णुलक्षकस्य । प्रतिसंहितमेव—ज्ञातमेव । तथाविधेति । त्रित्वावच्छिन्नसिंहस्येत्यर्थः । ननु यत्र ताद्दशप्रतिसन्धानं नास्ति तत्र ताद्दशबोधो न स्यादित्यत आह-तदप्रतिसन्धाने त्विति । लक्षणयेति । लाघवादाह—शक्तीति । बोधकमित्यनेनान्वयः । शङ्कते—न चेति । नियमादिति । कदाचिल्लुप्तत्रि-

च विग्रहस्थसुबर्थस्य द्वित्वादेः समासाप्रतिपाद्यत्वनियमात्तथाविधद्वित्वत्रित्वान्तर्भावेण द्वन्द्वस्यैवासाधुत्वादुक्तक्रमेणैकशेषो न युक्तः, 'शलाकापरि, हस्त्यश्व'मित्यादौ व्यभिचारेणोक्तनियमस्यासत्त्वात्, 'एकत्वे चैकत्वानि चेति विग्रहे च 'एकत्वानी'त्येकशेषस्य गुणकिरणावल्यामाचार्यैरभिहितत्वाच्च । हंसश्च हंसी च इत्यर्थे 'हंसहंस्यावि'त्यप्रयोगात् तत्रापि "पुंसा स्त्रियाः सारूप्ये"(१) इत्यनुशिष्टेर्हंसीपदस्य लोपे 'हंसावि' त्यत्र लुप्तमेव हंसीपदमनुसन्धाय स्त्रीपुंसयोर्बोधः, तल्लोपमजानतस्तु हंसपदे स्त्रीहंसत्वपुरुषहंसत्वाभ्यां विभिन्नरूपाभ्यामेकस्याः शक्तेर्लक्षणाया वा ग्रहादेव ।

यत्तु—तत्र हंसपदमेव लक्षणया हंसीत्वेन शक्त्या च हंसत्वेन बोधकम्, सुबर्थस्तु पुंस्त्वहंस एवान्वेति, न तु हंस्यामयोग्यत्वात्—इति मतम् । तन्न, तथा सति स्त्रीहंसत्वहंसत्वयोः पदार्थतावच्छेदकयोर्मिथो भेदविरहेण द्वन्द्वाप्रसक्तावेकशेषस्य दुष्करत्वापत्तेः, अन्यथा 'घट-तद्घटावि'-

कृष्णकान्तीटीका ।

अफिस्मरणेन नीलोत्पलेतिकर्मधारयात् प्राचां नीलाभिन्नोत्पलप्रतीत्यापत्तेरिति भावः । न युक्त इति । द्वन्द्वप्रसक्तावेवैकशेषविधानादिति भावः । (शलाकेति) अक्षशलाकयोरेकत्वे वर्त्तमानयोरेव परिणा सहाव्ययीभावस्य विधानादेकत्वसङ्ख्यायाः समासप्रतिपाद्यत्वादिति भावः । नन्वेकत्वस्य समासाप्रतिपाद्यत्वनियमो मया नोक्तः परन्तु द्वित्वादेरित्यत आह—एकत्वे चेति । अनुशिष्टेरिति लोप इत्यन्वयि । "पुंसा सह स्त्रियाः सारूप्ये स्त्रिया लोप" इत्यनुशासनार्थत्वात्तस्य लोपप्रयोजकत्वम् । शक्तेरिति ग्रहादेवेत्यत्रान्वयः । विभिन्नरूपावच्छिन्नैका शक्तिस्तु पुष्पदन्तपद एव प्रसिद्धेति भावः । वृत्तिभ्रमं विनाप्युपपादयति—लक्षणाया वेति । स्त्रीपुंसयोर्बोध इति पूर्वेणान्वयः ।

प्राचीनमतं दूषयितुमुपन्यस्यति—यत्त्विति । बोधकमिति । तथा च हंसश्च हंसश्चेति विग्रहात् स्वरूपैकशेष एवेति भावः । ननु सुबर्थपुंस्त्वस्य हंस्यां बाधादयोग्यत्वमित्यत आह—सुबर्थस्त्विति । दूषयति—तन्नेति । भेदविरहेणेति । विशिष्टहंसत्वे हंसत्वभेदासत्त्वादिति भावः । दुष्करत्वापत्तेरिति । न च पदार्थतावच्छेदकयोर्मिथो भेदविरहेऽपि हंसे हंसाभेदसत्त्वेन कुतो द्वन्द्वाप्रसक्तिरिति वाच्यम् । तथापि हंस्यां हंसभेदासत्त्वेन पदार्थयोरपि भेदविरहात,

(१) अत्र 'पुमान्स्त्रिया ।१।२।६७ इति पा० सूत्रम् ।

त्यपि द्वन्द्वप्रसङ्गात् । हंस्यो च हंसाश्चेति विग्रहेऽपि 'हंसा' इत्यतो हंसी-द्वयहंसत्रययोः प्रागुक्तरीत्यावगमः। दुन्दुभी च दुन्दुभिश्चेति विग्रहे 'दुन्दुभी सुन्दरावि'त्यत्राक्षभेर्य्योर्बोधस्थले पुंलिङ्गस्यैव दुन्दुभिशब्दस्य शिष्टतया तद्विशेषणत्वादेव सुन्दरादेः पुंस्त्वम् । युवा च युवतिश्च इत्यर्थे 'युवानावि'त्यत्राप्युक्तरीत्यैव युवतियौवनवतोर्बोधः। 'वरटा—हंसौ, लक्षणा-सारसावि'त्यादौ तु स्त्रीपुंसयोर्द्वन्द्वेऽपि पदसारूप्यविरहान्नैकशेषः । दम्प-त्यर्चनप्रकरणे 'ब्राह्मणावानयेदि'त्यत्रापि ब्राह्मणश्च ब्राह्मणी च इति विग्रहे प्रागुक्तदिशा ब्राह्मणभार्यापत्योरवगमः। एकश्चैका चेत्यत्र 'एकौ' द्वौ च चोभे चेत्यत्र 'उभौ' त्रयश्च तिस्रश्च इत्यत्र च विग्रहे 'त्रयः' इत्यादिरेक-

---

कृष्णकान्तीटीका ।

अस्मन्मते च स्त्रीत्वविशिष्टहंसत्वावच्छिन्नपुंस्त्वविशिष्टहंसत्वावच्छिन्नयोरिव तद्द्वयो-रपि मिथो भेदसत्त्वान्नानुपपत्तिगन्धोऽपीति भावः । ननु निरुक्तभेदयोरननुगतत्वादव्य-भिचारेण द्वन्द्वनियामकत्वं न सम्भवतीत्येकपदार्थत्वसामानाधिकरण्येनापरपदार्थत्वा-वच्छिन्नभेदस्यैव नियामकत्वं वाच्यं, तथा च हंसे हंसीभेदसत्त्वान्न द्वन्द्वाप्रसक्तिरित्यत आह—अन्यथेति । नियामककोटौ परस्परार्थाप्रवेश इत्यर्थः । केचित्तु—विशिष्टस्या-तिरिक्तत्वात् पदार्थतावच्छेदकभेद एवास्तीत्यत आह—अन्यथेति । केवलविशिष्टयो-र्मिथो भेदस्वीकार इति तदर्थ—इत्याहुः । प्रागुक्तरीत्येति । तत्तत्संख्यावच्छिन्नलु-प्तहंसीपदोत्तरत्वेन प्रतिसंहितं हंसपदं तथाविधस्यार्थस्य लक्षणया बोधकमित्यादिरी-त्येत्यर्थः । 'ननु दुन्दुभी सुन्दरावि'त्यादौ कथं सुन्दरादेः पुंस्त्वमित्याकाङ्क्षायामाह—दुंदुभी चेति । शिष्टतयेति । "स्त्री पुंसयोः पुमान् शेष" इत्यनुशासनादिति भावः । तद्विशेषणत्वादेवेति । अजहल्लिङ्गविशेषणशब्दस्य विशेष्यशब्दसमानलिङ्गकत्वनिय-मादिति भावः । उक्तरीत्यैवेति । पुलिङ्गयुवन्शब्दस्यैव शिष्टतया तत्रैव स्वर्थपुं-स्त्वान्वय इति रीत्यैवेत्यर्थः । ननु स्त्रीपुंसयोर्द्वन्द्वप्रसक्तावेवैकशेषविधानाद्वरटा च हंसश्चेत्यादिविग्रहे 'हंसावि'त्येकशेषः स्यात्, न स्याच्च 'वरटाहंसावि'ति द्वन्द्वः, एक-शेषस्य तद्बाधकत्वादित्यत आह—वरटेत्यादि । पदसारूप्यविरहादिति । नचैकशेषनियामकं किमेतावता पदसारूप्यम् ? न चकानुपूर्वीमत्त्वं, हंसहंसीपदयोस्त-यात्वाभावात्, नाप्येकपदानुपूर्वीव्यापकपरपदानुपूर्वीमत्त्वं हंसभार्या,'हंसावि'त्यत्राप्येक-शेषप्रसङ्गादिति वाच्यम् । समस्यमानपदयोः स्त्रीत्वादिव्यञ्जकविधुरयोरेकानुपूर्वीकत्व-स्यैव तन्नियामकत्वं बोध्यम् । इष्यत एवेति । बाधविरहाद्युक्तेस्तौल्याच्चेति भा-

शेष इष्यत एव। "ग्राम्यानेकशफेष्वतरुणेषु(१)" स्त्रीपुंसयोर्बहुत्वमन्तर्भाव्य सारूप्येण द्वन्द्वस्थले तु पुंस एव लुक्, तेन मेष्यश्च मेषाश्चेत्यर्थे 'मेष्य' इत्यत्रापि लुप्तं बहुमेषाणां लक्षकं मेषपदं प्रतिसन्दधत एव बहुमेषाणा-मनेकमेषीणाञ्चावगमः, एवं महिषाश्च महिष्यश्चेत्यर्थे 'महिष्य' इत्यत्रापि महिषपदं बहूनां महिषाणाम्। मृगाश्च मृग्यश्चेत्यर्थे 'मृगा' इत्यत्र तु मृगादे-रग्राम्यत्वान्न पुंसो लुक् परन्तु स्त्रियाः, तथा गर्दभाश्च गर्दभ्यश्चेत्यर्थे 'गर्दभा' इत्यत्रापि खराणामेकशफत्वात्, वर्कराश्च वर्कर्य्यश्च इत्यर्थे वर्करा इत्यत्रापि तरुणार्थकत्वात्। स्वसा च भ्राता चेत्यर्थे 'भ्रातरावि'त्यत्र, पुत्रश्च दुहिता चेत्यर्थे 'पुत्रावि'त्यत्र च विरूपैकशेषेऽपि स्वसृपदं दुहितृपदञ्च लुप्तं प्रतिसन्धायैव भ्रातृभगिन्योः पुत्रकन्ययोश्चावगमः। "ज्येष्ठपुत्रदुहित्रोश्च ज्यैष्ठे मासि न कारयेदि"त्यादिकस्तु प्रयोगः परिचिन्तनीयः। सच मैत्र-श्चेति विग्रहे त्यदादिना तदन्यस्य द्वन्द्वे लुकि(२) 'तावि'त्यत्रापि लुप्तं मैत्रा-दिपदमनुसन्दधत एव मैत्राद्यवगमः। स च त्वञ्चेत्यादिविग्रहे किंपद-न्यत्यदादिद्वयगर्भद्वन्द्वे तु पूर्वस्यैव स्वानुत्तरपदस्य वा त्यदादेर्लुकि 'युवाम्' इत्यादावप्युक्तक्रमेणैव तदर्थयुष्मदर्थयोर्बोधः। स च सचेत्यत्रापि विभि-न्नार्थयोर्विग्रहे स्वपूर्वागणितोऽपि तदादिः स्वोत्तरापठित एव। "तत्त-

कृष्णकान्तीटीका।

वः। अनेकशफेष्वनेकखुरेष्वित्यर्थः। महिषाणामिति। लक्षकं प्रतिसन्दधत एवा-वगम इत्यनुषज्यते, अर्थादनेकमहिषीणामिति भावः। ग्राम्यपदव्यावृत्तिमाह—मृगा-श्चेति। "वर्करस्तरुणो युवा" "तरुणः वत्सु"रिति वेत्यमरः। परिचिन्तनीयः—एकशेषे बाधकाभावादिति भावः। पुत्रत्वदुहितृत्वाभ्यामेकशक्तिमत्प्रकृत्यन्तरस्वीका-रेण कथञ्चिदुपपादनीय इति ग्रन्थकृदभिप्रायः। तदन्यस्य—त्यदाद्यन्यस्य, लुकीत्यने-नान्वयः। उक्तक्रमेणैव-लुप्ततत्पदानुसन्धानेनैव। स्वानुत्तरपदस्येति। परकल्पा-नुसरणे बीजमाह—स च स चे ति। एकार्थद्वन्द्वे द्वन्द्वाशक्त्यैकशेषासम्भवादाह विभिन्नार्थयोरिति। स्वपूर्वागणितोऽपीति। त्यद्तद्यदित्यादित्यदादिगणनायां स्वस्य स्वपूर्वागणितत्वादिति भावः। स्वोत्तरापठित एवेति। अतस्तस्य लुगिति शेषः।

(१) अत्र 'ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री।१।२।७३ पा० सूत्रम्।
(२) अत्र 'त्यदादीनि सर्वैर्नित्यम्।१।२।७२ पा० सूत्रम्।

न्मानुषतुल्योऽसौ यत्राद्रियातिनिर्मले"इत्यादौ तु न त्यदादिगणेन द्वन्द्वः, परन्तु तदाद्यव्ययेन यथा "तत्तत्तामसभूतभीतय" इत्यादौ, यत्तदादि-व्यतिरिक्तानामेवाव्ययानां सरूपैकशेषस्य व्युत्पन्नत्वात्, प्रयोगानुरोधि-त्वात् कल्पनायाः। कश्च त्वञ्चेत्यादिविग्रहेण किमा तादृशद्वन्द्वे तु तद-न्यस्यैव त्यदादेर्लुकि 'कौ' इत्यादिक एव प्रयोगः। 'चैत्रस्य पितरावि'त्य-त्रापि विरूपैकशेषे लुप्तस्य मातृपदस्य स्मरणात् मातुरवगमः, तदस्मर-तस्तु पितृपदे जनकशरीरत्वेन लक्षणया मातापित्रोरवगतिरिति प्राञ्चः।

कौमारास्तु—मात्रा पितुर्द्वन्द्वे 'मातापितृभ्यां, मातरपितराभ्यामि'ति प्रयोगद्वयीदर्शना 'चैत्रस्य पितरावि'त्यत्र नैकशेषः,(१) परन्तु पुष्पवन्तादि-पदवत् मातृत्वपितृत्वाभ्यां विभिन्नरूपाभ्यामेकशक्तिमदेव नियतद्विवचना-काङ्क्षं पितृपदं प्रकृत्यन्तरम्। एवं श्वश्रूश्च श्वशुरश्चेत्यर्थे 'श्वशुरौ' इत्यत्र

---

कृष्णकान्तीटीका।

नन्वेवं "तत्तन्मानुषतुल्योऽसा"वित्यादिकावयं कथं सङ्गच्छत इत्यत आह तत्तन्मा-नुषेति। तदाद्यव्ययेनेति, अतो नैकशेष इति शेषः। उक्तस्थले तदाद्यव्ययेन द्व-न्द्वोक्तेः प्रमाणार्थं तादृशप्रयोगान्तरमुपन्यस्यति—यथेति। इत्यादाविति। तथा च "तत्तत्तामसभूतभीतय" इत्यादौ तदाद्यव्ययेन यथा द्वन्द्वस्तथाऽत्रापीति भावः। ननु तत्रैकार्थे स्वरूपैकशेषो न स्यादित्यत आह—यत्तदादीति। ननु किमियं राज्ञामा-न्नेत्यत आह—प्रयोगेति। कश्चेति। किमा—किम्शब्देन, तदन्यस्यैव किम्पदा-न्यस्यैव,लक्षणया—अजहत्स्वार्थलक्षणया।

कालापिकानां मतमाह—कौमारास्त्विति। मात्रा—मातृशब्देन,पितुः—पितृशब्द-स्य। प्रयोगद्वयीदर्शनादिति। तथा च पितरावित्यत्रैकशेषस्वीकारेऽपि मातापितरौ मातरपितराविति प्रयोगद्वयानुरोधात् प्रकृत्यन्तरस्वीकारस्यावश्यकत्वे पितरावित्यत्रा-ऽपि तथा स्वीकार उचित इति भावः। पुष्पवन्तादिपदवदिति। यथा पुष्पवन्तपदं चन्द्रत्वसूर्यत्वावच्छिन्नैकशक्तिमद्द्विवचनमात्रसाकाङ्क्षं तथेत्यर्थः। अत एव "एकयो-क्त्या पुष्पवन्तौ दिवाकरनिशाकरौ"वितिवत् "मातापितरौ पितरौ मातरपितरौ

---

(१) अत्र 'पिता मात्रा' ।१।२।७० पा० सूत्रम्। विरूपैकशेषे पितरावित्यादौ लुप्तमातृपदस्मर-णान्मातृत्वपितृत्वाभ्यां जनकशरीरत्वेन पितृपदलक्षणया वा मातापित्रोरन्वयबोध इति जयरामपञ्चा-ननाः। पितृपदं शक्त्या पितुर्लक्षणया मातुर्बोधकम्। एवं श्वशुरावित्यादावपि पतिपत्नीजनकशरीर-त्वादिना भातिस्विकरूपेण बोध इत्यन्ये।

श्वशुरपदमपि, श्वश्र्वा श्वशुरस्य द्वन्द्वे 'श्वश्रूश्वशुरावि'त्येव (१)प्रयोगादित्याहुः ॥ ४८ ॥

द्वन्द्वं विभजते--

**द्वौ भेदावस्य शास्त्रोक्तौ समाहारेतरेतरौ।**
**एकान्यवचनाकाङ्क्षा-हीनोपादानतश्च तौ ॥ ४९ ॥**

अस्य द्वन्द्वस्य द्वौ भेदौ—समाहार इतरेतरश्च शास्त्रसिद्धौ। तत्रैकवचनान्यसुबाकाङ्क्षाविहीनः समाहारः, तथाविधसुबाकाङ्क्षश्चेतरेतरः। 'पाणिपादं, हस्त्यश्वमि'त्यादितो हि करचरणादीनां बहूनामप्यवगतावेकवचनमेव प्रमाणम्, 'धवखदिरावि'त्यादौ तु द्विवचनादिः। "पदिस्कन्दिखिदेर्दादि"त्यादौ तु पदिस्कन्दिभ्यां सहितः खिदिरिति विगृह्य मध्यपदलोपी कर्मधारयो, यथा "अव्याप्त्यतिव्याप्तेरि"ति मणिग्रन्थादौ ॥४९॥

उपपदसमासं लक्षयति--

---

कृष्णकान्तीटीका।

च तातजनयित्र्या"वित्यमरसिंहानुशासनस्याविशेषादिति भावः। श्वशुरपदमपीति। विभिन्नरूपाभ्यामेकशक्तिमन्नियतद्विवचनसाकाङ्क्षमित्यनुषज्यते, श्वश्र्वा श्वश्रूपदेन सहेति शेषः, श्वशुरस्य—श्वशुरपदस्य ॥ ४८ ॥

द्वन्द्वविभाजकनिरूपणकारिकावतारणिकामाह—द्वन्द्वमिति। तत्रेति न्यूनताशङ्काय पूरितं, तयोर्निरुक्तभेदयोर्मध्य इति तदर्थः। तथाविधेति। एकवचनान्य इत्यर्थः। द्विवचनादिरित्यादिपदाद्बहुवचनपरिग्रहः। ननु "अदि-तुदि-नुदि-क्षुदि-स्विद्यति-विद्यति-विन्दति-विनत्ति-छिदि-भिदि-हदि-सदि-शदि-पदि-स्कन्दि-खिदेर्दादि"-त्यनिड्विधायकसूत्रे खिदेरितिपञ्चम्येकवचनमसङ्गतम्, न च समाहारत्वादेकवचनमिति वाच्यं, तथा सति नपुंसकलिङ्गत्वान्नुवागमापत्तेरिति,तदुपपादयति पदीत्यादि। पदिस्कन्दिभ्यामिति। यद्यपि पदिस्कन्धिभिरिति बहुवचननिर्देशो युक्तस्तत्पूर्वमद्यादेरपि सत्त्वात्, तथापि सूत्रस्य स्वयमेकदेशधारणात्तत्रायोग्यत्वभिया बहुवचनोल्लेखो न कृतः। केचित्तु अद्यादिसहितः पदीतिकर्मधारयोत्तरं तादृशकर्मधारयाभिप्रायेण द्विवचननिर्देश इत्याहुः। छपां छप् इत्युच्छृङ्खलाः। बहुवचनसंवलित एवात्र पाठः, द्विवचनसंवलितपाठस्तु प्रामादिक इत्यपरे। स्वोक्तस्य प्रामाण्यार्थं दृष्टान्तमुद्भावयति—अव्याप्त्यतिव्याप्तेरितीति। मणिग्रन्थादौ—चिन्तामणिग्रन्थादौ ॥४९॥

उपपदसमासज्ञापककारिकावतारणिकामाह—उपपदसमासं लक्षयतीति।

---

(१) अत्रापि 'श्वशुरः श्वश्र्वा' ।१।२।७१ पा० सूत्रम्।

**यदुत्तरपदं नामानुत्तरं सदबोधकम् ।**
**धातुकृद्भ्यामुपपदसमासः स तदन्तकः ॥ ९० ॥**

धातुकृद्भ्यां निष्पन्नं यस्योत्तरपदं शब्दान्तरानुत्तरं सत् यादृशार्थस्य बोधं प्रत्यसमर्थं तादृशार्थकान्त्यपदकः समासः उपपदसंज्ञकः । 'कुम्भकारः क्षीरपायी'त्यादिके तूपपदसमासे धातुकृद्भ्यां निष्पन्नं कर्त्राद्यर्थकं कारादि-पदं पदान्तरानुत्तरं सन्न कर्त्रादेरन्वयबोधक्षमम् । 'चन्द्रनिभमि'त्यादौ तु तत्पुरुषे निभादिपदं सदृशाद्यर्थे तादृशमपि न धातुकृद्भ्यां निष्पन्नमिति तद्व्युदासः ॥ ९० ॥

विभजते च--

**कारकैकोपपदकः षड्विधोऽयमिति भ्रमः ।**
**कर्मकर्त्राद्युपपदभेदाद्बहुविधस्त्वसौ ॥९१॥**

कारकेषु 'उत्तानशयः, पूर्वसर' इत्यादावुत्तानादिः कर्त्ता, 'कुम्भकारः, सौवीरपायी'त्यादौ कर्म, 'कच्छपः, पार्श्वशय' इत्यादौ करणम्, 'उखा-स्रत्, वाहभ्रट्' इत्यादावपादानम्, 'खशयः, कुरुचरः' इत्यादावधिकरणं

कृष्णकान्तोटीका ।

सप्तधाविभागे क्रमप्राप्तमित्यादिः । विवृणोति—धातुकृद्भ्यामिति । तथा च यस्य समासस्य यादृशार्थकं धातुकृद्घटितयादृशानुपूर्व्यवच्छिन्नयदुत्तरपदं शब्दान्तरानुत्तरं सत् यादृशार्थबोधं प्रत्यसमर्थं तादृशार्थकतादृशानुपूर्वीमदुत्तरपदकः समासस्तादृशार्थे उपपदसंज्ञक इति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयति—कुम्भकार इत्यादि । धातुकृद्भ्यामित्यस्य व्यावृत्तिमाह—तत्पुरुष इति । अन्त्यमिति शेषः । सप्तम्यर्थौ घटकत्वं, तादृशमपि—शब्दान्तरानुत्तरं सद् तादृशार्थबोधाक्षममपीत्यर्थः ॥९०॥

विभजते चेति । उपपदसमासमित्यर्थात् । कारकैकोपपदकः—कारकमात्रोपपदकः, अतः षड्विधः. अयं—उपपदसमासः । भ्रमत्वहेत्वनुपन्यासन्यूनताभङ्गाय न्यूनत्वादिहेतोर्वक्ष्यमाणत्वात् तत्सम्पादनाय कारिकामव्याख्यायैवादौ सम्प्रदानातिरिक्त-कारकोपपदकान् तद्भिन्नोपपदकान् उपपदसमासान् प्रमाणयति—कारकेष्वित्यादि । कर्त्तेति—उपपदमिति परेणान्वयः, एवमग्रेऽपि । उत्तानः शेते: पूर्वं सरतीत्यादेस्तद्विग्रहत्वादिति भावः । कर्मेति । कुम्भं करोति, सौवीरं पातुं शीलमस्येत्यादेस्तद्विग्रहत्वात् । करणमिति । कच्छेन पिबति, पार्श्वेन शेत इत्यादेस्तद्विग्रहत्वात् । अपादानमिति । उखायाः स्रंसते, वहाद्भ्रश्यत इत्यादेस्तद्विग्रहत्वात् । अधिक-

उपपदम् । सम्प्रदानन्तु न कुत्रापि दृश्यते । दृश्यते च 'ब्रह्मभूयमि'त्यादौ कारकभिन्नेनाप्युपपदेन समास इत्यसावनेकविध एव, न तु कारकमात्रोपपदकत्वात् षड्विध एव, न्यूनत्वाधिकत्वाभ्यां विभागव्याघातादिति । 'असूर्य्यम्पश्ये'त्यप्युक्तसमासः, परन्त्वव्ययपदस्येव नञा समस्तस्यैव तस्य स्वार्थबोधने व्युत्पन्नत्वान्न केवलस्य तस्य प्रयोगः ॥ ५१ ॥

इति श्रीजगदीशतर्कालङ्कारकृतौ शब्दशक्तिप्रकाशिकायां समासप्रकरणं समाप्तम् ॥

यौगिकेषु क्रमप्राप्तं तद्धिताक्तं नाम लक्षयति—

(१)यन्नाम ताद्धितं यच्च यत्क्रमं सयदर्थकम् ।
तद्द्वयं तत्क्रमं तत्र तद्धिताक्तं निगद्यते ॥५२॥

यद्यपि नामोत्तरतद्धितत्वं तद्धितोत्तरनामत्वं वा प्रत्येकं 'बहुगुड़ो द्राक्षे'त्यादौ 'दाक्षिरि'त्यादौ चाव्यापकमेव तद्धिताक्ते नाम्नि, तथापि यादृशं

कृष्णकान्ती टीका ।

ष्यमिति । 'खे शेते कुरुषु चरती'त्यादेस्तद्विग्रहत्वात् । न कुत्रापि दृश्येत इत्यनेन न्यूनत्वं व्यञ्जितम् । अधिकत्वं दर्शयन्नाह—दृश्यते चेति । न्यूनत्वाधिकत्वाभ्यामिति । सम्प्रदानोपपदकस्याभावात् कारकभिन्नोपपदकस्यापि सत्त्वादिति भावः । उक्तसमासः-उपपदसमासः । ननु 'असुर्यम्पश्या' इत्यतोऽपि तादृशार्थप्रतीतिः स्यादित्यत आह—परन्त्विति । व्युत्पन्नत्वादिति । न नुतत्पुरुषानन्तरं तादृशसमासेन प्रकृतार्थस्यानभिधानादिति भावः । केवलेति । नञ्रहितेत्यर्थः ॥ ५१ ॥

इति श्रीकृष्णकान्तशर्मविद्यावागीशकृतौ समासटीका समाप्ता ।

तद्धिताक्तनामप्रतिपादककारिकावतारणिकामाह यौगिकेष्विति । नामोत्तरतद्धितत्वं तद्धितोत्तरनामत्वं वा लघुलक्षणं कुतो न कृतमित्यस्य समाधानमभिदधानः कारिकां व्याचष्टे यद्यपीत्यादि । उभयलक्षणस्याव्याप्तिः कुत्रापि नास्तीत्यतः प्रत्येकमिति । अव्यापकमिति । क्रमेणेत्यादिः । यादृशं नामेति । तथा च तद्धितघटितयादृशानुपूर्वीप्रकारकनिश्चयत्वं यादृशार्थबोधजनकतावच्छेदकं तादृशानुपूर्वी-

(१) यादृशानुपूर्वीविशिष्टं यन्नाम यत्तद्धितं वा यादृशार्थान्वयबोधे शक्तं तादृशानुपूर्वीमत्तद्द्वयं तादृशार्थे तद्धितं नामेत्यर्थः ।

नाम यच्च तद्धितं यादृशानुपूर्व्यवच्छिन्नं सद्यादृशार्थस्यान्वयबोधे समर्थं तादृशानुपूर्व्यवच्छिन्नं तद्द्वयमपि तादृशार्थे तद्धितान्तं नामेत्यर्थः। 'पचतितरामि'त्यादिकन्तु नामैव न प्रागेव तु तद्धित(ान्त)त्वम्। तस्यापि लक्ष्यत्वे यः शब्दस्तद्धितं यच्चेति वा पठनीयम्। टाबादेरपि तद्धितत्वोपगमात् 'अजा-ब्राह्मणी'त्यादेर्नासंग्रह इति वदन्ति ॥ ९२ ॥

कृदन्तं नाम लक्षयति—

(१)यद्धात्वर्थान्वितस्वार्थधीकृत् कृद्यादृशं भवेत्।
तद्धातूत्तरगं तत् कृत् कृदन्तं नाम तादृशम् ॥९३॥

यद्धात्वर्थान्वितस्वार्थान्वयबोधं प्रति यादृशानुपूर्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणं तद्धातूत्तरगं तत् कृदेव तादृशानुपूर्व्यवच्छिन्नं सत्

कृष्णकान्ताटीका।

मच्छब्दत्वं तादृशार्थे तद्धितान्तनामत्वमिति पर्यवसितम्। ननु 'पचतितरामि'त्यादावव्याप्तिः पचतीत्यादेर्नामत्वाभावात्, (इत्याशंक्य ?) तादृशानुपूर्व्या नामाघटितत्वमिति तस्यालक्ष्यत्वमाह—पचतीत्यादि। प्रागेव—सुतरामेव, तद्धितान्तं नामेत्यनुषज्यते, तद्धितान्तत्वस्य नामत्वव्याप्यत्वादिति भावः। नन्वसौ सार्थक एव न स्यात् प्रकृतिप्रत्ययनिपातान्यस्य सार्थकत्वासम्भवात्, न चासौ प्रकृतिर्नामधातुभिन्नत्वात्, नापि प्रत्ययो वृत्तिमत्त्वाभावात्, नासौ निपातः स्वोपस्थाप्यार्थधर्मिकतादात्म्येनान्वयबोधाक्षमत्वादिति तस्य नामत्वमवश्यमभ्युपेयं, तथा च नामत्वघटितनिरुक्तलक्षणस्य तत्राव्याप्तिः स्यादेवातो लक्षणे नामत्वमनिवेश्यैव तद्धितान्तनामत्वं व्यवस्थापयति—तस्यापीति। लक्ष्यत्वे प्रामाणिक इति शेषः। पठनीयं कारिकायामित्यादिः, निष्कृष्टेऽपि तद्धिततद्धितेतरशब्दघटितयादृशानुपूर्वीप्रकारकनिश्चयत्वं निवेशयितव्यमित्यभिप्रायः। ननु टाबादेस्तद्धितत्वाभावात्तदन्तनामत्वव्याप्तिः, न च तदलक्ष्यमेव, नामत्वव्याघातापत्तेः, रूढाद्यन्यतमभिन्नस्य नामत्वाभावादित्यत आह—टाबादेरपीति। वदन्तीत्यस्वरससूचनाय। स च स्वमते टाबादेर्निरर्थकत्वेन प्रत्ययत्वासम्भवात्, सुतरां न तद्धितत्वमित्येतच्चाग्रे व्यक्तीभविष्यति ॥ ९२ ॥

कृदन्तनामलक्षणप्रतिपादककारिकावतारणिकामाह—कृदन्तमित्यादि। विवृणोति-यद्धात्वर्थान्वितेति। यद्धातुयादृशार्थनिष्ठविषयतानिरूपितयादृशार्थनिष्ठविषयता(भिन्नविषयता)निरूपितकिञ्चिद्विशेष्यताकान्वयबोधम्प्रति यादृशानुपूर्वीप्रकारकनिश्चयत्वं जनकतावच्छेदकं तादृशार्थकतद्धातुघटिततादृशानुपूर्वीमच्छब्दत्वं तादृशार्थ-

(१) यादृशधात्वर्थविशिष्टकृदर्थबोधकं यादृशं कृत् तद्धातूत्तरगतं तादृशं कृत् कृदन्तं नामेति कारिकार्थः।

कृदन्तं नाम। यथा 'पाचक-पाच्यमाना'दि, तद्धि धात्वर्थेनान्वितस्य स्वार्थकर्त्रादेः कर्मत्वाद्यन्वयबोधं प्रति द्वितीयाद्यंशे तादृशानुपूर्वीकत्वेन निश्चीयमानं हेतुः। 'चैत्रेण ग्रामस्य गन्तव्यमि'त्यादौ धात्वर्थे स्वार्थमिष्टसाधनत्वादिकं बोधयदपि तव्यादिकं धात्वर्थनिष्ठविषयतानिरूपितस्वार्थनिष्ठविषयताकबोधजनकत्वेन धात्वर्थान्वितस्वार्थकमेव। भावकृतामपि स्वरूपार्थकत्वं व्युत्पादितमेव ॥ ५३ ॥

तदेवं रूढयोगरूढाद्यर्थभेदेन नाम्नश्चातुर्विध्यमुक्तं(१), सम्प्रति शब्दसंस्कारानुगुणलिङ्गभेदेन त्रैविध्यमप्याह–

स्त्रीलिङ्गमपि पुंल्लिङ्गं क्लीबलिङ्गमिति त्रिधा।
शब्दसंस्कारसिद्ध्यर्थं भाषया नाम भिद्यते ॥५४॥

स्त्रीलिङ्गं पुंल्लिङ्गं नपुंसकलिङ्गमित्यपि त्रिधा नाम भिद्यते। तत्र स्त्रीलिङ्गत्वादिकं न स्त्रीत्वादिवाचकत्वं, 'तटः तटी तटमि'त्यादौ प्रकृत्यर्थस्य तटादेः स्त्रीत्वाद्यन्वयायोग्यत्वापत्तेः, परन्तु स्त्रीलिङ्गत्वादिना

---

कृष्णकान्तटीका।

धात्वर्थान्वितताद्दशस्वार्थबोधने कृदन्तनामत्वमिति पर्यवसितम्। लक्ष्ये लक्षणं सङ्गमयति—यथेत्यादि। तद्धि धात्वर्थेनेति। पचपाच्यादिधात्वर्थेनेत्यर्थः। कर्त्रादेरित्यादिना कर्मादिपरिग्रहः। प्रथमांशे तादृशानुपूर्व्यवच्छिन्नप्रकारकनिश्चयत्वस्य तादृशस्वार्थप्रकारकान्वयबोधजनकतानवच्छेदकत्वात्—द्वितीयाद्यंश इति। न च स्वार्थविषयतात्वेन निवेशान्नैष दोष इति वाच्यम्। तादृशविषयितात्वस्य सांसर्गिकविषतासाधारणत्वेन तज्जन्यतानवच्छेदकत्वात्, 'पाचकमि'त्यतः पाककर्त्ता कर्म्मत्ववानिति बोधस्यापि प्रसङ्गाच्च। ननु धात्वर्थान्वितेति यथाश्रुतशब्दात्तादृशप्रकारतैव लभ्यत इति विषयतात्वेन कुतस्तन्निवेश इत्याकाङ्क्षायामाह—चैत्रेणेत्यादि। ननु भावकृतः स्वार्थाप्रसिद्ध्या तदन्तनामत्वव्याप्तिरित्यत आह—भावकृतामपीति। व्युत्पादितमेवेति। प्रत्ययलक्षण इत्यादिः ॥ ५३ ॥

नाम्नां त्रिधाविभागप्रतिपादककारिकावतारणिकामाह—तदेवमित्यादिना। भाषया भिद्यत इत्यनेन स्त्रीत्वादिवाचकता नास्तीति सूचितं, तत्कथमित्याकाङ्क्षायामाह—तत्रेति। अयोग्यत्वापत्तेरिति। तटादेर्योन्यादिमत्त्वाभावादि-

---

(१) 'समासस्तद्धिताक्तं च कृदन्तं नाम तत्त्रिधा' इति नामप्रकरणस्थ( पृ० १८७ ) ३० कारिकोक्तं यौगिकनामविभागप्रदर्शनपूर्वकं 'रूढं च लक्षकं चैव योगरूढं च यौगिकम्' (पृ० ७२, ११ का० ) इत्यादिनोक्तं नाम्नश्चातुर्विध्यमुक्त मित्यर्थः।

परिभाषितत्वमात्रम्। परिभाषायाः प्रयोजनञ्चेह पदसंस्कारः, सोऽपि 'तट' इत्यादौ पुंस्त्वेन सुबादिसद्भावः, 'तटी'त्यादौ स्त्रीत्वेन ङीबादिप्रत्ययः, 'तटमि'त्यादौ क्लीबत्वेन सुबादेर्लुगादिरिति। 'दुन्दुभी सुवर्ण' इत्यादौ तु शब्दसंस्कारस्यैव फलमर्थविशेषस्य लाभो, नहि 'अयं दुन्दुभिरिदं सुवर्णमि'त्यादितोऽक्षस्याशीतिरात्तिकपरीमितस्वर्णादेश्चावगमः। यत्र च सम्पदादिशब्दे स्त्रीलिङ्गत्वादिप्रयुक्तो नास्ति संस्कारस्य विशेषस्तत्राप्यभेदेन तत्साकाङ्क्षे शोभनादिपद एवास्ति, विशेषणपदानां विशेष्यपदलिङ्गग्राहित्वस्य विना बाधकं नियमात्।

यत्तु—तटादिकं द्रव्यमिव तद्गतं स्त्रीत्वादिकं पदार्थान्तरमपि तटादिपदस्यार्थः, प्रत्ययानान्तु तद्व्यञ्जकतामात्रम्—इति वैयाकरणैरुक्तम्, तन्न

---

कृष्णकान्तीटीका।

ति भावः। संस्कार—आकाङ्क्षा, सोऽपि—संस्कारोऽपि। शब्दे ह्वार्थविशेषलाभोऽपि पदसंस्कारफलमित्याह—दुन्दुभीति। अर्थविशेषस्य—क्षस्याशीतिरत्तिकापरिमितसुवर्णस्य(१) च, लाभः—अवगमः। ननु पुलिङ्गदुन्दुभीशब्दादपि नपुंसकलिङ्गसुवर्णशब्दादपि च ताहशताहशार्थावगमात् कुतः शब्दसंस्कारस्य तल्लाभकत्वमित्यत आह—न हीति। हि—यस्मात्, अवगमो नेति योजना। ननु सम्पदादिशब्दानां पदसंस्कारविशेषाभावात् स्त्रीलिङ्गत्वेन परिभाषावैफल्यमित्यत आह—यत्र चेति। विशेषः—ङीबादिप्रत्ययः, तत्साकाङ्क्षे—सम्पदादिपदसाकाङ्क्षे,(यत् शोभनादिपदन् तस्मिन्) अस्तीति। पदसंस्कारस्य विशेष इति पूर्वेणान्वयः। तत्र हेतुमाह—विशेषणपदानामिति। नियमादिति। असति बाधके विशेषणपदस्य विशेष्यपदसमानलिङ्गत्वनियमात् विशेषणपदस्य विशेष्यलिङ्गानुमापकत्वमिति भावः। हरीतक्यः फलानीत्यादौ व्यभिचारादाह—विनेति। तथा च "द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियामि"त्यनुशासनस्यैव समानलिङ्गकत्वबाधकत्वादिति भावः।

वैयाकरणमतमुत्थाप्य निषेधयति—यत्त्विति। द्रव्यमिव—जलसन्निहितभूमिरूपद्रव्यमिवेत्यर्थः। तद्गतं—ताहशभूमिगतं, पदार्थान्तरमपि—तटादिपदाशक्यमपि, तटादिपदस्यार्थः—तटादिपदप्रतिपाद्यः। नन्वेवं ङीबादिप्रत्ययानां वैफल्यमित्यत आह—प्रत्ययानामिति। ङीबादिप्रत्ययानामित्यर्थः। तद्व्यञ्जकतामात्रं—तटादिपदजन्यस्त्रीत्वादिबोधसहकारित्वमात्रमित्यर्थः। ननु शाब्दबोधे वृत्त्या पदजन्यपदार्थोपस्थितेर्हेतुतया तटादिपदस्य स्त्रीत्वादौ वृत्तिविरहात् कथं तस्मात् स्त्रीत्वादिबोधः, कथं वा प्रत्ययानां तद्व्यञ्जकतेति

---

(१) 'सुवर्णोऽशीतिरात्तिः स्यादित्यमरः।

युक्तम्, तटादिपदेभ्यस्ततटत्वादिनैव धर्मान्तरेण स्त्रीत्वादिना तटादेरननुभवेन तादृशपदार्थान्तरे प्रमाणाभावात्। "न विप्रा वेदमुच्चरेत्" इत्यादौ च टाबादिना प्रत्ययेनैव स्वार्थस्य योन्यादिमत्त्वलक्षणस्त्रीत्वस्य प्रकृत्यर्थेऽनुभावनात्। "न प्राणि प्राप्नुयाद्दायं न विप्रोऽध्ययनं त्यजेत्" इत्यादावपि लुप्तालुप्ताभ्यां सुब्भ्यामेवोपस्थितं विलक्षणसंस्थानवत्त्वरूपं नपुंसकत्वं प्राणिनि, पुंस्त्वञ्च विप्रेऽनुभूयते, न चेदेवं 'दधि भुञ्जीत' इत्यादौ कर्मत्वादरनुभवोऽर्थे तस्यापि प्रकृत्यर्थता किन्न स्यात्। स्यादेवेति चेत्, संख्याया अपि स्यादिति किन्न रोचयेः। 'रोचयेत्तदपि, प्रत्यया-

---

कृष्णकान्तीटीका।

चेन्न। 'घटेन जलमाहरे'त्यादौ मीमांसकमते चिछद्रेतरत्वस्येव वैयाकरणमतेऽपि तात्पर्यादिवशात्तत्र लक्षणादिति सम्प्रदायविदः। तन्न, तथापि स्त्रीत्वादिना भानानुपपत्तेर्जागरूकत्वात्। वस्तुतस्तु शक्त्या तटत्वावच्छिन्नस्य लक्षणया च स्त्रीत्वस्य बोधकं तटादिपदमित्येव वैयाकरणाभिमतम्। अत एव लक्षणाज्ञापनायैव पदार्थान्तरमपीत्युक्तं, प्रत्ययार्था तद्व्यञ्जकतामात्रमित्यस्य तादृशलक्षणाग्राहकतामात्रमित्यर्थः। एकधर्मावच्छिन्न एव युगपद्वृत्तिद्वयस्य विरुद्धत्वात्। एतेन वस्तुगत्या स्त्रीत्वाश्रयतटस्य तटत्वादिना भानं, न तु स्त्रीत्वादिनेत्युक्तौ 'स्त्रीत्वादिना तटादेरननुभवेने'ति दूषणग्रन्थासङ्गतिरित्यपि प्रत्युक्तमिति युक्तमुत्पश्यामः। तटादिपदेभ्य इति। पञ्चम्यर्थः प्रयोज्यत्वं, तस्याननुभवैकदेशेऽन्वयः। तथा च तटादिपदानां तादृशानुभवाजनकत्वेनेति यावत्। तादृशपदार्थान्तरे स्त्रीत्वादिरूपपदार्थान्तरविषयकबोधजनकत्व इति केचित्। सप्तम्यर्थो विषयत्वं, तच्च प्रमाणैकदेशप्रमित्यन्वयि, तथा च तत्र तादृशपदार्थान्तरविषयकबोधजनकप्रमितिजनकाभावादित्यर्थ इति वस्तुगतिः। स्त्रीत्वादेः प्रकृत्यर्थत्वे साधकाभावमुक्त्वा प्रत्ययार्थत्वे साधकमप्याह—न विप्रा इति। एवकारेण प्रकृतिव्यवच्छेदः। अनुभावनादिति। अयमभिप्रायः—योन्यादिमत्त्वरूपस्त्रीत्वादेः प्रकृत्यर्थत्वे तटीत्यादौ तादृशस्त्रीत्वावगतावयोग्यत्वापत्तेरिति स्त्रीत्वादिकमतिरिक्तपदार्थो वाच्यः, तदेवोक्तं पदार्थान्तरमित्यनेन, तथा च 'न विप्रा' इत्यादौ योन्यादिमत्त्वरूपस्त्रीत्वभानस्यानुभवसिद्धत्वाद्भवन्मते तन्नोपपद्यते, तस्य त्वयापि प्रकृत्यर्थत्वास्वीकारादिति। ननु टाबादिप्रत्ययस्य स्त्रीत्वादिवाचकत्वे यत्र तन्नास्ति तत्र कथं स्त्रीत्वादिबोध इत्याशंक्य समाधत्ते—न प्राणीति। इत्यादावपीति आदिना "योषिद्धनं कामुकानां, योगो योगविदां धन"मित्यादिपरिग्रहः। ननु लुप्तविभक्तेः स्मरणकल्पनामपेक्ष्य तस्य प्रकृत्यर्थत्वं युक्तमित्यतः प्रकृत्यर्थत्वे प्रतिबन्दिमप्याह—दधीत्यादि। तस्यापि—कर्मत्वादेरपीत्यर्थः। स्यादेवेति। कर्मत्वादेः प्रकृत्यर्थत्वं स्यादेवेत्यर्थः। अपि स्यादिति। प्रकृत्यर्थत्वमित्यनुषज्यते।

नामपि तत्तदर्थव्यञ्जकतामात्रत्वात्'—इति तु प्रमाणारिक्तं वचः, प्रत्ययाना-मन्वयव्यतिरेकाभ्यां संख्यादिवाचकत्वव्यवस्थितेः, अन्यथा प्रत्ययानामेव तत्तद्विशिष्टार्थबोधकतायां प्रकृतीनामभिव्यञ्जकतामात्रस्य सुवचत्वात्। अस्तु वा "न प्राणि प्राप्नुयाद्वायम्" इत्यादौ प्राण्यादिमात्रबोधकस्य प्राण्यादिपदस्यैव लक्षणया नपुंसकप्राण्यादिपरतेत्यास्तां विस्तरः ॥५४॥

फणिभाष्याद्युक्तं नाम्नः पञ्चविधत्वमुपपादयति—

**एकैकेन तथा द्वाभ्यां वचनैस्त्रिभिरेव च।**
**साकाङ्क्षत्वप्रयुक्तन्तु नाम पञ्चविधं स्मृतम् ॥५५॥**

सुपां मध्ये [१] एकवचनमात्रसाकाङ्क्षत्वेन [२] द्विवचनमात्रसाकाङ्क्षत्वेन [३] बहुवचनमात्रसाकाङ्क्षत्वेन [४] द्विवचनानिराकाङ्क्षत्वेन [५] वचनत्रयसा-काङ्क्षत्वेन च नाम्नः पञ्चविधत्वव्यपदेशः। एकादिकं विंशत्यादिकं सार्थक-भावकृदन्तं, भूयमानभवितव्यादिकं क्रियाविशेषणार्थकं समाहारद्विगुसमा-

---

कृष्णकान्तीटीका।

तदपि—प्रकृत्यर्थत्वमपीत्यर्थः। प्रत्ययानां वैफल्यमपि नास्तीत्यत आह—प्रत्ययानाम-पीति। वचसः प्रमाणरिक्तत्वे हेतुमाह—प्रत्ययानामिति। अन्यथेति। अन्वयव्य-तिरेकसत्त्वेऽपि यदि प्रत्ययानां तद्वाचकत्वं न स्वीक्रियेत तदेत्यर्थः। तत्तद्विशिष्टार्थबो-धकतायां-कर्म्मत्वादिविशिष्टघटादिबोधकतायाम्। ननु विभक्तेरसद्भावस्थले लुप्तवि-भक्तेः स्मरणकल्पनगौरवमेव तेषां प्रकृत्यर्थे विनिगमकमित्यत आह—अस्तुवेति। तथा च प्रत्ययसद्भावस्थले तेषां प्रत्ययार्थत्वे अस्मन्मतेऽपि बाधकाभाव इति प्रत्ययसद्भावस्थलमालम्ब्य वयं न विवदामह इति हृदयम् ॥ ५४ ॥

फणिभाष्योक्तनाम्नः पञ्चविधत्वस्योपपादककारिकावतारणिकामाह—फणिभा-ष्याद्युक्तमिति। विवृणोति—सुपामिति। एकवचनमात्रसाकाङ्क्षत्वेनेत्येवकारार्थमात्र-स्य त्रिभिर्वचनैरित्यत्रान्वये प्रयोजनाभावात् तत्पूर्वस्थलद्वय एव सम्बन्धः, तथा चैके-नैव साकाङ्क्षत्वं द्वाभ्यामेव साकाङ्क्षत्वं वचनत्रयसाकाङ्क्षत्वं प्राप्तम्। तत्र प्रथमेन तत्तद्व-चनमात्रसाकाङ्क्षत्वलाभः, द्वितीयेन द्विवचनमात्रसाकाङ्क्षत्वलाभः, तृतीयेन वचनत्रय साकाङ्क्षत्वलाभः। तथा द्वाभ्यामित्यस्यैकवचनबहुवचनाभ्यामित्यर्थादिति भावः। पञ्चविधत्वव्यपदेश इति। भाष्यकृतापि रूढत्वादेर्नामविभाजकत्वमवश्यं स्वीकर-णीयम्, एकवचनमात्रसाकाङ्क्षत्वादिकन्तु न विभाजकम्, तथा सति तत्तद्व्यक्तित्वादे-रपि तथात्वापत्तेरित्यावेदनायैव व्यपदेश इत्युक्तम्। ननु भावविहितभवितव्यादिशब्दस्य नैकवचनमात्रसाकाङ्क्षत्वं "भवितव्यानां भवन्ति द्वाराणी"त्यादौ बहुवचनस्यापि दर्श-

हारद्वन्द्वावन्योन्यपरस्परादिकञ्च सुपामेकवचनमात्रेण साकाङ्क्षम्[१], "भवितव्यानां भवन्ति द्वाराणी(१)"त्यादौ च भवितव्यानामित्यस्य प्राप्तव्यानामित्यर्थः । उभपदं द्विपदं पुष्पवन्तपदं स्वर्वैद्येऽश्विनादिपदं भूस्वर्गयो रोदस्यादिपदं ग्रामे गोदपदञ्च द्विवचनमात्रेण[२], प्राणप्रभृतिकं त्रिचतुरादिकपदं कतिपदञ्च बहुवचनेनैव(३), उभयपदमेकवचनबहुवचनाभ्यामेव[४], घटपटादिकं तु त्रिभिरपि वचनैः[५] । यथा चैतत्तथाग्रे प्रतिपादयिष्यामः ॥ ५५ ॥

नाम-धातुभेदात् प्रकृतेर्द्वैविध्यमुक्तं(२), तत्र सामान्यतो विशेषतश्च नाम निरुच्यावसरसङ्गत्या धातुं निरूपयति-

(३)यो यत्स्वार्थस्योत्तरस्थतृजर्थे बोधनक्षमः ।
स तादृशार्थकः शब्दो धातुस्त्रिविध ईरितः ॥ ५६ ॥

यः शब्दः स्वोत्तरतृचः शक्याऽर्थे स्वोपस्थाप्यस्य यादृशार्थस्या-

---

कृष्णकान्तीटीका ।

जादित्यतस्तस्य भावकृदन्तत्वमेव नास्तीत्याह—भवितव्यानामिति । द्विवचनमात्रेणेति । साकाङ्क्षमिति पूर्वेणान्वयः, एवमग्रेऽपि । एतेषां तत्तद्वचनसाकाङ्क्षत्वे प्रमाणाकाङ्क्षायामाह—यथा चैतदिति ॥ ५५ ॥

धातुलक्षणप्रतिपादककारिकावतारणिकामाह—नामधातुभेदादिति । तत्र-तयोर्मध्ये, सामान्यतः—सामान्यलक्षणतः,विशेषतः-विशेषलक्षणतः। न्यूनतापरिहाराया-वसरस्य सङ्गतित्वमाह—अवसरसङ्गत्येति । धातुं-धातुपदप्रतिपाद्यम् ।

विवृणोति—यः शब्द इति । सामान्यत उत्तरस्वस्यासत्वात्, सत्वे वाऽव्यावर्त्तकत्वात् उत्तरपदस्य स्वोत्तरपरतया व्याचष्टे—स्वोत्तरेति । स्वं-धातुत्वेनाभिमतं, शक्यार्थे—शक्तिप्रतिपाद्यार्थे इत्यर्थः। तेन यद्धातुः स्वोत्तरतृचो लक्ष्यार्थे एव स्वार्थबोधकस्तत्र नाव्याप्तिः,न वा गुरुतरशक्तिनिवेशवैफल्यम्।एकस्य धातोरपरार्थे धातुत्ववारणाय

---

(१) शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥
इतिशाकुन्तलद्वितीयाङ्कस्था दुष्यन्तोक्त्यार्या ।

(२) 'निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदत' इति (पृ० ६८) नामप्रकरणस्थ ११ कारिकायामिति यावत् ।

(३) यः शब्दः स्वार्थप्रकारकस्वोत्तरतृजाद्यर्थमुख्यविशेष्यकान्वयबोधे हेतुः स धातुर्मूलधातु-सौत्रप्रत्ययान्तेतिभेदात्त्रिविध इति कारिकार्थः ।

न्वयबोधं प्रति समर्थः स तादृशार्थे धातुरुच्यते । 'पच-पिपक्षा'दयो हि शब्दाः 'पक्तृ-पिपक्षित्रा'दिनामनिविष्टाः स्वोत्तरतृजर्थे कर्त्रादौ स्वोपस्थाप्यानां 'पचन-पाकेच्छा'दीनामन्वयधियं प्रति प्रभवो, न त्वन्ये घटाद्याः ।

स चायं मूलधातुः[1] सौत्रः[2] प्रत्ययान्तश्चेति त्रिविध इति ॥ ५६ ॥

सुबर्थेऽपि धात्वर्थस्यान्वयवादिनां मते धातुं लक्षयति—

(१)यः सुबर्थे निजार्थस्य स्वान्ते क्वचिन्तनं विना ।
यादृशस्यान्वयाहेतुः स वा धातुस्तदर्थकः ॥५७॥

यः शब्दः स्वान्ते क्वचिन्तनं विना सुबर्थे यादृशस्य निजार्थस्या-

कृष्णकान्तीटीका ।

स्वोपस्थाप्यस्येति । अन्यार्थस्य लक्षणया तत्प्रतिपाद्यत्वसम्भवात्, तथा च स्वजन्योपस्थितिसहकारेण स्वप्रतिपाद्यार्थप्रकारक इति तदर्थः । फलोपधायकत्वनिवेशे फलानुपधायकेऽव्याप्तिरिति स्वरूपयोग्यतां निवेशयति—समर्थ इति । एकार्थेऽपरार्थस्य धातुत्ववारणाय तादृशार्थे इति । तथा च यादृशानुपूर्व्यवच्छिन्नप्रकारताशालिनिश्चयत्वं स्वाश्रयोत्तरतृजर्थधर्मिकस्वाश्रयज्ञानजन्योपस्थितिसहकारेण स्वाश्रयप्रतिपाद्यार्थप्रकारकशाब्दत्वव्यापकजन्यतानिरूपितजनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे धातुत्वमिति पर्यवसितम् । धर्मिविषयताया आकाङ्क्षाज्ञानकार्यतायाः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादसम्भववारणाय व्यापकत्वनिवेशः । न च कर्तृधर्मिकपाकप्रकारकान्वयबोधं प्रति तृचि पचप्रकारकनिश्चयत्वेन हेतुतया धर्मिविषयताया अपि तत्कार्यतावच्छेदकनिविष्टतया स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेऽपि न दोष इति वाच्यम् । 'पाकः पाच्यमानः पक्ते'त्यादिनानाविधबोधसाधारणैककार्यकारणभावस्य लाघवेन कल्पनीयत्वाद्, विशेषसामग्रीविरहादेवैकविधबोधस्थलेऽपरबोधापत्त्यसम्भवादिति । लक्ष्याणि प्रदर्शयन् तेषु लक्षणं सङ्गमयति—पच-पिपक्षेत्यादि । प्रभवः—समर्थाः। अलक्ष्ये लक्षणागमनं व्यञ्जयति—न त्विति । त्रिविध इत्यस्यार्थमाह—स चायमिति । निरुक्तप्रकृतिलक्षणाश्रय एतल्लक्षणाश्रयश्चेत्यर्थः ॥ ५६ ॥

प्राचीनमतमुत्थापयति—सुबर्थेऽपीति । विवृणोति—यः शब्द इति । तथा च स्वाश्रयोत्तरक्वचिन्तनाभावविशिष्टयादृशानुपूर्वीप्रकारकनिश्चयत्वं सुबर्थधर्मिकस्वाश्रयोपस्थाप्ययादृशार्थान्वयबोधजनकतानवच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशधातुत्वमिति पर्यवसितार्थः। असम्भववारणाय विशिष्टान्तम् । अभाववच्चैकक्षणावच्छिन्नैकार्थवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः, अन्यथा घटादौ नाम्नि घटरूपार्थक-

(१) यः स्वोत्तरकृतं विना सुबर्थविशेष्यकान्वयबोधेऽहेतुः स धातुरिति वा धातुलक्षणमिति कारिकार्थः ।

न्वयधियं प्रत्यसमर्थः स एव तादृशार्थको धातुः । 'पाकं कुरु, सम्पदं पश्ये'त्यादौ हि पचादिको धातुः स्वोत्तरस्य भावकृतः प्रतिसन्धानदशायामेव सुबर्थकर्मत्वादौ स्वार्थस्य पचनादेरन्वयबोधमाधत्ते न त्वन्यथा, स्वरूपस्य घञाद्यशक्यत्वेन तत्र धात्वर्थस्यान्वयायोगादिति प्राञ्चः ॥५७॥

धातोर्विधात्रयं लक्षयति—

**मूलधातुर्गणोक्तोऽसौ, सौत्रः सूत्रैकदर्शितः ।**
**योगलभ्यार्थको धातुः प्रत्ययान्तः प्रकीर्त्तितः ॥५८॥**

गणोक्तो गणपठितः 'पञ्चभू'प्रभृतिः, सौत्रः सूत्रमात्रोपात्तः 'स्कन्-

कृष्णकान्तीटीका ।

धातुत्ववारणायानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशस्यावश्यकत्वात्तद्दोपतादवस्थ्यापत्तेः । आख्यातार्थे स्वार्थान्वयबोधजनकतावच्छेदकत्वात्पटाद्यानुपूर्वीप्रकारकनिश्चयस्येति प्रत्ययार्थमुपेक्ष्य सुबर्थे इत्युक्तम् । 'चैत्रेण पच्यते' इत्यादौ स्वार्थविशेष्य सुबर्थप्रकारकबोधाजननात् पचनेति सुबर्थधर्मितानिवेशः, अन्यत् स्वयमूहनीयम् । ननु सुबर्थे धात्वर्थान्वयः कथं स्वीक्रियते ? भावविहितकृतां स्वरूपे शक्तिस्वीकारात्तादृशार्थ एव धात्वर्थान्वयादित्यत आह—स्वरूपस्येति । अशक्यत्वेनेति । सुबर्थधात्वर्थयोरन्वयबोधानुपगम एव भावविहितप्रत्ययानां स्वरूपे शक्तिकल्पनबीजं, तादृशान्वयबोधस्वीकारे च स्वरूपे तच्छक्तिकल्पनस्यानावश्यकत्वादिति भावः । न च प्रत्ययलक्षणं तत्राव्याप्तम्, तस्य कुत्राप्यर्थे प्रशस्तवृत्तिमत्त्वाभावात्, एवं धात्वर्थरूपभावस्य धातुनैव प्रत्यायनाद्वैफल्यम्, कथं वा प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमः, कथं वा 'स्तोकं पाकः, स्तोकः पाक' इति प्रयोगद्वयस्य साधुत्वोपपत्तिरिति वाच्यम् । भावप्रत्ययादीनाममीषां धात्वर्थ एव शक्तत्वात्, 'पाक' इत्यादावभेदेन धात्वर्थविशेष्यकप्रत्ययार्थस्यान्वयबोधस्वीकारान्न काचिदनुपपत्तिरित्यस्य प्राचामभिप्रेतत्वात् । न च धात्वर्थप्रत्ययार्थयोरन्वयस्याव्युत्पन्नत्वमिति तु न देश्यं, 'करोति यतत' इत्यादौ तथादर्शनादेककृतेरेव तत्र भानम् । 'सम्भेदेनान्यतरवैयर्थ्याभावादि'ति तु रिक्तं वचः, तथासति प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमानुपपत्तेरशक्यपरिहारत्वात्, तत्र तादृशनियमसङ्कोचे ममापि सुबर्थधात्वर्थयोरन्वयाबोधनियमसङ्कोचस्य सुवचत्वात् । किञ्च तादृशनियमे धात्वर्थ इत्यस्य प्रत्ययानुपस्थाप्यधातूपस्थाप्यार्थ इत्यवश्यं भवतापि वक्तव्यं, तथा चास्मन्मतेऽपि न तादृशनियमभङ्ग इत्यलं पल्लवितेन । उच्छृङ्खलास्तु—प्राञ्च इत्यस्वरससूचनाय, तादृशास्वरसबीजान्येतान्युक्तानि—इत्याहुः ॥५७॥

धातोर्विधात्रयलक्षणप्रतिपादककारिकावतारणिकामाह—धातोरिति । विवृणोति । गणोक्त इति । सौत्रपाठसाधारणमेकपदस्य केवलार्थकत्वमभिप्रेत्य 'सूत्रै-

जु'प्रभृतिकः, यौगलभ्यार्थकः स्वावयवलभ्यार्थस्य बोधकः 'पाचि-पिपक्षा'दिः, 'तितिक्षा'दिरपि सनर्थस्वरूपाद्यन्तर्भावेण यौगिक एव। 'हिन्दोलान्दोला'देर्लौकिकस्यापि सत्त्वाच्चतुर्विध एव धातुरिति बोपदेवः। सौत्रपदं यौगिकगणोक्ताभ्यामन्यतरपरमतो लौकिकस्य नाधिक्यमित्यन्ये ॥५८॥

परस्मैपदित्वादिभेदेनापि त्रैविध्यं सम्भवति अतस्तदपि निर्वक्ति—

**यो यत्पदार्थकर्तृत्वे यादृक्स्वार्थस्य बोधकः।**
**स तत्पदी भवेद्धातुस्तादृशः स्वार्थबोधने ॥ ५९ ॥**

यो धातुः स्वोपस्थाप्यस्य यादृशार्थस्य यत्पदोपस्थाप्ये कर्तृत्वेऽन्वयबोधं प्रति समर्थः स धातुस्तत्पदी। 'गमभू'प्रभृतयः स्वार्थस्य गत्युत्पत्तिप्रभृतेर्मुख्ये गौणे वा परस्मैपदार्थे एव कर्तृत्वेऽन्वयधियं प्रति प्रभवः। सत्यपि योग्यतादिग्रहे 'चैत्रो गच्छति, भवति' इत्यादित इव 'गच्छते भवते'-प्रभृतिभ्यो गतिकर्तृत्वाद्यप्रतीतेः। 'सङ्गच्छते, भवते' इत्यादितः सङ्गति-

---

कृष्णकान्तीटीका।

कदर्शित' इत्यस्य पर्यवसितार्थमाह—सूत्रमात्रोपात्त इति। गणोक्तस्य पचादिधातोरपि सूत्रोपात्तत्वात्तेन रूपेण विभागानुपपत्तिः परस्परव्यावर्त्तकधर्मस्यैव विभाजकत्वान्मात्रपदम्। यौगिक एवेति। इति न विधात्रयानुपपत्तिरिति शेषः ॥५८॥

व्युत्पत्तिवैशद्याय धातोरन्यविधविधात्रयं दर्शयितुं भूमिकामाह—परस्मैपदित्वादीति। विवृणोति यो धातुरिति। तथा च धातुत्वे सति यादृशानुपूर्व्यवच्छिन्नज्ञानत्वं यत्पदोपस्थाप्यकर्त्तृत्वधर्मिकस्वाश्रयोपस्थाप्ययादृशार्थप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्त्वं तादृशार्थकतत्पदिधातुत्वमिति पर्यवसितम्। लक्ष्ये लक्षणं सङ्गमयति—गम-भूप्रभृतय इति। अन्वयधियं प्रति प्रभव इति परेणान्वयः। गौणे वेत्येतेन कारिकास्थस्वार्थपदस्य स्वशक्यार्थपरत्वे लक्ष्यार्थासंग्रहः, लक्ष्यार्थपरत्वे शक्यार्थासंग्रहः इत्युभयसंग्रहाय स्वोपस्थाप्यार्थ इति विवृतम् ( अतः? ) तेन रूपेणैव तस्य लक्षणघटकत्वमिति सूचितम्। ननु परस्मैपदोपस्थाप्य इव आत्मनेपदोपस्थाप्येऽपि कर्त्तृत्वगत्यादिबोधं प्रति गमाद्यानुपूर्वीप्रकारकज्ञानस्य स्वरूपयोग्यत्वात् कुतस्तेषां नात्मनेपदित्वमित्याशङ्क्य तस्य तत्र स्वरूपयोग्यत्वमेव नास्तीत्याह—सत्यपीत्यादि। ननु योग्यतादिज्ञानरूपकारणान्तरविरहादेव तादृशानुपूर्वीज्ञानात् न तत्र तादृशान्वयबोध इत्यत आह सत्यपि योग्यतादिग्रह इति। आदिनाऽऽसत्तितात्पर्यपरिग्रहः। सम्पूर्वगमधातोः प्राप्त्यर्थे, भूधातोस्तत्तदर्थे चात्मनेपदित्व इष्टापत्तिमाह सङ्गच्छत इत्यादिना। अत्र प्राचीनसम्वादमाह

प्राप्त्यादिकर्तृत्वावगमाच्चादृशार्थे आत्मनेपदिन एव ते । 'यजति, करोती'-त्यादित इव 'यजते, कुरुते' इत्यादितोऽपि यागादिकर्तृत्वस्यावगतेर्यागाद्यर्थे यजिकृञादिरुभयपदी । तदुक्तमभियुक्तैः—

पदद्वयेन साकाङ्क्षाः स्वरिञ्ञिण्ण्यन्तधातवः ।
सनन्ताः प्रायशो मूलधातुवत्पदिनो मताः ॥
क्यङ्-यङन्ता ङानुबन्धा रुचाद्याश्चात्मनेपदैः ।
परे परस्मैपदिनो नित्यं कर्त्तरि धातवः ॥

स्वरितः समाहारस्वरानुबन्धा 'यज-पचा'द्याः, ञितो ञ्यनुबन्धाः 'कृञ्-युजा'दयो, ण्यन्ताश्च 'भावि'प्रभृतयः कर्तृत्ववाचिना पदद्वयेन समं साकाङ्क्षाः । सनान्तास्तु स्वप्रकृतिपदभाजस्तेन 'बुभूषते, विवर्द्धिषति' इत्यादिको न प्रयोगः । 'स्मृदृशोः' परस्मैपदित्वेऽपि सनन्तयोस्तयोरात्मनेपदित्वमेव, अत उक्तं प्रायश इति । क्यङन्ता 'हंसाया'द्याः, यङन्ता 'बोभूया'द्याः, ङानुबन्धाः 'शीङा'द्याः, 'रुचा'दिगणश्च कर्तृत्ववाचिनात्मनेपदेनैव साकाङ्क्षाः । परे पुनर्धातवः परस्मैपदेनैवेत्यर्थः ॥ ५९ ॥

प्रत्ययोऽसौ चतुर्विध इति यदुक्तं(१) तस्य चतस्रो विधा दर्शयति—

**विभक्तिश्चैव धात्वंशस्तद्धितं कृदिति क्रमात् ।**
**चतुर्धा प्रत्ययः प्रोक्तः, कादिभिः(२) पञ्चधाऽथवा ॥६०॥**

---

कृष्णकान्तटीका ।

तदुक्तमित्यादि । समाहारेति । "ऊर्ध्वमादत्त इत्युदात्तस्तद्विपरीतश्चानुदात्त, उदात्तानुदात्तयोर्मिश्रश्च समाहार(३)"इति दुर्गसिंहः । पदद्वयेनेत्यादौ पूरयति-कर्त्तृत्ववाचिनेति । अन्यथा परस्मैपद्यादिधातुनामप्युभयपदित्वापत्तेरिति भावः । प्रायश इत्यस्य फलमाह—स्मृदृशोरिति । आत्मनेपदित्वमेवेति। "स्मृदृशी च सनन्तौ तु, रुचादौ श्रुर नाङ् प्रति । अननुज्ञाश्च विज्ञेया" (४)इत्याद्यनुशासनादिति भावः । परे-उभयपद्यात्मनेपदिभिन्नाः । परस्मैपदेनैवेति । साकाङ्क्षा इति पूर्वेणान्वयः ॥५९॥

---

(१) नामप्रकरणीय( पृ० ४३ )नवमकारिकायां पूर्वमुक्तमित्यर्थः ।

(२) 'अश्वकभार्य' इत्यादौ कादिप्रत्ययानां तद्धितत्वमनङ्गीकुर्वतां कलापानुगामिनां मतमाह कादिभिरिति ।

(३) अत्र 'उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः' ( १।२।२९-३०-३१ ) इति पाणिनीयानि सूत्राणि । (४) अत्र 'ज्ञाश्रुस्मृदृशां सनः' ( १।३।५७ ) इति पा० सूत्रम् ।

धात्वंशः—'सन् क्यजा'दिः। 'वत्सकोऽश्वक' इत्यादौ दयाकुत्साद्यर्थकस्य कादेः, 'अजा ब्राह्मणी श्वश्रूरि'त्यादौ स्त्रीत्वाद्यर्थकटाबादेश्च तद्धितत्वोपगमे चतुर्विध एव प्रत्ययः, तदनुपगमे तु पञ्चविध एव। अत एव 'अश्वकभार्य्य' इत्यादौ पुंवद्भावस्तद्धितकृतोरेव कोपधस्य तन्निषेधात् एवं'औपगव' इत्यादाविव 'पट्वी'त्यादौ नौत्वादिरिति कालापाः ॥ ६० ॥

प्रत्ययेषु विभक्तिं लक्षयति विभजते च—

**(१)संख्यात्वव्याप्यसामान्यैः शक्तिमान् प्रत्ययस्तु यः।**
**सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङ् चेति विभेदतः ॥६१॥**

संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः सा विभक्तिः सुप्तिङ् चेति भेदतो द्विविधा। एकत्वत्वाद्यवच्छिन्नशक्तिमानपि तदादिर्न प्रत्ययः, प्रत्ययश्च तृजादिर्न संख्याशक्त इति तयोर्व्युदासः ॥ ६१ ॥

यद्याख्यातमात्रस्य तदेकवचनस्य वा न संख्याशक्तत्वे प्रमाणं तदाऽन्यथा निर्वक्ति—

**प्रकृत्यर्थस्य यः स्वार्थे विधेयत्वेन बोधने ।**

कृष्णकान्तीटीका।

कालापमतमाह—तदनुपगम इति। अत एवेति। कादिप्रत्ययानां तद्धितत्वाभावादेवेत्यर्थः। नौत्वादिरिति। ङीबादेस्तद्धितत्वे तस्मिन् परे "उवर्णस्यौत्वमापाद्य" इत्यनेन पटुशब्दस्योकारस्यौत्वं स्यादिति भावः ॥ ६० ॥

विभक्तिलक्षणविभक्तिविभाजकप्रतिपादककारिकावतारणिकामाह—प्रत्ययेष्विति। निर्द्धारणे सप्तमी। विवृणोति—संख्यात्वावान्तरेति। जात्यवच्छिन्नेत्यनेन कारिकास्थतृतीयाया अवच्छेदकत्वमर्थ इति सूचितम्। प्रत्ययत्वनिवेशव्यावृत्तिमाह—एकत्वत्वेति। ननु प्रत्ययत्वमेव विभक्तित्वमिति कथं नोच्यत इत्यत आह—प्रत्ययश्चेति। न संख्याशक्त इति। तथा च इतरां संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान्नेति भावः। तयोः—तदादितृजाद्योः। न च लक्षणे संख्याशक्तत्वमेव निवेश्यतां किं तादृशजात्यवच्छिन्नत्वनिवेशेनेति वाच्यम्। संख्याविशिष्टबोधकपदोत्तरं तादिप्रत्ययेऽतिव्याप्त्यापत्तेः। तृजादेरपि क्वचिल्लक्षणया सङ्ख्याबोधकत्वसम्भवाच्छक्तिनिवेशः ॥ ६१ ॥

लक्षणान्तरप्रतिपादककारिकावतारणिकामाह—यद्याख्यातेति। विवृणोति—

(१) एकद्वित्र्यादिविशिष्टार्थशक्तिमान् प्रत्ययो विभक्तिस्सुप्तिङ्भेदेन द्विधेत्यर्थः।

**समर्थः सोऽथवा शब्दो विभक्तित्वेन गीयते(१)॥६२॥**

यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः सा सुबादि विभक्तिरित्युच्यते। 'घटमि'त्यादौ सुपा कर्मत्वं घटीयमित्यादाविव, 'पचती'त्यादौ तिङापि कृतिः पाकीयेत्यादिरुद्देश्यविधेयभावेन स्वार्थे प्रकृत्यर्थस्य धीरुत्पाद्यते न तु प्रत्ययान्तरेण, तस्य प्रकृत्यर्थावच्छिन्नस्वार्थविषयताशालिन्येव शब्दे समर्थत्वात्। न हि 'दाक्षिरि'त्यादितोऽपत्यं दक्षस्येत्यादिरुद्देश्यविधेयभावेन बोधः कस्यापि, किन्तु दक्षापत्यत्वाद्यवच्छिन्ने धर्मिण्येव सुबर्थैकत्वादेः, अन्यथा 'अपत्यं दक्षस्य चैत्रस्य चे'त्यादाविव 'दाक्षिश्चैत्रस्य चे'त्यादावप्यपत्यादिधर्मिकस्य दक्षचैत्राद्योर्विधेयभावेन युगपदन्वयस्य दुर्वारतापत्तेः। प्रथमाप्यभेदादौ स्वार्थे प्रकृत्यर्थस्य विधेयभावेन धियं जनयत्येव, न चेदेवं 'नीलो घट' इत्यादौ नीलाद्यभेदरूपस्यावान्तरवाक्यार्थस्य पूर्वमप्रतीतौ महावाक्यार्थबोधस्य

---

कृष्णकान्तीटीका।

यः शब्द इति। तथा च यादृशानुपूर्वीप्रकारकनिश्चयस्य स्वार्थधर्म्मिकस्वाश्रयप्रकृत्यर्थविधेयकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं विभक्तित्वमिति पर्यवसितम्। लक्ष्ये लक्षणं सङ्गमयन्नलक्ष्ये लक्षणागमनं स्पष्टयति—घटमित्यादावित्यादिना। प्रत्ययान्तरेण—तृजादिप्रत्ययेन। कुत इत्याकाङ्क्षायामाह—तस्येति। तृजादिप्रत्ययस्येत्यर्थः। समर्थत्वादिति। तथा च प्रकारतावच्छेदके विधेयतानङ्गीकाराव विधेयतानिवेशादेव तद्वारणादिति भावः। ननु 'दाक्षिरि'त्यादौ अपत्यं दक्षीयमित्युद्देश्यविधेयभावेनान्वयबोधात्तादृशेण्प्रत्ययेऽतिव्याप्तिरित्यत आह—न हीति। तदा कीदृग्बोध इत्याकांक्षायामाह—किन्त्विति। सुबर्थैकत्वादेरिति, बोध इति पूर्वेणान्वयः। उक्तार्थं विप्रतिपन्नं प्रत्याह—अन्यथेति। अपत्यावच्छिन्नदक्षस्य विधेयत्वेनान्वयस्वीकार इत्यर्थः। दुर्वारतापत्तेरिति। सामग्र्यास्तुल्यत्वादिति भावः। अस्मन्मते च प्रकृत्यर्थावच्छिन्नस्वार्थविषयताशालिबोधत्वस्य तत्कार्यतावच्छेदकतया तदवच्छिन्नस्य कार्यं दक्षापत्यविशेष्यकबोधे सत्यपि चरितार्थत्वात दक्षविधेयकबोधस्यापादयितुमशक्यत्वादित्यभिप्रायः। ननु प्रथमायामव्याप्तिः, 'घट' इत्यादावेकत्ववान् घट इत्येव बोधात्तत्र प्रकृत्यर्थस्याविधेयत्वादित्यत आह—प्रथमापीत्यादि। तादृशान्वयबोधजनकत्वे युक्तिमाह—न चेदेवमिति। तत्पूर्वकत्वेति।

---

(१) प्रत्ययार्थधर्मिकप्रकृत्यर्थविधेयकान्वयबोधसमर्थः शब्दो वा विभक्तिरिति कारिकार्थः।

तत्पूर्वकत्वहान्यापत्तिरतो न तस्यामव्याप्तिः ॥ ६२ ॥

विभक्त्योः सुपं लक्षयति विभजते च—

**प्रकृत्यर्थे स्वार्थसङ्ख्यान्वयधीहेतवः सुपः ।**

**प्रथमादिप्रभेदेन ताश्च सप्तविधा मताः ॥ ६३ ॥**

प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते । ताश्च प्रथमाद्वितीयादिभेदेन सप्तविधाः । तिङस्तु स्वार्थभावनाद्यन्वयिन्येव स्वार्थसंख्यामेव बोधयन्ति, न तु स्वप्रकृत्यर्थ इति तासां व्युदासः ॥६३॥

सुप्सु प्रथमां लक्षयति—

**(१)तादात्म्यभिन्ने स्वार्थे या प्रकृत्यर्थस्य बोधने ।**

**न समर्था विभक्तिः सा प्रथमा परिकीर्त्यते ॥६४॥**

या विभक्तिस्तादात्म्यभिन्नस्वार्थधर्मिकप्रकृत्यर्थबोधं प्रति न स्वरूपयो-

---

कृष्णकान्तीटीका ।

अवान्तरवाक्यार्थबोधजन्यत्वेत्यर्थः । हान्यापत्तिरिति । तथा च तादात्म्यं नीलीयमित्यवान्तरवाक्यार्थबोधासत्त्वे नीलतादात्म्यवान् घट इति महावाक्यार्थबोधानुपपत्तिरिति भावः । तस्यां—प्रथमायाम् ॥ ६२ ॥

सुब्लक्षणप्रतिपादककारिकावतारणिकामाह—विभक्त्योरिति । विवृणोति—प्रकृत्यर्थेति । स्वार्थेति । स्वशक्येत्यर्थः । विभक्तय इति फलकथनं न तु तत्त्वेन निवेशः आनर्थक्यात्, विभक्त्यन्यप्रत्ययानां संख्याशक्तत्वात् तत्रातिव्याप्त्यसम्भवात् । प्रकृत्यर्थ इत्यस्य व्यावृत्तिमाह—तिङस्त्विति । भावना—कृतिः, अन्वयिनि-नामार्थ एवेत्यर्थः ॥ ६३ ॥

थमाविभक्तिलक्षणप्रतिपादककारिकावतारणिकामाह—सुप्स्वित्यादि । विवृणोति—या विभक्तिरिति । तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं तादात्म्यभिन्नस्वाश्रयार्थधर्म्मिकप्रकृत्यर्थप्रकारकान्वयबोधजनकतानवच्छेदकं विभक्तित्वे सति तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वमिति पर्यवसितम् । स्वार्थनिष्ठविधेयतानिवेशे प्रकृत्यर्थे स्वाश्रयसङ्ख्याप्रकारकबोधजनकत्वादसम्भवः स्यादतो धर्म्मितानिवेशः । प्रकृत्यर्थप्रकारतायास्तु न तत्त्वेन निवेशः प्रयोजनाभावात्, अत एव—प्रकृत्यर्थधर्म्मिकस्वार्थप्रकारकान्वयबोधजनकत्वे सति विभक्तित्वं प्रथमात्वमित्यस्तु लाघवाद्, द्वितीयादेस्तु प्रकृत्यर्थविशेष्यकस्वार्थकर्म्मताद्यर्थप्रकारकबोधजनकत्वाभावान्नातिव्याप्तिः—इति

---

(१) अभेदार्थविशेष्यकप्रकृत्यर्थप्रकारकबोधसमर्था विभक्तिः प्रथमेत्यर्थः ।

ग्या सा प्रथमा[१]। द्वितीयादयस्तु स्वार्थे कर्मत्वादौ प्रकृत्यर्थस्यान्वयबोधं प्रति समर्थाः । प्रथमा तु विशेषणपदोत्तरस्था तादृशि तादात्म्ये तथान्वयं बोधयन्त्यपि न तादात्म्याभिन्ने तथा, प्रथमाया द्विवचनम् 'औ' द्वितीयाया पुनः 'औट्' इति न तत्राऽव्याप्तिशङ्कापीति वदन्ति ॥ ६४ ॥

यदि 'स्वर्गकामो यजेते'त्यादौ प्रथमोपस्थाप्यस्य नियोज्यत्वस्य यागादावाधेयत्वस्य वा विध्यर्थकृतिसाध्यत्वादिघटककृत्यादौ प्रकृत्यर्थावच्छिन्नस्यान्वयः प्रामाणिको, यदि वा 'घृतिः स्वाहे'त्यादौ चतुर्थ्याः स्थाने न प्रथमा परन्तु प्रथमैवोद्देश्यत्वबोधिका, तदा तस्यामव्याप्तिरसम्भवो वा स्यादतोऽन्यथा निर्वक्ति—

**(१)धात्वर्थेन विशिष्टस्य तिङर्थस्यान्वयं प्रति ।**
**यदन्तनामबोध्यत्वं तन्नं सुप् साऽथवा तथा॥६५॥**

---

कृष्णकान्तीटीका ।

परास्तम्, स्वार्थसङ्ख्याप्रकारकबोधजनकत्वमादायातिव्याप्त्यापत्तेः, न हि कर्मत्वसिवैकत्वादिर्विशेष्यतया भासत इति नियमः, सङ्ख्यातिरिक्तसुबर्थानां प्रातिपदिकार्थविशेष्यत्वेनान्वयबोधकत्वनियमादिति । यद्यपि लक्ष्ये लक्षणगमनमभिधायैवालक्ष्ये तदगमनाभिधानं ग्रन्थकारीयरीतिः, तथापि तादृशबोधजनकत्वप्रसिद्धिं विना तदन्यत्वरूपतल्लक्षणगमनन्न सम्भवीति द्वितीयादिसकलविभक्तीनां तथाविधबोधजनकत्वाभिधानेनैव परिशेषात् प्रथमायां तदन्यत्वं सुग्रहमित्यभिप्रेत्य तादृशलिखनसौष्ठवेन लक्ष्ये लक्षणगमनं व्यञ्जितम् । द्वितीयादय इति सावधारणम्, तथा च द्वितीयादय एव तादृशबोधं प्रति समर्था न तु प्रथमेति तदर्थः । भिन्नान्तव्यावृत्तिमाह—प्रथमा त्विति । तादृशि—स्वोपस्थाप्येऽर्थे, तथान्वयं—प्रकृत्यर्थान्वयं, तथा—स्वार्थे तथान्वयं बोधयन्तीति योजनया तादृशार्थस्य लाभेऽपि तादृशीत्यस्य व्यवहितत्वात्तथेत्युक्तम् । ननु प्रथमाद्विवचनवृत्त्यानुपूर्व्या द्वितीयाद्विवचनेऽपि सत्त्वात् तत्रातिव्याप्तिरित्यत आह—प्रथमाया इति । तथा चौत्वजातेस्तत्रासत्त्वान्नातिव्याप्तिरिति भावः । वदन्तीत्यस्वरससूचनाय, स चोपाधेयसङ्करेऽप्युपाधेरसाङ्कर्यात्तत्र प्रथमात्वद्वितीयात्वयोः स्वीकारेऽपि न क्षतिरित्यग्रे व्यक्तीभविष्यति ॥ ६४ ॥

ननु 'स्वर्गकामोऽश्वमेधेन यजेते'त्यादौ प्रकृत्यर्थावच्छिन्नस्य नियोज्यत्वादिरूपस्वा-

---

(१) धात्वर्थविशिष्टतिङर्थप्रकारकान्वयबोधजनकस्वरूपयोग्यानुपूर्वीमच्छब्दत्वं वा प्रथमात्वमिति कारिकार्थः ।

धात्वर्थावच्छिन्नतिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तन्त्रं तादृशी सुबेषु प्रथमा । 'यजेते'त्यादौ तिङर्थस्येष्टसाधनत्वादेर्न प्रकृत्यर्थावच्छिन्नस्य यागादावन्वयः किन्तु केवलस्य, अतस्तस्य प्रथमान्तनामानुपस्थाप्यत्वेऽपि न क्षतिः । 'चैत्रमैत्रौ स्त' इत्यादौ च द्वन्द्वेनैव प्रथमान्तनाम्ना चैत्रस्योपस्थापनान्न व्यभिचारः ॥ ६५ ॥

द्वितीयादिविभक्तिषट्कं संक्षेपार्थमेकग्रन्थेन निर्वक्ति—

धातुभेदानुपादाय तदर्थे कर्मतादिकान् ।
बोधयन्त्यो द्वितीयाद्या निर्वक्तव्या विभक्तयः ॥६६॥

---

कृष्णकान्तीटीका ।

र्थस्य तादात्म्यभिन्नस्य यागादावनन्वयादव्याप्तिरित्याशङ्कते—यदीत्यादिना । नियोज्यत्वस्य—ममेदं कार्यमिति बोध्यत्वस्य । नियोज्यत्वभानस्य यागादौ मीमांसकमतसिद्धत्वात् न्यायमतानुसारेणाह—आधेयत्वस्य वेति । प्रकृत्यर्थावच्छिन्नस्येत्युभयत्रान्वयि । प्रामाणिक इति । नियोज्यत्वभानस्य नैयायिकैरनङ्गीकाराद् आधेयत्वस्य च संसर्गतयैव भानात्तयोः प्रथमार्थत्वमेवासिद्धमित्याशयेन यदीत्युक्तम् । उदीच्य 'यदी'त्यस्यास्वरसः स्फुट एव । परन्त्विति । उद्देश्यत्वबोधिका इत्यत्र प्रामाणिक इत्यस्य लिङ्गव्यत्ययेनान्वयः । असम्भवो वेति । तादृशबोधं प्रति तत्तत्प्रथमात्वेन न हेतुता किन्तु प्रथमात्वेनैव, तथाच प्रथमान्तरस्यापि तादृशबोधस्वरूपयोग्यत्वादसम्भव इति भावः ।

विवृणोति—धात्वर्थावच्छिन्नेति । तथा च यादृशानुपूर्व्यवच्छिन्ननामोपस्थाप्यत्वं विशेष्यतासम्बन्धेन धात्वर्थावच्छिन्नतिङर्थप्रकारकान्वयबोधं प्रति स्वरूपसम्बन्धेन प्रयोजकं तादृशानुपूर्वीमच्छब्दत्वं प्रथमात्वमिति पर्यवसितम् । विशिष्टान्तमव्याप्तिवारकतया सार्थकयति—यजेतेत्यादि । केवलस्येति, तिङर्थस्येष्टसाधनत्वादेरिति पूर्वेणान्वय इति सम्प्रदायविदः । वस्तुतः असम्भववारणाय विशेष्यतेत्यन्तम्, अन्यथा व्यभिचारेण तादृशबोधं प्रति प्रथमान्तनामोपस्थाप्यत्वस्यातन्त्रत्वात् प्रथमायामेव लक्षणागमनादिति तु परमार्थः । व्यभिचारान्तरमाशंक्य निषेधति—चैत्रमैत्रौ स्त इति । उपस्थापनादिति । तथा च चैत्रनाम्नः प्रथमान्तत्वाभावेऽपि प्रथमान्तत्वस्वरूपनामोपस्थाप्यत्वस्य तत्राक्षतत्वात्, न व्यभिचार इति, तादृशप्रयोज्यप्रयोजकभावे इत्यादिः, न व्यभिचारो—नासम्भव इत्यर्थ इति भावः ॥ ६५ ॥

द्वितीयादिविभक्तीनां प्रत्येकलक्षणप्रतिपादकैककारिकावतारणिकामाह—द्विती-

धातुभेदाः-पचाद्याः, तथा च तिबन्तपचधातुपस्थाप्यपाकधर्मि-कर्मत्वानुभवानुकूलसुप्सजातीयत्वं द्वितीयाया लक्षणम् [२]। 'चौरस्य हिनस्ती'त्यत्र तिबन्तधात्वर्थे कर्मतादिप्रतिपादिकापि षष्ठी न पाके, 'तण्डुलस्य पाचक' इत्यादौ पाके तादृश्यपि न तिबन्तपच्यर्थे। 'ग्रामं गच्छती'त्यादावमादेः पाकादौ कर्मत्वाद्यननुभावकत्वेऽपि तदनुभावकसजातीयत्वान्नाव्याप्तिः। 'काष्ठेन पचती'त्यत्र तृतीया करणत्वस्यैव बोधिका, न तु कर्मत्वस्य। 'पटौ स्त' इत्यादौ द्विवचनस्यौकारस्य प्रथमात्वमिव द्वितीयात्वं न क्षतिकरम्, उपाधेयसङ्करेऽप्युपाधेरसाङ्कर्यात्। प्रकृत्यर्थ-मुख्यविशेष्यकान्वयबोधाजनकत्वे सतीति वा वक्तव्यम्। अधिकमभिहितं प्राक्।

पच्यर्थधर्मिककरणत्वान्वयबोधानुकूलसुप्सजातीयत्वं तृतीयात्वम्[३]। 'शताय परिक्रीणाती'त्यादौ धात्वर्थे करणत्वबोधं प्रत्यनुकूलापि चतुर्थी न पच्यर्थे तथा, परिक्रीञः करणतायामेव तद्विधानात्। 'काष्ठात् पचनामि'-

कृष्णकान्तीटीका।

त्यादीति। विवृणोति—धातुभेदा इति। तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्तपचधातूपस्थाप्यार्थधर्म्मिककर्म्मत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्त्वे सति विभक्तित्वं द्वितीयात्वमिति पर्यवसितम्। धातुविशेषोपादानव्यावृत्तिमाह—चौरस्येति। तिबन्तत्वनिवेशव्यावृत्तिमाह—तण्डुलस्येति। तादृश्यपि—पचधातूपस्थाप्ये कर्म्मत्वबोधिकापि। स्वरूपयोग्यत्वनिवेशव्यावृत्तिमाह—ग्राममिति। कर्म्मत्वनिवेशव्यावृत्तिमाह—काष्ठेनेति। ननु स्वरूपयोग्यत्वनिवेशेऽपि प्रथमाद्विवचनेऽतिव्याप्तिरित्यत आह—पटाविति। कुत इत्याकांक्षायामाह—उपाधेयेति। धर्म्मिणोऽभेदेऽपि धर्म्मयोर्भिन्नत्वादित्यर्थः। द्वितीयालक्षणे विशेषणान्तरं प्रक्षिप्य साङ्कर्य्यं निराकरोति—प्रकृत्यर्थेति। तादृशबोधजनकतानवच्छेदकत्वे सतीत्यर्थः। वक्तव्यमिति, लक्षणे विशेषणतयेत्यादिः। प्रागिति। प्रथमाया औ द्वितीयायाः पुनरौट् इति ग्रन्थ(१) इत्यर्थः॥

तृतीयालक्षणमाह—पच्यर्थेति। तथा च यादृशधर्म्मावच्छिन्नप्रकारकनिश्चयत्वं पच्यर्थधर्म्मिककरणत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशधर्म्मवत्त्वं तृतीयात्वमिति पर्यवसितम्। पच्यर्थनिवेशव्यावृत्तिमाह—शतायेति। करणत्वनिवेशव्यावृत्ति-

(१) ६४ कारिकाव्याख्यायामित्यर्थः।

स्यादौ तु पञ्चमी न करणत्वस्य बोधिका असामर्थ्यात् किन्तु कारणत्वस्यैव, हेतुतायां तदनुशासनात् ।

ददात्यर्थदानधर्मिकसम्प्रदानत्वानुभावकसुप्सजातीयत्वं चतुर्थीत्वम्[४]। 'दास्या मालां प्रयच्छती'त्यत्र दाने सम्प्रदानत्वस्यानुभाविकापि तृतीया न ददात्यर्थे, दानधातोर्योग एव सम्प्रदानतायां "दानोऽनाचार"(१) इत्यनेन तृतीयानुशासनात्, रीतिरुक्तैव । (२)"सम्प्रदानत्वशक्ता सुप् चतुर्थी"ति तु न युक्तं, सम्प्रदानत्वाद्यपेक्षया लघुन्येकत्वादावेव चतुर्थ्याः शक्तिमत्त्वादनुशिष्टेर्मत्सरादिपद इव निरूढलक्षणाभिप्रायकत्वेनाप्युपपत्तेः ।

पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकविभागबोधानुकूलसुप्सजा-

कृष्णकान्तोटीका ।

माह—काष्ठादिति । असामर्थ्यात्—शक्तिहीनत्वात् । किन्त्विति । तथा च कारणत्वनिवेशोऽपि न सम्भवतीति व्यञ्जितम्, अत एव सप्तम्यादावतिव्याप्तिर्नोक्ता, कारणत्वनिवेशेऽपि तद्वारणसम्भवादिति भावः ॥

चतुर्थीलक्षणमाह—ददात्यर्थेति । तथा च दाधातुविशेषोपस्थाप्यदानधर्म्मिकसम्प्रदानत्वप्रकारकान्वयबोधजनकतावच्छेदकं यादृशधर्मावच्छिन्ननिष्ठत्वं तादृशधर्मवद्विभक्तित्वं चतुर्थीत्वमिति पर्यवसितम् । धातुविशेषोपादानव्यावृत्तिमाह—दास्या इति । कुत इत्याकाङ्क्षायामाह—दानधातोर्योग इति । रीतिरुक्तैवेति । तद्धातुजन्योपस्थितिसहकारेणेति तदर्थः, अन्यथोक्तदोषवारणासम्भवादिति भावः । मतान्तरं दूषयति—सम्प्रदानत्वेति । नन्वनुशिष्टेः शक्तिग्राहकत्वात् "सम्प्रदाने चतुर्थी" ( पा० सू० २।३।१३ ) त्यनुशासनात्तत्र शक्तिरावश्यकीत्यत आह—मत्सरादिपद इवेति । तथा च यथा मत्सरादिपदस्य मात्सर्ये शक्तिस्तद्विशिष्टे निरूढलक्षणेति कोषस्य निरूढलक्षणाज्ञापकत्वं तथात्रापीत्यकामेनापि कारिकास्थ(३)शक्तिग्रह इत्यत्र शक्तिपदस्यानादितात्पर्यमूलकवृत्तिपरत्वमावश्यक(स्येय ?)मिति भावः ॥

पञ्चमीलक्षणमाह—पतधात्वर्थेति । तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं पतनत्वावच्छिन्नधर्म्मिकविभागप्रकारकान्वयबोधजनकतावच्छेदकं विभक्तित्वे सति तादृशानुपूर्वीमच्छब्दत्वं पञ्चमीत्वमिति पर्यवसितम् । पत्यर्थत्वमुपेक्ष्य तादृशजातिपर्यन्तनि-

(१) अत्र 'दाणश्च सा चेच्चतुर्थ्यर्थे ( १।३।५५ ) इति पाणि० सूत्रम् ।

(२) 'कर्मणा यमभिप्रैति स सम्प्रदानम् ( १।४।३२ ) चतुर्थी सम्प्रदाने ( २।३।१३ )इति सूत्राभ्यां चतुर्थी सम्प्रदानार्थे शक्तेति पाणिनीयं मतं निरस्यन्नाह सम्प्रदानत्वेति ।

(३) शक्तिग्रहं व्याकरणोपमानेति कारिकास्थेत्यर्थः ।

तीयत्वं पञ्चमीत्वम् [ ५ ] । 'खले पतंस्तरुं त्यजती'त्यादौ वस्तुगत्या पतत्यर्थे विभागस्य बोधिकापि द्वितीया न पतनत्वजात्यवच्छिन्ने तस्या एव पतत्यर्थतावच्छेदकत्वात् । 'नरकं पतति' इत्यादौ तु भोगावच्छिन्न-स्वदुरितस्य पतत्यर्थत्वेऽपि द्वितीयया न तत्र विभागोऽनुमाप्यते पर-न्त्वाधेयत्वम् ।

तिबन्तदाधात्वर्थधर्मिकस्वार्थान्वयबोधस्वरूपायोग्यत्वे सति प्रथमा-न्यसुप्त्वं षष्ठीत्वम् [६-१] । 'धनं करेण विभाय पात्रात् काश्यां ददा-त्यसावि'त्यत्र द्वितीयादिर्ददात्यर्थे स्वार्थान्वयबोधकतया तत्स्वरूपयोग्य एव, प्रथमा तु तदयोग्यापि प्रथमैव, 'धनस्य दाते'त्यत्र दाने स्वार्थबोधि-कापि षष्ठी न तिबन्तस्य दाधातोरर्थे येनासम्भवः ।

---

कृष्णकान्तीटीका ।

वेशव्यावृत्तिमाह—खले पतन्निति । खलवृत्तिपतनाभिन्नो य स्तरुवृत्तिविभागानुकूल-व्यापारस्तद्वानिति बोधः, तत्र तादृशव्यापारस्य पतनत्वेऽपि न तेन रूपेण भानं कि-न्तु तादृशव्यापारत्वेनेति भावः । ननूक्तलक्षणमसम्भवि, पतेर्विलक्षणसंयोगावच्छिन्न-व्यापारवाचित्वेन पतनत्वजातेः कुत्राप्यभानात्, अत एव तस्य सकर्म्मकत्वेन द्वितीया तत्पुरुषोदाहरणमध्ये नरकपतित इति दुर्गेणोदाहृतमित्यत आह—तस्या एवेति । त-था च लाघवात्तादृशजातेरेव पतधातोः शक्यतावच्छेदकत्वादिति भावः । न च तादृश-जातौ मानाभाव इति वाच्यम् । गुरुत्वजन्यतावच्छेदकतयैव तत्सिद्धेरप्रत्यूहत्वात् । स्वार्थबोधकत्वमपहाय विभागबोधकत्वनिवेशव्यावृत्तिच्छलेन जातेः शक्यतावच्छेदक-त्वपक्षे नरकपतित इति प्रयोगमुपपादयति—नरकं पतित इत्यादाविति । तथा च लक्षणे विभागनिवेशान्न द्वितीयायामतिव्याप्तिरिति भावः । ननु किन्तत्र द्वितीया नि-रर्थिकेत्यत आह—परन्त्विति । इदमत्रावधेयम्—तादृशदुरिते पतनत्वजात्यभावात् कुतोऽतिव्याप्तिरिति । न च तत्र तदपि स्वीकरणीयमिति वाच्यम् । गुरुत्वजन्यताव-च्छेदकतया सिद्धायास्तादृशजातेरत्यन्तासम्भवित्वात्, अन्यथा तादृशजातेरप्रामाणि-कत्वापत्तेरिति ॥

षष्ठीलक्षणमाह—तिबन्तेति । तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं तिबन्ता-दिधात्वर्थधर्म्मिकस्वार्थप्रकारकान्वयबोधजनकतावच्छेदकं प्रथमान्यत्वे सति तादृशा-नुपूर्वीमत्सुप्त्वं षष्ठीत्वमिति पर्यवसितम् । सत्यन्तदलव्यावृत्तिच्छलेनालक्ष्ये लक्षणाग-मनं व्यञ्जयति—धनमित्यादि । रीतिरुक्तैव । तत्स्वरूपयोग्य एव—तादृशबोधस्वरू-पयोग्यः, न तु तदन्यः, एवमग्रेऽपि । प्रथमान्यत्वव्यावृत्तिमाह—प्रथमेति । तिबन्ते-त्यस्य व्यावृत्तिमाह—धनस्येति ॥

हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वानुभावकसुप्सजातीयत्वं वा [ ६-२ ]। 'चौरं ज्वरयती'त्यादौ च धात्वर्थतावच्छेदकीभूतहिंसायां कर्मत्वबोधिकापि द्वितीया न हिनस्त्युपस्थाप्यायाम्। 'दण्डेन हिनस्ती'त्यादौ तादृश्यामपि हिंसायां करणत्वादेरेव बोधकस्तृतीयादिर्न तु कर्मत्वस्य।

सम्बन्धसामान्ये स्वत्वे वा शक्ता सुप् षष्ठी [६-३]। 'ग्रामं गच्छति, पटं ददाती'त्यादौ च धात्वर्थतावच्छेदकीभूते संयोगस्वत्वादौ द्वितीयया-ऽऽधेयत्वमेव बोध्यत इत्यपि वदन्ति ॥

पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकस्वार्थाधेयत्वबोधानुकूलसुप्सजातीयत्वं सप्तमीत्वम् [७-१] 'शाकसूपयोः पाचक' इत्यादौ द्विव-

कृष्णकान्तीटीका।

लाघवाल्लक्षणान्तरमाह—हिनस्त्यर्थेति। तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं हिनस्त्युपस्थाप्यहिंसाधर्म्मिकस्वार्थकर्म्मत्वप्रकारकान्वयबोधजनकतावच्छेदकं सुप्त्वे सति तादृशानुपूर्वीमत्वं षष्ठीत्वमिति पर्यवसितम्। हिंसाधर्म्मिकत्वमुपेक्ष्य हिनस्त्युपस्थाप्येत्यस्य व्यावृत्तिमाह—चौरं ज्वरयतीत्यादाविति। न हिनस्त्युपस्थाप्यायामिति। हिंसायां कर्म्मत्वबोधिका द्वितीयेति पूर्वेणान्वयः। रीतिरुक्तैवेत्यत्र रीतिरुक्तैव। कर्म्मत्वनिवेशव्यावृत्तिमाह—दण्डेनेति। तादृश्यां-हिनस्त्युपस्थाप्यायाम्॥

मतान्तरमुपन्यस्यति—सम्बन्धसामान्य इति। सम्बन्धत्वावच्छिन्ने इत्यर्थः, शक्तेति परेणान्वयः। ननु सम्बन्धत्वं विशिष्टधीनियामकत्वं, तच्च गुरुशरीरमिति तदपेक्षया स्वरूपसम्बन्धरूपसम्बन्धत्वं षष्ठीशक्यतावच्छेदकमस्तु, सम्बन्धान्तरभानन्तु लक्षणयैव भवतीत्यत आह—स्वत्वे वेति। ननु ग्रामं गच्छतीत्यादौ द्वितीयादेः संयोगरूपकर्म्मत्वशक्तत्वात् संयोगे सम्बन्धत्वस्य च सर्वसिद्धत्वादतिव्याप्तिरित्यत आह—ग्राममिति। स्वत्वे शक्तिपक्षे नैष दोष इति स्थलान्तरमाह—पटमिति। वदन्तीत्यस्वरससूचनाय, स च एकत्वादौ शक्तेः क्लृप्ततया सम्बन्धादौ शक्तिकल्पने मानाभावः, अनुशासनस्य निरूढलक्षणासम्पादकतयाऽप्युपपत्तेरिति॥

सप्तमीलक्षणमाह—पचधात्वर्थेति। तथा च यादृशानुपूर्वीप्रकारकनिश्चयत्वं रूपादिपरावृत्तिफलजनकतेजःसंयोगावच्छिन्नक्रियात्वावच्छिन्नविशेष्यकस्वार्थाधेयत्वप्रकारकान्वयबोधजनकतावच्छेदकं सुप्त्वे सति तादृशानुपूर्वीमत्त्वं सप्तमीत्वमिति पर्यवसितम्। ननु शाकसूपयोः पाचक इत्यादौ षष्ठीद्विवचनस्यापि सप्तमीत्वापत्तिः। न च तत्र षष्ठ्या शिथिलाख्यसंयोगरूपकर्म्मत्वप्रतिपादनात् स्वार्थाधेयत्वाबोधकत्वान्नातिव्याप्तिरिति वाच्यम्। स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नाधेयत्वस्यैव तत्र षष्ठ्यर्थत्वादि-

चनस्य लक्ष्यत्वादि पूर्ववत् । अधिकरणतायामाधेयत्वे वा शक्ता सुप् सप्तमी [७-२]। 'ग्राममध्यास्ते' इत्यादावधित्वकरणं बोधयन्त्यपि द्वितीयादिस्तत्र न शक्ता । 'ग्रामाय गच्छती'त्यादौ कर्मत्वादिष्वेव चतुर्थ्यादिः । चैत्रधर्मिकस्वार्थाधिकरणत्वान्वयबोधकसुप्समानानुपूर्वीकत्वं वा सप्तमीत्वमित्यपि वदन्ति । [७-३]

स्वादित्रिकान्यतमत्वं प्रथमात्वम्, एवममादित्रिकान्यतमत्वादिना द्वितीयादिकं निर्वाच्यमित्यप्याहुरिति कृतं विस्तरेण ॥ ६६ ॥

इति श्रीजगदीशतर्कालङ्कारकृतौ शब्दशक्तिप्रकाशिकायां
तद्धितादिसुब्विभक्तिप्रकरणं(३) समाप्तम् ॥

---

कृष्णकान्तीटीका ।

ग्रेत्य वक्ष्यमाणत्वात् । लक्ष्यत्वादित्यादिनाऽलक्ष्यत्वपरिग्रहः । पूर्ववदिति । तथा च द्वयमेवेष्टम् उपाधेयसङ्करेऽपि उपाधेरसाङ्कर्यात् । अथ वा तद्व्यक्तिभिन्नत्वे सतीति वा वक्तव्यमिति भावः । पचं ङ्गुल्यां तुषं क्षिपतीत्यादौ द्वितीयायामतिव्याप्तिवारणाय पचधात्वर्थतावच्छेदकरूपावच्छिन्नेति । मतान्तरमाह—अधिकरणतायामिति । वृत्त्यनियामकसम्बन्धानां प्रतियोगितावच्छेदकत्वानुपगन्तृमतानुसारेणाह—आधेयत्वे वेति । शक्तिनिवेशव्यावृत्तिमाह—ग्राममिति । न शक्ता इति । "अधिकरणे सप्तमी" (१)त्येवानुशिष्टेरिति भावः । ननु ग्रामाय गत इत्यादौ चतुर्थ्यामतिव्याप्तिरित्यत आह—ग्रामायेत्यादि । कर्मत्वादिष्वेवेति । न त्वधिकरणत्वादिष्वित्यर्थः । "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" (पा० सू० २।३।१२) इत्यनुशिष्टेरिति भावः । मतान्तरमाह—चैत्रधर्म्मिकेति । वदन्तीत्यस्वरससूचनाय, स चैकत्वादौ शक्तेरावश्यकतयाऽधिकरणत्वादौ तच्छक्तेरकल्पनादनुशिष्टेर्निरुक्तलक्षणाज्ञापकतयाऽप्युपपत्तेः । शेषलक्षणे स्वार्थेत्यस्य स्वोपस्थाप्यार्थकत्वेऽतिव्याप्तिरिति ॥

प्रथमादीनां सप्तानां विभक्तीनां प्रकारान्तरेण लक्षणवादिनां मतमाह—स्वादीति । आहुरित्यस्वरससूचनाय, स च सुप्त्वादिजातौ मानाभावेन तत्तद्व्यक्तित्व एव पर्यवसानादनन्तलक्षणापत्तिरिति ॥ ६६ ॥

इति श्रीकृष्णकान्तविद्यावागीशकृततद्धितादिसुब्विभक्तिनिरूपणटीका समाप्ता ॥

---

(१) अत्र 'सप्तम्यधिकरणे च' (२।३।३६) इति पा० सूत्रम् ।

## ( ४ ) कारकप्रकरणम् ।

क्रियाकारकयोरन्वयव्युत्पत्तयेऽन्यथापि सुपं विभजते—

**कारकार्थेतरार्था च सुप् द्विधा च विभज्यते ।**
**धात्वर्थांशे प्रकारो यः सुबर्थः सोऽत्र कारकम् ॥६७॥**

वृत्त्या कारकस्य बोधिका तदन्यस्य चेत्येवं द्विविधोऽपि सुपो विभागः । तत्र यद्धातूपस्थाप्ययादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः स तद्धातूपस्थाप्यतादृशक्रियायां कारकम् (१) । 'वृक्षात् पतति, व्याघ्रात् बिभेति' इत्यादौ 'ब्राह्मणाय ददाति, पुत्राय क्रुध्यती'त्यादौ 'दात्रेण छिनत्ति, घटत्वेन जानाती'त्यादौ 'स्थाल्यां पचति, शुक्तौ भासते' इत्यादौ 'ग्रामं गच्छति, घटं पश्यती'त्यादौ 'चैत्रेण पच्यते, घटेन भूयते' इत्यादौ च पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थापितो विभागादिः प्रकारीभूय भासत इति तत्तद्धातूपस्थापिततत्तत्क्रियायां विभागादिकं प्रकृते कारकमतो धात्वर्थे स्वार्थबोधकतया तत्र पञ्चम्यादिः कारकविभक्तिरुच्यते । यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स

---

कृष्णकान्तीटीका ।

अथ कारकम् । सुपां विभागप्रस्तावे कारकलक्षणाभिधानमर्थान्तरप्रस्तमिति तन्निरासाय मध्ये सुपो द्विधा विभागोऽप्युक्तः, तदवतारणिकामाह—क्रियाकारकयोरिति । तत्र कारकलक्षणप्रतिपादकं कारिकाशेषार्द्धं विवृणोति—तत्रेति । तयोरित्यर्थः । घटकत्वं सप्तम्यर्थः, लक्षणं स्फुटमेव । अपादानादिषु लक्षणं सङ्गमयति—वृक्षादिति । नन्वेतावता कारकविभक्तित्वस्यानिर्वचनात्तेन रूपेण विभागानुपपत्तिरित्यत-स्तदपि निर्वक्ति—धात्वर्थे स्वार्थेति । नन्वेवं वृक्षादौ कथं वैयाकरणानां कारकव्यवहार इत्यत आह—यादृशेनेति । तत्क्रियाकारकव्यवहारं प्रति तत्क्रियाधर्मिता-निरूपितप्रकारत्वाभिन्ना या सुबर्थविशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वमेव तन्त्र-

---

( १ ) क्रियानिमित्तत्वं कारकत्वमिति केचित् । तन्न, 'चैत्रस्य तण्डुलं पचती'त्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तेः, अनुमतिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोपि पाकादिक्रियानिमित्तत्वात्, किन्तु क्रियान्वितविभक्त्यर्थान्वितत्वं कारकत्वम्, अस्ति च कर्तृकर्मादौ क्रियान्विततिङ्सुब्विभक्त्यर्थान्वयः नतूदाहृते सम्बन्धिनि, षष्ठ्यर्थसम्बन्धस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वादिति जयरामभट्टाचार्याः । 'विभक्त्यर्थद्वारा क्रियान्वयित्वं' मुख्यभाक्तसाधारणं कारकत्वम्, क्रियानिमित्तत्वसहितं मुख्यमिति भवानन्दतर्कवागीशाः ।

एव तादृशधात्वर्थे कारकतया व्यपदिश्यते, तेन 'वृक्षात् पतती'त्यादौ वृक्षादेरपि पतनादिक्रियायामपादानादिकारकव्यवहारः । 'स्तोकं पचती'त्यादौ क्रियायां प्रकारीभूतोऽपि स्तोकादिर्न कारकम् सुपानुपस्थापनात् , द्वितीया तु तत्र क्लीबलिङ्गत्ववदानुशासनिक्येव । 'स्तोकपाक' इत्यादिकस्तु तत्पुरुषो 'गिरिकाण' इत्यादिवद्विशेषविधेरेव । षष्ठ्यर्थस्तु सम्बन्धो न धात्वर्थे प्रकारीभूय भासते 'तण्डुलस्य पचती'त्याद्यप्रयोगादतः सम्बन्धो न कारकं, न वा तदर्थिकापि षष्ठ्यादिः कारकविभक्तिः, अत एव —

> क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम् ।
> कर्तृकर्मादिभेदेन शेषः सम्बन्ध इष्यते ॥

इति शाब्दिकाः स्मरन्ति । शेषः—कारकादवशिष्टः । "सम्बन्धः कारकादन्य" इत्यपि पठन्ति । 'रजकस्य वस्त्रं ददाती'त्यादौ च परिष्कार्यत्वादिलक्षणः सम्बन्धो वस्त्रादावेव षष्ठ्याऽनुभाव्यते । 'तण्डुलस्य पाचकः, मैत्रस्य भोक्तव्यमि'त्यादौ कर्मत्वकर्तृत्वादिकं कारकमेव धात्वर्थे पचनादौ, कृद्योगे कर्तृकर्मणोः षष्ठ्यनुशिष्टेः । 'गुरु-विप्र-तपस्वि-दुर्ग-

---

कृष्णकान्तीटीका ।

मिति भावः । तेनेति । अपिरेवार्थकः । सुबर्थत्वनिवेशव्यावृत्तिमाह—स्तोकमित्यादि । ननु तत्र द्वितीयार्थ एव प्रकारः, अन्यथा द्वितीयाया आनर्थक्यापत्तेरित्यत आह—द्वितीया त्विति । तथा च तत्र द्वितीयाऽऽकाङ्क्षासम्पादिका, न तु तदर्थस्य शाब्दे प्रवेश इति भावः । ननु तत्र द्वितीयाया उपपदविभक्तित्वे कथं स्तोकपाक इत्यादिकस्तत्पुरुष इत्यत आह—स्तोकपाक इत्यादि । विशेषविधेरेवेति । षष्ठ्यर्थे लक्षणागमनं व्यञ्जयति—षष्ठ्यर्थस्त्विति । वस्तुतस्तु कारकविभक्तित्वनिर्वचनेनैव धात्वर्थे प्रकारीभूतसुबर्थत्वं कारकत्वमिति सामान्यलक्षणं भङ्ग्या प्रतिपादितं, तत्र प्रत्येकपदार्थव्यावृत्तिपर एतावान् ग्रन्थः । तत्र धात्वर्थनिवेशव्यावृत्तिमाह—षष्ठ्यर्थस्त्विति । अत एव सम्बन्धो न कारकमिति सामान्यतयोक्तमिति युक्तमुत्पश्यामः । सम्बन्धस्य कारकत्वाभावे प्राचीनसंवादमपि प्रमाणयति—अत एवेति । अर्थशब्दः सुबर्थपरः। शेष इत्यस्यार्थमाह—शेष इति । संवादान्तरमाह—सम्बन्ध इति। उभयत्रैव सम्बन्धत्वेन कीर्त्तनात् कर्म्मत्वादिरूपषष्ठ्यर्थः कारकमेवेति व्यञ्जितमित्यनुपदमेव व्यक्तीभविष्यति। वस्त्रादावेवेति । ननु अर्पणाक्रियायां स्वरूपसम्बन्धावच्छिन्नाधेयत्वरूपसम्बन्धस्तथा सति रजकपदोत्तरसप्तमीप्रसक्तेः । कर्म्मत्वादिषष्ठ्यर्थानां कारकत्वमिष्टमेव, तदर्थकषष्ठीनां कारकविभक्तित्वादित्याह—तण्डुलस्येति । पचना-

तानां प्रतिकुर्वीत भिषक् स्वभेषजैः, पद्मस्यानुकरोत्येष कुमारीमुखमण्डलः, सा लक्ष्मीरुपकुरुते यया परेषा'मित्यादावपि 'मातुः स्मरति, चौरस्य हिनस्ति, जलस्योपस्कुरुते' इत्यादाविव क्रियाविशेषयोगे कारकार्थैव षष्ठी। प्रयोगदृष्ट्या प्रत्यनुपेभ्यः करोतेः कर्मण्यपि वैकल्पिकस्य षष्ठीविधेर्वक्तव्यत्वात्, न हि 'गुरून् प्रतिकरोती'त्यादित इवोक्तवाक्येभ्यो गुर्वादिकर्मकत्वं प्रतिकारादिक्रियायां नावगम्यते। अत एव "सामान्यवत्त्वे सति बाह्यकरणकप्रत्यक्षत्वादि"त्यादावनुशासनासत्त्वेऽपि सति सप्तम्याः सामानाधिकरण्यमर्थश्चिन्तामणौ चिन्तितः। 'दण्डेन घटः, भूतले पट' इत्यादौ तु तृतीयाद्यर्थः करणत्वादिकं न कारकं धात्वर्थान्वितत्वात्, अत एव तादृशवाक्यार्थे 'दण्डघटः भूतलपट' इत्यादिर्न समासः, कारकविभक्त्यन्तर्भावेणैव विशेषविधिं विना तत्पुरुषस्य व्युत्पन्नत्वात्। 'मम प्रतिभाति, स्फुरति, रोचते' इत्यादौ प्रतिभादिक्रियायामस्मदादेः सम्बन्धः षष्ठ्या कथं बोध्यताम् अकारकविभक्तित्वादिति तु विभावनीयम् ॥ ६७ ॥

---

कृष्णकान्तीटीका।

दाविति षष्ठ्याऽनुभाव्यत इति पूर्वेणान्वयः। तस्यास्तदर्थकत्वं कुत इत्याकाङ्क्षायामाह—कृद्योग इति। अनुशिष्टेरिति। "कर्त्तृकर्म्मणोः कृति नित्य(१)"मिति सूत्रेणेति शेषः। कृद्योग इव धातुविशेषयोगेऽपि षष्ठ्या कर्म्मत्वं प्रतिपाद्यते, तच्च कारकमेवेत्याह—गुरुविप्रेति। प्रतीकारश्चिकित्सा, धातुसाम्यानुकूलव्यापार इति यावत्, अनुकारो-धर्म्मसम्बन्धः, कर्त्तृत्वमाश्रयत्वं, कर्मत्वमाधेयत्वम्, उपकारः परदुःखप्रहरणानुकूलव्यापारः। वक्तव्यत्वात्—ग्रन्थकर्तुरभिप्रेतत्वात्। वैकल्पिक इत्यत्रानुभवमाह—न हीति। चिन्तित इति। शब्दमण्यालोके पक्षधरमिश्रैरिति शेषः। क्वचित् षष्ठ्यर्थस्य कारकत्वमुक्त्वा तृतीयार्थकरणत्वस्यापि तदन्यत्वमाह—दण्डेनेति। अत एव-तस्य कारकत्वाभावादेव, कुत इत्यत आह—कारकेति। 'सपुत्रक' इत्यादिसमासदर्शनादाह—विशेषेति। ममेति क्रियात्रये सम्बध्यते। विभावनीयमिति। अकर्म्मकत्वेन कर्म्मणि षष्ठीविधेर्वक्तव्यत्वाप्रसक्तेरिति भावः। अत्र विभावनीयमित्यनेन स्वकल्पितार्थगोपनमिति व्यञ्जितम्। प्रतिभातिः स्फूर्तिश्च ज्ञानविषयत्वम्, इच्छाविषयत्वं रोचनम्, तत्र ज्ञानेच्छयोराधेयतात्वेनास्मदादेः सम्बन्धो भासते, न तु सम्बन्धत्वेन, सम्बन्धत्वावच्छिन्नस्यैवाकारकत्वोक्तेरिति सप्तमीप्रसक्तौ विवक्षातः षष्ठीति। अथवा चित्त इति पदमध्याहार्यमित्यभिप्रायः ॥ ६७ ॥

---

(१) अत्र 'कर्तृकर्मणोः कृतीत्येव' (२।३।६६) पा० सूत्रपाठाद्व्याकरणान्तरसूत्रमिदं चिन्तनीयम्।

कारकं विभजते—

**अपादानसम्प्रदानकरणाधारकर्मणाम् ।**
**कर्तुश्च भेदतः षोढा कारकं परिकीर्त्तितम् ॥ ६८ ॥**

अपादानादीनां भेदो वैधर्म्यमपादानत्वादि, तत्प्रयुक्तः कारकस्य षड्विधत्वव्यवहारः ॥ ६८ ॥

तत्रापादानत्वं लक्षयति—

**क्रियाधर्मिणि यः स्वार्थः पञ्चम्या विग्रहस्थया ।**
**अनुभाव्यः कारकन्तदपादानत्वसंज्ञकम् ॥ ६९ ॥**

क्रिया—धात्वर्थः, तथा च यद्धातूपस्थाप्ययादृशार्थे विग्रहवाक्यस्थ-पञ्चम्या यः स्वार्थोऽनुभावयितुं शक्यः स तद्धातूपस्थाप्यतादृशक्रियायामपादानत्वमुच्यते(१) । 'वृक्षात् पतित' इत्यतो वृक्षावधिकविभागानुकूलपत-

कृष्णकान्तोटीका ।

क्रमेणापादानत्वादिकारकलक्षणानां वक्तव्यतया तत्क्रमविधायिकां विभाजकतावच्छेदकधर्माणां प्रतिपादिकामपि कारिकामादावुपन्यस्य विवृणोति—कारकमित्यादि । भेदत इत्यस्यार्थमाह—भेद इति । वैधर्म्यं विशेषधर्म्मः। अथ वा वैधर्म्यमितरभेदानुमापकम्, पञ्चम्यर्थप्रयोज्यत्वस्य संख्यायामसम्भवात् परिकीर्त्तितशब्दस्य व्यवहृतपरतया तदेकदेशे व्यवहारे तदन्वयमाह—तत्प्रयुक्त इति । तादृशव्यवहारे अपदानादीनां परस्परभेदग्रहस्यापेक्षणीयतया तत्र चापादानत्वादेर्लिङ्गविधया प्रयोजकत्वादिति भावः ॥ ६८ ॥

अपादानत्वलक्षणप्रतिपादककारिकामवतारयति तत्रेति । तेषु मध्य इति तदर्थः । क्रियापदस्य स्पन्दपरत्वे 'घटात स्पन्द' इत्यत्र जन्यत्वस्यापादानत्वकारकत्वापत्तिः, धातूपस्थाप्यपरत्वे 'वृक्षात् पतती'त्यत्र विभागस्य गमनापादानत्वरूपतापत्तिः, तद्धातुपस्थाप्यत्वविशेषणकतादृशार्थस्य तद्धातूपस्थाप्यापादानरूपत्वे द्व्यर्थकधातूपस्थाप्ययोरर्थयोरेकत्र विशेषणस्य तादृशार्थस्यापरार्थापादानरूपतापत्तिरतः क्रियापदस्य तद्धातुपस्थाप्यतदर्थपरत्वमावश्यकं, तच्च तस्य धात्वर्थपरत्वे सुघटमित्यत आह—क्रियेति । समुदितार्थमाह—तथा चेति । तथा च कारकत्वे सति यद्धातूपस्थाप्ययादृशार्थधर्मिकान्वयबोधप्रकारो यः पञ्चम्यर्थः स तद्धातूपस्थाप्यतादृशक्रियायामपादानत्वमिति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयति—वृक्षादिति । स एव–विभाग

(१) परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम् । वृक्षात्पर्णं पततीत्यादौ पर्णादेरपादानत्ववारणाय परकीयेति । अत्र पञ्चम्या विभागजनकत्वमन्योन्याभावप्रतियोगित्वं चार्थः । विभागेऽन्योन्याभावे

नकत्वेत्यन्वयबुद्धौ धातूपस्थाप्यपतने पञ्चम्युपस्थाप्यो विभागः[१] स्वानुकूलत्वसम्बन्धेन प्रकार इति स एव तत्रापादानत्वम्। न च वृक्षादिव 'स्वस्मात् पतितश्चैत्र' इत्यप्रयोगात् धात्वर्थान्वितं परसमवेतत्वमपि तत्र पञ्चम्यर्थ इति तदप्यपादानत्वं स्यात्, इष्टत्वात्।

वस्तुतः परसमवेतत्वं न पञ्चम्यर्थः, तथासति द्रव्यान्यसमवेतस्य पतनस्याप्रसिद्ध्या 'द्रव्यात् पतति खग' इत्यादेरयोग्यतापत्तेः, परन्तु स्वावधिकत्वसम्बन्धेन प्रकृत्यर्थान्वितस्य पञ्चम्यर्थविभागस्य सामानाधिकरण्यानुकूलत्वोभयसम्बन्धेन धात्वर्थे पतनेऽन्वयस्य व्युत्पन्नत्वान्न तादृशप्रयोगः, चैत्रावधिकत्वविशिष्टविभागाधिकरणनिष्ठं यच्चैत्रविभागानुकूलं पतनं तस्य चैत्रे बाधात्, स्वावधिकत्वविशिष्टविभागस्य स्वस्मिन्नसत्त्वादिति युक्तमुत्पश्यामः।

प्रासादमारुह्य प्रेक्षक इत्याद्यर्थे तु 'प्रासादात् प्रेक्षक' इत्यादिवाक्यं न विग्रहः, तादृशार्थे प्रासादप्रेक्षकादिशब्दानामसमासत्वादतस्तान्निविष्टपञ्चम्यर्थे आरोहणानन्तर्यादौ नातिप्रसङ्गः। अपादानशब्दस्तु तत्त-

कृष्णकान्तीटीका।

एव। शङ्कते—न चेति। परेति। प्रकृत्यर्थभिन्नेत्यर्थः, तथा च स्वभिन्नसमवेतपतनस्य स्वस्मिन् बाधात् तादृशप्रयोग इति भावः।

इदञ्च प्राचीनमतानुसारेणोक्तम्, अत एवैतन्मतस्यास्वरसं दर्शयन् स्वमतमाह वस्तुत इति। तादृशेति। स्वस्मात् पततीत्यादिप्रयोगो भवितुमर्हतीति शेषः। अत्र हेतुमाह—चैत्रेति। न च चैत्रक्रियायाश्चैत्रावधिकविभागाननुकूलत्वादेव तादृशप्रयोगवारणसम्भवे सामानाधिकरण्यप्रवेशो व्यर्थ इति वाच्यम्। क्वचित् प्रतियोगिक्रियातोऽपि विभागसम्भवात् तादृशक्रियावारणायैव तन्निवेशात्। स्वसमानाधिकरणक्रियान्तरमादाय तादृशप्रयोगवारणायानुकूलत्वनिवेशः।

विग्रहस्थयेति लभ्यस्य सत्यन्तस्य व्यावृत्तिमाह—प्रासादमित्यादि। केचित्तु सामान्यलक्षण एव तन्निवेशस्यावश्यकतया विशेषलक्षणेऽपि सत्यन्तदलघटकतया तन्निवेश इति सामान्यलक्षणे तन्निवेशव्यावृत्तिपरतयैतद्ग्रन्थं व्याचक्रुः। ननु विभागस्यापादानरूपतया तदाश्रयत्वस्याविशेषाद् वृक्ष इव खगेऽपि तादृश व्यवहारः स्यादित्यत आह—अपादानशब्दस्त्विति। तत्तदिति। तथा च

चाधिकरणतया वृक्षान्वयस्तथा च वृक्षवृत्तिविभागजनकवृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकपतनाश्रयः पर्णमिति वाक्यार्थः, एवञ्च ध्रुवमपायेऽपादानमिति पाणिनीयं सूत्रं सङ्गच्छते इत्यन्ये।

त्कर्मानधिकरणत्वे सति तत्तत्कर्मजन्यविभागाश्रये शक्त इति न तत्र तद्व्यवहारः । तरुकर्मकस्त्याग एव तरुतः पतनमतस्तस्य त्यागे कर्मवदपादानं तरुर्भवत्येव । धात्वर्थतानवच्छेदकीभूत एव विभागे पञ्चम्याः साधुतया तरोस्त्यजतीत्यादिको न प्रयोगः, त्यजेर्विभागावच्छिन्नक्रियावाचित्वात् । 'वृक्षादपैती'त्यादावपि लक्षणया पतनमेव धात्वर्थः । विभागावच्छिन्नक्रियायास्तथात्वे 'वृक्षं त्यजति, जहाती'त्यादिवत् 'वृक्षमपैती'त्यपि प्रमाणमेव । पतिस्तु न विभागावच्छिन्नं स्पन्दमभिधत्ते, किन्त्वधःसंयोगावच्छिन्नं गुरुत्वप्रयोज्यपतनत्वजात्यवच्छिन्नं वा । 'वृक्षाच्चलती'त्यादिवच्च 'वृक्षात् स्पन्दते' इत्यपि प्रयोगो भवत्येव, चलिस्पन्द्योर्द्वयोरप्यकर्मकधातुत्वेन तत्प्रयोगस्याविशिष्टत्वात् ।

यत्तु—'तरुं त्यजती'त्यत्र विभागो धात्वर्थः, क्रियाजन्यविभागत्वेनापादानत्वमिव धात्वर्थताच्छेदकीभूतफलत्वेन कर्मत्वमपीत्यपादानत्व-

---

कृष्णकान्तीटीका ।

स्वजनकीभूतक्रियानाश्रयत्वे सति स्वाश्रये शक्त इत्यर्थः, स्वं—विभागः, तत्र—तादृशक्रियाश्रये खगादौ तद्व्यवहारः, भवत्येवेति । नन्वेवं तरोस्त्यजतीतिप्रयोगः स्यादित्यत आह—धात्वर्थेति । तथा च यादृशानुपूर्व्यवच्छिन्नस्यार्थतानवच्छेदको विभागः तादृशानुपूर्व्यवच्छिन्नसमभिव्याहृतपञ्चमी विभागबोधे हेतुरिति, लक्षणया कदाचित् त्यजेः स्पन्दनाश्रयार्थकत्वेऽपि तरोस्त्यजतीत्यादिको न प्रयोग इति भावः । वस्तुतस्तु तादृशार्थे तरोस्त्यजतीति प्रयोगाभावात् ( इति ) यथाश्रुतमेव सम्यक् । नन्वेवं वृक्षादपैतीति प्रयोगो न स्यात्, अपपूर्वेणधातोरपि विभागावच्छिन्नक्रियावाचित्वादित्यत आह—वृक्षादिति । ननु यत्र तादृशलक्षणाया अग्रहस्तत्र वृक्षमपैतीति प्रयोगः प्रमाणं स्यादित्यत्रेष्टापत्तिमाह—विभागेति । तथात्वे—शक्यत्वे । किन्त्विति । तथा चाधोदेशस्य भूम्यादेर्धात्वर्थतावच्छेदकफलाश्रयत्वेऽपि धात्वर्थतावच्छेदकतावच्छेदकतया न भूमिं पततीति प्रयोगः, कर्मत्वलक्षणे गगनमुत्क्षिपतीति प्रयोगवारणाय तद्भेदनिवेशस्य वक्ष्यमाणत्वादिति भावः । ननु तथापि पतधातोः सकर्मकत्वव्यवहारापत्तिः फलावच्छिन्नस्पन्दवाचित्वादित्यत आह—गुरुत्वेति । नन्वेतावताऽकर्मकधातोर्योग एवापादानपञ्चम्याः साधुतया वृक्षात् स्पन्दत इति प्रयोगः स्यादित्यतस्तत्रेष्टापत्तिमाह—वृक्षाच्चलतीत्यादि ।

मतान्तरमाह—यत्त्विति ।

कर्मत्वयोर्विभक्तिप्रसक्तौ कर्मत्वस्य परत्वात्तस्य बोधिका द्वितीयैव प्रवर्त्तते, न त्वपादानत्वस्य बोधिका पञ्चमी, तथैव साकाङ्क्षत्वात्,

अपादानसम्प्रदानकरणाधारकर्मणाम् ।

कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते ॥ इत्यनुशासनात् इति ।

तच्चिन्त्यम् ।

'वृक्षाद्विभजते खग' इत्यत्रावधित्वमवधित्वनिरूपकत्वं [ २।३ ] वा धात्वर्थेऽन्वितं पञ्चम्या प्रतिपाद्यते, तेन वृक्षनिष्ठावधिताकविभागवान् खग इत्याकारकस्तत्र बोधः । स्वप्रतियोगिकसंयोगस्येव स्वावधिकविभागस्यापि स्वस्मिन्नसत्त्वादेव 'स्वस्माद्विभजते' इत्यादिको न प्रयोग इत्युक्तप्रायम् । अवधित्वन्तु स्वरूपसम्बन्धप्रभेदः, पदार्थान्तरं वा इत्यन्यदेतत् ।

'व्याघ्राद् बिभेति त्रस्यती'त्यादौ हेतुत्वं(२)जन्यत्वं वा[४] पञ्चम्यर्थः, तच्च भावित्वेन स्वानिष्टचिन्तनपर्य्यवसितस्य भयस्यैकदेशेऽनिष्टे चिन्तन एव वान्वितम्, तथा च व्याघ्रहेतुकस्य स्वानिष्टस्य भावित्वेन चिन्तनवान् व्याघ्रहेतुकत्वेन भाव्यनिष्टधर्मिकचिन्तनवानिति वा तत्र बोधः ।

---

कृष्णकान्तीटीका ।

तच्चिन्त्यमिति । त्यजेः स्पन्दमात्रे लक्षणास्थले तरोस्त्यजतीति प्रयोगापत्तिः, एवं वृक्षादारुह्य पततीतिवारणाय आहूय दीयत इत्यादौ तादृशनियमस्य व्यभिचारित्वमित्येव(त्यपि ?) चिन्ताबीजम् । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वानङ्गीकर्तृमतेनाह—अवधित्वनिरूपकत्वं वेति । एवमग्रेऽपि । एवं स्वावधिकविभागसमानाधिकरणपतनस्य स्वस्मिन्नसत्त्वमुक्तमित्यत उक्तमुक्तप्रायमिति । नन्ववधित्वं विभागप्रतियोगित्वं, तथा च विभागप्रतियोगिप्रतियोगिकविभागस्य भाने तादृशवाक्यस्य निराकाङ्क्षत्वापत्तिरित्यत आह—अवधित्वन्त्विति ।

(ननु ?) पञ्चम्यर्थस्य भयेऽन्वये व्याघ्राद्बिभेतीति प्रयोगो न स्याद्व्याघ्रस्य भयाजनकत्वादतिप्रसङ्गभङ्गायासाधारणहेतुताया एव पञ्चम्यर्थत्वस्य वक्तव्यत्वात्, प्रत्युत स्वस्माद्बिभेतीत्यपि स्यात्तस्यापिभयसमवायित्वादित्यत आह—तच्चेति । हेतुत्वजन्यत्वान्यतरच्च, यस्य व्याघ्रहेतुकमनिष्टमप्रसिद्धं तत्रापि तादृशप्रयोगं सङ्गमयति—व्याघ्रेति । तथा च जन्यत्वस्य न स्वरूपसम्बन्धेनानिष्टेऽन्वयः, परन्तु स्वनिष्ठप्रकारतानिरूपितभाव्यनिष्टत्वावच्छिन्नविशेष्यतानिरूपकत्वेन भयेऽन्वयः, अत एव नैकदेशान्वयस्वीकारोऽपीति भावः ।

---

( २ ) 'भीत्रार्थानां भयहेतुः' इति ( १।४।२५ ) इति पा० सूत्रानुशासनादित्यर्थः ।

'पापान्निवर्त्तते, अधर्माद्विरमती'त्यादौ पञ्चम्या [५] द्वेषोऽर्थः, तत्र प्रकृत्यर्थस्य विषयत्वेन तस्य च निवृत्तिरूपे धात्वर्थे जन्यत्वेनान्वयः, तेन पापगोचरद्वेषजन्यनिवृत्तिमानित्येवं तत्र बोधः। तत्र विषयत्वं पञ्चम्यर्थः, तथा च पापगोचरनिवृत्तिमानित्यर्थ इत्यन्ये । 'रणात् पराजयते' इत्यत्र युद्धनिवृत्तिः पराजेरर्थः, पञ्चम्यास्तु द्वेषस्तेन रणगोचरद्वेषजन्ययुद्धनिवृत्तिमानित्येवं तत्र बोधः । कृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभाववत्त्वं तत्र पराजेरर्थः, पञ्चम्यास्तु विशेष्यत्वं, तच्च धात्वर्थैकदेशे बुद्धावन्वितम् , तेन रणधर्मिकस्वकृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभाववानित्याकारकस्तत्र बोध इत्यपि वदन्ति ।

'शत्रुं पराजयते'(१) इत्यादौ स्वभिभवहेतुव्यापारः पराजेरर्थ इति, धात्वर्थतावच्छेदकफलशालितया शत्रुप्रभृतेः कर्मत्वमेव । 'पापाज्जुगुप्सते' इत्यत्र गर्हापूर्वकनिवृत्तिर्गुपधातोरर्थः, सुपो विषयत्वं [६], तच्च गर्हानिवृत्त्योः क्रमेणान्वयि, तथा च पापविषयकगर्हाप्रयुक्तपापगोचरनिवृत्तिमानित्याकारबोधः(२) ।

"वल्मीकाग्रात् प्रभवति धनुःखण्डमाखण्डलस्ये"त्यत्र धातोरर्थः प्राक्प्रकाशनम् , तत्र पञ्चम्या [७] आधिकरणत्वमाधेयत्वं [८] वा प्रत्याय्यते,

---

कृष्णकान्तीटीका।

तत्र—द्वेषे, तस्य च—द्वेषस्य च । मतान्तरमाह—तत्रेति । अन्य इत्यस्वरससूचनाय, स च पापजनकान्निवर्त्तत इत्यत्र तथाप्रयोगापत्तिः, न चेष्टापत्तिरनुभवविरोधात्, अनतिप्रसञ्जकविषयताविशेषस्य दुर्वचत्वादिति । मतान्तरमाह—कृत्यसाध्यत्वधीत्यादि ।रणे प्रवृत्तिनिवृत्त्योरसत्त्वदशायामपि तत्प्रयोगापत्तिरित्यस्वरसो वदन्तीत्यनेन सूचितः ।

अभिभवोऽपकर्षः, दुरदृष्टविशेषो वेत्यन्यदेतत् । गर्हा—निन्दा, मन्दत्वप्रकारकज्ञानानुकूलव्यापार इति यावत् । तद्विषयता च व्यापारानुबन्धिनी, शब्दविशेषस्य निवृत्तिप्रयोजकत्वमनुभवसिद्धम् ।

---

(१) 'कृष्णात्पराजयते शिशुपालः, अध्ययनात्पराजयते बालः' इत्यादौ धातोरसहिष्णुता, पञ्चम्याः कर्मत्वमाख्यातस्याश्रयत्वमर्थः, श्रीकृष्णं न सहते, अध्ययनं न सहत इति तदर्थविवरणात् । असहिष्णुता च द्वेषोऽभिभवाशक्यज्ञानत्वं वा, इत्थं च श्रीकृष्णविषयकद्वेषवान् श्रीकृष्णविषयकाभिभवाशक्यत्वज्ञानवान् वा इत्यादिस्तत्र बोध इति भवानन्दवागीशाः।

(२) भवानन्दमतेन त्वत्र पञ्चम्याः कर्मत्वं धातोश्च निन्दार्थः, अधर्मं निन्दतीति च वाक्यार्थः ।

"यत्र प्रकाशनं प्रभुव" (१)इति सूत्रेणाधिकरणस्यैवापादानत्वोपदेशात्। एवञ्च वल्मीकाग्रवृत्तिप्रथमप्रकाशनवदाखण्डलस्य धनुःखण्डमित्याकारकारकस्तत्र बोधः। वल्मीकः—सातपो मेघः। आखण्डलः—शक्रः। 'वल्मीकाग्रे आविर्भवति' इत्यादौ च प्रकाशपर्य्यवसितोऽप्याविर्भावो न प्रपूर्वस्य भवतेरर्थ इति तत्राधिकरणतायां सप्तम्येव प्रमाणम्। 'धर्माद्धुत्पद्यते सुखम्, दण्डात् जायते घट'(२) इत्यादौ धातुना स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपस्तत्तत्समयवृत्तिध्वंसप्रतियोगिसमयावृत्तित्वे सति तत्तत्समयसम्बन्धरूप एव वा उत्पादः प्रत्याय्यते, पञ्चम्या च तन्निष्ठं जन्यत्वम्, तथा च धर्मजन्यो यः स्वाधिकरणसमयसम्बन्धस्तद्वत् सुखम् इत्याकारस्तत्र बोधः।

वार्त्तिककृतस्तु—'उत्पद्यते' इत्यादौ प्रागभावप्रतियोगितारूपमेवोत्पत्तिमत्त्वं धात्वर्थस्तत्र च तिङर्थस्य वर्त्तमानादिकालस्यावच्छेद्यतासम्बन्धेनान्वयात् भाविन्युत्पद्यते इत्यादिको न प्रयोगः, किन्तु उत्पत्स्यत इत्यादिः, तत्र भविष्यत्कालावच्छेद्यस्यैव प्रागभावप्रतियोगित्वस्य सत्त्वेन व-

कृष्णकान्तीटीका।

सूत्रे प्रहृत्युपादानफलमाह—वल्मीकाग्रे आविर्भवतीति। उत्पत्तिराद्यक्षणसम्बन्धः, तद्घटकमाद्यत्वमनिर्वाच्यैव लाघवात् समुदितवाक्यार्थमाह—स्वाधिकरणेति। निरुक्तोत्पत्तेः स्वत्वघटितत्वेनाननुगमात् प्रलयोत्पत्तावव्याप्तिश्चातस्तत्तत्समयवृत्तीति, तत्पदमुत्पत्तिक्षणपरम्।

धात्वर्थ इति। तथा च प्रयोज्यत्वं पञ्चम्यर्थः, धर्मजन्यवर्त्तमानकालावच्छिन्नप्रागभावप्रतियोगित्ववत्सुखमिति बोध इति भावः। अथोत्पन्नेऽप्युत्पद्यते इति प्रयोगापत्तिः, यदि च तिङर्थवर्त्तमानत्वस्य तद्घटकप्रागभावेऽन्वयान्न तादृशप्रयोग इत्युच्यते, तदा भाविनि तथाप्रयोगो दुर्वारः, वर्त्तमानत्वस्य प्रागभावप्रतियोगित्वेऽन्वयेऽपि तद्दोषवारणासम्भवादित्यवच्छेद्यतासम्बन्धेन वर्त्तमानकालस्य तत्रान्वयं स्वीकृत्यातिप्र-

(१) अत्र 'भुवः प्रभवः (१।४।३।१) पा० सूत्रम्।

(२) 'दण्डाद्घटः धूमादग्निमान्' इत्यादौ पञ्चमी नापादाने क्रियायोगाभावात्, किन्तु जनकत्वज्ञापकत्वरूपहेतुत्वे जन्यत्वज्ञाप्यत्वरूपे वा हेतुमत्वे 'हेतौ'इति सूत्रेणानुशिष्टा। न चैवं 'जनिकर्तुः प्रकृतिरि'ति सूत्रं व्यर्थम्-काष्ठात्पचती'त्यादाविव 'दण्डाज्जायत' इत्यादावपि उत्पत्तिरूपधात्वर्थनिरूपितहेतुत्वार्थकपञ्चम्या उक्तसूत्रेणैव सम्भवादिति वाच्यम्। उत्पत्तेरहेतुकत्वेऽपि सा वधिकत्वादुत्पत्तिनिरूपिततादृशस्वरूपसम्बन्धस्य हतुत्वाभेऽपत्वत् हेताविति सूत्रेण पञ्चम्या अलाभादित्यपरे।

र्त्तमानकालावच्छेद्यतदसत्त्वात्, अत एव 'नाशं प्राप्नोति, प्राप्स्यती'त्यादावपि प्रतियोगित्वपर्य्यवसितायां प्राप्तौ लडादिना वर्त्तमानादिकालावच्छेद्यत्वमेवानुभाव्यते न तु वर्त्तमानत्वादिकम्, नाशप्रतियोगित्वस्य व्याप्यवृत्तित्वेन 'भावि नाशं प्राप्नोति, नष्टो नाशं प्राप्स्यती'त्यादिप्रयोगस्य दुर्वारतापत्तेः, वर्त्तमानं भाविकालवृत्ति वा यत् नाशप्रतियोगित्वं तस्य च भाविनि विनष्टे च सत्त्वात् । 'नश्यति, नङ्क्ष्यती'त्यादावपि धात्वर्थस्य नाशस्य प्रतियोगित्वं स्वार्थेन वर्त्तमानादिकालेनावच्छिन्नं तिङा बोध्यते, तेन 'भावि नश्यति, नष्टो, नङ्क्ष्यती'त्यादिको न प्रयोगः, सम्प्रत्यादिकालावच्छेद्यस्य नाशप्रतियोगित्वस्य भाव्यादावसत्त्वात् । यत्तु—'नश्यति, नङ्क्ष्यति, ननाशे'त्यादौ प्रतियोगित्वमिव वर्त्तमाना भाविन्यतीता चोत्पत्तिरपि यथाक्रमं तिङर्थः, तथा च वर्त्तमानोत्पत्तिकस्य ध्वंसस्य प्रतियोगित्वं न भाव्यादौ, भाव्युत्पत्तिकस्य न नष्टादौ, अतो 'भावी नश्यती'त्यादिको न

---

कृष्णकान्तीटीका ।

सङ्गं वारयति—तत्र चेति । तदसत्त्वात्—प्रागभावप्रतियोगित्वासत्त्वात् । अयमभिप्रायः—प्रतियोगित्वं न केवलाभावस्वरूपं किन्तु तत्(त्प्रतियोग्य?)दभावोभयस्वरूपमिति भाविप्रतियोगिनो वर्त्तमानकालावृत्तितया तत्प्रतियोगित्वस्य तत्कालानवच्छेद्यत्वमिति वर्त्तमानकालवच्छेद्यप्रतियोगित्वभविष्यत्कालावच्छिन्नप्रतियोगित्वयोर्विरुद्धत्वमिति । तादृशप्रतियोगित्वस्य तत्कालावच्छेद्यत्वे युक्त्यन्तरमाह—अत एवेति । न त्विति । नञर्थे हेतुमाह—नाशेति । नाशप्रतियोगित्वस्याव्याप्यवृत्तित्वे भाविनाशप्रतियोगित्वस्य वर्त्तमानत्वाभावादतीतनाशप्रतियोगित्वस्य वा वर्त्तमानकालावृत्तित्वाच्च तत्तत्प्रयोगापत्तिरित्यत उक्तं—व्याप्यवृत्तित्वेनेति । (तत्तत्कालावच्छेद्यत्वस्य तत्र सत्त्वेऽपि नष्टो नाशं प्राप्नोतीति प्रयोगवारणासम्भवात्तन्नोक्तम्?) प्रयोगस्य—प्रयोगसामान्यस्य, योग्यताया असत्त्वे तादृशापत्तिर्न सम्भवतीत्यतस्तत्सत्त्वमाह—वर्त्तमानमित्यादि । सत्त्वादिति । अस्मन्मते च तस्य वर्त्तमानकालावच्छेद्यत्वाभावान्न तादृशप्रयोग इति भावः । ननु व्याप्यवृत्तेरवच्छेदकाप्रसिद्धेः कथं भवन्मतेऽपि नाशं प्राप्नोतीति प्रयोग इति चेन्न । वर्त्तमानकालावच्छेद्यत्वं हि वर्त्तमानकालविशिष्टत्वम्, न तूपलक्षितसाधारणवैशिष्ट्यमात्रम् इति तस्य व्याप्यवृत्तावपि सत्त्वे बाधकाभावत् । एवमग्रेऽपि । सम्प्रत्यादिकालावच्छेद्यस्य—तादृशकालविशेषितस्य । असत्त्वादिति । तदानीं तत्कालरूपविशेषणाभावेन विशिष्टाभावादिति भावः । न च तस्य व्याप्यवृत्तितया वर्त्तमानकालविशेषितस्यापि प्रतियोगित्वस्य भाव्यादौ सत्त्वात् कथं व

प्रयोग—इति दीधितिकृदुक्तम्, तन्न युक्तम्, कथितक्रमेणैव सामञ्ज-स्ये लड़ादेरुत्पत्तावपि वृत्त्यन्तरकल्पने गौरवात्। अत एव ध्वंसप्राग-भावयोः प्रतियोगितायां पूर्वापरकालावच्छेद्यत्वप्रवादोऽपि पक्षधरमिश्रा-द्यनुमोदितः सङ्गच्छते। न चैवं प्रागभावादिप्रतियोगित्वस्य धर्माद्यज-न्यत्वात् 'धर्मादुत्पद्यते सुखमि'त्यादेरयोग्यतापत्तिः, सुखादेराद्यक्षणसम्ब-न्धरूपायामप्युत्पत्तौ धर्मादिजन्यत्वे प्रमाणाभावेनोक्तदोषस्य मतान्तरेऽ-प्यविशिष्टत्वादाद्यक्षणसम्बन्धस्य धर्माद्यजन्यत्वेऽपि तदधीनत्वोपगमेन पञ्चमीसमर्थने प्रागभावप्रतियोगित्वरूपायामप्युत्पत्तौ तस्य सुवचत्वात् इति प्राहुः।

'कूपादन्धं वारयति, विषाद्बालं निवारयति' इत्यादौ च क्रियाधर्मि-कनिवृत्त्यनुकूलव्यापारो वारणं, तन्निविष्टानिवृत्तौ पञ्चम्या कूपादिप्रकारक-त्वं[९] द्वितीयया चान्धादिनिष्ठत्वं प्रत्याय्यते। क्रिया च पतनभोजनादिर्वि-शेषतो ग्राह्या, तथा चान्धनिष्ठायाः पतनधर्मिककूपप्रकारकनिवृत्तेर्बालनि-ष्ठायाश्च भोजनधर्मिकविषप्रकारकनिवृत्तेरनुकूलव्यापारवानित्याकारकस्तत्र बोधः। तथाविधनिवृत्त्यनुकूलव्यापारश्च स्वार्थधीद्वारा 'कूपे मा पत, विषं मा भुङ्क्ष्व' इत्याद्यभिलापरूपः स्फुट एव।

---

कृष्णकान्तीटीका।

तादृशप्रयोग इति वाच्यम्। गुणवृत्तिसत्ता द्रव्यवृत्तिरित्यादेरयोग्यतासम्पत्तये गुणवृ-त्तित्वावच्छेदेन द्रव्यवृत्तित्वानवगाहिताया इव द्रव्ये भावित्वावच्छेदेन वर्त्तमानकाल-विशेषितप्रतियोगित्वासत्त्वात्तादृशप्रयोगासम्भवात्।

दीधितिकृन्मतमुपन्यस्य दूषयति—यत्त्विति। गौरवादिति। अस्मन्मते च तादृशावच्छेद्यत्वस्य संसर्गतयैव भानान्न वृत्तिकल्पनापेक्षेति भावः। नाशप्रतियोगिता-याः कालावच्छेद्यत्वे प्रमाणमाह—अत एवेति। शङ्कते—न चैवमिति। एवमुत्प-त्तावपि लड़ादेर्वृत्त्यकल्पने, मतान्तरेऽपि—उत्पत्तौ लड़ादिवृत्तिवादिमतेऽपि। आपत्तेः साम्यमुक्त्वा समाधानस्य साम्यमाह—आद्यक्षणेति। प्राहुरित्यनेनैतन्मते दीधि-तिकृन्मतापेक्षया प्रकर्षो निजनिर्भरश्च सूचितः।

प्रकारकत्वमित्येव पाठः, प्रकारमिति पाठस्तु प्रामादिकः, घञन्तत्वेन तस्य पुंलि-ङ्गत्वात्। स्फुट एवेति। कूपे मा पत इत्यादिवाक्यार्थज्ञानात् कूपपतने द्विष्ट-साधनत्वं गृह्यते, तादृशग्रहश्चानुमित्यात्मकः, कूपपतनं द्विष्टसाधनं शिष्टनिषेधित-

यत्तु—पतनादिप्रतिकूलव्यापार एव वारणं, तदेकदेशे च पतनादावन्धादेराधेयत्वेन कूपादेः कर्मत्वेनान्वयादन्धनिष्ठस्य कूपकर्मकपतनस्य प्रतिकूलव्यापारवानित्यादिरूपः 'कूपादन्धं वारयती'त्यादितो बोध इति। तत्तुच्छम्, तादृशपतनस्याप्रसिद्धस्थले तथाविधवाक्यस्यायोग्यतापत्तेः । 'परस्वेभ्यः पाणिं निवारयती'त्यत्रानयनधर्मिकनिवृत्त्यनुकूलव्यापारो निवारणं, तदन्तर्गतनिवृत्तौ च पाण्यादेरवच्छेदकत्वेन परस्वादेश्च प्रकारत्वेनान्वयः, तादृशव्यापारः कराकुञ्चनादिरेव । 'स्वाङ्गाद्बाणं वारयती'त्यत्र च यद्यपि बाणनिष्ठस्य स्वाङ्गसंयोगस्य विरोधिव्यापारो नार्थः तादृशसंयोगस्याप्रसिद्धेः, तथापि बाणसंयोगाभावनिष्ठायाः स्वाङ्गवृत्तितायाः प्रयोजकव्यापारवत्त्वम्, तथा च संयोगाभावनिष्ठस्य प्रयोजकव्यापारस्तत्र वारणं, तन्निविष्टे च संयोगे द्वितीयान्तलभ्यस्य बाणप्रतियोगिकत्वस्य संयोगाभावनिष्ठे च पञ्चम्यन्तलभ्यस्य स्वाङ्गवृत्तित्वस्यान्वयः, कार्य्याभावे इव तन्निष्ठे अधिकरणविशेषवृत्तित्वेऽपि प्रतिबन्धकस्य प्रयोजकत्वात् । अत एव 'मणिः काष्ठे दाहाभावस्य प्रयोजकः न तु पाथसी'त्यादिकः सार्वलौकिकव्यवहार इति बाणसंयोगाद्यभावनिष्ठस्य स्वाङ्गवृत्तित्वस्य प्रयोजकत्वं बाणापसारणादिव्यापारस्य नासिद्धम् । 'दण्डात् घट' इत्यादौ पञ्चम्यर्थोऽपि जन्यत्वादिकं न कारकं धात्वर्थानन्वयित्वात्, अत एव 'दण्डघट' इत्यादिकस्तत्र न प्रयोग इत्युक्तप्रायम् ॥ ६९ ॥

---

कृष्णकौन्तीटीका ।

त्वात्, यद्यच्छिष्टनिषेधितं तत्तद्वद्विष्टसाधनमिति व्याप्तेरौत्सर्गिकत्वादिति भावः ।

वैयाकरणमतमुपन्यस्य दूषयति—यत्त्विति । कराकुञ्चनादिरेवेति । तथा च परस्वप्रकारकानयनधर्म्मिकपाण्यवच्छिन्ननिवृत्त्यनुकूलव्यापारवानिति बोध इति शेषः । अत्र वारणं वृधातुजन्यबोधविषयः, अतः स्वाङ्गवृत्तितायाः पञ्चम्यन्तलभ्यत्वेऽपि न क्षतिः । ननु बाणसंयोगप्रतिबन्धकीभूतव्यापारस्य कुतस्तादृशवृत्तिताप्रयोजकत्वमित्यत आह—कार्याभाव इति । तन्निष्ठे-कार्याभावनिष्ठे । तत्रैव युक्तिमाह—अत एवेति । उपसंहरति—इतीति । कारकसामान्यलक्षणघटकविग्रहत्वघटकवर्थत्वमपि तत्र नास्तीत्याह—अत एवेति । न प्रयोग इति । अतोऽपादानलक्षणस्य तत्र नातिव्याप्तिरिति शेषः । प्रासादात् प्रेक्षत इत्यत्र पञ्चम्यर्थस्यारोहणानन्तर्यस्य धात्वर्थप्रकारस्याव्यनपादानत्वोक्तेरुक्तप्रायमित्युक्तम् ॥ ६९ ॥

सम्प्रदानत्वं लक्षयति—

**गत्यादिभिन्ने धात्वर्थे चतुर्थ्या विग्रहस्थया ।**
**यः स्वार्थो बोधनीयस्तत् सम्प्रदानत्वमीरितम् ॥७०॥**

गत्यादिभिन्ने यद्धातूपस्थाप्ये यादृशार्थे विग्रहस्थचतुर्थ्या यः स्वार्थो बोधयितुं शक्यते स तद्धातूपस्थाप्यतादृशक्रियायां सम्प्रदानत्वमुच्यते(१)। 'ब्राह्मणाय दानं धनस्ये'त्यादौ ददातेः स्वत्वजनकस्त्यागोऽर्थस्तन्निविष्टे च स्वत्वे ब्राह्मणादेः प्रतियोगित्वं[१] निरूपितत्वं[२] वा चतुर्थ्या बोध्यते इति तदेव तत्र सम्प्रदानत्वम्, ब्राह्मणप्रतियोगिकं ब्राह्मणनिरूपितं वा यद्धनवृति स्वत्वं तज्जनकस्त्याग इत्येवं तत्र प्रत्ययात्, धात्वर्थतावच्छेदकीभूतस्वत्वाख्यफलवत्तया धनादेर्दानकर्म्मत्वात। नचैवं पशुकामनया यागकरणदशायां 'चैत्रः स्वात्मने पशुं ददाती'त्यपि प्रयोगापत्तिः, तादृशयागस्य चैत्रीयं यत् पशुनिष्ठं स्वत्वं तज्जनकत्यागत्वादिति वाच्यम्। स्वत्वध्वंसजनकक्रियापर्यवसन्नस्य त्यागस्यैकदेशे स्वत्वध्वंसेऽपि द्वितीयार्थस्यान्वये पशुफलकयागे पशुनिष्ठस्य स्वत्वध्वंसस्य जनकत्वविरहादेव तद्वाक्यस्याप्रमाणत्वात्। 'ग्रामाय गत' इत्यादौ विग्रहस्थचतुर्थ्या धात्वर्थे

---

कृष्णकान्तीटीका ।

सम्प्रदानत्वलक्षणप्रतिपादककारिकावतारणिकामाह—सम्प्रदानत्वमिति। क्रमप्राप्तमित्यादिः। विवृणोति—गत्यादिभिन्न इत्यादि। तथा च कारकत्वे सति यद्धातूपस्थाप्यगत्यादिभिन्नयादृशार्थधर्मिकान्वयबोधप्रकारो यश्चतुर्थ्यर्थस्तद्धातूपस्थाप्यतादृशार्थे (स?) सम्प्रदानत्वमिति निष्कर्षः। ननु धने ब्राह्मणस्य सत्त्वमित्यादिप्रतीत्या यदि ब्राह्मणप्रतियोगित्वं स्वत्वे स्वीक्रियते तदा घटे दानस्य विषयत्वमिति प्रतीत्यापि विषयत्वे दानप्रतियोगिकत्वं स्वीक्रियतां युक्तेस्तौल्यादित्यत आह—निरूपितत्वं वेति। शङ्कते—न चैवमिति। कुत इत्याकाङ्क्षायामाह—तादृशेति। पशुफलकस्येत्यर्थः। गत्यादिभिन्न इत्यस्य व्यावृत्तिमाह—ग्रामायेत्यादि। विग्रहस्थत्व-

---

(१) 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति पा० सूत्रम्, तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा यं सम्बन्धीकर्तुमभिप्रैति [ तत्क्रिया–तत्क्रियाजनकेच्छान्यतर ]फलभागित्वेनोद्देश्यीकरोति कर्ता स सम्प्रदानमिति सूत्रार्थः। एवञ्च 'करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानमिति पर्यवसितम्। ग्रामं गच्छतीत्यत्र गमनकर्मजन्यफलभागित्वेनोद्देश्यत्वस्य चैत्रादौ सत्त्वाच्चैत्रादेस्तत्क्रियासम्प्रदानत्वा[पत्तिः] ।[त]द्वारणाय करणीभूतेति। तत्र गमने ग्रामस्याकरणत्वात् दानादौ च गवादि देयादिकमेव करणमिति लक्षणसमन्वयः इति नव्याः।

बोध्यमपि कर्मत्वं न गत्यादिभिन्ने । 'वृक्षाय सेचक' इत्यादौ गत्यादिभिन्ने चतुर्थ्या बोधनीयोऽपि संवर्द्धयितुमित्यादितुमर्थो न विग्रहस्थयेति न तत्र प्रसङ्गः । सम्प्रदानशब्दस्तु स्वाश्रयगोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्त इति स्वत्वप्रतियोगित्वं सम्प्रदानमित्यादिको न प्रयोगः । न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः,

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥ (मनु० १०।११५)

इत्यादिमन्वादिवचनैस्तस्य स्वत्वहेतुत्वप्रतिपादनादिति वाच्यम् । ब्राह्मणाय त्यक्तायां गवि 'गौरियं ब्राह्मणस्य न तु ममे'त्यादि सर्वजनीनप्रतीतेरेव तत्र प्रमाणत्वात्, "प्रदानं स्वाम्यकारणमि"ति वचनाच्च । अत एव विदेशस्थपात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणस्थले पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते, अन्यथा तैरिव उदासीनैरपि तद्धनस्यारण्यककुशादेरिवोपादाने यथेष्टनियोगे च प्रत्यवायो न स्यात् । नन्वेवं दानादेव स्वत्वसिद्धेर्दत्तवस्तुनि स्वीकारो व्यर्थ इति चेन्न । "लब्धा चाष्टगुणं फलम्" इत्यादिस्मृतेः प्रतिगृहीतद्रव्यदानस्य फलविशेषं प्रति हेतुत्वेन तादृशदानसम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात्, "याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जये"दित्यादिश्रुत्या प्रागुक्तस्मृत्या च प्रतिग्र-

---

कृष्णकान्तीटीका ।

निवेशलभ्यसत्यन्तस्य व्यावृत्तिमाह—वृक्षाय सेचक इत्यादि । ननु स्वत्वप्रतियोगित्वं सम्प्रदानकारकमिति व्यवहारः स्यादित्यत आह—सम्प्रदानशब्दस्त्विति । स्वेति । स्वं—स्वत्वप्रतियोगित्वं, तदाश्रयो—ब्राह्मणादिः, तद्गोचरस्त्यागः—इदममुकस्य स्वत्ववद्भवत्वित्याकारकेच्छा तज्जन्येत्यर्थः । न चेति, वाच्यमिति परेणान्वयः । वित्तागमाः—स्वत्वप्रयोजकाः, एते सप्त धर्म्या इत्यर्थः । शङ्कां निरस्यति—ब्राह्मणायेति । त्यक्तायामिति सावधारणम्, तथा च त्यक्तायां सत्यामेवेत्यर्थः, त्यागानन्तरमेवेति यावत् । ननु तदनन्तरं स्वत्वबोधकप्रतीतेस्तस्य स्वत्वजनकत्वसाधकत्वेऽतिप्रसङ्गादाह—प्रदानमिति । दानस्य स्वत्वहेतुत्वे युक्तिमपि प्रमाणयति—अत एवेति । शङ्कते नन्वेवमिति । तादृशदानेति । प्रतिगृहीतद्रव्यदानसम्पत्त्यर्थमित्यर्थः। प्रतिग्रहस्य स्वत्वाजनकत्वे याजनाध्यापनेत्यादिश्रुतिविरोध इति दानप्रतिग्रहयोरेव स्वत्वजनकत्वमाह—याजनेत्यादि । प्रागुक्तेति । 'सप्त वित्तागमा' इत्यादिस्मृत्या

हस्यापि स्वत्वहेतुत्वबोधनाच्च स्वत्वजनकव्यापारस्यैवार्ज्जनपदार्थत्वात् । 'दासाय भक्ष्यं ददाति, भृतकाय वेतनं ददाती'त्यादावपि स्वत्वजनकत्यागं प्रतिपादयन् ददातिर्मुख्य एव, पुण्यजनकन्तु न तादृशं दानमवैधत्वात् ।

यत्तु–स्वीकारजन्यस्य स्वत्वस्य जनकस्त्यागो दानम्, मनसा पात्रमुद्दिश्य धनत्यागस्तु न दानं किन्तूत्सर्गमात्रम्, प्रतिग्रहजन्यस्वत्वं प्रति हेतुभूतवैधत्यागस्यैव तथात्वात्, उपेक्षा तु स्वत्वध्वंसजनकस्त्यागो, न तु तत्र स्वत्वजनकत्वस्यान्तर्भाव–इति मैथिलैरुक्तम्, तन्न युक्तम्, लाघवेन स्वत्वजनकत्यागस्यैव ददात्यर्थत्वात् । 'तिलानस्मै प्रतियच्छति, तुरगमस्मै विक्रीणीते' इत्यादौ द्रव्यान्तरग्रहणपूर्वकं दानमेव प्रतिदानं, मूल्यग्रहणपूर्वकं दानमेव च विक्रय इति तत्रापि मुख्यमेव सम्प्रदानत्वं चतुर्थ्या

---

कृष्णकान्तीटीका ।

चेत्यर्थः । अपिना दानस्य परिग्रहः । ननु श्रुतौ स्वत्वजनकत्वबोधकपदाभावात् कुतः प्रतिग्रहस्य स्वत्वहेतुत्वमित्यत आह–स्वत्वजनकेति । (ननु?) प्राच्यै'र्दासाय भक्ष्यं ददाती'त्यादिप्रयोगाणां मुख्यत्वं न स्वीक्रियते, तेषां मतेऽदृष्टजनकत्यागस्यैव ददात्यर्थत्वात्, भवन्मते तत्र च ददातिर्मुख्यः स्यादित्यत्रेष्टापत्तिमाह–दासायेति । भृतिग्राही–भृतकः, भृतिः–कर्म्ममूल्यम् ।

मैथिलोक्तमतमुपन्यस्य दूषयति–यत्त्विति । अदृष्टार्थत्यक्तद्रव्यग्रहणं स्वीकारः, अदृष्टजनकीभूतत्यागविषयधर्म्मिकस्वस्वत्वप्रकारकज्ञानमिति यावत् । तज्जन्यस्वत्वजनकत्वे सति स्वत्वध्वंसजनकेच्छा दानमित्यर्थः । तथा च दासाय भक्ष्यं ददातीत्यादौ ददातिर्न मुख्यः, तत्र भक्ष्यादेरदृष्टाप्रयोजकत्यागविषयत्वादिति भावः । नन्वेवं मनसा पात्रोद्देशस्थले त्यागस्य दानत्वं न स्यात्, तस्य प्रतिग्रहाधीनस्वत्वाजनकत्वादित्यत्रेष्टापत्तिमाह–मनसेति। उत्सर्गमात्रं–त्यागमात्रम्, न दानमित्यत्र नञर्थे हेतुमाह–प्रतिग्रहजन्येत्यादि । तथात्वात्-दानत्वादिति साम्प्रदायिकाः। तन्न मनोरमम्, प्रतिग्रहजन्येत्यादिहेतुप्रदर्शनस्य सन्दर्भविरोधापत्तेः। वस्तुतो मनसा पात्रोद्देशस्थलीयत्यागस्य दानव्यवहारो न स्यादित्यत आह–मनसेति । न दानं–न दानत्वेन व्यवह्रियमाणः । व्यवहारप्रयोजकरूपमाह–प्रतिग्रहेत्यादि । तथात्वाद्–दानत्वेन व्यवह्रियमाणत्वात्, अत एवावैधदाने दानत्वव्यवहाराभावात् तत्प्रयोजककोटौ वैधत्वनिवेशोऽपि सार्थक इति युक्तमुत्पश्यामः । ननु स्वत्वध्वंसजनकत्यागस्योपेक्षात्वेन दानमात्रस्योपेक्षात्वोपपत्तिरित्यत आह–उपेक्षा त्विति । मात्रपदव्यवच्छेद्यमाह–न त्विति । तथा च स्वत्वाजनकत्याग उपेक्षेति भावः । केचित्-

बोध्यते, तिलादिकञ्च न मूल्यं(१) पणपूरणादेरेव शास्त्रे तथात्वोपदेशात् । "अदृष्टार्थं दत्तस्यैव च स्वीकारः प्रतिग्रह" इति परेण प्रतिदत्तस्य विक्रीतस्य वा तिलतुरगादेः स्वीकारो न दोषावहः(२) ।

'मैत्राय रोचते मोदक' इत्यत्र चतुर्थ्या धात्वर्थान्वितमाधेयत्वं[३], धातुना च भक्ष्यत्वप्रकारकेच्छोपस्थाप्यते, तिङा तु प्रकाशत इत्यादाविव विषयत्वलक्षणं कर्तृत्वम्, तथा च मैत्रनिष्ठाया भक्ष्यत्वप्रकारकेच्छाया विषयत्ववान् मोदक इत्याकारकस्तत्र बोधः ।

'गुरवे गां धारयते' इत्यत्र धृञा गृहावस्थितिर्द्वितीयया तदन्वितं कर्तृत्वं, चतुर्थ्या च तन्निविष्टगृहान्वितं [४]सम्बन्धित्वमुपस्थाप्यते, तेन गोकर्तृकाया गुरुसम्बन्धिगृहावस्थितेरनुकूलव्यापारवानित्याकारकस्तत्र बोधः, धातूत्तरणिचा व्यापारबोधनादिति कालापाः । पाणिनीयास्तु "धारेरुत्तमर्ण" (१।४।३५) इति सूत्रानुसारेण 'चैत्राय शतं धारयते' इत्यादावपि ऋणग्रहणं धारणं, दत्तत्वञ्च चतुर्थ्यर्थः, तथा च गुरुदत्तां गां ऋणत्वेन

---

कृष्णकान्तीटीका ।

पेक्षाया उत्सर्गत्वापत्तिरित्याशङ्क्याह--उपेक्षा त्विति । न त्विति । तथा च स्वस्वत्वजनकत्यागस्यैवोपेक्षात्वादिति भाव इत्याहुः । लाघवेन-शक्यतावच्छेदकलाघवेन, ददात्यर्थत्वात् दाधातोः शक्यतावच्छेदकत्वात्, मानसपात्रोद्देशस्थले धनादित्यागस्य दानत्वेऽपि क्षतिविरहादिति शेषः । ननु तिलादेरपि मूल्यतया प्रतिदानस्यापि विक्रयत्वापत्तिरित्यत आह तिलादिकञ्चेति । तथात्वोपदेशात्-मूल्यत्वोपदेशात् । ननु प्रतिदानस्यापि दानत्वेन स्वीकर्त्तुः प्रत्यवायः स्यादित्यत आह अदृष्टार्थमिति । गुरवे गां धारयत इत्यादौ कालापिकसम्मतशाब्दप्रकारमाह गुरव इत्यादि । इत्यादावपीत्यादिना गुरवे गां धारयतं(?) इत्यादिस्थलपरिग्रहः, तेन तादृश-

---

(१) ब्राह्मणः प्रतिगृह्णीयाद्वृत्त्यर्थं साधुतस्तथा ।
अव्यश्वमपि मातङ्गतिलैस्तैलाश्च वर्जयेत् ॥ इति स्मृतेः ।

(२) रसा रसैर्निमातव्या नत्वेव लवणं रसैः ।
कृतान्नं चाकृतान्नेन तिला धान्येन तत्समाः ।
भोजनाभ्यञ्जनाद्दाना यदन्यत् कुरुते तिलैः ।
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥ इति मनु० (१०।९१।९४) स्मृतेः ।

गृह्णातीत्याकारकस्तत्र वाक्यार्थः, पश्चाच्छोध्यत्वेनाङ्गीकृत्य गृहीतञ्च द्रव्यमृणमित्याहुः । 'पुत्राय राध्यति, पुत्रायेक्षत' इत्यादौ दैव-निरूपणं धात्वर्थः, तन्निविष्टे च दैवे सुबर्थस्य सम्बन्धस्या[५]न्व-यस्तेन पुत्रस्य दैवं निरूपयतीत्येव तत्र बोधः । 'गुरवे गां प्रतिशृणोति, आशृणोती'त्यादौ देयत्वेनाभ्युपगमः शृणोतेरर्थः, तत्र गोर्विशेष्यत्वेन तदेकदेशे च दाने गुरोरुद्देश्यत्वेना[६]न्वयः, तेन गुरूद्देश्यकदानकर्मत्वेन गामभ्युपगच्छतीत्येवं तत्र बोधः। 'होत्रे प्रतिगृणाती'त्यादौ हर्षानुकूलव्या-पारलक्षणं प्रोत्साहनं गृणातेरर्थः, तदेकदेशे च हर्षे होत्रादेरन्वयः, तेन होतृनिष्ठहर्षानुकूलव्यापारवानित्याकारकस्तत्र बोधः। 'चैत्राय कुप्यति, क्रुध्य-ती'त्यादौ धात्वर्थ उत्कटद्वेषः, तत्र [७]विषयित्वलक्षणं सम्प्रदानत्वं चतुर्थ्या बोध्यते, तेन चैत्रविषयकोत्कटद्वेषवानित्याकारकस्तत्र बोधः । 'पुत्रे को-पो न युज्यते' इत्यादौ कृदन्तस्य कोपपदस्यैवार्थे पुत्र इत्यस्यान्वयो न तु धात्वर्थे । 'पटाय यतते' इत्यादावपि धात्वर्थकृतौ सुपा पटस्य विषयि-त्वं बोध्यते । तत्रोद्देश्यत्वमेव चतुर्थ्यर्थः, कथमन्यथा पटेच्छया तन्तुनि-र्म्माणदशायां 'पटाय यतते' इत्यादिकः प्रयोग इत्यपि वदन्ति । 'मित्राय द्रुह्यती'त्यत्र द्विष्टाचरणं द्रोहः, तेन मित्रस्य द्विष्टमाचरतीत्यर्थः । 'शि-ष्यायेर्ष्यती'त्यत्रानिष्टानुपेक्षणमीर्ष्या, तथाच शिष्यानिष्टं नोपेक्षत इत्यर्थः ।

---

कृष्णकान्तीटीका ।

स्थलीयशाब्दप्रकारस्य वक्ष्यमाणत्वेऽपि न क्षतिः । ननु "शत्रुभ्यो युज्यते कोपः, पुत्रे कोपो न युज्यते" इत्यादौ पुत्रपदोत्तरसप्तम्यर्थस्य सम्प्रदानत्वापत्तिरित्यत आह पुत्र इति । अर्थे-स्वरूपे, शत्रुभ्य इति पञ्चम्यर्थस्तु धात्वर्थ एवान्वित इति भावः । पटायेत्यादि । न च पटं करोतीतिवत् पटं यतत इत्यपि स्यात्, कृधातु-यत-धातोरेकपर्यायत्वादिति वाच्यम् । तादृशबोधे तथाविधानुपूर्वीप्रकारकज्ञानस्यैव हेतुतयाऽनतिप्रसङ्गात् । मतान्तरमाह तत्रोद्देश्यत्वमिति । तत्र-पटाय यतत इत्यादिस्थले । तत्र युक्तिमाह कथमित्यादि । अन्यथा-विषयितामात्रस्य चतुर्थ्यर्थत्वे । प्रयोग इति । तत्र साध्यत्वाख्यविषयतायाः पटेऽस-म्भवादिति भावः । वदन्तीत्यस्वरससूचनाय । स च मया तु साध्यता चतुर्थ्यर्थ इति नोच्यते, परन्तु विषयतामात्रमिति न कोऽपि दोषः । प्रत्युत अन्योद्देशेन पटनिर्मा-

'पुत्रायासूयती'त्यत्र असूया गुणद्वेषः, तेन पुत्रस्य गुणं द्वेष्टीत्याकारकस्तत्र बोधः । 'मित्रं द्रुह्यति, शिष्यमीर्ष्यति, पुत्रमसूयती'त्यपि प्रयोगात् द्रुहादिकर्मणः सम्प्रदानत्वं वैकल्पिकमित्युन्नीयते । कोपपूर्वकस्य द्रोहादेर्द्रुहादिधातुवाच्यत्वे तत्कर्मणः सम्प्रदानत्वं, द्रोहादिमात्रस्य तथात्वे तु कर्म्मत्वमेवेति पुनः कौमाराः । सोपसर्गयोस्तु क्रुधद्रुहोः कर्म्मतैव न तु सम्प्रदानता, अत एव 'शिष्यस्याभिक्रोद्धा, मित्रस्याभिद्रोढे'त्यादौ कृद्योगे कर्म्मणि षष्ठ्येव प्रमाणम् ॥ ७० ॥

करणत्वं लक्षयति—

**योऽर्थो विकरणाक्तस्य धातोरर्थे तृतीयया ।**
**बोध्यते करणं नाम कारकं तदिहोच्यते ॥ ७१ ॥**

सविकरणस्य यद्धातोरुपस्थाप्ययादृशार्थे तृतीयया यादृशः स्वार्थोऽनुभाव्यते स तद्धातूपस्थाप्यतादृशक्रियायाः करणसंज्ञकं कारकमुच्यते(१) । 'दात्रेण छिनत्ति, घटत्वेन जानाती'त्यादौ धात्वर्थे छिदायां दात्रस्य व्यापारद्वारा [१]जन्यत्वादि, ज्ञानादौ च घटत्वादेः [२]प्रकारित्वादिकं तृतीयया

कृष्णकान्तीटीका ।

णदशायां पटाय यतत इति प्रयोगो भवन्मते न स्यादनुभवविरोधेनेष्टापत्त्यसम्भवादिति। उन्नीयत इति । ग्रन्थकारैरभिप्रेततयाऽनुमीयत इत्यर्थः । प्रकारान्तरेण तादृशप्रयोगद्वयमुपपादयतां मतमाह—कोपपूर्वकस्येति । उत्कटद्वेषपूर्वकस्येत्यर्थः, तथात्वे—द्रुहादिधातुवाच्यत्वे । षष्ठ्येवेति । अन्यथा सम्प्रदानत्वे षष्ठी न स्यादिति भावः ॥ ७० ॥

करणत्वमिति—क्रमप्राप्तमित्यादिः, । विवृणोति—सविकरणस्येत्यादि । तथा च यादृशार्थो विकरणविशिष्टयद्धातूपस्थाप्ययादृशार्थधर्म्मिकान्वयबोधनिरूपिततृतीयाजन्यज्ञानप्रयोज्यप्रकारताश्रयः तद्धातूपस्थाप्यतादृशार्थे तादृशार्थः करणत्वमिति पर्यवसितम् । वैशिष्ट्यञ्चाव्यवहितपूर्ववर्त्तिघटितत्वसम्बन्धेन, प्रयोजनञ्चाग्रे व्यक्तीभविष्यति । लक्ष्ये लक्षणं सङ्गमयति—दात्रेणेति । विकरणवैशिष्ट्य-

(१) कारकान्तरेऽचरितार्थत्वे सति फल( क्रिया )हेतुत्वं करणत्वम् । कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावः सत्यन्तार्थः । कर्तृकारके आरम्भकसंयोगप्रतिद्वन्द्विविभागानुकूलकुठारादिक्रियाया एव छिदादिधात्वर्थतया कर्तुः कुठारादिकरणनिष्ठव्यापारद्वारा छिदादिहेतुत्वान्नातिव्याप्तिः । कर्मणस्तु तादृशक्रियाहेतुत्वविरहादेव नातिप्रसङ्गः । अधिकरणादेरपि कर्तृकर्मान्यतरव्यापारद्वारैव क्रियाहेतुत्वान्नातिप्रसङ्ग इति जयरामपञ्चाननादयः ।

बोध्यते, तदेव तत्र करणत्वम् । 'चैत्रेण पक्वमि'त्यादौ धातोरर्थे तृतीयया बोध्यमपि कर्तृत्वं न विकरणाक्तस्य । 'हस्तेन रुणद्धी'-त्यादौ विकरणान्तभिन्नोऽपि रुधादिधातुर्विकरणाक्त एव । 'घृतेनाचि, जुहोती'त्यादावपि लुप्तमेव प्रतिसन्धीयमानविकरणम-स्तीति मतेनेदं, नातस्तत्र घृतादेः करणत्वव्याहतिः । करण-शब्दस्तु व्यापारप्रत्यासत्त्या जनकस्य वाचकः । चाक्षुषादौ चक्षुरादिः संयोगेन, अनुमित्यादौ व्याप्तिज्ञानादिः परामर्शादिना, स्मृत्यादावनुभवादिः संस्कारादिना, स्वव्यापारेणैव सम्बन्धेन हेतुः । शरीरात्मप्रभृतयस्तु ज्ञानादौ तादात्म्येनैव, अतो न तेषां तत्र करणत्वप्रसङ्गः । श्रावणेऽपि प्रत्यक्षे कर्णावच्छिन्नशब्दात्मना व्यापारेणैव सम्बन्धेन श्रोत्रं करणं, स्वव्यवस्थापकगुणं पुरस्कृत्यैव बहिरिन्द्रियाणां प्रवृत्तेः

---

कृष्णकान्तीटीका ।

निवेशव्यावृत्तिमाह—चैत्रेणेत्यादि । विकरणान्तत्वमुपेक्ष्य विकरणाक्तत्वनिवेशप्रयोजनं दर्शयति—हस्तेनेति । विकरणाक्त एवेति । इतिमतेनेदमित्यस्वरससूचनाय, स च विकरणानुपूर्वीप्रकारकज्ञानस्याहेतुत्वात्तत्र तत्प्रतिसन्धानमनर्थकमिति । लक्षणे तु विकरणवैशिष्ट्यं न निवेश्यते, परन्तु चैत्रेण पक्वमित्यादावतिव्याप्तिवारणाय स्वार्थं कर्तृत्वादिभिन्नत्वं निवेश्यत इति । ननु चाक्षुषे चक्षुः करणमित्यादिव्यवहारो न स्यात् तत्र निरुक्तकरणत्वबोधकपदाभावेन तद्बोधाभावादित्यत आह—करणशब्दस्त्विति । व्यापारप्रत्यासत्त्या–व्यापारसम्बन्धेन । वाचक इति । ननु व्यापारत्वस्यानुगतस्याभावात् सम्बन्धभेदेन जनकताया भिन्नत्वाद्व्यापारसम्बन्धावच्छिन्नजनकताश्रये करणशब्दस्य शक्तिकल्पनमसम्भवीति चेन्न । स्वजन्यत्वस्वजन्यजनकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वं व्यापारत्वमनुगतं निरुच्य तादृशव्यापारत्वोपलक्षितधर्मावच्छिन्नसंसर्गताकजनकत्वविशिष्टस्य शक्यत्वात् । संयोगेनेति, स्वव्यापारेणैव सम्बन्धेन हेतुरिति परेणान्वयः, एवमग्रेऽपि । तादात्म्येनैवेत्येवकारेण व्यापारव्यवच्छेदः । तेषां–शरीरात्मप्रभृतीनां, तत्र–ज्ञानादौ, करणत्वप्रसङ्ग इति योजना, तादात्म्यस्य व्यापारत्वाभावादिति भावः । ननु श्रोत्रप्रत्यासत्तेः समवायस्य नित्यतया व्यापारत्वायोगात्तत्र करणत्वानुपपत्तिरित्यत आह—श्रावणेऽपीति । कर्णानवच्छिन्नशब्दस्य श्रोत्राजन्यत्वात्—कर्णावच्छिन्नेति । संसर्गतानियामकसम्बन्धस्तादात्म्यमित्यभिप्रायः । श्रोत्रमिति । कर्णशष्कुल्यवच्छिन्ननभोभागः श्रोत्रम् । ननु शब्दस्य श्रोत्रव्यापारत्वमपसिद्धान्त इत्यतो युक्तिमाह—

शब्दसामान्याभावस्य श्रावणत्वविरहेऽपि क्षत्यभावात्, श्रोत्रमनसोः संयोग एव वा तत्र व्यापारः । ज्ञानस्य धारावहनस्थले च तृतीयादिकं प्रति द्वितीयादिकं न प्रथमादेः प्रत्यासत्तिस्तत्सम्बन्धेन हेतुत्वे मानाभावात् । फलायोगव्यवच्छिन्नं फलोपधायकं वा कारणमेव करणं, ज्ञानादावात्मादेः करणत्वस्येष्टत्वात्, उपाधेयसङ्करेऽपि कर्तृत्वकरणत्वाद्युपाधेरसाङ्कर्यादेव कारकस्य षड्विधत्वादत एव "आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मने"त्यादिकः प्रयोगः । अत एव च "विवक्षातो हि कारकविभक्तयो

कृष्णकान्तीटीका ।

स्वव्यवस्थापकेति । गुणानामित्यादिः । स्वं—बहिरिन्द्रियं, व्यवस्थापको—व्यापारः, पुरस्कृत्य—अवच्छेदकीकृत्य, एवकारो भिन्नक्रमे, तथा च गुणानां मध्ये स्वव्यापारीभूतगुणमेवावच्छेदकीकृत्य बहिरिन्द्रियाणां शक्तेरित्यर्थः, तेन चक्षुरादिशक्तेश्चक्षुष्ट्वजात्यवच्छिन्नत्वेऽपि न क्षतिः, इदञ्च गगनपदशक्तेः स्वावच्छिन्नत्वमतेन । नन्वेवं शब्दसामान्याभावस्य प्रत्यक्षं न स्यात्तत्र व्यापारीभूततादृशशब्दस्य तादात्म्येनासत्त्वादित्यतस्तत्रेष्टापत्तिमाह—शब्दसामान्याभावस्येति । श्रावणादावित्यादिः । तेन शब्दादौ तत्सामान्याभावस्य तादृशशब्दतादात्म्यवद्विशेषणतया प्रत्यक्षसम्भवेऽपि न क्षतिः, अन्यथा शब्दत्वादेरश्रावणत्वापत्तेरिति ध्येयम् । केचित्तु तादृशशब्द एव व्यापारः, शब्दसामान्याभावस्येति शब्दत्वादीनामप्युपलक्षणम्, अत एवानुभवापलापात् कल्पान्तरानुसरणम्—इत्याहुः । श्रवणादौ शब्दसामान्याभावस्याश्रावणत्वे विप्रतिपन्नं प्रत्याह—श्रोत्रमनसोरिति । तथा च तादृशसंयोगाश्रयविशेषणताया एव तत्राभावग्राहकतयैतत्कल्पानुपपत्तिरिति भावः । ननु घटघटत्वयोर्निर्विकल्पकानन्तरमयं घट इत्याकारकज्ञानद्वयस्थले द्वितीयज्ञानरूपव्यापारसम्बन्धेन प्रथमज्ञानस्य तृतीयं प्रति जनकतया प्रथमस्य तृतीयं प्रति करणतापत्तिरित्यत आह—ज्ञानस्येति । मानाभावादिति । विशिष्टबुद्धौ विशेषणज्ञानस्य तदलौकिकप्रत्यक्षे तज्ज्ञानस्य समवायेनैव हेतुत्वादिति भावः । मतान्तरमाह—फलायोगेति । अव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकप्रतियोगिव्यधिकरणफलाभावविशिष्टान्यदित्यर्थः । स्वरूपयोग्ये करणत्वमसहमान आह— फलोपधायकमिति । तादृशसम्बन्धेन फलविशिष्टमित्यर्थः । इष्टत्वादिति । नन्वात्मनः कर्तृतया करणत्वानुपपत्तिरित्यत आह उपाधेयेत्यादि । षड्विधत्वादिति । न विभागव्याघात इति शेषः । अत एव—कर्तृत्वकरणत्वादीनामेकात्मनि सत्त्वादेवेत्यर्थः । अत एव च—कर्तृत्वादीनामेकत्र सम्भवादेव चेत्यर्थः, अन्यथा एककारकस्य विवक्षयापि अपरकारकत्वासम्भवेन 'विवक्षातो ही'त्यादेरुन्मत्तप्रलपितत्वापत्तेः

भवन्ती"त्यपि प्रवाद इत्यन्ये । 'पशुना रुद्रं यजते' इत्यत्र पशुं रुद्राय ददातीत्यर्थः, "करणं कर्म्म यजेः कर्म्म च सम्प्रदान"मित्यनुशासनात् कर्म्मत्वादावपि तृतीयादेः साधुत्वात् । एतदुदाहरणमात्रविषयानुशिष्टिरियमिति वृद्धाः । 'पायसेन विष्णुं यजते' इत्यादिप्रयोगात् सामान्यत एवेत्यपरे । 'दण्डेन घट' इत्यत्रापि तृतीयार्थः करणत्वं, परन्तु तन्न कारकं क्रियानन्वयित्वात् ॥ ७१ ॥

अधिकरणत्वं लक्षयति—

**यत्क्रियायां यादृशार्थः सप्तम्या विग्रहस्थया ।**
**बोध्यस्तस्यां तदेवाधिकरणं नाम कारकम् ॥ ७२ ॥**

क्रिया धात्वर्थः, तथा च यद्धातूपस्थाप्ययादृशार्थे विग्रहस्थया सप्तम्या यो यः स्वार्थोऽनुभाव्यते तदेव तद्धातूपस्थाप्यतादृशक्रियायामधिकरणं नाम कारकम् । 'ग्रामे गन्ते'त्यत्र धात्वर्थे गतौ ग्रामनिष्ठमधिकरणत्वं[१] तन्निरूपितमाधेयत्वं[२] वा सप्तम्यानुभाव्यत इति तदेव तद्धातूपस्थाप्यतादृशक्रियायामधिकरण(त्व)कारकम् । अत एव ग्रामगन्तेत्यादिकस्तत्र समासः । यद्यपि चैत्रादिनिष्ठाया गतेः समवायादिना ग्रामादिषु-

कृष्णकान्तीटीका ।

रिति भावः । अन्य इत्यस्वरससूचनाय, स चाकरणत्वेन सर्वजनसिद्धानां साधारणकारणानां करणत्वमनुभवविरुद्धम् , अत एव "करणं साधकतम"मित्यमरः, कविराजेनापि "व्यापारवत् कारणं करणं"मित्युक्तमिति । साधुत्वादिति । न चैवमुपाधिसाङ्कर्य्यमिति वाच्यम् । अत्र विकरणानुसन्धानं विनैव शाब्दोदयात् सविकरणानुपूर्वीज्ञानस्याहेतुत्वेन विकरणाक्तत्वदलेन वारणादित्यभिप्राय इति ध्येयम् । सामान्यत एवेति, अनुशिष्टिरियमिति वृद्धा इति पूर्वेणान्वयः । क्रियानन्वयित्वादिति । तथा च तस्यालक्ष्यत्वान्न तत्रातिप्रसङ्ग इति भावः ॥ ७१ ॥

अधिकरणत्वलक्षणप्रतिपादककारिकावतारणिकामाह—अधिकरणत्वमिति । विवृणोति—क्रिया धात्वर्थ इति । व्याख्याततत्त्वमेतत्, तथा च यादृशार्थो यद्धातूपस्थाप्ययादृशार्थविशेष्यतानिरूपितान्वयबोधीयसप्तमीज्ञानप्रयोज्यप्रकारताश्रयः कारकत्वे सति स तद्धातूपस्थाप्यतादृशार्थेऽधिकरणत्वमिति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयति—ग्रामे गन्तेत्यादि । नव्यमतमनुसृत्याह—तन्निरूपितमाधेयत्वं वेति । शङ्कते—यद्यपीत्यादि । बाधितमिति । तथा च ग्रामे गच्छतीत्यादेरयो-

चित्वं बाधितम्, कालिकादिना तद्वृत्तित्वञ्चातिप्रसक्तम् 'स्पन्दे गच्छती'-त्यपि प्रयोगापत्तेस्तथापि 'ग्रामे गच्छत्ययं न तु गृहादावि'त्याद्यनुभवसाक्षिकेण स्वरूपसम्बन्धविशेषेण तथात्वं बोध्यम्।

यत्तु-संयोगावच्छिन्नक्रियाया गतित्वात् तन्निविष्टसंयोगे समवायेनैव ग्रामवृत्तित्वसत्त्वान्नासङ्गतिः-इति। तन्न, ग्रामादेर्धात्वर्थतावच्छेदकीभूतफलान्वयित्वेन कर्म्मतापत्त्या 'ग्रामं गच्छती'त्येव नियमतः प्रयोगापत्तेः, विक्लित्त्यवच्छिन्नक्रियायाः पाकत्वेन तस्यामिव तन्निविष्टविक्लित्तावपि समवायादिना स्थाल्यादिवृत्तित्वासम्भवेन 'स्थाल्यां पचति तण्डुलमि'त्यादौ तथाप्यप्रतीकाराच्च, तण्डुलाद्यवयवविभागप्रभेदस्यैव विक्लित्तित्वादिति। 'घटत्वं घटे भासते' इत्यत्र विषयतापर्य्यवसन्ने भासने घटनिष्ठं [३]विशेष्यत्वमवच्छेद्यतासम्बन्धेन सप्तम्याऽनुभाव्यत इति तत्रापि तदेवाधिकरणता-

---

कृष्णकान्तीटीका।

ग्यत्वादिति भावः। अतिप्रसक्तत्वे हेतुमाह स्पन्द इति। गतेः कालिकसम्बन्धेन स्पन्दवृत्तित्वादिति भावः। तथात्वं—ग्रामादिवृत्तित्वम्। न च द्रव्यगुणकर्म्मणां स्वरूपसम्बन्धेन वृत्तित्वं न दृष्टचरमिति वाच्यम्। 'गिरिर्नितम्बो हुताशनवान्, वृक्षाग्रं कपिसंयोगवत्, चैत्रो जानाती'त्यादावचच्छेदकत्वाख्यस्वरूपसम्बन्धेन 'वह्निसामानाधिकरण्यवान् पर्वतः, द्रव्यत्वसामानाधिकरण्यवद् द्रव्यमि'त्यादौ निरूपकत्वाख्यस्वरूपसम्बन्धेनाधिकरणत्वानुभवस्य सर्वसिद्धत्वात्। (न च) तादृशसम्बन्धानां वृत्त्यनियामकतयोक्तप्रतीतिरसिद्धेति तु न देश्यम्, द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमित्यादौ निरूपकतासम्बन्धेन सामानाधिकरण्याभावावगाहित्वस्योक्तप्रतीतेर्दीधितिकारोक्तत्वात्।

सिद्धान्तवागीशमतमुत्थाप्य निराकरोति—यत्त्विति। नियमत इति। अधिकरणत्वापेक्षया कर्म्मतायाः परत्वादिति भावः। ननु धात्वर्थतावच्छेदकफलान्वयित्वं न कर्म्मत्वं, किन्तु यगन्तधात्वर्थविशेष्यीभूततिङर्थः, तद्धात्वर्थतावच्छेदकीभूतफलशालिनि कर्म्मपदस्य शक्तिः, तथा च उक्तापत्तिर्भवन्मतेऽपि तुल्या, तुल्यसमाधानापीत्यत आह—विक्लित्त्यवच्छिन्नेति। असम्भवेनेति। तस्य तण्डुलावयवमात्रसमवेतत्वादिति भावः। अवच्छेद्यतेति। निरूपकतेत्यर्थः। केचित्तु—विषयितापर्य्यवसन्नेत्येव पाठः, अग्रे च विशेष्यित्वमिति पाठः, तथा च यथाश्रुतमेव साधु—इत्याहुः। अन्ये तु विषयितयोरिव विषयतयोरप्यवच्छेद्यावच्छेदकभावः स्वीक्रियते, अत एव समुच्चयतो वैलक्षण्यार्थं संशये प्रकारताद्वयोस्तथात्वं स्वीकृतं गदाधरभट्टाचार्यैरित्याहुः।

नामकं कारकम्। 'ज्ञाने घटत्वं भासते' इत्यादौ निरूपितत्वमपि[४]। 'घटे पटत्वं जानाती'त्यादौ तु विशेष्यतारूपः सप्तम्यर्थो न धात्वर्थेऽन्वेति घटपटयोस्ताद्रूप्येण प्रमास्थलेऽपि तादृशप्रयोगापत्तेः, परन्तु द्वितीयार्थे पटत्वप्रकारत्व एवावच्छेद्यत्वसम्बन्धेन। यथा च सुबर्थयोर्मिथोऽन्वयेऽपि न क्षतिस्तथा वक्ष्यते।

अधिकरणपदस्य शक्यतावच्छेदकन्तु न सम्बन्धमात्रं घटाद्यात्ममस्तदधिकरणत्वापत्तेः। वृत्तिनियामकः सम्बन्धस्तथेत्यपि न, कुण्डादौ बदरादेरिव बदरादावपि कुण्डादेरधिकरणत्वापत्तेर्वृत्तिनियामकस्याधिकरणतावच्छेदकत्वे पर्यवसानाच्च। नाप्याधेयतानिरूपकत्वमधिकरणत्वम्, तुल्यन्यायेनाधिकरणतानिरूपकत्वस्यैवाधेयतात्वेन परस्पराश्रयप्रसङ्गात्।

---

कृष्णकान्तीटीका।

अनुभाव्यत इति। तथा च घटनिष्ठविशेष्यतानिरूपितविषयतावद्घटत्वमित्याकारकस्तत्र बोध इति भावः। निरूपितत्वमपीति। अधिकरणतानामकं कारकमिति पूर्वेणान्वयः। ननु तुल्ययुक्त्या घटे पटत्वं जानातीत्यादौ घटनिष्ठविषयत्वमप्यधिकरणत्वकारकं स्यादित्यत आह—घटे पटत्वमिति। ताद्रूप्येण—घटत्वपटत्वरूपेण। प्रयोगापत्तेरिति। घटः पटश्चेत्यादिज्ञानेऽपि घटत्वविषयिताशालित्वस्य घटविषयितानिरूपकत्वस्य पटविषयितानिरूपकत्वस्य च सत्वादिति भावः। अवच्छेद्यत्वसम्बन्धेनेति। विशेष्यतारूपः सप्तम्यर्थोऽन्वेतीति पूर्वेणान्वयः। ननु सुबर्थयोर्मिथोऽन्वयोऽव्युत्पन्न इत्यत आह—यथा चेति। वक्ष्यत इति। निर्द्धारणार्थविवेचनायामिति शेषः।

तदधिकरणत्वापत्तेः—घटाधिकरणत्वापत्तेः, तादात्म्यसम्बन्धस्यैव तत्र सत्त्वादिति भावः। शङ्कते—वृत्तिनियामक इति। तथा—अधिकरणपदशक्यतावच्छेदकः। अधिकरणत्वापत्तेरिति। संयोगस्य द्विष्ठत्वादिति भावः। यद्यपि बदरादेः कुण्डाधिकरणत्वापत्तिर्न सम्भवत्यापादकाभावात्, तथाप्यनधिकरणत्वप्रयोजकविरहादेवापत्तिरभिहिता। नन्वेवं घटाधिकरणस्यापि पटाधिकरणत्वापत्तिरिति तद्वाचकपदसमभिव्याहृताधिकरणपदशक्तिनियामकत्वं तन्निष्ठाधेयतानियामकसम्बन्धे स्वीकर्त्तव्यं, तथा च नोक्तापत्तिरित्यत आह—वृत्तिनियामकस्येति। सम्बन्धनिष्ठस्येत्यादिः। पर्यवसानाच्चेति। तथा चाधिकरणपदशक्तिग्रहाधीनाधिकरणतावच्छेदकग्रहः, तदधीनश्च तादृशशक्तिग्रह इत्यन्योन्याश्रय इति भावः। शङ्कते—नापीति। अधिकरणत्वमिति। तथा च तदेवाधिकरणपदशक्यतावच्छेदकमिति भावः। परस्पराश्रयप्रसङ्गात्-

परन्त्वाधेयतावत् पदार्थान्तरमेवाधिकरणत्वम्(१) तच्च नैकम् । सर्वस्य सर्वाधिकरणत्वापत्तेः, किन्त्वाधेयताभेदेन नानैव, प्रतीत्यनुगमस्तु रूपत्वादिना रूपादेरिवाधिकरणतात्वेनैवाखण्डेन तस्य । न चैकधर्मावच्छिन्नाधिकरणत्वं लाघवादेकमेवोचितम्, रूपत्वेन नीलस्याधिकरणं स्फटिकमित्यपि प्रयोगापत्तेः । अत एव तद्रूपरसयोः समानियतमप्याधिकरणत्वं विभिन्नमेव, अन्यथा तद्रूपत्वेन तद्रसस्याधिकरणं घट इत्यादेरपि योग्यतापत्तेरित्यास्तां विस्तरः ॥ ७२ ॥

कर्म्मत्वकारकं लक्षयति—

**यगन्तधातोरर्थो यस्तिङा स्वार्थेऽनुभाव्यते ।**
**यत्रासौ कर्म्मतानाम कारकं कर्तृतेतरः ॥ ७३ ॥**

---

कृष्णकान्तीटीका ।

अन्योन्याश्रयप्रसङ्गात् । उपसंहरति—परन्त्विति । आधेयत्वस्याधिकरणतानिरूपकत्वेऽधिकरणत्वाधेयत्वयोर्मिथो निरूप्यनिरूपकभावासम्भवेन तल्लिखने ग्रन्थकर्त्तुरुन्मत्तप्रलपितत्वापत्तेरित्याधेयत्वस्यातिरिक्तत्वं सर्वसिद्धमतो दृष्टान्तत्वेनोपन्यासः । ननु तयोः स्वरूपसम्बन्धरूपत्वाभावेनाधेयत्ववदधिकरणत्वानामैक्यापत्तिरित्यत आह—तच्चेति । चः पुनरर्थे, अधिकरणत्वं पुनरित्यर्थः । अधिकरणत्वापत्तेरिति । तथा चाधेयत्वापेक्षयाऽधिकरणत्वस्यायमेव विशेष इति भावः । उपसंहरति—किन्त्विति । नन्वेवमनुगतप्रतीतिर्न स्यादित्यत आह—प्रतीत्यनुगमस्त्विति। तस्याधिकरणत्वस्य, तथा च यथा रूपादीनां नानात्वेऽपि रूपत्वजातेरनुगतत्वात्तदवच्छिन्नविषयताकत्वेन रूपमित्यादिप्रतीतीनामनुगमः, तथाऽधिकरणत्वानां नानात्वेऽप्यधिकरणतात्वरूपाखण्डधर्मावच्छिन्नविषयताकत्वेनाधिकरणत्वप्रतीतीनामप्यनुगम इति भावः । शङ्कते—न चेति, उचितमिति परेणान्वयः । प्रयोगापत्तेरिति । शुक्लनिरूपिताधिकरणतायां नीलस्यापि निरूपकत्वादिति भावः । अत एवोक्तापत्तेरेव, समनियतमपीत्यैक्यप्रदर्शनाय ॥ ७२ ॥

कर्म्मत्वलक्षणप्रतिपादककारिकावतारणिकामाह—कर्म्मत्वेत्यादि । विवृणोति—

---

(१) तच्च विलक्षणप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, स चातिरिक्तोऽनतिरिक्तो वेत्यन्यदेतत् । तत्र गेहे चैत्रः पचतीत्यत्राधःसन्तापनस्य पाकस्य साक्षाद्गेहावृत्तित्वेपि कर्तृघटितपरम्पराधिकरणत्वमाधेयत्वं वा पाकादिक्रियान्वितत्वं सप्तम्यर्थः, स्थाल्यामोदनं पचतीत्यत्राधःसंतापनस्य पाकस्य साक्षात्स्थालीवृत्तित्वेपि कर्मघटितपरम्पयाऽधिकरणत्वमाधेयत्वं वा सप्तम्यर्थः पाकादावन्वेति तथैवानुभवबलेन व्युत्पत्तेरिति वृद्धास्तथा च कर्तृकर्मान्यतरद्वारा क्रियाश्रयत्वे सति तत्क्रियोपकारकत्वमधिकरणत्वमित्यन्ये ।

यगन्तस्य यद्धातोरुत्तरस्थतिङा यत्र स्वार्थे तदीयो यादृशोऽर्थोऽनुभावयितुं शक्यते तद्धातूपस्थाप्यतादृशक्रियायां स तिङर्थः कर्तृताभिन्नः (१)कर्मत्वं नाम कारकमित्यर्थः । 'ग्रामो गम्यते'इत्यत्र गमधातूपस्थाप्यायाः संयोगावच्छिन्नक्रियायाः स्वजन्यत्वसम्बन्धेन तिङ्पदोपस्थाप्ये संयोग एवान्वयो, न तु 'त्यजती'त्यादाविव विभागादौ, धात्वर्थतावच्छेदकस्यैव फलस्य बोधने कर्मविहितप्रत्ययानां धातुसाकाङ्क्षत्वादतः संयोग एव तत्र गतिक्रियायाः कर्मत्वं न तु विभागादिः, तेन तरोस्त्यागिनि खगे 'तरुं गच्छती'त्यादिको न प्रयोगः, 'गम्यते रथः स्वयमेवे'त्यादौ कर्मत्वमिवानुकूलव्यापारवत्त्वलक्षणं कर्तृत्वं धात्वर्थस्य धर्म्यपि न तत् कर्तृताभिन्नमिति तद्व्युदासः । ननु चैत्रकर्तृकगमनजन्यसंयोगस्य ग्राम इव चैत्रेऽपि सत्त्वा'चैत्रेण गम्यते चैत्र' इत्यपि प्रयोगः स्यात्, न स्यात्, तिङर्थसंयोगे स्वजन्यत्वस्वाश्रयप्रतियोगिकत्वोभयसम्बन्धेन धात्वर्थगतेः साकाङ्क्षत्वेन चैत्रकर्तृकगत्याश्रयप्रतियोगिकत्वविशिष्टस्य संयोगस्य चैत्रे बाधात् । अत एव 'चैत्रो ग्रामं गच्छती'तिवत् 'चैत्रश्चैत्रं गच्छती'त्यपि न प्रयोगः, तत्रापि द्वितीयार्थसंयोगे प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसम्बन्धेनैव

---

कृष्णकान्तीटीका ।

यगन्तस्येति । उत्तरस्थेति । तथा च कारिकास्थधातोरित्यन्तस्य तिङित्यनेनापि सम्बन्ध इति भावः । तथा च यगन्तयद्धातूत्तरवर्त्तितिङ् यादृशस्वार्थधर्म्मिकतद्धातूपस्थाप्ययादृशार्थप्रकारकान्वयबोधजनिका कर्तृताभिन्नतादृशार्थस्तद्धातूपस्थाप्यतादृशक्रियायां कर्म्मत्वमिति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयन् कर्तृताभिन्नत्वनिवेशव्यावृत्तिमाह—ग्रामो गम्यते इत्यादि, व्युदास इत्यन्तेन । एवकारव्यवच्छेद्यमाह—नत्विति । कुत इत्याकाङ्क्षायामाह—धात्वर्थतावच्छेदकस्येति । स्पन्दत्वादेस्तथात्ववारणाय फलस्येति । गम्यते रथः स्वयमेवेत्यादावित्यत्र गमिरिनन्तः (यगन्तः?) तथा च ग्रामकर्म्मकगमनानुकूलव्यापारजन्यफलवान् गत्यनुकूलव्यापारवानिति तत्र बोध इति भावः । शङ्कते—नन्वित्यादि । समाधत्ते—न स्यादिति । चैत्रे बाधादिति । एकस्मिन्नेकसंयोगप्रतियोगित्वानुयोगित्वासम्भवात्, स्वप्रतियोगिकत्व-

---

(१) परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वम् इति भवानन्दवागीशाः । धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति जयरामभट्टाचार्याः ।

साकाङ्क्षतया द्वितीयान्तलभ्यस्य चैत्रीयत्वविशिष्टसंयोगस्य जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायामन्वयेन चैत्रप्रतियोगिकसंयोगाश्रयवृत्तिगतेश्चैत्रे बाधितत्वात् ।

यत्तु—फलमिव क्रियायामन्वितं परसमवेतत्वमपि कर्मतावाचिप्रत्ययस्यार्थः, परत्वञ्च तिङा स्वार्थफलान्वयिप्रतियोगिकं, द्वितीयादिसुपा तु प्रकृत्यर्थप्रतियोगिकं प्रत्याय्यते, तथा च चैत्रकर्तृकस्य चैत्रान्यसमवेतगमनस्याप्रसिद्धत्वेन चैत्रे तज्जन्यसंयोगस्यासम्भवात् 'चैत्रेण गम्यते चैत्र' इत्यादिको न प्रयोगः । एवं चैत्रान्यसमवेतस्य गमनस्य चैत्रे बाधात् 'चैत्रश्चैत्रं गच्छती'त्यादिरपि । 'चैत्रेण गम्यते ग्राम' इत्यादौ तु चैत्रकर्तृकस्य ग्रामभिन्नसमवेतस्य गमनस्य जन्यो यः संयोगस्तद्वान् ग्राम इत्यन्वयबोधने न किञ्चित् बाधकम्—इति प्राच्यैरुक्तम् , तन्न युक्तम् , संख्या-

---

कृष्णकान्तीटीका ।

विशिष्टसंयोगस्य स्वस्मिन्नसत्त्वादिति भावः । केचित्तु गच्छतीत्यादौ ग्रामप्रतियोगिकसंयोगो भासते, गम्यते इत्यादौ तु कर्तृप्रतियोगिकसंयोगो भासते इत्येव समाधानमेतावतोक्तमित्याहुः ।

सिद्धान्तवागीशमतमुपन्यस्य निरस्यति—यत्त्विति । परत्वस्य केवलान्वयित्वात् परसमवेतत्वस्य कर्म्मतावाचिप्रत्ययार्थत्वविवक्षणेऽव्युपपत्त्यवारणादाह—परत्वञ्चेति । तिङेति प्रत्याय्यत इति परेणान्वयः । स्वार्थेति । तथा च तिङर्थीभूतं यत् फलं संयोगादि तदन्वयिग्रामादिप्रतियोगिकमित्यर्थः । एतावता चैत्रं गच्छति चैत्र इति प्रयोगवारणासम्भवादाह—द्वितीयादिसुपा त्विति । प्रकृत्यर्थेति । द्वितीयाप्रकृत्यर्थेत्यर्थः । क्वचित् स्वप्रकृत्यर्थेत्येव पाठः । उपसंहरति—तथा चेति । अप्रसिद्धत्वेनेति असम्भवादित्यत्रान्वयि । कर्त्तृविहितप्रत्ययस्थलेऽपि ताद्दगापत्तिं वारयति—एवमिति । स्वप्रकृत्यर्थप्रतियोगिकभेदस्य द्वितीयान्तभाव इत्यर्थः । इत्यादिरपीति, न प्रयोग इति पूर्वेणान्वयः । ननु तिङर्थफलान्वयित्वस्य केवलान्वयित्वात्तदवच्छिन्नप्रतियोगिताकभेदाप्रसिद्धया चैत्रेण गम्यते ग्राम इत्यादिरपि प्रयोगो न स्यादित्यतो यत्र यद्धर्मावच्छिन्नताद्दशफलान्वयः तत्र तद्धर्मावच्छिन्नप्रतियोगिताकभेदस्यैव कर्म्मतावाचिप्रत्ययार्थघटकतेति प्रकटयन्नाह—चत्रेण गम्यते ग्राम इत्यादौ त्विति । तिङर्थसंख्यायाः प्रायशः कर्तृत्वविशेषणत्वेनैवान्वयादाह—संख्याकालातिरिक्तस्येति । परत्वादेरिति । परत्वमादिघटकं यस्येति व्युत्पत्त्या परसमवेतत्वस्येत्यर्थः । क्वचित्तथैव पाठः । केचित्तु—परत्वादे-

कालातिरिक्तस्य तिङर्थस्य धात्वर्थविशेष्यत्वानियमेन तिङर्थपरत्वादेर्धात्वर्थ-गत्यादावन्वयायोगात्, प्रथमान्तोपस्थाप्यग्रामादेरभेदान्यसम्बन्धेनान्यत्र प्रत्ययार्थे तिङर्थे वाऽन्वयस्य दृष्टचरत्वेनाव्युत्पन्नत्वात्। 'चैत्रेण गम्यते द्रव्यं, द्रव्यं गच्छति चैत्र' इत्यादौ द्रव्यान्यसमवेतस्य गत्यादेरप्रसिद्धत्वे-नायोग्यतापत्तेश्च।

नव्यास्तु फलमिव भेदोऽपि कर्मतावाचिप्रत्ययस्यार्थः, तथा च 'चैत्रेण गम्यते ग्राम' इत्यत्र तिङर्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थविशेष्यत्वात् प्रतियोगित्वसम्बन्धेन च प्रथमान्तार्थे ग्रामादौ विशेषणत्वान्न व्युत्पत्तिविरोधो न वाऽतिप्रसङ्गः, चैत्रकर्तृकगमनाश्रयवृत्तिभेदप्रतियोगित्वस्य चैत्रे विरहात्। 'चैत्रं गच्छती'त्यादावपि प्रतियोगित्वसम्बन्धेन चै-

---

कृष्णकान्तोटीका।

रिति खण्डशक्त्यभिप्रायेणोक्तम्, आदिना स्वाश्रयसमवायादिपरिग्रह—इति व्याचक्रुः। तन्न, तथापि परत्वस्य धात्वार्थानन्वयित्वादसङ्गत्यापत्तेः। यजेत इत्यादौ तिङर्थेष्ट-साधनत्वादौ व्यभिचारादाह—प्रथमान्तोपस्थाप्येति। अन्यत्रेति फलितम्। चैत्रे-त्यादौ अभेदातिरिक्तप्रतियोगित्वसम्बन्धेन नञर्थेऽन्वयदर्शनात् प्रत्ययार्थे इति। 'ओदनो भुज्यते' इत्यादौ 'घृतिः स्वाहा' इत्यादौ च प्रत्ययार्थेऽपि तस्य दृष्टत्वात् तिङर्थे इति। ननु तादृशान्वयस्यादृष्टचरत्वेऽपि व्युत्पत्तिवैचित्र्यात् स्वीकारे बाधका-भाव इत्यत आह—चैत्रेण गम्यते द्रव्यमिति। द्वित्वाद्यवच्छिन्नभेदमादायोक्ता-तिप्रसङ्गतादवस्थ्यभिया ऽन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्यैव निवेश्यत्वा-दिति भावः।

नव्यमतमुत्थापयति—नव्यास्त्विति। फलमिव-संयोगादिरिव। कर्तृतावाचि-प्रत्ययस्यापि भेदार्थकत्वस्वीकारे चैत्रं गच्छति चैत्र इत्यादिप्रयोगो वारयितुं न शक्यते, घटादिभेदस्यैव चैत्रे सत्त्वात्। प्रतियोगितासम्बन्धेन तत्र तदन्वयेऽपि न तथा, घटा-दिनिष्ठभेदस्यैव चैत्रे सत्त्वात्। न च द्वितीयाप्रकृत्यर्थस्यापि आधेयतया भेदे, तादृश-भेदस्य च प्रतियोगितया कर्त्तर्येवान्वयेन नातिप्रसङ्गः, स्ववृत्तिभेदप्रतियोगि-त्वस्य स्वस्मिन्नसत्त्वादिति वाच्यम्। संख्याकालातिरिक्तस्य तिङर्थस्य धा-त्वर्थविशेष्यत्वनियमभङ्गप्रसङ्गात्, अतः कर्तृतावाचिप्रत्ययस्थले अवश्यं प्रकारा-न्तरस्य वक्तव्यत्वादाह—कर्मतावाचीति। न व्युत्पत्तिविरोध इति। संख्याकालातिरिक्तेत्यादिः। अतिप्रसङ्गः—चैत्रेण गम्यते चैत्र इति प्रयोगप्रसङ्ग इत्यर्थः। कुत इत्याकाङ्क्षायामाह—चैत्रकर्तृकेति। कर्तृतावाचिप्रत्ययस्थलेऽतिप्रसङ्गं वारयि-तुमुपक्रमते—चैत्रं गच्छतीत्यादावपीति। तादृशगतेः—चैत्रभेदसमानाधिकरणग-

त्रान्वितस्य द्वितीयार्थभेदस्य सामानाधिकरण्यसम्बन्धेन धात्वर्थगतावन्वयात्, तादृशगतेश्चैत्रे बाधा'च्चैत्रं गच्छति चैत्र' इत्यादिको न प्रयोगः। प्रतियोगित्वञ्च उभयावृत्तिधर्मावच्छिन्नं धर्मद्वयानवच्छिन्नं वा ग्राह्यम्, अतो 'द्रव्यं गच्छती'त्यादौ गतेर्द्रव्यभेदसामानाधिकरण्यविरहेऽपि न क्षतिरिति प्राहुः।

तच्चिन्त्यम्। 'वृक्षं खगस्त्यजती'त्यादौ विभागावच्छिन्नक्रिया त्यजेरर्थः, द्वितीयायास्तु विभागः, तेन वृक्षावधिकविभागवती या विभागावच्छिन्नक्रिया तद्वान् खग इत्याकारस्तत्र बोधः। वृक्षावधिकविभाग-

---

कृष्णकान्तीटीका।

तेरित्यर्थः। द्वित्वाद्यवच्छिन्नभेदमादायातिप्रसङ्गतादवस्थ्यादाह—प्रतियोगित्वं चेति। उभयावृत्तित्वञ्च स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यत्वम्। तत्रैकमात्रवृत्तिधर्मस्यापि स्वावच्छिन्नप्रतियोगिताश्रयवृत्तित्वात् स्वाधिकरणावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदसमानाधिकरणत्वाच्च द्वयोः संसर्गघटकतया निवेशः। न च तथापि तद्व्यक्तित्वस्य द्वित्वाद्यवच्छिन्नप्रतियोगिवृत्तित्वात् तद्दोषतादवस्थ्यात् स्वप्रतियोगिवृत्तित्वस्थले स्वप्रतियोगितावच्छेदकत्वस्य वक्तव्यत्वे प्रमेयत्वादेरपि तथात्वापत्तिरिति वाच्यम्। उक्तानुगमस्य प्रमेयत्वादिसाधारण्येपि क्षतिविरहात्, द्वित्ववारणस्यैव प्रकृतोपयुक्तत्वात्। अत एव 'स्वप्रतियोगितावच्छेदकत्वं स्वसामानाधिकरण्यघटकवृत्तित्वञ्च यदि यथाकथञ्चित्संसर्गेणोच्यते, तदा तद्व्यक्तित्वस्याप्यतथात्वापत्तिः, स्वरूपसम्बन्धेन तथात्वोक्तौ च द्वित्वस्याप्यवारणात्, समवायेन तथात्वोक्तौ च प्रमेयत्वादेरपि तथात्वापत्तिरिति प्रत्युक्तम्, तथा च गौरवादाह—धर्मद्वयानवच्छिन्नमिति। धर्मविधयाऽवच्छेदकताद्वयानिरूपकत्वमित्यर्थः। न क्षतिरिति। तद्व्यक्तित्वावच्छिन्नभेदसामानाधिकरण्यस्यैव तत्र सत्त्वादिति भावः।

तच्चिन्त्यमिति। चिन्ताबीजन्तु अस्मदुक्तरीत्यैव सामञ्जस्ये तिङादेः शक्त्यान्तरकल्पने गौरवम्, भेदानुपस्थितावपि शाब्दबोधस्यानुभविकत्वञ्चेति। वृक्षं त्यजतीत्यादावपि शाब्दबोधमुपपादयति—वृक्षमित्यादि। विभाग इति अर्थ इति पूर्वेणान्वयः। परस्परोपश्लेषावगाहिसमुदितार्थविषयकबोधप्रकारमाह—तेनेति। ननु स्वनिष्ठक्रियाया अपि स्वावधिकविभागजनकत्वात् केवलजनकत्वसम्बन्धेन विभागस्य क्रियायामन्वये खगं त्यजति खग इत्यपि प्रयोगः स्यात्, अत एव न सामानाधिकरण्यसम्बन्धेनापि तत्र तदन्वयः, विभागस्य द्विष्ठतया स्वनिष्ठक्रियाया अपि स्वनिष्ठविभागसामानाधिकरणत्वात्, अतः संसर्गविशेषेण क्रियायां विभागान्वयं स्वीकृत्य तादृशप्रयोगं वारयति—वृक्षावधिकविभागवदित्यादि। प्रयोग इति।

वत्त्वञ्च जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव क्रियायां ग्राह्यमतः खगाद्यवधिकविभागस्य खगादावसत्त्वात् 'खगं त्यजति खग' इत्यादिको न प्रयोगः। 'खगेन त्यज्यते खग' इत्यपि प्रयोगः प्रागुक्तरीत्या निरसनीयः।

प्राञ्चस्तु 'ग्रामं गच्छति, त्यजती'त्यादौ सर्वत्र क्रियामात्रं धात्वर्थस्त्यजिगम्योश्च पर्यायत्वेऽपि क्षत्यभावात्, गत्यर्थक्रियायां संयोगस्यैव त्यज्यर्थक्रियायाञ्च विभागस्यैव बोधकतायाः कर्मप्रत्ययेषु व्युत्पन्नत्वात्। 'तरुं त्यजती'त्यादौ संयोगस्य 'तरुं गच्छती'त्यादौ च विभागस्य द्वितीया-

---

कृष्णकान्तीटीका।

स्वावधिकत्वविशिष्टविभागाधिकरणत्वस्य स्वस्मिन्नसत्त्वात्, खगनिष्ठक्रियाया निरुक्तोभयसम्बन्धेन वृक्षावधिकविभागवत्त्वेऽपि खगावधिकत्वाभावादिति भावः। नन्वेवं केवलसामानाधिकरण्यसम्बन्धेन तादृशविभागान्वयेनाप्युक्तदोषवारणसम्भवे किं जनकत्वस्य संसर्गघटकतया प्रवेशेनेति वाच्यम्। वृक्षं गच्छतीत्यादावपि वृक्षं त्यजतीति प्रयोगापत्तेः, गमनक्रियाया अपि तादृशविभागसमानाधिकरणत्वात्। कर्मतावाचिप्रत्ययस्थलेऽपि तादृशप्रयोगं वारयति—खगेन त्यज्यत इति। प्रागुक्तरीत्येति। अत्र केचित्-तत्र तिङर्थविभागे, स्वजन्यत्वस्वाश्रयावधिकत्वोभयसंसर्गेण त्यागस्यान्वयेनेत्यर्थं इति तु नार्थः, खगक्रियाधीनवृक्षावधिकविभागतात्पर्येण खगेन त्याज्यो वृक्ष इति प्रयोगानुपपत्तेः, तादृशविभागस्य खगावधिकत्वाभावात्, प्रत्युत खगक्रियाधीनखगावधिकविभागतात्पर्येण खगेन त्यज्यते खग इति प्रयोगवारणासम्भवाच्च। न च यस्य क्रियाजन्यो विभागस्तस्यैव तदवधित्वनियमात् खगक्रियाधीनविभागावधित्वस्य वृक्षादावसम्भवात् स्वावधिकविभागस्य स्वस्मिन्नसत्त्वाच्च नोक्तापत्त्यनुपपत्तिरिति वाच्यम्। पर्वताद्विभजते खग इत्यादिप्रयोगानुरोधात् स्वजनकीभूतक्रियानाश्रयेऽपि स्वावधिकत्वस्वीकारात्, परन्तु स्वजन्यत्वस्वाश्रयभिन्नत्वोभयसम्बन्धेन्वयेनेति तदर्थ—इत्याहुः। तन्मन्दम्, स्वजनकक्रियाश्रय एव स्वावधित्वमिति नियमाभावेऽपि स्वावधिकविभागस्य स्वस्मिन्नसत्त्वनियमात् प्रागुक्तरीत्येत्यस्योक्तार्थकरणे बाधकाभावात्, अन्यविधार्थस्य प्रागनुक्तत्वात् प्रागुक्तरीत्येत्यस्यान्यार्थपरत्वासम्भवाच्च।

प्राचीनमतमाह—प्राञ्चस्त्वित्यादिना आहुरित्यन्तेन। पर्यायत्वेऽपि—एकार्थत्वेपि, क्षत्यभावात् त्यजतीत्यत्र गच्छतीति प्रयोगप्रसङ्गरूपक्षत्यभावादित्यर्थः। कुत इत्याकाङ्क्षायामाह गत्यर्थक्रियायामिति। संयोगस्यैवेति। बोधकतायाः कर्मप्रत्ययेषु व्युत्पन्नत्वादिति योजना। उपसंहरति तरुं त्यजतीत्यादावित्यादि। अत्र 'तथा च तरुं त्यजतीत्यादावपि' (इति?) क्वचित् पाठः। तदसत्त्वे तथा चे-

दितो नावगमः । परैरपि समभिव्याहृतधात्वर्थतावच्छेदकफलस्यैव द्वितीयादिबोध्यताव्युत्पत्तेरभ्युपेतव्यत्वात्, अन्यथाऽतिप्रसङ्गात् । नचैवं 'स्पन्दो न स्पन्द' इत्यादेरिव 'त्यागो न गतिरि'त्यादेरपि वाक्यस्य निराकाङ्क्षतापत्तिः, तत्र त्यजिगम्योर्विभागाद्यवच्छिन्नक्रियालक्षकत्वेनैवान्वययोग्यतासम्भवात् । द्वितीयासाकाङ्क्षतुमन्तधातुत्वप्रयुक्त एव च धातूनां सकर्मकत्वव्यपदेशो न तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः ज्ञाप्रभृतावव्याप्तत्वात्, स्मृत्यर्थधातूनां कर्मणि षष्ठ्या इव द्वितीयाया अपि साधुत्वात् ।

---

### कृष्णकान्तीटीका ।

त्यध्याहार्यम् । केचित्तु क्षत्यभावादित्यत्र व्युत्पन्नत्वादित्यन्तो न हेतुः, अपि तु नावगम इत्यत्रैव, तथा च 'तथा चे'ति नाध्याहार्य्यमित्याहुः । तदसत्, क्षत्यभावप्रयोजकानभिधाने ग्रन्थकर्त्तुर्न्यूनतापत्तेः । न च नावगम इत्येन तत्प्रयोजकमिति वाच्यम् । तत्र तत्र विभागसंयोगाद्यवगमाभावस्य क्षत्यभावपर्यवसायितया स्वस्मिन् स्वस्य प्रयोजकत्वासम्भवात्, नावगम इत्यस्य पञ्चम्यन्तत्वाभावाच्च । क्षत्यभावादित्यनन्तरं 'यत'इत्याध्याहारे तु वयं न विवदामहे । ननु धात्वर्थतावच्छेदकफलत्वोपलक्षितधर्मावच्छिन्ने द्वितीयात्वादिना शक्तिमपेक्ष्य संयोगत्वावच्छिन्ने तत्तद्द्वितीयात्वादिना शक्तिकल्पने गौरवमित्यत आह परैरपीति । गम्यादेः फलावच्छिन्नवाचकतावादिभिरित्यर्थः, अन्यथा–सामान्यशक्तिस्वीकारे, अतिप्रसङ्गात्–गच्छतीत्यादौ विभागस्य, त्यजतीत्यादौ संयोगस्य प्रतीतिप्रसङ्गादित्यर्थः । न च परमते तत्तत्फलस्य तत्तद्धातुप्रतिपाद्यत्वान्नोक्तातिप्रसङ्ग इति वाच्यम् । संयोगादेर्द्विधाभानभयेन तत्र धातोः क्रियामात्रार्थकत्वस्वीकारात्, द्वितीयादित एव संयोगादिभानस्योपगन्तव्यत्वात् । शङ्कते न चैवमित्यादि । निराकाङ्क्षतापत्तिरिति । परोक्षज्ञानस्यानाहार्यत्वनिश्चयत्वनियमादिति भावः । शङ्कां निरस्यति तत्रेति । नन्वेवं फलावच्छिन्नव्यापारवाचित्वरूपसकर्मकत्वमनुपपन्नमित्यतः प्रकारान्तरेण सकर्मकत्वमुपपादयति द्वितीयासाकाङ्क्षेति । तथा च द्वितीयासाकाङ्क्षतुमन्तवृत्त्यानुपूर्वीमद्धातुत्वं सकर्मकत्वमिति भावः । व्यपदेशः—व्यवहारः । एवकारव्यवच्छेद्यमाह नत्विति । कुत इत्याकाङ्क्षायामाह ज्ञाप्रभृताविति । अव्याप्तत्वादिति । तत्र तादृशफलाप्रसिद्धेरिति भावः । ननूक्तरूपस्य सकर्मकत्वे स्मृधातोः सकर्मकत्वं न स्यात्, तदुत्तरतुमः षष्ठीमात्रसाकांक्षत्वादित्यत आह स्मृत्यर्थधातूनामिति । द्वितीयाया अपि साधुत्वादिति । "उत्तरत्र नित्यग्रहणादनित्यमिह प्रकरणे स्यात्"दिति दुर्गसिंहोक्तत्वादिति भावः । एतन्मते बोधप्रकारमाह

एवञ्च 'ग्रामं गच्छति, तरुं त्यजती'त्यादौ ग्रामसंयोगजनकक्रियावांस्तरु-विभागजनकक्रियावानित्याकारक एव बोधः, न तु ग्रामसंयोगजनकसंयो-गावच्छिन्नक्रियावांस्तरुविभागजनकविभागावच्छिन्नक्रियावानित्याकारकः, संयोगविभागयोरुभयथा भानस्य 'नीलघटजनक-घटजनकदण्डवानि'त्यादौ घटादेरिव निराकाङ्क्षत्वेनासम्भवादनुभवबाधितत्वाच्चे(१)त्याहुः ।

परे तु संयोगः क्रिया च द्वयमेव प्रत्येकं गमिशक्यम्, तयोर्जन्यज-नकभावस्तु वाक्यार्थमर्यादया भासते, एवार्थयोरन्ययोगव्यवच्छेदयोरिव गम्यर्थयोः संयोगक्रिययोर्मिथ एव साकाङ्क्षत्वाच्च नैकमात्रे गमिप्रयोगः । पुष्पवन्तपदे च चन्द्रत्वसूर्यत्वाभ्यामिव विभिन्नरूपाभ्यां प्रकृतेऽपि संयो-

कृष्णकान्तीटीका ।

एवञ्चेति । ननु संयोगादेर्द्विधा भानेऽपि बाधकाभावात् किं पारभाषिकसकर्मकत्व-निर्वचनरूपकष्टाश्रयणेनेत्यतो बाधकमप्याह संयोगविभागयोरित्यादि । उद्दे-श्यतावच्छेदकविधेययोरैक्यस्थले निराकाङ्क्षत्वदार्ढ्याय छगमं दृष्टान्तमप्याह नी-लघटजनकेत्यादि । नव्यैर्विधेयांशेऽधिकावगाहिशाब्दस्वीकारात् तन्मतसाधारणं दोषमाह अनुभवविरोधाच्चेति । आहुरित्यस्वरससूचनाय, स च लक्षणाया अप्र हृदशायां त्यागो न गतिरित्यादेरयोग्यत्वप्रसङ्गरूपः । नच भवन्मतेऽपि निराकाङ्क्षत्वं दुष्परिहरमिति वाच्यम् । करोतीत्यादाविव सम्भेदेनान्यतरवैयर्थ्याभावेन संयोगा देरेकदैव भानादिति ।

खण्डशक्तिवादिनां मतमाह परे त्विति । विशिष्टशक्ति(त्व)वादिनामपि संयो गक्रिययोः शक्तिस्वीकारात् मतवैलक्षण्यायाह प्रत्येकमिति । संयोगादिप्रत्येकध र्मावच्छिन्ना या गमिपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितसंकेतविशेष्यता तद्व-त्त्वमित्यर्थः । वाक्यार्थमर्यादया—पदार्थयोः सम्बन्धविधयेत्यर्थः । नन्वेकपदोपस्थाप्य-योः परस्परमन्वयो न दृष्टचर इत्येकमात्रे गमिप्रयोगः स्यादित्यत आह एवार्थयो-रिति । शङ्खः पाण्डर एवेति अयोगव्यवच्छेदस्य नीलं सरोजं भवत्येव इत्यत्यन्ता-योगव्यवच्छेदस्य एवार्थत्वाभावेऽपि न क्षतिः । शङ्खत्वावच्छेदेन पाण्डरत्वान्वयबोधे सरोजत्वसामानाधिकरण्येन नीलान्वयबोधे चैवकारस्य तात्पर्यग्राहकतयाऽप्युपपत्तेरि-त्यन्ययोगव्यवच्छेदयोरित्युक्तम् । यद्यप्येवकारार्थभेदाश्रयसम्बन्धाभावेषु प्रत्येकशक्ति-स्वीकार उचितः, तथापि लाघवसम्भवेऽपि अप्रसिद्धयसम्भवात् अन्ययोगव्यवच्छेद-योरिति द्विवचनमुपात्तम् । ननु नानाशक्तिकल्पने गौरवमित्यत आह—पुष्पवन्तपदे

(१) अत्र कृष्णकान्तमतेन 'अनुभवविरोधादि'ति पाठो द्रष्टव्यः ।

गत्वाक्रियात्वाभ्यां गमधातोरेकशक्तिस्वीकारेऽपि न क्षतिः । इयांस्तु विशेषो—यत्तत्र सूरशशिनोर्मिथो नान्वयः, प्रकृते तु संयोगक्रिययोस्तथेति, तथा च 'ग्रामं गच्छती'त्यत्र द्वितीयाया आधेयत्वं प्रतियोगित्वं वार्थस्तेन तदन्वितस्य संयोगस्य क्रियायामन्वयात् ग्रामवृत्तिस्तत्प्रतियोगिको वा यः संयोगस्तद्विशिष्टक्रियावानित्याकारकस्तत्र बोधः । 'तरुं त्यजती'त्यत्राप्याधेयत्वमवधित्वं वा द्वितीयार्थस्तेन तदन्वितस्य धात्वर्थविभागस्य धात्वर्थान्तरे क्रियायामन्वयात् तरुवृत्तिस्तदवधिको वा यो विभागस्तद्विशिष्टक्रियावानित्याकारको बोधः । संयोगादिवैशिष्ट्यञ्च जनकत्वस्वाश्रयवृत्तित्वोभयसम्बन्धेनैव प्रागिव ग्राह्यमतो नातिप्रसङ्गः । सकर्मकत्वमपि धातोः स्वार्थफलावच्छिन्नस्वार्थक्रियान्वयबोधकत्वम्, 'जानाती'त्यादौ सकर्मकत्वव्यवहारो भाक्त इत्याहुः ।

'तण्डुलं पचती'त्यत्र रूपादिपरावृत्तिफलकतेजःसंयोगावच्छिन्नक्रिया

---

कृष्णकान्तीटीका ।

चेति । न क्षतिः—नैकमात्रे गमिप्रयोगः । कुत इत्याकांक्षायामाह—इयांस्त्विति । यत्—यस्मात्, तत्र—पुष्पवन्तपदप्रयोगस्थले, नान्वय इत्याकाङ्क्षाया विरहादित्यादिः । प्रकृते-गमधातुप्रयोगस्थले, तथेत्यस्य मिथ एव साकाङ्क्षत्वादित्यादिः । क्वचि'द्यत्तत्रे'ति प्रथमान्तयच्छब्दप्रयोगः, स च प्रामादिकः, तुशब्दस्य हेत्वर्थकत्वे तु तादृशपाठे वयं न विवदामहे । उपसंहरति—तथा चेति । आधेयत्वमिति । प्रतियोगित्वसम्बन्धावच्छिन्नमित्यादिः । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वादाह—प्रतियोगित्वं वेति । शाब्दप्रकारमाह—तेनेति । आधेयत्वमित्यस्य अवधित्वसम्बन्धावच्छिन्नमित्यादिः । अवधित्वं वेति कल्पान्तरानुसरणबीजमुक्तमेव । नातिप्रसङ्ग इति । स्वप्रतियोगिकसंयोगाशून्यवृत्तिक्रियायाः स्वप्रतियोगिकविभागाशून्यवृत्तिक्रियायाश्च स्वस्मिन्नसत्त्वात् न 'स्वं स्वं गच्छति, त्यजती'त्यादिप्रयोगप्रसङ्ग इत्यर्थः । ननु धात्वर्थतावच्छेदकफलावच्छिन्नक्रियाबोधकत्वरूपसकर्मकत्वव्याघात इत्यतः प्रकारान्तरेण सकर्मकत्वं निर्वक्ति—सकर्मकत्वमपीति । अस्मदुक्तप्रकारस्यैव सम्यक्त्वात् किं व्युत्पत्तेः सङ्कोचेन मिथः साकांक्षत्वकल्पनेत्यस्वरसः आहुरित्यनेन सूचितः ।

रूपपरावृत्तिरारम्भकसंयोगनाशानन्तरसंयोगः, तज्जनकतेजःसंयोग इत्यर्थः, विक्लित्यवच्छिन्नसंयोग इति यावत् । ये तु—अवयवविभाग एव विक्लित्तिः, तदनुकूलव्यापारः पचेरर्थः, तदेकदेशेऽवयवे समवेतत्वसंसर्गेण तण्डुलस्यान्वय—इति वदन्ति, परमाणु

पचेरर्थः, तन्निविष्टे च निरुक्ते तेजःसंयोगे तण्डुलस्याधेयत्वेनान्वयः। 'परमाणुं पचती'त्यपि प्रयुज्यत एव, अत एव "स्वतन्त्राः परमाणवः पच्यन्ते" इति किरणावल्यामाचार्याः। 'ओदनं पचती'त्यादौ तु तण्डुलादावोदनादिपदस्य न लक्षणा, तत्र क्रियायामन्वितमनुकूलत्वं द्वितीयार्थ इत्यपि कश्चित्। 'तृणं छिनत्ती'त्यादावारम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया छिदेरर्थस्तन्निविष्टे च संयोगे विभागे वा स्वावयववृत्तित्वसम्बन्धेन तृणादेरन्वयः। 'पुष्पेण विष्णुं यजते' इत्यत्र प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागो यजेरर्थः, प्रीतौ विष्णोराधेयत्वेन द्रव्ये च पुष्पादेरभेदेनान्वयस्तेन विष्णुनिष्ठप्रीतिहेतुर्यो मन्त्रकरणकः पुष्पाभिन्नद्रव्यत्यागस्तद्वानित्याकारस्तत्र बोधः। स्वत्वध्वंसजनकेच्छापर्यवसन्नस्य त्यागस्यैकदेशस्वत्व एव वा पुष्पादेराधेयत्वेन तत्रान्वयः, तेन 'द्रव्येण विष्णुं यजते' इत्यादौ द्रव्यस्य द्रव्याभिन्नत्वेन शाब्दासत्त्वेऽपि न क्षतिः। 'पितरमाराधयति, उपास्ते, पूजयती'त्यादौ गौरवप्रयुक्तप्रीत्यवच्छिन्नाक्रिया धात्वर्थः, तन्निविष्टयोर्गौरवप्रीत्योः क्रमेण विषयत्वाधेयत्वाभ्यां पित्रादेरन्वयस्तेन पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया तद्वानित्येव तत्र बुद्धिः। गौरवं पुनराराध्यत्वावगाही ज्ञानप्रभेदो येयं भक्तिरित्युच्यते। पित्रादिसेवायाश्च मन्त्रकरणकत्वाभावान्न तत्र 'पितरं यजत' इत्यादिकः प्रयोगः। 'परमात्मानमुपास्ते' इत्यादौ तु गौरवप्रयुक्तक्रियामात्रे धातोर्लक्षणा, नातः परमेशितुः प्रीतिविरहादयोग्यत्वापत्तिः। 'घृतं जुहोती'त्यादौ वह्न्यधिकरणकपतनाव

---

कृष्णकान्तीटीका।

पचतीति प्रयोगमपि स्वीकुर्वन्ति, वाग्भंग्या तादृशप्रयोगस्वीकारेण तन्मतं दूषयति परमाणुमित्यादिना। तादृशप्रयोगोऽपि नापसिद्धान्त इत्यावेदनायाचार्यसंवादमव्याह अत एवेति। ओदनपदस्य तण्डुलादौ लक्षणां विनापि ओदनं पचतीति प्रयोगमुपपादयतां मतमाह तत्रेति (ओदनमिति?)। तथा च ओदनानुकूलविक्लित्यवच्छिन्नव्यापारवानिति तत्र बोधः। कश्चिदित्यस्वरससूचनाय, स च गङ्गायां घोष इत्यादिस्थलेऽपि लक्षणानुपपत्तिरूपः, तत्रापि सम्बन्धविशेषेण गङ्गापदस्यान्वयसम्भवादिति। स्वावयववृत्तित्वसम्बन्धेनेति। तथा च परमाणुं छिनत्तीति न प्रयोग इति भावः। शाब्दासत्त्वेऽपीति। उद्देश्यतावच्छेदकविधेयतावच्छेदकयोरैक्येन निराका-

च्छिन्नमन्त्रकरणकक्रिया हुधातोरर्थः, प्रोक्ते च पतने घृतस्याधेयत्वेनान्वयः, तेनाग्न्यधिकरणकस्य घृतवृत्तिपतनस्यानुकूलमन्त्रकरणकक्रियावानित्येव तत्र बोधः । तादृशी च क्रिया सघृतस्य करादेः प्रसारणन्युब्जीकरणादिरेव । अत एव घृतादेः परित्यागित्वविरहादृत्विगादेर्न यष्टृत्वं किन्तु होतृत्वमेव । 'वह्नौ जुहोती'त्यत्र सप्तम्यन्तस्यार्थो न धात्वर्थनिविष्टे पतनेऽन्वेति, वह्निवृत्तित्वविशिष्टपतने तद्वृत्तित्वस्यान्वये निराकाङ्क्षतापत्तेः, परन्तु तदवच्छिन्नक्रियायामेव । प्रतिमादौ घृतादिस्नपनं मन्त्रकरणकमपि नाग्न्यधिकरणकं, वह्नौ घृतस्य प्रक्षेपमात्रमग्न्यधिकरणकं तत्पतनानुकूलमपि न मन्त्रकरणकमतस्तदुभयं न होमः । प्राजापत्येऽपि होमे मानस एव मन्त्रः करणम् । यद्वा वह्निसंयोगावच्छिन्नपतनानुकूलमन्त्रकरणकक्रियैव जुहोत्यर्थः, तेन 'घृतं जुहोती'त्यत्र वह्निसंयोगजनकं यद् घृतस्य पतनं तदनुकूलमन्त्रकरणकक्रियाविशेषवानित्याकारको बोधः । न चैवं परम्परया हुधात्वर्थतावच्छेदकीभूतसंयोगात्मकफलशालित्वेन वह्न्यादेस्तदर्थकर्मतया 'वह्निं जुहोती'त्यपि प्रयोगापत्तिः, साक्षाद्धात्वर्थतावच्छेदकीभूतस्यैव फलस्यान्वयिनः कर्मत्वात् , अन्यथा 'गगने लोष्टमुत्क्षिपती'त्यादौ गगनादेरु

---

कृष्णकान्तोक्ता ।

इक्षत्वादित्यादिः। न क्षतिः—न तादृशप्रयोगानुपपत्तिः । तेनाग्न्यधिकरणकस्येति । पतनक्रियायाः स्वरूपसम्बन्धेन वह्निवृत्तित्वं समवायेन घृतवृत्तित्वं च बोध्यम् इत्यग्रे व्यक्ती भविष्यति । अत एव—एतादृशार्थकरणादेव । घृतादेरिति कर्मणि षष्ठी, तथा च घृतकर्मकत्यागित्वविरहादित्यर्थः । ऋत्विगादेः—पुरोहितादेः । अग्न्यधिकरणकत्वनिवेशव्यावृत्तिमाह प्रतिमादाविति । मन्त्रकरणकत्वनिवेशव्यावृत्तिमाह वह्नावित्यादि । न होमो—न हुधात्वर्थः । ननु प्रजापतये स्वाहेति मन्त्रभावनापूर्वकप्राजापत्यहोमे मन्त्रकरणकत्वाभावात् तत्र जुहोतीति प्रयोगो न स्यादित्यत आह प्राजापत्येऽपीति । पतनक्रियायाः स्वरूपसम्बन्धेन वह्निवृत्तित्वं न सकलानुभवसिद्धमित्यतः कल्पान्तरमाह यद्वेति । शङ्कते न चैवमिति । समाधत्ते साक्षादिति । धात्वर्थतावच्छेदकतानवच्छेदकफलान्वयिन एव कर्मत्वादित्यर्थः । साक्षात्त्वनिवेशनं कर्मत्वलक्षणमनुभवेन द्रढयति अन्यथेत्यादि, साक्षात्त्वस्य कर्मत्वाघटकत्वे । नन्वेवं धात्वर्थतावच्छेदकतावच्छेदकफलमेव नास्तीत्या-

रक्षेपणादिकर्मताया दुर्वारतापत्तेः, ऊर्द्ध्वसंयोगफलकक्रियावच्छिन्नव्यापारस्यैवोत्क्षेपणत्वात। न चोत्क्षेपणत्वादिकं जातिरेव तत्र धात्वर्थतावच्छेदकम्, प्रवेशनत्वादिना सङ्करेण तस्य जातित्वायोगात् लोष्टादेस्तत्कर्मत्वाप्रसङ्गाच्च। अत एव परम्परया दुहाद्यर्थतावच्छेदकीभूतबहिःक्षरणशालित्वेन पयःप्रभृतेस्तत्कर्मत्वसम्पत्त्यर्थं "अकथितञ्चेति" ( १।४।५१ ) सूत्रान्तरस्य प्रणयनमपि पाणिनः सङ्गच्छते।

'धनं प्रतिगृह्णाती'त्यत्र पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः प्रतिग्रह इति फलीभूतस्वत्ववत्तया धनस्य कर्मत्वम्। विक्रयादेर्दानविशेषत्वेऽपि न तस्य पुण्यजनकत्वमस्तल्लब्धस्य स्वीकारो न प्रतिग्रहः। 'ग्रामं क्रीणाती'त्यत्र मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः, स्वत्वजनकं मूल्यदानमेव वा क्रयः, तत्फले च स्वत्वे ग्रामस्याधेयत्वेनान्वयः, तेन ग्रामनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान्, ग्रामनिष्ठं यत् स्वत्वं तदनुकूलमूल्यदाता वेति तत्र बोधः। 'ग्रामं विक्रीणाती'त्यत्र मूल्यग्रहणजन्यस्य परस्वत्वस्यानुकूलत्यागः, परस्वत्वजनकमूल्यग्रहणमेव वा विक्रयः, तेन ग्रामनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलो यो ग्रामस्य त्यागस्तद्वान्, ग्रामनिष्ठं यत्परस्वत्वं तदनुकूलमूल्यग्रहणवानिति वा तत्र बोधः। मूल्यञ्च पणपुराणादिकमेव राजनिर्दिष्टं न तु द्रव्यमात्रम्, तेन तिलादीन् दत्त्वा माषादीनां विनिमये विप्राणां तिलविक्रयादिदोषस्यानवकाश इत्युक्तमेव(१)। 'नरकं पतती'त्यत्र भोगावच्छिन्नं पातित्यमेव पतेरर्थः,

कृष्णकान्तीटीका।

शङ्कायामाह ऊर्ध्वसंयोगेत्यादि। शङ्कते न चेति। सङ्करेणेति। गगनाक्षेपणे च न प्रवेशनत्वं, भूतत्वादिप्रवेशने च नोत्क्षेपणत्वम्, एकस्मिन्नूर्ध्वमूर्त्तप्रवेशने च द्वयोः समावेशादिति भावः। नानाजातिस्वीकारे साङ्कर्याभावादाह लोष्टादेरिति। साक्षात्त्वस्य कर्मत्वघटकत्वे युक्त्यन्तरमप्याह अत एवेत्यादि। साक्षात्त्वस्य कर्मत्वघटकत्वादेवेत्यर्थः। सङ्गच्छत इति। अन्यथा सामान्यसूत्रेणैव पयःप्रभृतेः कर्मत्वोपपत्तौ सूत्रान्तरप्रणयनमनर्थकं स्यादिति भावः।

भोगावच्छिन्नमिति। भोगः—साक्षात्कारः। दुःखविशेषश्च नरकपदार्थः।

(१) सम्प्रदानकारकव्याख्याया( पृ० ३०९ )मित्यर्थः।

तेन नरकभोगानुकूलपातित्यवानित्याकारकस्तत्र बोधः । 'नरकपतित' इति द्वितीयातत्पुरुषोदाहरणमपि वृत्तिकारस्य एतदभिप्रायकमेव, पतनक्रियायास्तथात्वे तु 'नरके पतती'त्यादिरेव युक्तः प्रयोगः, 'स्वर्गं गच्छती'त्यादौ स्वर्गादिपदस्येव प्रकृते नरकपदस्यापि तद्देशपरत्वात् । 'धनं लभते, प्राप्नोती'त्यादौ स्वत्वावच्छिन्नो व्यापारो धात्वर्थः, तन्निविष्टे स्वत्वे धनादेराधेयत्वेनान्वयः ॥ ७३ ॥

ननु यगन्तधात्वर्थविशेष्यतापन्नास्तिङर्थो यदि कर्मत्वं तदा दुहादेर्मुख्यकर्मण्यव्याप्तिः, 'गोपेन गौः पयो दुह्यत' इत्यादौ गोपकर्तृकव्यापारजन्यं यत् पयःकर्मकमोचनं तद्वती गौरित्येवमन्वये मोचनबहिःक्षरणयोर्द्वयोरेव दुहधात्वर्थतावच्छेदकफलत्वेऽपि गौणं यत् मोचनरूपं तस्यैव कर्म तिङाद्यैर्बोधनात् "गौणं कर्म दुहादिभ्यस्तिङाद्यैरभिधीयते" इति व्युत्पत्तेरतः प्रकारान्तरेण कर्मत्वं निर्वक्ति —

**यस्य धातोर्यदर्थे यः प्रकारीभूय भासते ।**
**द्वितीयया स्मारितोऽर्थस्तद्वा तत्कर्मनोच्यते ॥७४॥**

---

कृष्णकान्तीटीका ।

तेनेति । विजातीयदुःखसाक्षात्कारानुकूलदुरदृष्टवानित्यर्थः । पतधातोरेतदर्थकत्वे वृत्तिकारस्य संवादमाह नरकपतित इति । वृत्तिकारस्य—कलापवृत्तिकारस्य । एतदभिप्रायकमिति । पतधातोरेतदर्थकत्वाभिप्रायकमित्यर्थः । पतनक्रियायाः—गुरुत्वजन्यतावच्छेदकपतनत्वजात्यवच्छिन्नक्रियाया इत्यर्थः । तथात्वे—पतधातोरर्थत्वे । ननु भोगावच्छिन्नपातित्यरूपनरकपदार्थस्य पतनक्रियाधिकरणत्वासम्भवात् कथं तादृशप्रयोगो युक्त इत्यत आह स्वर्गमिति । स्वर्गादिपदस्येवेति । यथा स्वर्गपदस्य भोगावच्छिन्नपुण्यबोधकत्वेऽपि स्वर्गं गच्छतीत्यादौ यद्देशवृत्तित्वावच्छेदेन पुण्यभोक्तृत्वं तद्देशपरत्वं, तथा नरकपदस्य दुरितविशेषवाचकत्वेऽपि यद्देशवृत्तित्वावच्छेदेन दुरितभोक्तृत्वं तद्देशपरत्वादित्यर्थः ॥ ७३ ॥

कर्मत्वलक्षणान्तरप्रतिपादककारिकावतरणिकामाह नन्वित्यादिना । अव्याप्तिरिति । दुहादेर्मुख्यकर्मणस्तिङाऽप्रतिपादनादिति भावः । कुत इत्याकाङ्क्षायामाह गोपेनेत्यादि । मोचनं क्षरणानुकूलव्यापारः, क्षरणञ्च बहिःसंयोगः, तथा च गोपकर्तृकव्यापारजन्यो यः पयोनिष्ठबहिःसंयोगानुकूलव्यापारस्तद्वती गौरित्यन्वयबोध इति भावः । तत्र च प्राचीनसंवादमाह गौणं कर्मेत्यादि । न च गगने

यद्धातोर्यादृशार्थे द्वितीयया यादृशः स्वार्थोऽनुभाव्यते तद्धात्वर्थतादृशक्रियायां तत्कर्मत्वम्(१)। तच्च 'गां दोग्धि पय' इत्यादिप्रयोगात् पयःप्रभृतेरप्यक्षतम्। 'पाकं कुरुते' इत्यादौ यत्न प्रकारीभूतमपि विषयत्वं न यतेरर्थः। 'भवते ग्राममि'त्यादौ भूधात्वर्थे प्राप्तौ तथाभूतमपि संयोगित्वादिकं न तदर्थोत्पत्तौ प्रकारः। 'चौरं रुजन्, पयः परिष्कुर्वन्नि'त्यादावेव रुजादिधात्वर्थहिंसादेर्द्वितीयार्थकर्मतायां विशेष्यत्वं सुलभं, शतृशानजादेर्निष्ठादिगणान्तर्गतत्वेन तदन्तधातोः कर्मणि षष्ठ्याः प्रतिषिद्धत्वात्।

कृष्णकान्तीटीका।

लोष्टमुत्क्षिपतीत्यादौ गगनादेः कर्मत्ववारणाय तल्लक्षणे साक्षाद्धात्वर्थतावच्छेदकफलशालित्वस्यैव निवेशितत्वात् कथं पयसो दुहधात्वर्थकर्मत्वं, तन्निष्ठक्षरणस्य साक्षाद्धात्वर्थतानवच्छेदकत्वादिति वाच्यम्। क्रियात्वेन कर्मलक्षणत्वस्य नानात्वात् दुहादिद्विकर्मकधात्वर्थनिरूपितकर्मत्वलक्षणे तादृशविशेषणस्यानुपादेयत्वात्, अन्यथा द्विकर्मकत्वानुपपत्तेः, कर्मणः प्राधान्यं गौणत्वं चाग्रे व्यक्तीभविष्यति।

विवृणोति यद्धातोरित्यादि। तथा च यद्धातूपस्थाप्ययद्धर्मावच्छिन्नविशेष्यकयादृशार्थप्रकारकशाब्दबोधजनिका द्वितीयाविभक्तिः, तद्धर्मवत्त्वं तादृशधात्वर्थनिरूपितकर्मत्वमिति पर्यवसितार्थः। तच्च-तादृशकर्मत्वञ्च। यद्धातूपस्थाप्य इत्यस्य व्यावृत्तिमाह पाकमित्यादि। विषयत्वमित्यस्य द्वितीयार्थ इत्यादिः। न यतेरर्थ इति। तथा च तत्र तादृशविषयत्वस्य यतधात्वर्थनिरूपितकर्मत्वापत्तिवारणाय तदिति भावः। यद्यपि कृतेर्यतधातुजन्योपस्थितिविषयत्वस्य सत्त्वात् तन्निवेशेऽपि तद्वारणासम्भवः, तथापि यद्धातुजन्योपस्थितिसहकारेण तादृशबोधजनकत्वं निविष्टमिति। यादृशार्थं इत्यस्य व्यावृत्तिमाह भवते ग्राममित्यादि। प्राप्तौ—संयोगानुकूलव्यापारे। तथाभूतं—प्रकारीभूतम्। प्रकार इति। तथा च तत्र तादृशसंयोगस्योत्पत्तिनिरूपितकर्मत्वापत्तिवारणाय तदिति भावः। भूधातोः कालादिभेदेन भिन्नत्वेऽपि धातुभेदेन लक्षणभेदवारणाय यादृशत्वेन धातोर्निवेशनीयत्वादिति भावः। ननु रुजादिधातुयोगे षष्ठीविधानात् तत्कर्मत्वे उक्तलक्षणेऽव्याप्तिः, ता शार्थस्य तत्र द्वितीयाविभक्त्याऽप्रतिपादनादित्यत आह—चौरं रुजन्नित्यादि। सुलभमिति। तथा च तादृशप्रयोगस्थलीयहिंसादिनिरूपितप्रकारत्वमादायाधेयत्वस्य प्राणवियोगावच्छिन्नव्यापाररूपहिंसानिरूपितकर्मत्वलक्षणसमन्वय इति भावः। तत्र कथं न षष्ठीत्याकाङ्क्षायामाह शतृशानजादेरिति। प्रतिषिद्धत्वादिति। "न निष्ठादिष्वि"तिसूत्रेणेत्यादिः। अक्षान् दी-

(१) अत्र 'अकथितं चे'ति (१।४।५१) पा० सूत्रं द्रष्टव्यम्।

दिवः करणस्य कर्मत्वोपदेशात् 'अक्षान् दीव्यती'त्यत्र द्वितीयार्थः करणत्वमपि गौणं कर्मत्वमेव, अत एव 'अक्षा दीव्यन्ते, द्यूता वा' इत्यादौ क्रीडाकरणतायामेव विहितास्तिङादिकर्मप्रत्ययाः । दुहादयस्तु फलावच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव द्विकर्मकाः, तेन 'गां पयो दोग्धि गोप' इत्यत्र दुहेर्मोचनानुकूलव्यापारोऽर्थ इति तत्रत्यमोचने गोराधेयत्वेन पयसः कर्मत्वेनान्वयात् पयःकर्मताकं यद्गोवृत्तिमोचनं तदनुकूलव्यापारवान् इत्याकारकबोधः, तत्र बहिःक्षरणावच्छिन्नव्यापारो मोचनं, तदनुकूलव्यापारो दोहनमतो धात्वर्थतावच्छेदकीभूतं बहिःक्षरणरूपं फलमादाय पयसो मोचनात्मकञ्च तदादाय गोः कर्मत्वमवसेयम् । एवं 'शिष्यं धर्मं वदति वक्ति ब्रूते उपदिशत्याचष्टे' इत्यादौ प्रतिपत्त्यवच्छिन्नव्यापारो वदप्रभृतिधात्वर्थ इति तान्निविष्टायां प्रतिपत्तौ शिष्यस्याधेयत्वेन धर्मस्य च विषयत्वेनान्वयाद्धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलव्यापारवान् इत्याकारको बोधः, तादृशव्यापारो 'धर्मः सेव्यतामि'त्यादिको गुर्वाद्यभिलापः । 'शत्रुं शतानि जयती'त्यत्र ग्रहणावच्छिन्नपराभवो जयत्यर्थः, तथा च शतस्य ग्रहणानुकूलो यः शत्रुकर्मकः पराभवस्तत्कर्त्तेत्येवं तत्र बोधः, पराभवश्च-तिरस्कारः । 'प्रजाः शतं दण्डयती'त्यत्र ग्रहणावच्छिन्नशासनं दण्ड्यर्थः, तथा च शतग्रहणानुकूलं यत् प्रजानां शासनं तत्कर्त्तेत्येवं तत्र बोधः, शासनं—नियन्त्रणम् । 'सुधां समुद्रं मथ्नाती'त्यत्र उत्थानावच्छिन्नोन्मन्थनं धात्वर्थः, तेन सुधोत्थानानुकूलं यत्समुद्रस्योन्मन्थनं तत्कर्त्तेत्यर्थः, उन्मन्थनमालोडनम् । 'पान्थं पन्थानं पृच्छती'त्यत्र अभिधानावच्छिन्नव्यापारः पृच्छा, तथा च पान्थनिष्ठं यत्पथोऽभिधानं तदनुकूलव्यापारवानित्येवं तत्र बोधः । अभिधानमिहाभिलापस्तदनुकूलव्यापारश्च 'केन पथा गन्तव्यमि'त्यादिप्रश्नः । 'नृपमर्थं

---

कृष्णकान्तीटीका ।

व्यतीत्यादौ करणत्वेऽतिव्याप्तिमिष्टापत्त्या परिहरति अक्षानित्यादि । गौणमिति । करणत्वस्य द्वितीयाऽवाच्यत्वादिति भावः ।

प्रार्थयते, याचते, भिक्षते' इत्यादौ दानाय प्रेरणं धात्वर्थः, तथा च नृपनिष्ठं यदर्थस्य दानं तत्प्रेरणवानित्यर्थः, प्रेरणा—प्रवर्त्तना, सा च 'दीयतामि'त्याद्यभिलापरूपा। 'ग्राममजां वहति नयती'त्यादौ गत्यवच्छिन्नव्यापारो वहिप्रभृतेरर्थः, तेन ग्रामकर्मकं यदजानिष्ठं गमनं तदनुकूलव्यापारवानित्येव तत्र बोधः, तादृशव्यापारः प्रकृते गलरज्ज्वाकर्षणादिः। 'पुत्रं धर्ममनुशास्ती'त्यादावनुशासनं देशनया प्रवर्त्तना, तथा च पुत्रनिष्ठस्य देशनया प्रवर्त्तनस्यानुकूलव्यापारवानित्यर्थः, तथाविधो व्यापारः 'सन्ध्यां विधेहि, समिधमाधेही'त्याद्युपदेशरूपः। 'शाखां ग्राममाकर्षती'-इत्यत्र गतिहेतुविकर्षणं धात्वर्थः, तेन ग्रामकर्मकं यच्छाखागमनं तदनुकूलविकर्षणवानित्यर्थः, विकर्षणं—नम्रीकरणम्। 'गामवरुणद्धि व्रजम्'-इत्यत्र गतिप्रतिरोधहेत्वावरणमवरुधेरर्थः, तेन गोगतिप्रतिरोधस्यानुकूलं यद्व्रजस्यावरणं तत्कृतिमानित्यन्वयः। 'वृक्षं फलानि अवचिनोति'इत्यत्र छिदाहेतुविघट्टनं चिनोतेरर्थः, तथा च फलकर्मकच्छिदानुकूलं यत् वृक्षस्य विघट्टनं चालनं तद्वानित्येवं तत्र बोधः। उत्क्षिपत्यादिकस्तु धातुः सफलकक्रियाहेतुव्यापारवाच्यपि न दुहादिः। यदुक्तमभियुक्तैः—

दुहि-वदत्यर्थ-जि-दण्डि मन्थि पृच्छार्थनार्थौ नयनार्थशास्।
कृषीरुधिश्चिञ्च तथार्थवृत्तौ द्विकर्मकोऽयं कथितो दुहादिः॥

तथार्थवृत्तौ—निरुक्ततत्तदर्थवृत्तौ।

गतिभोजनधीप्राप्तिशब्दार्थाण्यधातुषु।
कर्तृत्वं हेतुविहितण्यन्तेष्वेतेषु कर्मता॥

इत्यादिशाब्दिकस्मृते'र्गोपान् गमयति, द्विजान् भोजयति, गुरूननुज्ञापयति, शिष्यान् पाठयति, सुतान् स्नापयती'त्यादौ मूलधात्वर्थस्य कर्तृत्वलक्षणं गौणमेव कर्मत्वं द्वितीयार्थः, तथा च गोपकर्तृकगत्यनुकूलव्यापारवानित्याकारस्तत्र बोधः।

'पुत्रान् प्रीतिं प्रापयती'त्यादौ च प्राप्तिर्न गतिः। 'चैत्रो ग्रामं

---

कृष्णकान्तीटीका।

प्राप्त्यर्थकधातोः स्वातन्त्र्येणोपादानबीजमाह पुत्रान् प्रीतिं प्रापयतीति।

भावयते, ग्रामस्य भावक' इत्यादौ प्राप्त्यर्थस्य भवतेः स्वार्थविहितण्यन्तस्य कर्त्तुः कर्मतानिरासाय णिचो हेतुविहितत्वमनुसृतम् ।

हिंसायामेव भुज्यर्थभक्षेरेवं वहेरपि ।
ण्यन्तस्य कर्त्तुः कर्मत्वं क्रियया वाहनं यदि ॥

इति स्मरणा'द्भक्षयति मूषिकान् मार्जारं, भक्षयति लतां छागमि'त्यादावेव भक्षेः कर्त्तरि कर्मता, न तु 'भक्षयत्योदनं भृत्येने'त्यादौ । 'भक्षयति प्रजाः परिजनैः कुनृप' इत्यादौ तु न भोजनं भक्षेरर्थः । 'वाहयति रथमश्वान् सारथिः, वाहयति गोणीं वृषभान् वाहिक' इत्यादाविव 'वाहयति भारं भृत्येन धनिक' इत्यादौ स्वचेष्टया वाहको न धनिकादिः ।

हृक्रोस्तु कर्तुः कर्मत्वं ण्यन्तत्वे स्याद्विभाषया ।
अभिवादिदृशोरेवमात्मनेपद इष्यते(१) ॥

इत्यनुशिष्टेः 'हारयति, कारयति वा पटं कुविन्देने'त्यत्रेव कुविन्दमित्यतोऽपि कुविन्दस्य गौणकर्मत्वावगमः । तथा 'अभ्यवहारयत्योदनं तनयं तनयेन वा जननी, विकारयति चित्तं चित्तेन वा वसन्त' इत्यपि प्रमाणम्, परन्तु पूर्वयोरप्राप्तावेतयोस्तु प्राप्तावेव कर्मत्वस्य वैकल्पिको विधिः । 'गुरुमभिवादयते सुतं सुतेन वा गृहस्थः, ध्रुवं दर्शयते भार्य्यां भार्य्यया वा पतिरि'त्यादौ तु दृशः प्राप्तावभिवादयतेस्त्वप्राप्तौ सः । अनात्मनेपदस्थले तु 'पन्थानं पथिकं दर्शयति, पुत्रेण मित्रमभिवादयती'त्यादौ यथाप्राप्तमेव कर्मत्वादिकम् । 'छात्रेणार्थं निर्णाययति, चैत्रेण ओदनं खादयति, शङ्खेन शब्दाययति, दारैः क्रन्दयति, पुत्रेण मित्रमाह्वाययति' इत्यादौ तु नीप्रभृतेर्बुद्ध्याद्यर्थकत्वेन तत्कर्त्तुः कर्मत्वं प्रसक्तमपि—

न नी खाद्यदि-शब्दाय क्रन्दि ह्वयतिषु क्वचित् ।

---

कृष्णकान्तटीका ।

हिंसायामित्यस्य व्यावृत्तिमाह न तु भक्षयत्योदनमिति । परन्त्विति । पूर्वयोर्हरणार्थकृ—यत्नार्थकयोः हृक्रोरित्यर्थः । एतयोर्भोजनार्थकहृ—विकारार्थकाकर्मकक्रोरित्यर्थः ।

---

(१) अत्र 'हृक्रोरन्यतरस्याम्' (१।४।५३) इति पा० सूत्रं 'अभिवादिदृशोरात्मनेपदे वेति वाच्यम्' इति वार्तिकं च द्रष्टव्यम् ।

हेतुण्यन्तेषु कर्तृत्वं कर्मता स्यात्तिङादिषु ॥

इति भर्तृहरिवचनान्निषिध्यते । अत्र च क्वचित्तिङादिष्विति कथनात् 'चैत्रेणार्थं निर्णाय्यमानस्तिष्ठति, मैत्रेण पूगं खाद्यमानो ब्रूते' इत्यादौ कर्मविहितस्य शानजादेर्नानुपपत्तिरिति वदन्ति ।

('सुखं प्राप्नोती'त्यादौ प्राप्तिरुत्पत्तिः, परम्परया तदाश्रयत्वञ्च तिङर्थः । 'घटं जानाती'त्यत्र विषयत्वं विषयिता वा द्वितीयार्थः । दिवाकरस्तु "संस्कारावच्छिन्नमेव ज्ञानं जानात्यर्थ इत्युक्तस्थले मुख्यमेव कर्मत्वं घटादेरि"त्याह, तन्मन्दम् , ज्ञानमित्यादितः संस्काराप्रतीतेर्लाघवेन ज्ञानत्वस्यैव जानात्यर्थतावच्छेदकत्वात् , घटस्योपेक्षात्मकज्ञाने निर्विकल्पके वा घटं जानातीतिप्रयोगस्याप्रसङ्गाच्च । अत एव "प्राकट्यावच्छि-

---

कृष्णकान्तीटीका ।

सुखं प्राप्नोतीत्यादौ भोगानुकूलव्यापारो धात्वर्थः, तत्त्वावच्छेदकभोगाश्रयत्वात् सुखादेर्मुख्यकर्मत्वमिति वदतां केषाञ्चिन्मतमाक्षिपन्नाह सुखं प्राप्नोतीत्यादाविति । प्राप्तिः प्रपूर्वाऽऽपधात्वर्थः, उत्पत्तिराद्यक्षणसम्बन्धः । साक्षात्सम्बन्धेन तदाश्रयत्वस्य सुखिन्यसत्त्वादाह परम्परयेति । स्वाश्रयाश्रयत्वरूपपरम्परयेत्यर्थः । तिङर्थं इति । तथव साकांक्षत्वादिति शेषः । अतः सुखं प्राप्नोति सुखमिति प्रयोगस्य नापत्तिः । तथा सुखभोक्ता इतिवत् सुखप्रापक इति समानापत्तिरेव तन्मतपरित्यागबीजमिति भावः । एवं सुखोत्पत्तिक्षणे तादृशप्रयोगानुपपत्तिरपि तथा(१) । विषयिता वेति । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वास्वीकर्तृनव्यमतेन ज्ञाप्रभृतेर्मुख्यकर्मकत्ववादिदिवाकरभट्टमतमुपन्यस्य निरस्यति दिवाकरस्त्विति । एवकारेण संस्कारज्ञानयोः खण्डशक्त्यर्थ्यवच्छेदः । उक्तस्थले—सुखं प्राप्नोतीत्यादौ । दूषयति तन्मन्दमिति । संस्काराप्रतीतेरिति, आनुभविकत्वादिति शेषः । अनुभवे विप्रतिपन्नं प्रत्याह लाघवेनेति । अधिकावच्छेदककल्पनापेक्षयेत्यादिः । ननु ज्ञाधातोरकर्मकत्वापत्तिभयेनैव संस्कारस्य शक्यतावच्छेदकत्वमावश्यकं प्रामाणिकगौरवस्यादोषत्वादित्यतो दोषान्तरमाह—घटस्येत्यादि । तथाचागत्या सकर्मकत्वमपि पारिभाषिकमत्र वाच्यमिति भावः । ज्ञान इति सप्तम्यर्थो विषयत्वं, तच्च प्रयोगान्वयि । अप्रसङ्गात्—अभावप्रसङ्गात् । उपेक्षायाः स्वातन्त्र्येण संस्कारादिकं प्रति प्रतिबन्धकत्वे तज्ज्ञानस्यापि संस्कारस्वरूपयोग्यत्वादाह निर्विकल्पके वेति । संस्कारजनकज्ञानस्य समानप्रकारकत्वादिनियमस्य सर्वसिद्धत्वा-

---

(१) मतत्यागबीजम् ।

ज्ज्ञानमेव तत्र धात्वर्थ इति तत्त्वावच्छेदकीभूतज्ञाततावत्त्वादेव घटादेर्ज्ञानकर्मते"ति भट्टमतमप्यनादेयम्, ज्ञानविषयतातिरिक्तायां ज्ञाततायां मानाभावात्, अन्यथा ज्ञाततायाः इव कृततादेरप्यतिरिक्तायाः कल्पनापत्तेः(१)। 'वह्निमनुमिनोम्यापादयामी'त्यादौ विधेयत्वनामको विषयताप्रभेद एव द्वितीयार्थः, 'पर्वतो वह्निमानित्या'द्यनुमितावापत्तौ वा 'पर्वतमनुमिनोमीत्या'द्यप्रयोगात्। विषयतावच्छेदकत्वाभिन्नप्रकारत्वमेव तत्र द्वितीयार्थ इत्यपि वदन्ति।)

'घटं पश्यति, शब्दं शृणोत्यनुभवती'त्यादौ दर्शनाद्यर्थकधातुयोगे साक्षात्कारनिरूपितमेव विषयत्वं कर्मत्वं, घटादेरुपनीतचाक्षुषादौ तादृशाप्रयोगात्। 'आकाशं न पश्यती'त्यादौ पुनरन्वयो वक्ष्यते। 'तण्डुलपाकं करोती'त्यत्र चिकीर्षाजन्यतावच्छेदकः क्रियायामुद्देश्यताख्यो विषयताविशेष एव द्वितीयार्थः कृतौ भासते, तेन 'तण्डुलं करोती'त्यादिको न प्रयोगः। पाकदशाया'मोदनं करोती'त्यादौ च द्वितीयायामनुकूलत्वे

कृष्णकान्तीटीका।

दिति भावः। तुतादितौतातिक(?) भट्टमतं दूषयति अत एवेति। वक्ष्यमाणदोषादेवेत्यर्थः। तत्र—घटं जानातीत्यत्र। तत्त्वं—धात्वर्थत्वम्। ज्ञानविषयतारूपज्ञाततायाः सर्वसम्मतत्वादतिरिक्तायामित्यन्तम्। मानाभावादिति। ज्ञातो घट इत्यादिप्रतीतेर्ज्ञानविषयत्वावगाहित्वादिति। ननु विनिगमनाविरहो(२)ऽतिरिक्तपदार्थकल्पनागौरवस्य तु सकर्मकत्वान्यथानुपपत्तिप्रमाणसिद्धत्वादित्यत आह—अन्यथेति। मुख्यसकर्मकत्वानुपपत्तिप्रमाणसिद्धगौरवस्यादोषत्वे, कृततादेरपीत्यादिना अनुभूतत्वविशिष्टत्वादिपरिग्रहः। विषयताप्रभेद इति। तथाच विधेयतात्वं विषयतात्वव्याप्योऽतिरिक्तपदार्थ इति भावः। अतिरिक्तत्वे हेतुमाह—पर्वत इति। इत्यादीत्यादिपदात् ह्रदे धूमाभावः इत्याद्यनुमितिपरिग्रहः। अग्रे चादिपदात् ह्रदमनुमिनोमीत्याद्युपग्रहः, तथाच व्यावृत्तिच्छलेनैव विधेयत्वस्यातिरिक्तत्वं सप्रमाणीकृतमिति भावः। 'वदन्तो'त्यन्तं सुखं प्राप्नोतीत्यादि क्रोडपत्रम्॥ ७४॥

(१) अर्थेनैव विशेषो हि निराकारतया धियाम्।
क्रिययैव विशेषो हि व्यवहारेषु कर्मणाम्॥ इति न्यायकुसुमाञ्जलिस्थपञ्चमस्तबकीयचतुर्थकारिकाव्याख्यायामुदयनाचार्यैरप्येतत्स्थिरीकृतं तत्रैव द्रष्टव्यम्।

(२) ज्ञातता ज्ञानविषयत्वरूपाऽतिरिक्ता वेत्यत्र नियामकाभाव एव मानमिति शेषः।

लक्षणा, तण्डुलादिक्रयणकृतिस्तु नौदनादिजनिका प्रमाणाभावात् । वर्द्ध-मानस्तु "उक्तस्थले धातुना उत्पत्त्यनुकूला कृतिरुच्यत इति तत्रौदनस्य मुख्यमेव कर्मत्वमत एव यत्र कृतिमात्रं धात्वर्थस्तत्र न द्वितीया, यथा 'घटाय यतत' इत्यादावि"त्याह । तन्न, कृत्यादिपदाद् यत्नमात्रप्रतीत्या यत्नत्वावच्छिन्नस्यैव करोत्यर्थत्वात् ।

मीमांसामहार्णवे तु पाककृतौ तण्डुलादेरुपादानाविषयेव फलविष-यौदनादेरपि विषयत्वमुक्तम्, यदाह वत्सेश्वरः—

सिद्धं साध्यं फलञ्चेति प्रवृत्तेर्विषयस्त्रिधा ।
तत्र सिद्धमुपादानं, क्रिया साध्यं, फलं सुखम् ॥

इति । तथा च तन्मते तण्डुलपक्तृत्वदशाया'मोदनं करोती'त्या'दि-प्रयोगे फलत्वेन विषयतैव द्वितीयार्थः । 'मासं जीवति, क्रोशं स्वपिति, गोदोहं तिष्ठति, कुरून् क्रीडती'त्यादावधिकरणत्वरूपं गौणमेव कर्मत्वं सुपाऽनुभाव्यते,

(१)कालानामध्वमानानां क्रियाणां नीवृतामपि ।
आधारता ध्रौव्यधातोः कर्मता स्याद्विभाषया ॥

इति स्मृतेः । अत एव 'मासश्चैत्रेण जीव्यते, जीवित' इत्यादौ कर्मतार्थकातिङादयः, तथाच मासाधिकरणताकजीवनवांश्चैत्रः, चैत्रकर्तृ-कजीवनाधिकरणतावान् मास इत्यादिक्रमेण तत्र बोधः । 'सन्ध्यायां पचती'त्यादौ तु न ध्रौव्यस्य धातोरर्थेन योगः, किन्तु सकर्मकस्य । 'दिवसं सुप्यते, सुन्दरीभिः, क्रोशं तत्सेनया स्थितमि'त्यादौ तु द्विती-यया कालाध्वनोरभिव्याप्तिरेव बोध्यते, न त्वधिकरणत्वम् । नीवृत्–जन-पदः। 'शय्यामधिशेते(२), अध्यास्ते, अधितिष्ठती'त्यादावप्यधिकरणत्वमेव कर्मत्वं द्वितीयार्थः, तथैव 'शय्याधिशय्यते, अधिशयिते'त्यादौ कर्मतार्थ-कयोराख्यातकृतोः सम्भवात्, "ध्रौव्याणामधिशीङासस्थानां कर्मत्वमेव"

(१) अत्र 'कालाध्वनोरत्यन्तसंयोगे द्वितीयेति (२।३।५) पा० सूत्रम् ।
(२) अत्र 'अधिशीङ्स्थासां कर्म' (१।४।४६) 'उपान्वध्याङ्वसः' (१।४।४८) इति च पा० सूत्रं द्रष्टव्यम् ।

तदितिस्मरणात् तदाधारत्वम् । 'अत्राधिष्ठानं कुर्वि'त्यादौ त्वधिष्ठानस्याधारत्वं नैतस्य भासते किन्तु कृतः, तदलाभस्थले तु 'एतस्याधिष्ठानं कुर्वि'त्यादिकमेव प्रमाणम् । 'काशीमनुवसति, काश्यनुष्यते' इत्यादावप्यधिकरणत्वमेव द्वितीयादिभिः प्रत्याय्यते, अनूपाध्याङो वसतेराधारस्य कर्मतातिदेशात् । 'गृहेऽनुवस्ते' इत्यादौ तु वास्तिर्न वसतिः । 'शय्यामुपवसती'त्यादौ तूपवसतेर्निवासार्थकत्व एव तदाधारस्य कर्मत्वं तत्रैव तदनुशासनात् । अनशनार्थकत्वेऽधिकरणत्वमेव, अत एव 'गृहेऽप्युपवसेद्रङ्कः प्रान्तरेऽपि नृपः सुखी'त्यादिकः प्रयोगः ॥ ७४ ॥

कर्तृत्वकारकं लक्षयति—

लिङा विकरणाक्तस्य धातोरर्थस्तु यादृशः ।
स्वार्थे यादृशि बोध्यस्तत् कर्तृत्वं तदिहोच्यते ॥७५॥

सविकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थेऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं(१) कारकमित्यर्थः । कर्मत्वादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणाक्तेनेति न तत्र प्रसङ्गः । 'पचति जानाती'त्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकबुद्ध्यादेरन्वयः पचाद्युत्तरतिङा बोध्यत इति पाकस्य यत्नवत्त्वं ज्ञानस्याश्रयत्वम् , एवं 'नश्यती'त्यत्र नाशस्य प्रतियोगित्वम्, 'प्रतिबिम्बत' इत्यत्र आत्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्तृत्वम् । कर्तृशब्दस्तु अवयववृत्तिलभ्ये कृत्याश्रये यौगिक एव न तु शक्तः प्रकारान्तरालभ्यस्यैव शक्यत्वात्, निरुढलक्षणया शक्त्यैव वाऽऽश्रयस्य तृचा प्रत्यायनात् । 'घटस्य कर्त्रे'त्यादौ चानुकूलत्वं षष्ठ्यर्थः,

कृष्णकान्ताटीका ।

कर्तृत्वकारकावतरणिकामाह—कर्तृत्वकारकं लक्षयतीत्यादिना । सुगमत्वाल्लक्षणं न व्याख्यातम् । अनुकूलत्वं षष्ठ्यर्थ इति । कृत्यर्थकधातुयोगे उद्देश्यत्वा-

(१) तत्तत्क्रियानुकूलकृतिमत्त्वं तत्तत्क्रियाकर्तृत्वम् अनुकूलकृतिमत्त्वं वा कर्तृत्वमित्यन्ये । यत्तु—'स्वतन्त्रः कर्ता' इति पाणिनीयसूत्रानुसारेण कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वम्, सत्यन्ताच्च छेदसंयोगादिरूपव्यापारजनके कुठारादौ नातिव्याप्तिरिति, तन्न, ईश्वरप्रयोज्यानां संसारिणां तत्तत्क्रियास्वकर्तृतापत्तेरितीदमेवाग्रे वक्ष्यति तन्नेत्यादिना ।

फलस्य प्रायशः कृत्यविषयत्वात् । घटाद्युपभोगानुकूलकृतिश्च न घटाद्यनुकूला प्रमाणाभावात्, अतो न घटादिभोक्तुस्तत्कर्तृत्वप्रसङ्गः । "क्रियाश्रये कर्तृशब्दो रूढस्तेन रथादेर्गत्यादिकर्तृत्वमपि मुख्यमेवे"ति तु न युक्तम्, क्रिया हि नात्र स्पन्दश्चेतनस्य पाककर्तृत्वानुपपत्तेः प्रत्युत तण्डुलादेरेव तथात्वापत्तेः, नापि धात्वर्थमात्रम् तत एव, नापि स्पन्दानुकूलव्यापारः, चलनानुकूलव्यापारवतः कारकमात्रस्य चलनकर्तृत्वापत्तेः ॥७५॥

'अत्ति जुहोती'त्यादावप्यदादेरुत्तरं लुप्तस्यैव विकरणस्य प्रतिसन्धाने भोजनकर्तृत्वादेरवगम इति मतेनेदं, तदप्रतिसन्धानेऽपीति मते (१)त्वाह—

**यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते ।**
**लटा स्वार्थः स धात्वर्थः कर्तृता वा निगद्यते ॥७६॥**

यगन्तभिन्नधातूपस्थाप्ययादृशार्थप्रकारकयदर्थधार्मिकान्वयबोधं प्रति लटः सामर्थ्यं स एवार्थो धातूपस्थाप्यतदर्थस्य कर्तृत्वम् । 'पच्यत' इत्यादौ धातोरर्थवत्तया स्वार्थकर्मत्वं लटानुभाव्यमपि न यगन्तभिन्नस्य, 'पक्ष्यते तण्डुल' इत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थः कर्मत्वमनुभाव्यते न तद्विशेषेण लटेति तद्व्युदासः ॥ ७६ ॥

अथापादानत्वादिभेदेन षड्विधत्वमिवोक्तानुक्तत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदनुक्त्या न्यूनत्वमत आह—

**धात्वर्थस्य धर्मितया तिङाद्यैरनुभाव्यते ।**
**यत्तदुक्तं धर्मतया त्वनुक्तं कारकं भवेत् ॥७७॥**

धात्वर्थस्य विशेष्यतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वं, तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वम् । न तु धातुसाकाङ्क्षप्रत्ययस्या-

कृष्णकान्तीटीका ।

रूयविषयत्वमेव द्वितीयया प्रत्याय्यते । अन्यथा पाककर्तृत्वदशायां तण्डुलं करोतीति प्रयोगापत्तेरित्युक्तमेव । कृत्यविषयत्वात्–कृत्युद्देश्यत्वात्, स्वतः प्रयोज्य एवोद्देश्यत्वाख्यविषयत्वस्वीकारात् फलं मुख्यमित्युक्तेः ॥ ७५—७६ ॥

(१) क्रियाश्रयत्वं कर्तृत्वमिति वैयाकरणमत इत्यर्थः ।

भिधेयत्वमात्रमुक्तत्वं 'तण्डुलं पचति' इत्यादावपि कर्मत्वादेरुक्तत्वापत्तेः। 'पचति, पच्यते' इत्यादौ तिङा 'पाचकः, पच्यमान' इत्यादौ च कृता कर्तृत्वं कर्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते, तथा 'पचनं काष्ठं, दानीयो द्विजः, भीमो गजः, शयनं गृहमि'त्यादौ यथाक्रमं करणत्वादि व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। "सेवितुं साम्प्रतं विज्ञैर्गुरुः परुषवागपि" "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतमि(१)"त्यादौ निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम् ॥७७॥

धातुभेदेन कर्मत्वकारकस्योक्ततायां नियममाह—

**दुह्यादिभ्यः प्रत्ययेन मुख्यं कर्मत्वमुच्यते।**
**णिजन्तेभ्यः कर्तृताख्यं तदसत्त्वेऽन्यकर्मता ॥७८॥**

दुह्याद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते। तेन 'गौः पयो दुह्यते, दुग्धा वे'-त्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः। तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात्। वह्निप्रभृतेर्गत्यवच्छिन्नव्यापारः, कृषेश्च गत्यव-

---

कृष्णकान्तीटीका।

कर्मत्वादेरुक्तत्वापत्तेरिति। कर्मत्वस्यापि धातुसाकाङ्क्षप्रत्ययाभिधेयत्वात्, अस्मन्मते च तत्र धात्वर्थप्रकारककर्मत्वबोधाभावात् नापत्तिरिति भावः। यथाक्रमं करणत्वादि, कृधात्वर्थविशेष्यत्वेनानुभाव्यते इति योजना। आदिना सम्प्रदानत्वापादानत्वाधिकरणत्व-परिग्रहः। तथाच पचनमित्यत्र करणत्वं, दानीय इत्यत्र सम्प्रदानत्वं, भीम इत्यत्रापादानत्वं, शयनमित्यत्राधिकरणत्वं, यथाक्रममनुभाव्यत इति भावः। ननु पाचक इत्यादौ एकदेशान्वयभयेन धात्वर्थवत्तया कर्तृत्वान्वयासम्भवात् तत्र तस्योक्तत्वानुपपत्तिरित्यत आह—व्युत्पत्तीति। प्रत्ययं विनापि कर्मकारकस्योक्तत्वं दर्शयति-सेवितुमित्यादि। परुषवागपि-निष्ठुरवागपीत्यर्थः॥७७॥

कारिकापूर्वप्रतीकं विवृणोति दुह्याद्युत्तरप्रत्ययेनेत्यादि। मोचनस्य साक्षाद्धात्वर्थतावच्छेदकत्वं कुत इत्याकांक्षायामाह—मोचनावच्छिन्नेति। वह्निप्रभृतेरिति। प्रभृतिपदात् नीप्रभृतेः परिग्रहः। उदीच्यवाक्यमित्यस्य लिङ्गव्यत्ययेना-

---

(१) 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्' इति पूर्वार्द्धं कुमारसम्भवे द्रष्टव्यम्।

च्छिन्नविकर्षणं वाच्यम्, अतः साक्षात्तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलं न तु तद्घटकं संयोगादि, तथा च 'भारो भवनमुह्यते, नीयते' इत्यादौ 'शाखा ग्रामं कृष्यते' इत्यादौ च यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः, ग्रामकर्मकगत्यवच्छिन्नविकर्षणकर्मताश्रयः शाखेत्याकारकबोधयोरुक्तव्युत्पत्त्यैव सम्पत्तौ "दुहादेर्गौणकं कर्म नीवहादेः प्रधानक"मित्याद्युक्तिभेदेन विधिद्वयं शाब्दिकानामनादेयम्।

णिजन्तोत्तरं कर्मतावाचिप्रत्ययस्थले तु मूलधातोः कर्तृतायां कर्मत्वातिदेशसम्भवे तादृशमेव कर्मत्वं धात्वर्थस्य विशेष्यतया तिङाद्यैर्बोध्यते, यथा 'चैत्रो ग्रामं गम्यते, गमितो वे'त्यादौ ग्रामकर्मकस्य व्यापारजन्यगमनस्य कर्त्ता चैत्र इत्यादि। यत्र तु न तदतिदेशस्तत्र मूलधातोः कर्मत्वमेव तदर्थविशेष्यतया तैरुच्यते, यथा 'ओदनः पाच्यते, खाद्यते, वा भृत्येन भर्त्रे'त्यादौ, तत्र भर्तृकर्तृव्यापारजन्यस्य भृत्यकर्तृकपाकादेः कर्मतयौदनादिरेव बुध्यते। 'मैत्रेण पूगं खाद्यमानश्चैत्रो व्रजती'त्यादौ कर्मणि शानजादिप्रत्ययः प्राक् परिचिन्तितः॥ ७८॥

अथ 'भिद्यते, अभेदि वा कुशूलः स्वयमि'त्यादौ भेदाद्यनुकूलव्यापारवत्त्वरूपस्य तत्कर्तृत्वस्य कथं कुशूलादावन्वयः, भिदादेः परस्मै-

कृष्णकान्तटीका।

न्वयः(१)। विकर्षणमिति विकर्षणत्वं जातिविशेषः। संयोगादीति। गतिघटकसंयोगादीत्यर्थः, न साक्षाद्धात्वर्थतावच्छेदकमिति योजना। उक्तव्युत्पत्त्यैवेति। साक्षाद्धात्वर्थतावच्छेदकफलस्योक्तत्वाभिधानेनैव।

कारिकापरप्रतीकं व्याचष्टे णिजन्तोत्तरमिति। तादृशमेव-मूलधातोः कर्मत्वादिकमेव। इत्यादीति, बोध इति शेषः। तदसत्त्वे अन्यकर्मतेत्यस्यार्थमाह यत्रेति। न तदतिदेशः-मूलधातोः कर्मतायाः कर्मत्वातिदेशः। तैस्तिङाद्यैः, उच्यते-धात्वर्थविशेष्यतया बोध्यते। ननु कर्तृतायाः कर्मत्वातिदेशाभावस्थले कथं शानजादिना मूलधातोः कर्तुरुक्तत्वमित्याशङ्कां परिहरति मैत्रेण पूगमिति। पूगं-गुवाकम्। प्राक्परिचिन्तित इति। पूर्वोक्तभर्तृहरिकारिकायाम्। क्वचित्तिङादिष्विति कथनात् शानजादिषु ण्यन्तकर्तुः कर्मत्वं न निषिद्धमिति भावः॥ ७८॥

(१) व्यापार इत्यत्र वाच्य इति लिङ्गव्यत्ययेन न्वयः कर्तव्य इत्यर्थः।

पदित्वेन तदर्थधर्मितया कर्तृत्वबोधने पदान्तरस्यासामर्थ्यात्, यगिचोर्वि-गुणत्वाच्चेत्यत आह—

**एकक्रियाधर्मितया कर्तृताकर्मतोभयोः ।**
**बोधने कर्मताकाङ्क्षापेक्ष्योत्सर्गतो भवेत् ॥ ७९ ॥**

कर्मताकाङ्क्षा कर्मत्वान्वयस्यैवानुकूला, आत्मनेपदयगादिसमभिव्याहाररूपाकाङ्क्षा व्युत्पत्तिवैचित्र्यादपेक्षणीया, न तु कर्तृत्वान्वयस्य परस्मैपदविकरणादिसन्दंशरूपा । यद्येवं 'तण्डुलचैत्रौ पच्येते' इत्यपि प्रयोगः स्यात, न स्यात्, सामग्र्योर्मिथो विरोधेन विभिन्नधर्मावच्छिन्ने प्रत्ययानां युगपत्कर्तृताकर्मत्वयोरनुभावकत्वस्याव्युत्पन्नत्वात्, अत एव 'पचेलिमौ मैत्रतण्डुलावि'त्यादिको न प्रयोगः,

आत्मने ध्रौव्यधातुनां सनन्तण्यन्तयोः किरः ।
ग्रन्थिग्रन्थ्योस्तथा ब्रूञः कर्तृकर्मत्वबोधने ॥
यगिचौ न दुहेर्नौ यगजन्तस्य च तस्य च ।
इच् वा स्याद्धुक्तधातुनां नित्यं तत्रात्मनेपदम् ॥

---

कृष्णकान्तीटीका ।

पदान्तरस्य—आत्मनेपदस्य । असामर्थ्याद्वाकाङ्क्षारहितत्वादित्यर्थः । ननु कर्तृविहितस्यात्मनेपदस्यापि कर्तृत्वबोधजनकत्वात् कुतोऽसामर्थ्यमित्यत आह—यगिचोरिति । विगुणत्वात्—तद्बोधप्रतिबन्धकत्वात् ।

कर्मताकांक्षा इत्यस्यार्थमाह—आत्मनेपदयगादीत्यादि । उत्सर्गत इत्यस्यार्थमाह व्युत्पत्तिवैचित्र्यादिति । एवकारव्यवच्छेद्यमाह न तु कर्तृत्वान्वयस्येति, अनुकूलेति पूर्वेणान्वयः । सैव का इत्याकांक्षायामाह—परस्मैपदेत्यादि । सन्दंशः—समभिव्याहारः । शङ्कते यद्येवमिति । एवं—यगादिसमभिव्याहृतात्मनेपदस्यापि कर्तृत्वकर्मत्वोभयबोधकत्वे । प्रयोगः स्यादिति । तण्डुले कर्मत्वस्य, चैत्रे कर्तृत्वस्य क्रियाविशेषणतया बोधमादाय इत्यादिः । सिद्धान्तयति न स्यादिति । सामग्र्योः—विभिन्नधर्मिकर्तृत्वकर्मत्वबोधकसामग्र्योः, विरोधेन—एककालावृत्तित्वेनेत्यर्थः । तथा च परस्पराभावस्य परस्परसामग्रीघटकत्वादिति भावः । तादृशप्रतिबन्धकत्वकल्पनबीजमाह—विभिन्नधर्मावच्छिन्न इति । तादृशानुभावकत्वस्याव्युत्पन्नत्वे युक्तिमाह—अत एवेति । इदमत्रावधेयम्—तद्धर्मावच्छिन्नधर्मिककर्तृत्वबोधं प्रति तदन्यधर्मावच्छिन्नधर्मिककर्मत्वबोध-

इति वृद्धस्मृतेः । 'स्वयं विकुरुते युवे'त्यादौ, 'स्वयं चिकीर्षते कट' इत्यादौ, 'स्वयं कटः कारयते, गौरुत्पुच्छयते, चोरयते' इत्यादौ, 'स्वयमवकिरते करी'त्यादौ, 'स्वयं श्रथ्नीते, श्रथ्नीते वा मालिके'त्यादौ, 'स्वयं ब्रूते, कथे'त्यादौ, 'स्वयं दुग्धे गौरि'त्यादौ धात्वर्थकर्तृकर्मत्वयोर्युगपदन्वये कर्मत्वान्वयानुकूलस्य यको नापेक्षा, तथा, 'स्वयं व्यकृत युवा, स्वयमचिकीर्षत कट' इत्यादौ इचोऽपि, एवं 'स्वयमलावि, अलविष्ट वा केदार' इत्यादौ स्वरान्तस्य धातोः । 'स्वयमदुग्ध, अदोहि वा गौरि'त्यादौ दुहेश्चार्थस्य तदुभयभानार्थमिचोऽनावश्यकत्वमत उक्तमुत्सर्गत इति । 'विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीरा'(१) इत्यादौ तु यको गतिश्चिन्त्या ॥ ७९ ॥

कृष्णकान्तीटीका ।

कसामग्र्याः, तादृशकर्मत्वबोधं प्रति च तथाविधकर्तृत्वबोधकसामग्र्याश्च प्रतिबन्धकत्वे 'चत्रस्तण्डुलं पचति' इति प्रयोगो न स्यात्, यगादिसमभिव्याहृतात्मनेपदजन्यतद्धर्मावच्छिन्नधर्मिककर्तृत्वबोधं प्रति तादृशात्मनेपदजन्यधर्मावच्छिन्नधर्मिककर्मत्वबोधसामग्र्याः तादृशकर्मत्वबोधं प्रति च तादृशकर्तृत्वबोधकसामग्र्याश्च प्रतिबन्धकत्वे च 'तण्डुलः पच्यते, स्वयं ग्रामो गम्यते' इति समूहालम्बनबोधो न स्यात्, परन्तु तद्धर्मावच्छिन्नधर्मिकयगादिसमभिव्याहृतात्मनेपदजन्यतद्धातूपस्थाप्यार्थधर्मितया कर्तृत्वबोधं प्रति तदन्यधर्मावच्छिन्नधर्मिकतादृशात्मनेपदजन्यतद्धातूपस्थाप्यार्थधर्मितया कर्मत्वबोधसामग्र्याः प्रतिबन्धकत्वम्, एवं तादृशकर्मत्वबोधं प्रति तादृशकर्तृत्वबोधकसामग्र्याश्च प्रतिबन्धकत्वं वाच्यम्, तत्रैकबोधं प्रति अपरबोधसामग्र्याः प्रतिबन्धकत्वकल्पनेनैवोक्तप्रयोगवारणसम्भवे किं मिथः प्रतिबन्धकत्वकल्पनेनेति । आत्मने ध्रौव्यधातूनाम्—अकर्मकात्मनेपदिधातूनामित्यर्थः । प्राचीनकारिकायाः स्वयमर्थमाह—स्वयं विकुरुते युवा इत्यादिना । अत्राश्रयत्वमेव कर्मत्वं, तदनुकूलव्यापारश्च कर्तृत्वं, तथाच विकाराश्रयो विकारानुकूलव्यापारवान् युवेति बोधः । एवमग्रेऽपि । धात्वर्थकर्तृत्वकर्मत्वयोर्युगपदन्वये इचोऽपि नापेक्षेति योजना, दुहेश्चेति काकास्य'तस्य' चेत्यस्यार्थः । अर्थस्य तदुभयभानार्थं—दोहनादिरूपक्रियायाः कर्तृत्वकर्मत्वभानार्थम् । नावश्यकत्वमित्यनेन छन्दतो द्वैकल्पिकत्वमुक्तम् । चिन्त्येति । अनुकूलव्यापाररूपकर्तृत्वबोधस्यल एव तदनुशासनमित्युक्तौ न दोष इति भावः ॥७९॥

(१) 'प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने' इति पूर्वार्धमस्य कुमारसम्भवे द्रष्टव्यम् ।

नन्तु 'शाकः पचता पश्यता वा भुज्यते' इत्यादितः कुतः पाकादौ शाकादिकर्मत्वावगमः, सुबर्थस्यैव कर्मत्वस्य धात्वर्थे धर्मिणि साकाङ्क्षत्वादत आह—

**स्वकर्मकैकधात्वर्थकर्तृकापरकर्मता ।**
**यत्रान्वेत्यस्य कर्मत्वे प्रथमैवानुशिष्यते ॥ ८० ॥**

स्वकर्मताकत्वविशिष्टैकधात्वर्थकर्तृ-कर्तृकस्यापरस्य धातुनिपातयोरन्यतरार्थस्य कर्मत्वं यत्र धर्मिणि अन्वेति तदीयत्वेनानुभाव्ये कर्मत्वे प्रथमैवानुशिष्यते न तु द्वितीयादिरपेक्ष्यते, येन शाकः स्वकर्मताकपाककर्तृ-कर्तृताकभोजनकर्मतावानित्याद्यन्वयधीस्तत्र न स्यात् । अत एव "प्रधानशक्त्यभिधाने गुणशक्तिरभिहितवत् प्रकाशते" इति पठन्ति । "शक्तिः कारकमिति" शाब्दिकाः । कर्मतामात्रन्तु ज्यायः, तेन 'हस्तेन पचता भुज्यते शाक' इत्यादौ नाभिहिताधिकारीयप्रथमासक्तिः ॥ ८० ॥

---

कृष्णकान्तोटीका ।

कारिकान्तरावतरणिकामाह—नन्वित्यादिना । विवृणोति स्वकर्मताकत्वेत्यादि । कारिकास्थापरपदस्य धात्वर्थपरत्वे सेवितुं साम्प्रतमित्याद्युक्तस्थलद्वये प्रथमा न स्यात्, निपातार्थपरत्वे च प्रकृतानुपपत्तितादवस्थ्यम्, अतो व्याचष्टे—धातुनिपातयोरन्यतरार्थस्येति । 'अस्य कर्मत्वे' इत्यस्यार्थमाह—तदीयत्वेनेति । तदीयत्वेन कर्मत्वे प्रथमेति यथाश्रुतमयोग्यं स्यात्, अतोऽनुभवान्तर्भावः । तद्विषयतानिरूपिततादृशकर्मताविषयताशाल्यनुभवजनिका प्रथमाविभक्तिसमभिव्याहाररूपाकाङ्क्षा एवेति भावः । अत्र शाब्दिकानां स्वरसं व्यञ्जयति—अत एवेत्यादिना । प्रधानेति । विशेष्यीभूतक्रियाकारकस्याभिधाने उक्तत्वे, गुणशक्तिः—विशेषणीभूतक्रियाकारकम्, अभिहितवत्-उक्तवत् प्रकाशते इत्यर्थः । अभिहितवदित्यनेन अनभिहिताधिकारीयद्वितीयाया अप्रसक्तिः सूचिता । शक्तिपदस्यार्थमाह—शक्तिः कारकमिति । स्वयं शक्तिशब्दार्थमाह-कर्मतेति । कारकमात्रपरत्वे दोषमाह—तेनेति । शक्तिपदस्य कर्मत्वमात्रपरत्वेनेत्यर्थः । प्रथमासक्तिः—प्रथमाप्रसक्तिरित्यर्थः । तथाच शक्तिपदस्य कारकमात्रपरत्वे उक्तस्थले हस्तपदोत्तरं प्रथमा स्यादिति भावः । इदमापाततः प्रधानान्वयियादृशशक्तेरभिहितत्वं गुणान्वयितादृशशक्तेरपि तथात्वम् इति शाब्दिकाभिप्रायात्, अन्यथा 'हस्तः पचतः भोजन' इत्यादौ हस्ते पाककरणत्वे गम्यमाने प्रथमा न स्यादिति । कर्मतामात्रपरत्वन्तु न ज्यायः इति ध्येयम् ॥ ८० ॥

नतु यत्र विशिष्टवैशिष्ट्यावगाहितानिरूपकत्वेन गौणप्रधानभावापन्ने क्रियाद्वये प्रकारीभूय एकविधस्यैव कर्मत्वादिकारकस्य भानं तत्र तन्न स्यात्, यथा "पक्त्वाऽन्नस्य दाता, भोक्तुमन्नस्य पाचकः, पुरस्य गत्वा गन्ता, भुक्त्वा चैत्रस्य स्थितिः, पक्त्वा सूदस्य गमनमि"त्यादौ क्त्वादेर्निष्ठादित्वेन तदन्तधात्वर्थे षष्ठ्याः कर्मत्वाद्यनुभावकत्वस्य निषिद्धत्वात्। एवं यत्र तादृशक्रियाद्वये नानाविधकर्मत्वसम्प्रदानत्वादि प्रकारस्तत्रापि तथा, यथा "ब्राह्मणायाहूय ददाति, वृक्षात् आरुह्य पतती"त्यादौ, कर्म्मत्वादौ चतुर्थ्यादेरसामर्थ्यादत आह—

**गौणप्रधानक्रिययोः प्रकारीभूतकारके।**
**एकस्मिन् वाऽपि भिन्ने वा प्रधानापेक्षया स्थितिः॥८१॥**

यत्र गौणप्रधानतापन्नधात्वर्थद्वये प्रकारीभूयैकविधमनेकविधं वा यदीयत्वेन कारकं भासते तत्र प्रधानक्रियामपेक्ष्यैव स्थितिः कारकविभक्तेर्व्यवस्थितिः न तु गौणक्रियाम्, तथाच 'पक्त्वाऽन्नस्य भोक्ता' इत्यादौ अन्नकर्मताकपाकोत्तरान्नकर्मताकभोजनत्वादिना, 'ब्राह्मणाय आहूय ददाती'त्यादौ च ब्राह्मणकर्मताकाह्वानोत्तरब्राह्मणसम्प्रदानताकदानत्वादिना बोधने व्युत्पत्तिवैचित्र्यादेव पचनाह्वानादिगौणक्रियायां षष्ठीचतुर्थ्यादिना कर्मत्वादेर्भानमिति भावः॥ ८१॥

ननु 'शत्रवे कुप्यती'त्यत्र शत्रोः प्रयुक्तत्वविषयित्वरूपाभ्यामपादा-

---

कृष्णकान्तोका।

कारिकान्तरावतरणिकामाह—नन्वित्यादिना। तन्न स्यात्—कर्मत्वभानं न स्यात्। कुत्रेत्याकाङ्क्षायामाह—यथेत्यादि। कुत इत्याकाङ्क्षायामाह—क्त्वादेर्निष्ठादित्वेनेत्यादि। एकविधकारकस्य तादृशभानस्थलमुक्त्वाऽन्यविधस्य तथाभानस्थलमाह—एवमित्यादि। तथा-कर्मत्वादिभानं न स्यात्, कुत्रेत्याकाङ्क्षायामाह—यथेत्यादि। कुत इत्याकाङ्क्षायामाह—कर्मत्वादाविति।

विवृणोति—यत्रेत्यादि। एवकारव्यवच्छेद्यमाह—व्युत्पत्तिवैचित्र्यादेवेति। तत्र तत्रार्थे षष्ठीचतुर्थ्यादेः सामर्थ्यादिति भावः॥ ८१॥

कारिकान्तरावतरणिकामाह—नन्वित्यादिना। कोप इति, कथमन्वयधीरिति योजना। एवमग्रेऽपि। द्वेषानुकूलव्यापारः कोपः। अपादानसम्प्रदानत्वबोधस्य-

न्त्वसम्प्रदानत्वाभ्यां कोपे, 'पुत्रेण ददाती'त्यत्र पुत्रस्य सम्प्रदानत्वकरणत्वाभ्यां दाने, 'पात्र्यां भुङ्क्ते' इत्यत्र पात्र्याः करणत्वाधिकरणत्वाभ्यां भोजने, 'ग्रामं गच्छती'त्यत्र ग्रामस्याधिकरणत्वकर्मत्वाभ्यां गमने, 'चैत्रस्य चलनमि'त्यादौ च चैत्रादेरधिकरणत्वकर्तृत्वादिना चलनादौ, युगपत्कथमन्वयधीरपादानत्वादिबोधने चतुर्थ्यादेरसामर्थ्यादत आह—

एकस्यैकक्रियायान्तु कारकद्वयबोधने ।
यत्परं कारकं तत्र विहिता सुबपेक्षिता ॥ ८१ ॥

एकस्मिन् धात्वर्थे यत्रैकनामार्थनिरूपितयोः कारकद्वयोर्युगपद्बोधस्तत्र लक्षितक्रमेण यत्परं कारकं तत्र विहिताऽनुशिष्टैव सुप् आकाङ्क्षानिर्वाहिका, न तु पूर्वत्र व्युत्पत्तिवैचित्र्यादित्यर्थः । 'ब्राह्मणायाऽऽहूय ददाती'त्यादावेकनिरूपितमपि नैकक्रियायां, 'दण्डेन गामभ्याजे'त्यादावेकक्रियायामपि नैकनिरूपितं कारकद्वयमन्वेति ।

अत्र —

अपादानसम्प्रदानकरणाधारकर्मणाम् ।
कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते ॥

---

कृष्णकान्तीटीका ।

त्समुक्त्वा सम्प्रदानकरणत्वबोधस्थलमाह—पुत्रेण ददातीति । पुत्रसम्प्रदानकदाने पुत्रकरणकत्वं सम्भवत्येवेति भावः । करणाधारत्वबोधस्थलमाह—पात्र्यां भुङ्क्ते इति । आधारकर्मबोधस्थलमाह—ग्रामं गच्छतीत्यत्रेति । एकस्मिन् कर्तृत्वकर्मत्वयोर्युगपद्भानं प्रायशो न सम्भवतीति । [आधारत्वकर्तृत्वबोधस्थलमाह—चैत्रस्येत्यादि । कुत इत्याकाङ्क्षायामाह-अपादानत्वादिबोधने इति ।

विवृणोति एकस्मिन् धात्वर्थं इति । एकस्यां क्रियायां नामार्थद्वयनिरूपितयोः कारकयोर्युगपद्बोधने सुब्द्वयस्यैवापेक्षितत्वात् । पूरयति एकनामार्थनिरूपितयोरिति । ध्वंसाधिकरणकालवृत्तित्वस्य ध्वंसवृत्तित्वरूपस्य वा परत्वस्य सर्वत्रैव कारके सत्त्वात् । पूरयति लक्षितक्रमेणेति । अनुशिष्टक्रमेणेत्यर्थः । 'विहिता' इत्यस्य सावधारणत्वं विना सुबन्तव्यावृत्तिर्न सम्भवतीत्यत आह अनुशिष्टैवेति । एवकारव्यवच्छेद्यमाह न त्विति । अनुशिष्टा सुबाकांक्षानिर्वाहिका इत्यन्वयः । कुत इत्याकाङ्क्षायामाह—व्युत्पत्तिवैचित्र्यादिति । शाब्दजनकाकाङ्क्षाया विलक्षणत्वादिति तदर्थः । एकस्मिन् धात्वर्थे इत्यस्य व्यावृत्तिमाह ब्राह्मणायाहूयेत्यादि । एकनामार्थनिरूपितत्वव्यावृत्तिमाह दण्डेन गामभ्याजेति ।

इति भर्तृहरिवचनात् करणत्वाधारत्वयोरेकदा अन्वयस्थलेऽधिकरणत्वार्थिकैव विभक्तिरपेक्षितेति प्राञ्चः । करणत्वार्थिकैव तथेति कालापाः, तैराधारत्वं निरुच्यैव करणत्वस्य निर्वचनादिति ध्येयम् ॥८२॥

कर्तृत्वकर्मत्वयोरनुक्तविधयाऽन्वयबोधोपयुक्तविभक्तीर्वक्तुमुपक्रमते—

**क्रियायां धातुलभ्यायां कर्तृत्वस्यावबोधिका ।**
**तृतीया कर्मतायास्तु द्वितीयोत्सर्गतो भवेत् ॥८३॥**

धात्वर्थे कर्तृत्वस्यान्वयबुद्धौ नाम्नस्तृतीया, कर्मत्वस्य च द्वितीया उत्सर्गतो हेतुः । 'सत्ताऽस्ति, ग्रहो गृह्यते' इत्यादौ वस्तुगत्या धात्वर्थेऽपि कर्तृत्वकर्मत्वाद्यन्वयो न धर्मिणो धातुजन्यामुपस्थितिमपेक्षते किन्तु नामजन्यामतस्तत्र न व्यभिचारः ॥ ८३ ॥

सामान्यविधिरुत्सर्गः, स चापवादकं विशेषविधिं विना प्रवर्त्तते इति कर्मतायां द्वितीयाया वैकल्पिकं विशेषविधिं दर्शयति—

**(१)कर्मत्वस्य गतौ बोधे द्वितीयावच्चतुर्थ्यपि ।**
**अर्थे दयेशोः संज्ञश्च नाथ्यर्थाशंसने स्मृतौ ॥**
**पणि-व्यवहृ-दीव्यर्थ-क्रयाद्यर्थेषु षष्ठ्यपि ।**
**कृञर्थप्रतियत्ने च हिंसने चाप्यपेक्षिता ॥८४—८५॥**

---

कृष्णकान्तीटीका ।

तथेति । तादृशस्थले विभक्तिरपेक्षितेत्यर्थः । कथमित्याकांक्षायामाह—तैरिति । कालापैरित्यर्थः । इति ध्येयमिति । एतच्च न वृत्तिकारस्य सम्मतम्, तेन कांस्यपात्र्यां भुङ्क्त इत्यधिकरणमेवेत्युक्तेः ॥ ८२ ॥

कारिकान्तरावतरणिकामाह कर्तृत्वकर्मत्वयोरिति । विवृणोति धात्वर्थ इति । धातुलभ्यायामित्यस्य व्यावृत्तिमाह—सत्ताऽस्तीति । धर्मिणो—धात्वर्थस्य । अपेक्षत इति । तथा च धातुजन्योपस्थितिसहकारेणेति तदर्थ इति भावः । तत्र-तादृशबोधे, न व्यभिचारः—तृतीयारूपकारणस्य न व्यभिचारः ॥ ८३ ॥

कारिकास्थ'उत्सर्गत' इत्यस्यार्थमभिदधान एव कारिकान्तरमवतारयति सामान्यविधिरिति । इति-हेतोः, हेतुता च स्वप्रयोजकाकाङ्क्षोत्थापकतारूपा

---

(१) गतौ कर्मत्वबोधे द्वितीयावच्चतुर्थी, दय-ईशयोरर्थे संपूर्वस्य ज्ञाधातोराशंसार्थकनाथधातोः स्मृधातोरर्थे च द्वितीयावत्षष्ठ्यपि, पणि—व्यवहृ—दीव्यत्यर्थक्रयाद्यर्थकधातुषु प्रतियत्नार्थकसोपसर्गकृधातौ हिंसार्थकधातौ च षष्ठ्यपि अपेक्षितेति कारिकाद्वयार्थः ।

'ग्रामं गच्छती'त्यादित इव 'ग्रामाय गच्छती'त्यादितोऽपि गतौ ग्रामादि कर्मताकत्वस्यावगतेर्धात्वर्थगतौ कर्मत्वस्य बोधे द्वितीयावच्चतुर्थ्यप्यपेक्षिता ।

तथा 'दीनं दयते, ईष्टे' इत्यादित इव 'दीनस्य दयते, ईष्टे, संजानीते, चिन्तयति, स्मरती'त्यादितोऽपि दयादौ, 'पुत्रस्य नाथते' इत्यादित आशंसायाम्(१) ।

'शतस्य पणायते, व्यवहरति, दीव्यती'त्यादितः पणत्वोपगमक्रयविक्रयादिव्यवहारेषु ।

'स्वर्णस्योपस्कुरुते' इत्यादितोऽपि गुणान्तराधानरूपप्रतियत्ने, 'चौरस्य हिनस्ती'त्यादितो हिंसायाञ्च कर्मत्वस्यान्वयबोधे षष्ठ्यपि । 'मैत्रमनुनाथती'त्यादौ नाथ्यर्थोऽपि प्रार्थनादिर्नाशंसनम् । 'नृपं पणायति, बन्धुं व्यवहरति, दिवं दीव्यती'त्यादौ पण्यादेरर्था अपि स्तुति-तोष-गत्यादयो न क्रयादिरूपाः ॥ ८४–८५ ॥

धात्वर्थे कर्तृत्वकर्मत्वयोर्बोधने द्वितीयातृतीयादेर्नित्यापवादमाह—

**निष्ठाद्यन्यकृदन्तार्थे कर्तृत्वस्यान्वयं प्रति ।**
**कर्मत्वस्य च षष्ठ्येव हेतुर्बाधविधिं विना ॥ ८६ ॥**

निष्ठादिभिन्नं कृन्मात्रमन्ते यस्य न तु तदुत्तरप्रत्ययान्तरं, तादृशधातोरर्थे कर्तृत्वस्य कर्मत्वस्य वाऽन्वये नाम्नः षष्ठ्येव तन्त्रं न तु

---

कृष्णकान्तीटीका।

इत्यर्थः । विवृणोति ग्रामं गच्छतीत्यादित इवेति ।

प्रथमकारिकापरार्द्धं विवृणोति तथेत्यादि । स्मृतौ इत्यस्योदाहरणद्वयं चिन्तयति स्मरतीति । कारिकान्तरं व्याचष्टे शतस्य पणायत इति । पणत्वोपगमेति पणेरर्थः । कारिकाशेषार्द्धं विवृणोति स्वर्णस्योपस्कुरुते इति । नाथ्यर्थाशंसन इत्यत्राशंसनपदव्यावृत्तिमाह नृपमित्यादि । क्रयादिरूपा इति । क्रयविक्रयव्यवहाररूपा इत्यर्थः ।८४·८५।

कारिकान्तरमवतारयति धात्वर्थं इति । विवृणोति निष्ठादिभिन्नमिति । कृदन्तशब्दस्य यथाश्रुतार्थे चैत्रेण इष्टचर इत्यादौ तृतीया न स्यात् अतस्तदर्थमाह—कृन्मात्रमिति । तथा च कृदेवान्ते यस्येति मध्यपदलोपी समास इति । एवकारव्यवच्छेद्यमाह—न तु तदुत्तरेति । निरुक्तव्युत्पत्तेः फलमाह—चैत्रेणेत्यादि । कृन्मा-

---

(१) षष्ठ्यपि अपेक्षितेति अन्वयः, एवमग्रेपि ।

तृतीयादिः । (१)यथा 'चैत्रस्य गतिः, ग्रामस्य गमनमि'त्यादौ । 'चैत्रेण दृष्टचरः, तण्डुलं पाचकतर' इत्यादौ तु धातोरुत्तरं न कृन्मात्रम् , अत एव निष्ठादिभिन्नयोरपि (न) जिन्नणोर्नित्यं तद्धितान्तत्वात् 'अङ्गानि न्या-त्युक्षी, घनानि सांग्राहिणमि'त्यादौ कर्मतायां न षष्ठीप्रसङ्गः, प्रापका-भावात् । 'ग्रामस्य गन्तृमान् देशः, चैत्रस्य गतिमद्गृहमि'त्यादौ तु गतिश्चिन्त्या । अत्र गन्त्रादावेव षष्ठ्यर्थसम्बन्धो भासते न तु धात्वर्थे कर्मत्वादिरित्यपि कश्चित् । 'चैत्रेण भुक्तो, मैत्रेण दत्त' इत्यादौ 'सुकरः कटो मया, दुष्करः पटस्त्वया' इत्यादौ 'सुपानः सोमो मया, दुष्पानः सोमस्त्वये'त्यादौ च कर्तृत्वस्य 'तेमनं पचन्, ग्रामं गतवान्, पारायण-मधीयन्, उपनिषदं धारयन्नि'त्यादौ 'घटं विद्वान्, तण्डुलं पेचिवान्' इत्यादौ 'भक्ष्यं भुञ्जान' इत्यादौ 'सोमं पवमानः, कवचमुद्वहन्' इत्यादौ 'कटं चक्राण' इत्यादौ 'दधिर्घटं, चाक्रिः कटमि'त्यादौ 'शत्रुं जिष्णुरि'त्यादौ 'स्त्रियमलङ्करिष्णुः कष्टं सहिष्णुरि'त्यादौ, 'धनं गृध्नुः शरं क्षिप्नुरि'त्यादौ 'कटं चिकीर्षुः, पुंयोगमाशंसुः, तण्डुलं भिक्षुरि'-त्यादौ 'कटं दायी'त्यादौ 'ग्रामं ग्रमी, ग्राममागामी'त्यादौ 'कटं कारको व्रजती'त्यादौ 'तण्डुलं पक्त्वा वर्त्तते' इत्यादौ 'पयः पायं पायं व्रजती'त्यादौ 'पटं कर्त्तुं गच्छती'त्यादौ 'वदिता जनापवाद-मि'त्यादौ 'ग्रामं कामुकः, सुखमभिलाषुक' इत्यादौ च कर्मत्वस्य धात्वर्थे विनैव षष्ठीमन्वय इत्यत उक्तं निष्ठादिभिन्नेति ॥ ८६ ॥

कृष्णकान्तीटीका ।

ग्रमीतीति । तत्र न षष्ठीप्रसंग इति शेषः । अतएव—निरुक्तधातोरर्थे कर्तृत्वकर्मत्वान्वये षष्ठ्यास्तन्त्रत्वादेवेत्यर्थः । कुत इत्याकाङ्क्षायामाह—प्रापकाभावादिति । षष्ठीवि-धायकानुशासनाभावादित्यर्थः । गतिश्चिन्त्येति । तत्र गमधातोः कृन्मात्रान्तत्वाभा-वादिति भावः । अलुक्समासस्वीकारेण कथंचिदुपपादनीयमिति निर्गर्भः ।

निष्ठादिभिन्नेत्यस्य फलमभिदधान एव निष्ठादिपदप्रतिपाद्यान् दर्शयति चैत्रेण भुक्त इत्यादिना । कर्तृत्वबोधस्थलमुक्त्वा कर्मत्वबोधस्थलमाह—तेमनमित्यादि । तेमनं—व्यञ्जनम् ॥ ८६ ॥

(१) अत्र 'कर्तृकर्मणोः कृती'ति (२।३।६५) पा० सूत्रं द्रष्टव्यम् ।

निष्ठादिकं विवृणोति—

सम्प्रत्याधारवाच्यन्यः क्तः क्तवन्तुश्च शन्तृङ् ।
वन्सुरान-शान-कानाः किःष्णुगिष्णुक्नुरुस्तथा ॥
ऋण्यर्थकाणिनिर्भावित्वार्थकेन् वुण् तुमर्थकम् ।
खल् खलर्थकयुः क्त्वा णम् तुमौ तृण्णुकञपि ॥
निष्ठादिः कथितः कृतस्तु प्रत्ययानामयं गणः ।
कमेरुकञ् गणे नास्मिन् द्विषः शन्तृङ् विभाषया।८७-८९।

वर्त्तमानत्वस्याधारत्वस्य च प्रत्यायको यः क्तस्तदन्तधात्वर्थैककर्तृत्वकर्मत्वयोरन्वये षष्ठ्येव प्रमाणम् । यथा (१)'भीतं मृगाणां, मतः साधूनाम्, इष्टः प्रजानां, पूजितो जनानामि'त्यादौ, (२)'सुप्तमरण्यं पथिकानां, गतं नभो नक्षत्राणां, पीतमागारं पयस' इत्यादौ 'भुक्ता पात्री करभस्य मित्राणामि'त्यादौ च, अत उक्तं सम्प्रत्याधारवाच्यन्य इति । 'धनस्य ग्राही'त्यादावृण्यर्थे न णिनिः, 'ओदनस्य पाचक' इत्यादौ च न तुमर्थे वुण् । 'स्त्रियाः कामुक' इत्यादिदर्शनान्नात्र गणे कमेरुकञ् ग्राह्यः । तथा द्विषः शन्तृङ् विभाषया 'चौरं द्विषन्नि'तिव'चौरस्य द्विषन्नि'त्यपि प्रयोगादिति ॥ ८७-८९ ॥

कृदन्तधात्वर्थे कर्तृत्वस्य कर्मत्वस्य वाऽन्वये षष्ठ्येव बाधकं विना

---

कृष्णकान्तीका ।

निष्ठादिगणविधायककारिकात्रयावतारणिकामाह—निष्ठादिकमिति । सम्प्रत्याधारवाच्यन्यः—वर्त्तमानत्वाधिकरणत्ववाचकान्य इत्यर्थः । एतन्निवेशव्यावृत्तिमाह—वर्त्तमानत्वस्याधारत्वस्य च प्रत्यायको य इत्यादिना । वर्तमानत्वबोधकक्तप्रत्ययस्थलमुक्त्वाऽधिकरणत्वबोधकक्तस्थलमाह—सुप्तमरण्यमित्यादि । ऋण्यर्थकेत्यस्य व्यावृत्तिमाह—धनस्येति । वुणस्तुमर्थकत्वनिवेशव्यावृत्तिमाह—ओदनस्य पाचक इति । 'कमेरुकञ् गणेनास्मिन्नि'त्यस्यार्थमाह—स्त्रियाः कामुक इत्यादि ॥ ८७-८८-८९ ॥

---

(१) 'क्तस्य च वर्तमाने' (२।३।६७) इति पा० सूत्रोदाहरणान्येतानि द्रष्टव्यानि ।
(२) 'अधिकरणवाचिनश्चे'ति (२।३।६८) पा० सूत्रस्य लक्ष्यम् ।

तन्त्रमित्युक्तं तत्र बाधकमाह—

स्त्र्यधिकारोक्तभावान्यकृदन्तस्थार्थधर्मिके ।
द्वयोर्बोधे कर्मतायामेव षष्ठी न कर्त्तरि ॥ ९० ॥

स्त्र्यधिकारविहिताः ये भावप्रत्ययाः तदन्यकृदन्तस्य धातोरर्थे कर्तृत्वकर्मत्वयोर्युगपद् बोधने कर्मतायामेव षष्ठी तन्त्रं न तु कर्तृत्वे । यथा 'ओदनस्य पाकश्चैत्रेण, दोहः क्षीरस्य गवां गोपेन' इत्यादौ । स्त्र्यधिकारोक्तभावान्तस्य धातोरर्थे तु कर्तृत्वकर्मत्वयोर्युगपदन्वये द्वयोरपि षष्ठ्येव, यथा 'भिदा तमसामर्कस्य, छिदा वृक्षाणां दात्रस्य' इत्यादौ 'चिकीर्षा पुण्यानां पुरुषस्य, ईहा धनानां दानिस्य'त्यादौ 'मम भोजिका शक्तूनां, तव शायिका रात्रीणामि'त्यादौ यथा वा 'तीर्थानां गतिरास्तिकस्य, गुरूणां परिचर्य्या शिष्यस्य, पितॄणामुपासना सन्तानस्य, रजनानां जागर्य्या चौरस्य, पुण्यानामकरणिर्जाल्मस्य, जन्तूनां हत्या व्याधस्य, हानिरर्थानां विरक्तस्य' इत्यादौ चेति । "हा–ज्या–ग्ला–म्लाभ्यः क्त्यर्थे निः" ।

उक्तक्तिन्याद्यन्तस्य धातोरर्थे कर्तृत्वकर्मत्वयोर्युगपद्बोधे कर्तृत्वांशे तृतीयाषष्ठ्योर्वैकल्पिकं कारणत्वमिति तु कौमाराः ॥ ९० ॥

---

कृष्णकान्तीटीका ।

कारिकान्तरावतरणिकामाह—कृदन्तेति । विवृणोति—स्त्र्यधिकारविहिता ये इत्यादि । उदाहरति–ओदनस्य पाकश्चैत्रेणेति । द्विकर्मकस्थलेऽप्युदाहरति–दोहः क्षीरस्य गवां गोपेनेति । स्त्र्यधिकारोक्तभावान्यत्वनिवेशव्यावृत्तिमाह–स्त्र्यधिकारोक्तेति । कुत्रेत्याकांक्षायामाह–यथेत्यादि । व्युत्पत्तिवैशद्यायानेकोदाहरणप्रदर्शनम् ।

ननु हानिशब्दः प्रकृत्यन्तरमिति कथं हानिरर्थानां विरक्तस्येत्युदाहरणमित्यत आह–हाज्याग्लाम्लाभ्यः क्त्यर्थे निरिति । 'हानिरर्थानां विरक्तस्य विरक्तेन वा, तीर्थानां गतिरास्तिकस्य आस्तिकेन वा' इति प्रयोगद्वयस्वीकर्तॄणां मतमाह–उक्तक्तिन्याद्यन्तस्येति ॥ ९० ॥

षष्ठ्येव तन्त्रमिति प्रागुक्तबाधकं विशेषविध्यन्तरमाह—

**कृत्यान्तधातोरर्थे तु कर्तृत्वस्यैव बोधने ।**
**षष्ठी वा स्याद्, द्वयोर्बोधे न द्वयोरपि सा भवेत्॥९१॥**

कृत्यप्रत्ययान्तस्य धातोरर्थे कर्तृत्वमात्रस्य बोधने षष्ठीवत् तृतीयापि तन्त्रम् । 'कर्त्तव्यः, करणीयः, कृत्यः, कार्य्यः, प्रदेयो वा पटश्चैत्रस्ये'तिवच्चैत्रेणेत्यपि साकाङ्क्षत्वात् । तादृशधात्वर्थे कर्तृत्वकर्मत्वयोर्द्वयोः बोधने तु न द्वयोरपि षष्ठी । यथा 'नेतव्यः, प्रापणीयो वा ग्रामं गौर्गोपेने'त्यादौ, 'गन्तव्यं ग्राममनेने'त्यादौ च । "तव्यानीयौ क्यप् ण्यतौ पञ्चैते कृत्यसंज्ञकाः" ॥ ९१ ॥

ननु 'स्थितं चैत्रस्ये'त्यादौ कर्तृत्वस्य, गतं ग्रामस्ये'त्यादौ कर्मत्वस्य 'गतं ग्रामस्य चैत्रस्ये'त्यादौ च कर्तृत्वकर्मत्वयोः क्रियायां कथमन्वयः, निष्ठाद्यन्यकृदन्तस्यैव धातोरर्थे कर्तृत्वाद्यन्वयं प्रति षष्ठ्यास्तन्त्रत्वादत आह—

**द्वितीययेव कर्मत्वं कर्तृत्वं वा तृतीयया ।**
**षष्ठ्यापि बोध्यते भावक्तान्तधात्वर्थधर्मिणि॥९२॥**

भावक्तान्तस्य धातोरर्थे कर्मत्वस्य कर्तृत्वस्य वाऽन्वये द्वितीयादिवत् षष्ठ्यपि तन्त्रम् उभयथैव प्रयोगात् , सर्वत्रैव कार्यतावच्छेदकसङ्कोचान्न व्यभिचारः ॥ ९२ ॥

---

कृष्णकान्तीटीका ।

कारिकान्तरावतारणिकामाह—षष्ठ्येवेति । प्रागुक्तस्य बाधकमित्यर्थः । विवृणोति—कृत्यप्रत्ययान्तस्येति । चैत्रेणेत्यपीति, प्रयोगः साधुरिति शेषः । साकांक्षत्वात्–शाब्दबोधजनकीभूताकांक्षावत्त्वादित्यर्थः, तादृशाकांक्षाया अपि शाब्दबोधनकत्वादिति भावः । द्वयोर्बोधे इत्यादिकं विवृणोति–तादृशधात्वर्थ इत्यादि । कुत्रेत्याकांक्षायामाह—यथा नेतव्य इति । ननु कृत्यप्रत्ययाः के इत्याकांक्षायामाह–तव्यानीयाविति ॥ ९१ ॥

कारिकान्तरमवतारयति—नन्वित्यादिना । ननु तादृशान्वये किं बाधकमित्यत आह–निष्ठाद्यन्यकृदन्तस्यैवेति । विवृणोति—भावक्तान्तस्येति । उभयथैवेति । द्वितीयाषष्ठीभ्यामेव प्रयोगादित्यर्थः । ननु यत्र यत्रोभयोस्तन्त्रत्वमुक्तं तत्राकांक्षाद्वयस्य शाब्दबोधहेतुत्वे मिथो व्यभिचार इत्यत आह—सर्वत्रैवेति । यत्र यत्रोभयोस्तन्त्रत्वमुक्तं सर्वत्र तत्रेत्यर्थः । कार्यतावच्छेदकसंकोचात्–स्वाव्यवहितोत्तरशाब्दं प्रति तत्तदानुपूर्वीप्रकारकज्ञानस्य हेतुत्वात् न व्यभिचार इत्यर्थः ॥९२॥

करणत्वादेरनुक्तताप्रयोजकाः सुपः संक्षेपेणाह—

**तृतीया च चतुर्थी च पञ्चमी सप्तमी तथा ।**
**धात्वर्थे करणत्वादेर्बोधिकोत्सर्गतो मता ॥ ९३ ॥**

'शतेन शताय वा परिक्रीणीते' इत्यादौ चतुर्थ्या, 'सर्पिषा सर्पिषो वा पूर्णः, फलेन फलस्य वा तृप्त' इत्यादौ च षष्ठ्या करणत्वस्य, 'दास्यै दास्या वा सम्प्रयच्छते मालामि'त्यादौ च तृतीयया सम्प्रदानत्वस्य बोधनादत्र उक्तमुत्सर्गत इति ॥ ९३ ॥

कारकार्थां सुपं निरूप्य तदन्यार्थां निर्वक्ति—

**यत्सुपो यादृशार्थो न प्रकारीभूय भासते ।**
**धात्वर्थे, तादृगर्थे सा कारकान्यार्थसुब्भवेत् ॥ ९४ ॥**

[१]प्रथमादीनां सप्तानामपि विभक्तीनामेकत्वादयोऽर्था न धात्वर्थे प्रकारीभूय भासन्ते परन्तु प्रकृत्यर्थे । 'पाक' इत्यादावपि सुबर्थसंख्या न प्रकारः, परन्तु पचनादिस्वरूपे नामार्थ इत्युक्तप्रायम् । समासनिविष्टस्य

---

कृष्णकान्तीटीका ।

कारिकान्तरमवतारयति—करणत्वादेरिति । सुगमत्वात् कारिकामव्याख्यायैवोत्सर्गत इत्यस्य व्यावृत्तिमाह करणत्वस्येति (दास्यै इति ?) । उत्सर्गत इतीति । विशेषविधिं विनेति तदर्थः ॥ ९३ ॥

उपपदविभक्तेर्लक्षणमभिधातुं तत्प्रतिपादककारिकावतारणिकामाह—कारकार्थामित्यादि । विवृणोति-(लक्षयति?) यत्सुप इत्यादि । तथा च यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकयादृशस्वार्थप्रकारकशाब्दजनकतानवच्छेदकं तादृशानुपूर्वीमत्सुप्त्वं तादृशार्थे कारकभिन्नार्थकसुप्त्वमिति निष्कर्षः । स्वपदं लक्ष्यपरम् । लक्ष्ये लक्षणं संगमयति—प्रथमादीनामित्यादि । असम्भवमाशंक्य निराचष्टे—पाक इत्यादावपीति । तदा कुत्रेत्याकाङ्क्षायामाह—परन्त्विति । स्वोक्तेः प्रामाण्यार्थमाह—इत्युक्तप्रायमिति । प्रत्ययलक्षणे भावविहितघञादिप्रत्ययेऽव्याप्तिमाशंक्य समाधानमुखेन स्तोक इत्यत्र स्वरूपार्थे स्तोकस्यान्वय इति न द्वितीया इत्युक्तेरुक्तप्रायमिति । भावविहितकृत्प्रत्ययस्य स्वरूपार्थकत्वे विप्रतिपन्नं प्रत्याह—समास इति । ननु 'स्तोकः पाक' इत्यादिप्रयोगोपपत्त्यर्थं भावकृतः स्वरूपार्थकत्वस्य तादृशार्थे स्तोकादेरन्वयस्य स्वीकारेऽपि अत्र धात्वर्थे संख्याद्यन्वये बाधकाभाव इत्यत आह—समासनिविष्टस्येति—इति वस्तुगतिः । तथा च लक्षणे धात्वर्थगतिधर्मिक इत्यत्र समासघटकधातुपत्याप्यार्थधर्मिकत्वं निविष्टमिति भावः । तन्निवेशेऽपि कथं नासम्भव इत्यत आह—

धातोरर्थे इति वा वक्तव्यम्, नहि 'ग्रामगत' इत्यादौ धात्वर्थे कर्मत्वादिरिवैकत्वादिरपि सुबर्थः प्रकारः, अत एव 'प्रासादात् प्रेक्षते' इत्यादौ ल्यबर्थस्य धात्वर्थे प्रकारत्वेऽपि तदर्थकपञ्चम्यां नाव्याप्तिः, 'प्रासादप्रेक्षक' इत्यादौ समासनिविष्टस्य धातोरर्थे ल्यबर्थस्यारोहणोत्तरत्वादेरप्रकारत्वात् । 'शलाकापरी'त्यादौ समासनिविष्टस्य नाम्नोऽर्थे प्रकारीभूतमप्येकत्वादिकं न धातोरर्थे । न च कारकविभक्तेरपि तदन्यार्थकत्वादतिप्रसक्तिः, उपाधेयसङ्करेऽप्युपाधेरसाङ्कर्य्यात् । 'चैत्र ! व्रज'त्यादौ एकत्वादिसंख्यावत् सम्बोध्यत्वमपि प्रथमार्थः, तच्च क्रियाकरणाय वक्त्रभिप्रेतत्वं, वक्तृनिष्ठविलक्षणबोधविशेष्यत्वं वा, तथा च तादृशसम्बोध्यत्ववांश्चैत्रोऽनुमतव्रजनवानित्याकारकस्तत्र बोधः, संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्य-

---

कृष्णकान्तीटीका ।

न हीति । अत्र युक्तिमप्याह अत एवेति । कारकभिन्नसुबर्थस्य समासघटकधात्वर्थेऽप्रकारत्वादेवेत्यर्थः । वस्तुतस्तु समाधानान्तरबीजं स्वयमेवाह—अत एवेति । एतादृशार्थकरणादेवेत्यर्थः । अप्रकारत्वादिति । तादृशप्रयोगस्यैवाभावादित्यर्थः । धात्वर्थधर्मिकत्वनिवेशस्याव्याप्तिमाह—शलाकापरीत्यादि । एकस्या शलाकाया द्यूतेऽन्यथापातनमित्यर्थेऽव्ययीभावविधानात् (पृ० २४०) तृतीयायाः समासनिविष्टशलाकाधर्मिकैकत्वप्रकारकत्वेऽपि तत्र नाव्याप्तिरिति भावः । शङ्कते—न चेति । उपाधिः कारकान्यार्थकसुपलक्षणकारकार्थकसुपलक्षणस्य चासाङ्कर्य्यात् इत्यर्थः । ननु 'चैत्र व्रजे'त्यादौ सुबर्थसम्बोध्यत्वस्य धात्वर्थे एव प्रकारत्वमवश्यं वाच्यं न प्रकृत्यर्थे, संख्यातिरिक्तसुबर्थस्य प्रातिपदिकार्थविशेष्यत्वनियमात्,तथा च सम्बोध्यत्वार्थकप्रथमाविभक्तावव्याप्तिरित्यत आह—चैत्र व्रजेत्यादाविति । तच्चेति । सम्बोध्यत्वञ्चेत्यर्थः । क्रियाकरणायेति । तथा च गमनरूपक्रियासम्बन्धप्रयोजिका या 'चैत्रस्य गमनं भवत्वि'त्याकारकवक्तुरिच्छा तद्विषयत्वमित्यर्थः । ननु वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वेन लाघवादावश्यकत्वाच्च तादृशज्ञानविशेष्यत्वमेव तथास्तु इत्यत आह—वक्तृनिष्ठेत्यादि । श्रोतृनिष्ठतादृशज्ञानस्य शाब्दबोधप्रागसम्भवित्वादाह—वक्तृनिष्ठेति । तच्च बोधविशेषणम् । ननु 'चैत्र व्रजे'त्यत्रावश्यं भासमानवस्त्वन्तरेऽपि तादृशसम्बोध्यत्वभानापत्तिः, तादृशवस्तुनोऽपि विशेष्यतया ज्ञानस्य यदाकदाचित् वक्तृनिष्ठत्वसम्भवेनायोग्यत्वासम्भवादतो विलक्षणेति, फलतो विशेष्यताविशेषणं, तथा च स्वप्रयोजकतावच्छेदकस्ववक्तृबोधीयविशेष्यत्वं स्वजन्यशाब्दबोधविषयसम्बोध्यत्वमिति निष्कर्षः । स्वपदं सम्बोध्यत्वबोधकवाक्यपरमिति नातिप्रसङ्गः । अनुमतव्र-

त्वनियमात्। 'छत्रिन्! तुष्टो व्रजे'त्यादौ तु छत्रिण्येव तुष्टस्याभेदो भासते न तु तुष्टे छत्रिणः, प्रकृत्यर्थमुख्यविशेष्यक एव स्वार्थसम्बोध्यत्वस्यान्वये सम्बुद्धिसुपः सामर्थ्यात्, अन्यथा 'छत्री दण्डी'त्यत्रेव 'छत्रिन् दण्डिन्नि'त्यत्रापि छत्रिदण्डिनोरभेदबोधापत्तेः, तदुपयुक्तस्य नाम्नोः समानविभक्तिकत्वस्याविशिष्टत्वात्, 'छत्रिन्! तुष्टो व्रजतु' इतिवत् 'छत्रिन् दण्डी व्रजतु' इत्यपि प्रयोगापाताच्च। 'हे चैत्रे'त्यादौ तु सम्भेदे नान्यतरवैयर्थ्यम्। "सुमित्रामात! नैतत्ते विचित्रं चित्रयोधिन" इत्यादौ सम्बोध्यत्वमिव प्रशंस्यत्वमपि सम्बुद्धिसुपामर्थः, तत्रैव मातृकस्य ऋकार-

---

कृष्णकान्तीटीका।

व्रजनवानिति। स्ववक्त्रनुमतव्रजनवानित्यर्थः। लोटस्ताद्दशार्थकत्वस्य च

स्ववक्त्रनुमतत्वस्य धात्वर्थान्वयबोधने।
अनुकूला याद्दशी विङ् सैव लोट् परिभाष्यते॥

इत्यनेन स्वयं वक्ष्यमाणत्वात्। नन्वेतावता उक्ताव्याप्तेर्निरासेऽपि व्युत्पत्तिभङ्गरूपदोषोऽस्त्येवेत्यत आह--सङ्ख्यातिरिक्तेति। तथा च फलानुरोधित्वात् कल्पनायास्ताद्दशव्युत्पत्तेरत्र सङ्कोचादिति भावः। ननु निरुक्तसम्बोध्यत्वविशेष्यत्वं मुख्यविशेष्यत्वं वक्तव्यम्, अन्यथा विशेष्यतात्वेन निवेशस्याव्यावर्तकतापत्तेः, तथा च 'छत्रिन् तुष्टो व्रजे'त्यादौ ताद्दशसम्बोध्यत्वान्वयो न स्यादयोग्यत्वादित्यत आह--छत्रिन्नित्यादि। सामर्थ्यादिति। तथा चायोग्यत्वमेव नास्तीति भावः। अन्यथा-इतरविशेषणतापन्नेऽपि प्रकृत्यर्थे स्वार्थसम्बोध्यत्वस्यान्वये सम्बुद्धिसुपः सामर्थ्ये। अविशिष्टत्वादिति। अस्मन्मते चोभयत्र सम्बोध्यत्वान्वयबोध एव विशेष्यविशेषणभावे बाधक इति भावः। ननु ताद्दशान्वयबोधे उक्ताकाङ्क्षाया अप्रयोजकत्वकल्पनादेव ताद्दशवाक्यादभेदान्वयबोधापत्तिर्न सम्भवति, कथमन्यथा घटं करोतीति वाक्यादिव घटं यतते इत्यादिवाक्यात् न घटकर्मताकृतिबोध इत्यत आह-छत्रिन्! तुष्टो व्रजत्वित्यादि। इत्यपि प्रयोगापाताच्चेति। नाम्नि प्रयुज्यमाने प्रथमानुशासनादिति भावः। ननु सम्बोध्यत्वस्य प्रथमार्थत्वे 'हे चैत्र!' इत्यादौ हेशब्दार्थसम्बोध्यत्वविशिष्टे प्रथमार्थस्य तस्यान्वये निराकांक्षत्वेन शाब्दबोधः कथं स्यादित्यत आह हेचैत्रेत्यादौ त्विति। सम्भेदे--एकार्थकबोधकपदद्वयसमवधाने, नान्यतरवैयर्थ्यं--न ताद्दशपदद्वयान्यतरवैयर्थ्यमित्यर्थः, अन्यथा करोतीत्यादौ शाब्दबोधो न स्यादिति भावः। सुमित्रामातेति। हे सुमित्रामात! लक्ष्मण! चित्रयोधिनस्तव एतन्न चित्रमाश्चर्यमिति योजना। तत्रैव-ताद्दशार्थ एव, मातृकस्य-मातृकभागस्य, ऋकारादेः--ऋकारादिवर्णत्रयस्थाने, अकारोद्देशादकारादे-

रादेरकारोद्देशात् । "धृतिः स्वाहे"त्यादौ प्रथमादेशश्चतुर्थ्याद्यनादेशे तस्या एव उद्देश्यत्वमर्थः ।

[२]'दक्षिणेन ग्राममुत्तरेण पन्थानमि'त्यादौ एनप्रत्ययान्तस्य योगे ग्रामस्यादूरदक्षिणदिशीत्याद्याकारिका धीः, "दक्षिणोत्तराभ्यामदूरे एनोऽपञ्चम्या" इत्यनुशासनात्(१) । 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीय'-मित्यादौ तु 'क्वचिदपवादविषयेऽप्युत्सर्ग' इति न्यायात् दिगर्थयोगित्वात्-पञ्चम्यपि(२) । (३)'वृक्षमभि परि प्रति अनु वा द्योतते विद्युदि'त्यादावभ्यादेः कर्मप्रवचनीयस्य लक्ष्यीकृत्येत्यर्थः, तेन वृक्षं लक्षीकृत्याश्रित्य प्रकाशते विद्युदित्येव वाक्यार्थ इत्याश्रितत्वान्वयिनिरूपितत्वमेव तत्र द्वितीयया बोध्यते । अभ्यादेर्लक्षणाद्यर्थे निरूपितत्वादिसम्बन्धेन वृक्षादेरन्वयधियं प्रत्येव वा तदर्थकपदोत्तरं द्वितीयाऽपेक्षिता । 'प्राज्ञं प्रतिभोऽयमर्थः, प्राज्ञं प्रतिभाय वर्तते' इत्यादौ, प्रतिभातेस्त्वरया स्फुरणमर्थः

कृष्णकान्तीटीका ।

शादित्यर्थः । क्वचित्तथैव पाठः । 'धृतिः स्वाहे'त्यादौ चतुर्थीस्थाने प्रथमादेशो येन स्वीक्रियते तन्मतेऽनुपपत्त्यभावादाह—चतुर्थ्याद्यनादेश इति । तस्या एव—प्रथमाया एव ।

उपपदविभक्तिकथनप्रस्तावे प्रथमामभिधाय द्वितीयामप्याह—दक्षिणेन ग्राममित्यादि । ननु एनप्रत्ययान्तयोर्द्वितीयानुशासनात् कथं 'तत्रागारं धनपतिगृहा'दिति पञ्चमीत्यत आह—तत्रागारमित्यादि । उत्सर्ग इति । सामान्यविधिरुत्सर्गः, विशेषविधिरपवादः, क्वचिदपवादविषयेऽप्युत्सर्गस्यापि समावेश इति न्यायादिति शेषः । बोध्यते इति । तथा च वृक्षनिरूपिताश्रितत्ववती विद्युत् प्रकाशते इत्यर्थः । अभ्यादेर्वीप्सार्थस्थले द्वितीयायास्तदर्थकत्वसम्भवात् कल्पान्तरमाह-अभ्यादेरिति । तथा च निरूपितत्वादेः संसर्गमर्यादया भानं द्वितीया तु तात्पर्यग्राहिकेति भावः । ननु प्राज्ञप्रतिभोऽयमर्थ इत्यादौ प्रतिशब्दस्य लक्षीकरणार्थकत्वे उपसर्गत्वाभावेन डप्रत्ययो न स्यात, उपसर्गत्वे तु कर्मप्रवचनीयताविरहेण द्वितीया न स्यादित्यत आह—प्राज्ञ-

(१) अत्र 'एनपा द्वितीया' इति पा० सूत्रानुशासनं द्रष्टव्यम् ।

(२) पाणिनीयमतेन त्वत्र 'धनपतिगृहान्तिके मदीयं गृहमिति विवक्षया 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (२।३।३४) इत्यनुशानेन तादृशप्रयोग इति विभावनीयम् (उ० मेघ० १४) ।

(३) 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' (१।४।९०) इति पा० सूत्रोदाहरणान्याह वृक्षमित्यादिना ।

न तु प्रतेर्लक्ष्यीकरणम् , उपसर्गे त्वातो डस्य क्त्वो ल्यपश्च विधानानुपपत्तेः, परन्तु प्रतिभातेर्योगे षष्ठ्येव द्वितीययापि तदर्थः सम्बन्धोऽनुभाव्यते, "षष्ठ्यर्थे द्वितीया वा प्रतिभाते"रित्यनुशिष्टेः, तेन प्राज्ञस्य या प्रतिभा झटितिस्फूर्त्तिस्तद्विषयतावानयमर्थ इत्येवं तत्र बोधः । 'वृक्षं वृक्षमभि परि प्रति अनु वा वायसा' इति वीप्सास्थलेऽपि प्रतिवृक्षवृत्तयो वायसा इत्यर्थः । 'पितरमभि परि प्रत्यनु वा चैत्र' इत्यत्र इत्थम्भूतार्थकैरभ्यादिभिः 'पितरीत्थम्भूतश्चैत्र' इत्यन्वयबोधः । 'यन्मां प्रति परि वा तद्देही'त्यादौ प्रतिपरिभ्यामुपस्थिते भागे मत्सम्बन्धो द्वितीयया बोध्यते, तेन 'यो मदीयो भागस्तं देही'त्येवं तत्र बोधः । 'कारीरीमनुवृष्टिरि'त्यत्रानुशब्दस्य हेतुतावाचित्वात् कारीरीनिष्ठहेतुताका वृष्टिरित्यर्थः, कारीरी–यज्ञविशेषः । 'शूरमनुयुध्यते, दरिद्रमनु याचते' इत्यादौ च तस्य सहार्थत्वात् शूरेण सह युध्यते इत्यादिरर्थः । 'उपार्जुनं क्षत्रियाः, अनु देवं दानवा' इत्यादावुपानुभ्यां हीनबलस्याभिधानात्(१) क्षत्रिया अर्जुनाद्धीनबला इत्याद्याकारकस्तत्र बोधः । तदुक्तमभियुक्तैः—

लक्षणवीप्सेत्थम्भावेष्वभिर्भागे परिप्रती ।
अनुरेषु सहार्थे च हीने उपश्च कथ्यते ॥ इति १)

कृष्णकान्तीटीका ।

मित्यादि । अनुपपत्तेरिति । धात्वर्थद्योतकत्वाभावे उपसर्गत्वाभावादिति भावः । ननु तर्हि कथं द्वितीया इत्यत आह—परन्त्विति । शाब्दबोधं दर्शयति—तेनेत्यादि । प्रतिवृक्षवृत्तयो वायसा इति । तथा चाधेयतासम्बन्धेन तत्तद्वृक्षत्वव्यापका वायसा इत्यर्थः । पितरीत्थम्भूत इति । इत्थम्भूतत्वं–साधर्म्यम् । कारीरी–यागविशेषः । हेतुतावाचित्वादिति । न च

लक्षणवीप्सेत्थम्भूतेष्वभिर्भागे च परिप्रती ।
अनुरेषु सहार्थे च हीने उपश्च कथ्यते ।

इत्यत्रानोर्हेतुतार्थे कर्मप्रवचनीयत्वस्याकथनात् नेदं युक्तमिति वाच्यम् । तत्र लक्षणशब्दादेर्हेतुताया अपि प्राप्तेः ।

(१) अत्र 'हीने' 'उपोधिके च' इति (१।४।८६–८७) पा० सूत्रे द्रष्टव्ये ।

'नरमधि गुणदोषयोश्चिन्ता, निशार्द्धं वा पूजा समयमधि वा यस्तु पठती'त्यादिप्रयोगात् लक्ष्यीकृत्यार्थकस्याधिशब्दस्यापि योगे द्वितीयामिच्छन्ति । समया निकषा चाऽव्ययं सामीप्यार्थकं, तेन तद्योगे (१)'समया ग्राममि'त्यादौ च ग्रामस्य समीपमित्यन्वये ग्रामाद्यवधिकत्वं तत्प्रतियोगिकत्वं वा द्वितीयया बोध्यते । (२)'विद्यामृते, अन्तरेणाऽन्तरा विना वा नरः शोच्य' इत्यादौ ऋतेप्रभृत्यव्ययानामत्यन्ताभावस्तद्वैशिष्ट्यं वाऽर्थ इति विद्यात्यन्ताभाववान्नरः शोच्य इत्यन्वयेऽत्यन्ताभावेऽन्वितं प्रतियोगित्वम् द्वितीयार्थः । 'गगनमृते द्रव्यं न शब्दवदि'त्यादौ तूक्ताऽव्ययानां भेदोऽप्यर्थः, तेन गगनाभिन्नं द्रव्यं न शब्दवदित्याकारकस्तत्र बोधः । 'हा पुत्रमि'त्यत्र हाऽव्ययस्यार्थे कष्टे द्वितीयान्तेन पुत्रसमवेतत्वं बोध्यते । 'धिक् पुत्रमि'त्यत्र धिगर्थगर्हायां पुत्रविषयित्वम् । 'हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स'(३) इत्यादौ स्वगतमेव कष्टं हाशब्देन बोध्यते, न तु पित्रादिगतम् । 'पुत्रस्य धिक्कार' इत्यादौ तु न धिगित्यस्यार्थे पुत्राद्यन्वयः किन्तु धिक्कारादिपदस्य । एवं 'पुत्रेण विनाकृत-

---

कृष्णकान्तोटीका ।

अधिशब्दस्यापि कर्मप्रवचनीयतामाह—नरमधीति । महाकालसंहितोक्तकालिकास्तवमपि प्रमाणयति—निशार्द्धं वेति । समयमथेति पाठस्तु प्रामादिकः । वाकारेणैव कल्पान्तरमाह—तद्वैशिष्ट्यं वेति । प्रयोजकतारूपात्यन्ताभावावैशिष्ट्यं वेत्यर्थः । इत्याकारकस्तत्र बोध इति । अत्रात्यन्ताभावबोधने अवच्छेदकावच्छेदेन तादृशबोधो न स्यादयोग्यत्वादिति भावः । बोध्यते इति । तथा च पुत्रसमवेतं कष्टमिति बोधः । कष्टं—दुःखम् । पुत्रविषयित्वमिति बोध्यते इति पूर्वेणान्वयः, तथा च पुत्रविषयकद्वेषानुकूलव्यापार इति बोधः । नन्वेवं 'हा पितः क्वासि हे सुभ्रु' इत्यादौ कथं न द्वितीयेत्यत आह—हा पितरित्यादि । स्वगतमेवेति । तथा च पितृगतकष्टस्याबोधनात् न द्वितीयेति भावः । ननु 'पुत्रस्य धिक्कार' इत्यादौ कथं न द्वितीयेत्यत आह—पुत्रस्येति । कुत इत्याकाङ्क्षायामाह—किन्त्विति । तथा च पुत्रकर्तृकं धिक्करणमित्यर्थः। विनाकृतपदस्येति । तथा

---

(१) अत्र 'अभितः परितः समयानिकषाहाप्रतियोगेऽपि' इति वार्त्तिकं पा० मतेन द्रष्टव्यम् ।

(२) इदं 'अन्तरान्तरेण युक्ते' (२।३।४) इति पा० सूत्रस्योदाहरणं बोध्यम् ।

(३) भट्टिकाव्यस्थषष्ठसर्गीय ११ श्लोकः ।

श्चैत्र' इत्यादौ न विनेत्यस्यार्थे, परन्तु विनाकृतपदस्य । विनाऽव्ययस्य योगे द्वितीयामिव तृतीयापञ्चम्यावपीच्छन्ति 'घटेन विना, घटाद्विना' इत्यपि प्रयुक्तेः । 'उपर्य्युपरि गृहं पताके'त्यत्र द्विरुक्तस्योपरिनिपातस्य सन्निकृष्टाऽर्द्धभागार्थकत्वेन गृहस्य सन्निकृष्टार्द्धभागे पताकेत्यर्थः । 'अधोऽधो मेघमम्भः, अध्यधि शिखरं घन' इत्यत्राप्युक्तादिशैवान्वयः, द्विरुपर्य्यधोऽधीनां सामीप्यवाचितायां तद्योगे द्वितीयानुशिष्टेः ।

सर्वेषां मद्यमम्लानामुपर्य्युपरि वर्त्तते ।
अत्राता शरणं यातं यात्यधोऽधश्च दुर्गतेः ॥

इत्यादौ द्विरुक्तस्याप्युपर्य्यादेर्न सामीप्यमर्थः परन्त्वतिशयः । 'गृहमभितः पुरतरुणा' इत्यत्र अभितःशब्दस्य खण्डशो वृत्त्या सर्व्वावच्छेदेनेत्यर्थः, तदेकदेशे च सर्वास्मिन् गृहावयवत्वं द्वितीययाऽनुभाव्यते । 'गृहं परितः सर्वत उभयतो' वा इत्यत्राप्युक्तरीत्यैवान्वयः । 'नदीं यावन्मम पुरं, गृहं यावद्वनं तव' इत्यत्र यावदित्यव्ययस्य मर्य्यादा अभिविधिश्च क्रमेणार्थः, तेन नदीपर्य्यन्तं मत्पुरं, गृहाभिव्याप्तं त्वद्वनमित्या-

---

कृष्णकान्तोटीका ।

च पुत्रकर्तृकं यदत्यन्ताभावविशिष्टीकरणं तदाश्रयश्चैत्र इति बोध इत्यर्थः । परमतानुसारेणाप्युपपादयति—विनाऽव्ययस्येति । प्रयुक्तेरिति । तथा च एतन्मते पुत्रविनाकृत इत्यादिकं यथाश्रुतमेव सम्यगिति भावः । उक्तदिशैवेति । जलधरस्य सन्निकृष्टाधोभागे अम्भः, शिखरस्य सन्निकृष्टाधोभागे घन इति भावः । तद्योगे—उपर्यधोऽधीनां योगे । द्वितीयानुशिष्टेरिति । "उपर्य्यधोऽधीनां सामीप्य एवे"ति वृत्तिकारोक्तेरिति भावः । अन्यत्र न भवतीत्याह—सर्वेषामिति । सर्वेषामम्लानामुपर्युपरि मद्यमिति योजना । शरणं यातं प्रति अत्राता यः स दुर्गतेरधोऽधो यातीत्यर्थः । इत्यादावित्यादिपदेन "उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय" इत्यादिपरिग्रहः । परन्त्वति । तथा च सामीप्यार्थकत्वाभावान्न द्वितीयाप्रसक्तिरिति भावः । अखण्डस्य व्यापकत्वस्य तत्र वृत्त्यसम्भवात् खण्डशो वृत्त्या इति । अनुभाव्यते इति । तथा च गृहस्य सर्वावयवावच्छेदेन पुरतरुणा इत्यर्थः । अत्रेदमवधेयम्—एतादृशार्थेऽभितःशब्दस्य कर्मप्रवचनीयत्वाभावेऽपि द्वितीयानुशिष्टेर्वक्तव्यत्वमिति । एवमग्रेऽपि । उक्तरीत्यैवेति । परित इत्यादिशब्दानां खण्डशो वृत्त्या सर्वावयवावच्छेदेनेत्यर्थं इत्याद्युक्तरीत्येत्यर्थः । क्रमेणार्थ इति । नदीं यावदित्यत्र मर्यादा, गृहं यावदित्यत्राभिविधिरि-

कारस्तत्र बोधः । तत्पर्यन्तत्वञ्च तदवधिकविप्रकर्षशून्यत्वे सति तत्सन्निकृष्टत्वम् । तदभिव्याप्तत्वमपि प्रकृते तदारम्भकयावदवयवावच्छेदेन तत्संयुक्तत्वम् । 'मासं सुप्यते, क्रोशं गम्यते' इत्यादौ "कालाध्वनोरत्यन्तसंयोगे" (२।३।५) इत्यनुशिष्टेर्द्वितीययाऽभिव्याप्तिरुच्यते, तेन मासाभिव्याप्तः स्वापः, क्रोशाभिव्याप्तं गतेः कर्मत्वमित्यादिकस्तत्र बोधः । तत्र

---

कृष्णकान्तीटीका ।

त्यर्थः । शाब्दप्रकारमाह—तत्पर्यन्तत्वञ्चेति । सामान्यतः पर्यन्तत्वस्याप्रसिद्ध्या तदिति विप्रकृष्टेऽपि आपेक्षिकसन्निकृष्टत्वसत्त्वात् सत्यन्तम् । गगनगुणादावतिव्याप्तिवारणाय विशेष्यदलम् । न च मूर्त्तत्वनिवेशेऽपि एतद्दोषवारणसम्भवात् किं विशेष्यदलमिति वाच्यम् । तथासति क्रियायां तत्सत्त्वानुपपत्तेः । क्रियायां तन्नास्त्येवेति तु न देयम्, "सञ्चारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतम्" इत्यादेरलग्नकतापत्तेः। ननु अभिविध्यर्थाभिव्याप्तत्वं किमित्याकाङ्क्षायामाह—तदभिव्याप्तत्वमपीति । प्रतियोग्यनिरूपितत्वं व्यापकत्वमसिद्धमित्यत आह—तदिति । गृहस्य यत्किञ्चित्प्रदेशगतधनतात्पर्येण तादृशप्रयोगवारणाय निष्कृष्टमाह—प्रकृते इत्यादि । गृहं यावद्धनमित्यत्र गृहारम्भकावयवव्यापकसंयोगसम्बन्धावच्छिन्नाधिकरणतानिरूपकं धनमित्यन्वयबोध इत्यर्थः। व्याप्यताघटकसम्बन्धः समवायः। यद्यप्येकगृहावयवावच्छिन्नधनाधिकरणतानामव्यापकत्वम्, तथापि यत्किञ्चिद्गृहावयवव्यापकत्वं विवक्षितम् । व्यापकता च धनाधिकरणतात्वेन बोध्या, अतो धनानां तदधिकरणतानां च नानात्वेऽपि न क्षतिः । 'मासं सुप्यते, क्रोशं गम्यते' इत्यादौ द्वितीययाऽभिव्याप्तिरुच्यते इत्यत्रान्वयः। कुत इत्याकांक्षायामाह—कालाध्वनोरित्यादि। एतद्ग्रन्थस्य पश्चात्कथने सौष्ठवसम्भवेऽपि लाघवात्पूर्वमेवाभिधानम् । शाब्दप्रकारमाह—तेनेति। गतेः कर्मत्वमिति। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः, आख्यातार्थकर्मत्वस्य गतिमुख्यविशेष्यतयैव भानमिति भावः । 'क्रोशं गम्यते ग्राम' इत्यादौ क्रोशाभिव्याप्यगतिकर्मत्ववान् ग्राम इत्यादिबोधोऽवसेयः। यदुक्तं परिशिष्टकृता—"कालाध्वनोरत्यन्तसंयोगे"(इति ?)द्वितीयाविधानन्तु सकर्मके कर्मणि वाच्ये द्वितीयार्थम्, अकर्मके च कर्मसंज्ञाव्याघातार्थमुक्तनिषेधार्थमिति—यावत् इति(?) । नन्वेकदिनशयनेऽपि मासं सुप्यते इति प्रयोगापत्तिरित्यत आह—तत्रेति। तत्र—तादृशप्रयोगस्थले, मासवृत्तियाऽधिकरणता तदवच्छेदकीभूतं यद्यावत्त्वं तत्पर्याप्त्यधिकरणेत्यर्थः, तथा चैकदिनस्य तादृशयावत्त्वपर्याप्त्यधिकरणत्वाभावात् नातिप्रसङ्ग इति । न च मासघटकदिनत्रयादिपर्याप्तयावत्त्वस्यापि तथात्वेन दिनत्रयशयनस्थले तादृशप्रयोगापत्तिरिति वाच्यम् । तादृशदिनत्रयस्य तथाविधयावत्त्वावच्छिन्नपर्याप्त्यनधिकरणत्वात् । न च मासद्वयपर्याप्तयावत्त्ववारणाय तथाविध-

मासादेरभिव्याप्तिर्मासवृत्त्यधिकरणतावच्छेदकीभूतयावत्त्वपर्याप्त्यधिकरणकालवृत्तित्वं तथाविधयत्किञ्चिद्यावत्त्वव्यापकत्वं वा, क्रोशादेस्तु क्रोशगम्यदेशवृत्त्यधिकरणतावच्छेदकीभूतयावत्त्वपर्याप्त्यधिकरणदेशवृत्तित्वं यथाविधयत्किञ्चिद्यावत्त्वव्यापकत्वं वेति मन्तव्यम् ।

[३]'अक्ष्णा काण'(१) इत्यत्र चक्षुःशून्यगोलकवत्त्वे सति सचक्षुर्गोलकवान् काणः प्रसवान्धस्य काणत्वाभावात्, गोलकार्थकाक्षिपदोत्तरतृती

कृष्णकान्तीटीका ।

यत्किञ्चिद्यावत्त्वस्य पर्याप्त्यधिकरणत्वमवश्यं निवेशनीयं, तथा चोक्तातिप्रसङ्गतादवस्थ्यमिति वाच्यम् । मासवृत्तिपदेन यत्किञ्चिन्मासत्वव्याप्या याऽधिकरणता तदवच्छेदकयावत्त्वादेरुक्तत्वात् मासद्वयवृत्त्यधिकरणताया यन्मासत्वव्याप्यत्वाभावात्, मासद्वृत्त्यधिकरणताया मासत्वव्याप्यतया तद्वारणाय यत्किञ्चित्त्वनिवेशस्यावश्यकत्वात् । न चैवं यत्किञ्चिन्मासत्वपर्याप्त्यधिकरणत्वनिवेशेनैवोपपत्तौ किमधिकरणतावच्छेदकयावत्त्वनिवेशेन, यदि च प्रत्येकपर्याप्तिस्वीकारे कतिपयदिनानामपि तथात्वे नातिप्रसंग इति तद्वारणायैव तन्निवेश इत्युच्यते, तदा तन्निवेशेऽपि तद्दोषतादवस्थ्यं तादृशयावत्त्वस्यापि मासघटककतिपयदिनपर्याप्तत्वादिति वाच्यम् । तादृशयावत्त्वव्यापकत्वस्यैव निवेश्यत्वात् । अत एव तत्कल्पापेक्षया लाघवात् कल्पान्तरमाह—तथाविधेति । मासवृत्त्यधिकरणतावच्छेदकेत्यर्थः । प्रकृतस्थलेऽपि मासद्वयवृत्तियावत्त्वस्यापि तथात्वेन व्यापकत्वासम्भवात् यत्किञ्चिदिति यावत्त्वविशेषणम् । दिनत्रयवृत्तिशयनेऽपि यत्किञ्चिद्यावत्त्वव्यापकत्वसत्त्वादतिप्रसङ्गवारणाय मासवृत्त्यधिकरणतावच्छेदकेति तादृशयावत्त्व विशेषणम् । अत्र यत्किञ्चिन्मासत्वव्यापकत्वोक्तौ न कोऽपि दोष इति चेत् । मासपदोत्तरद्वितीयार्थस्य मासपदार्थानन्वितत्वे प्रकृत्यर्थान्वित इत्यादिव्युत्पत्तिभङ्गप्रसङ्गः, तादृशव्यापकत्वघटकमासत्वे आधेयतया मासपदार्थान्वयो न सम्भवति घटवति घटत्वमित्यादिवन्निराकाङ्क्षत्वात् । 'क्रोशं गम्यत' इत्यादिस्थलीयव्यापकत्वमाह—क्रोशादेस्त्विति । अत्रापि प्रत्येकपर्याप्तिसत्त्वे तादृशयावत्त्वव्यापकत्वस्यैवावश्यं निवेशनीयतया लाघवात्कल्पान्तरानुसरणं बोध्यम् । व्यावृत्तिस्तु पूर्ववत् स्वयमूह्या ।

उपपदविभक्तिषु तृतीयामाह—अक्ष्णा काण इत्यत्रेति । इत्यानुपूर्वीप्रकारकवाक्ये घटकत्वं सप्तम्यर्थः, अन्वयश्चास्य काणपदार्थघटककाणपदे, तथा च चक्षुःशून्यगोलकवत्त्वे सति सचक्षुर्गोलकवान् काणपदार्थः । ननु विशेष्यदलं किमुपादेयम् ? चक्षुःशून्यगोलकवत एव काणत्वे क्षत्यभावादित्यत आह—प्रसवान्धस्येति । प्रसवकाली-

(१) 'येनाङ्गविकार' इति (२।३।२०) पाणिनीयसूत्रोदाहरणीयस्थलेषु शाब्दबोधप्रकारमाह अक्ष्णेति ।

यायास्तु विकृतत्वं वृत्तिमत्त्वञ्चार्थः, तत्राद्यं सम्बोध्यत्वमिव प्रकृत्यर्थे विशेषणविधयान्वितम्, काणत्वैकदेशे च चक्षुःशून्यत्वे प्रकृत्यर्थनिरूपितं चरमम्, तथा च विकृतगोलकवृत्तित्वविशिष्टं यच्चक्षुःशून्यत्वं तद्वद्गोलकवान् सचक्षुष्क इत्याकारस्तत्र बोधः, पाणिनेरपि "येनाङ्गविकार" (२।३।२०) इति सूत्रस्योक्तार्थ एव तात्पर्य्यात् । विकृतत्वन्तु विरूपत्वम्-यथासंस्थानवत्त्वपर्य्यवसितं "कुत्सितेऽङ्गे" इति कलापस्यैकवाक्यत्वात् । यद्वा स्वाधिष्ठानवृत्तित्वसम्बन्धेन चक्षुःशून्यो यश्चक्षुर्विनाशस्तद्वान् सचक्षुष्कः काणपदस्यार्थस्तादृशे (इति) च विनाशे अक्षिपदस्यार्थस्य गोलकस्य विकारप्रयुक्तत्वं तृतीयया बोध्यते, तथा च गोलकविकारप्रयुक्तस्य निरुक्तसम्बन्धेन चक्षुःशून्यस्य चक्षुर्नाशस्याश्रयः सचक्षुष्क इत्याकारस्तत्र बोधः, विकारस्तु कनीनिकाद्यपगमरूपो ग्राह्यः । 'पादेन खञ्ज' इत्यत्र सहजसंस्थानशून्यचरणवान् खञ्जः, तथा च तत्राप्युक्तरीत्या विकृतपादवृत्तित्वविशिष्टं यत्सहजसंस्थानशून्यत्वं तद्वच्चरणवान्, चरणविका-

कृष्णकान्तोटीका ।

नान्धस्य जन्मकालीनसचक्षुर्गोलकशून्यतावत इति यावत्, पश्चादन्धस्य सचक्षुर्गोलकवत्त्वविशेषणेन वारणसम्भवात्, तत्र काणत्वस्येष्टत्वादिति भावः । अत एव सिद्धान्तवागीशेनापि कारकचक्रे—'जातप्रसवान्धस्य काणत्वे चक्षुष्मद्गोलकवत्त्वे सतीति विशेषणं देयमि'त्युक्तम् । तत्राद्यं—तृतीयार्थयोर्मध्ये आद्यं विकृतत्वम् । सम्बोध्यत्वमिवेत्यनेन यथा चैत्र इत्यादौ प्रकृत्यर्थाविशेष्यतयैव स्वार्थबोधकत्वव्युत्पत्तेः सङ्कोचः तथाऽत्रापीत्यावेदितम् । ननु वृत्तित्वरूपचरमार्थस्य तदा कुत्रान्वय इत्याकाङ्क्षायामाह—काणत्वैकदेशे इति । चरममिति अन्वितमिति पूर्वेणान्वयः । शाब्दबोधप्रकारमाह—तथा चेति । सचक्षुष्क इति । सचक्षुर्गोलकवानित्यर्थः । ननु "कुत्सितेऽङ्गे" इति कालापसूत्रात् एतादृशार्थलाभेऽपि पाणिनिसूत्रान्न तादृशार्थलाभ इत्यत आह—पाणिनेरपीति । यथाश्रुतशब्दादुक्तार्थस्यालाभादाह—तात्पर्यादिति । नन्वेवं महाचक्षुर्नाशेऽपि काणत्वापत्तिरतः कल्पान्तरमाह—यद्वेति । स्वाधिष्ठानेति अधिकरणे ल्युट्, तथा च स्वाधिकरणवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावविशिष्टो यश्चक्षुर्नाशस्तद्वान् सचक्षुष्कः इत्यर्थः । तथा च महाचक्षुर्नाशेऽपि तादृशनाशस्य निरुक्तसम्बन्धेन चक्षुरत्यन्ताभाववत्त्वाभावात् न काणत्वापत्तिरिति भावः । चक्षुःशून्यो—चक्षुर्विनाशः । उपसंहरति—तथाचेति । चक्षुर्नाशाश्रयत्वं पुरुषे स्वाश्रयसंयुक्तत्वसम्बन्धेन । उक्तरीत्येति । पादपदोत्तरतृतीयाया विकृतत्वं चार्थः, तत्राद्यं प्रकृत्यर्थविशेषणतया-

रप्रयुक्तस्य यथोचितसंस्थानवैधुर्यस्याश्रयीभूतचरणवानिति वा तत्र बोधः। 'श्रोत्रेण बधिरः' 'कायेन वामन' इत्यादावप्युक्तैव रीतिः, अङ्गपदस्य प्रयत्नावच्छेदकोपलक्षकत्वादिति वदन्ति।

(१)'मुखेन त्रिलोचनः कायेन दशवक्त्र' इत्यादौ तु यदि लोचनत्रयादिमत्तया मुखादिवैकृत्यमवबुध्यते तदा विकार एव तृतीया नोचेद्वैशिष्ट्यमात्रे। 'जटाभिस्तापस' इत्यादितो जटाविशिष्टस्तापस इत्याद्यनुभवेन विशेषणेऽनुशिष्टतृतीयाया वैशिष्ट्यवाचितायां पर्यवसितेः। वैशिष्ट्यञ्चात्र नाधिकरणत्वं सम्बन्धितामात्रं वा, 'मेयत्वेन घट' इत्यपि प्रयो-

कृष्णकान्तीटीका।

ऽन्वितं, द्वितीयं खञ्जपदार्थैकदेशे सहजसंस्थानशून्यत्वे प्रकृत्यर्थनिरूपितमन्वितमितिरीत्या। अथ वा पादपदार्थस्य चरणस्य विकारप्रयुक्तत्वं तृतीयया खञ्जपदार्थैकदेशे सहजसंस्थानशून्यत्वे बोध्यत इति रीत्येत्यर्थः। अत एव शाब्दबोधप्रकारद्वयमपि दर्शितम्, वैधुर्यनिष्ठप्रयुक्तत्वं क्षैमिकम्। खञ्जपदार्थस्य नाशघटितत्वे अजातसहजसंस्थानपादकस्य खञ्जत्वानुपपत्तेरिति भावः। उक्तैव रीतिरिति। सहजसंस्थानशून्यकर्णवान् बधिरः। अजातसंस्थानशून्यदेहवान् वामनः। तत्र विकृतकर्णवृत्तित्वविशिष्टं यत् सहजसंस्थानशून्यत्वं तद्वत्कर्णवान्, कर्णविकारप्रयुक्तस्य यथोचितसंस्थानवैधुर्यस्याश्रयीभूतकर्णवानिति वा बोधः। ननु सूत्रस्थाङ्गपदेन हस्तादिरेव बोध्यते, तत्कथं कायेन वामन इति प्रयोग इत्यत आहाङ्गेति। तथा च प्रयत्नावच्छेदकत्वमेव प्रकृतेऽङ्गत्वमिति भावः। स्वमतेऽङ्गपदं शरीरपरं, शरीरत्वन्तु चेष्टावत्त्वमात्रत्वम्, अतो 'वदन्ती'त्युक्तम्।

ननु अधिकाङ्गसद्भावेऽपि प्रकृतसंस्थानवत्त्वात् कथं 'मुखेन त्रिलोचन' इत्यादिकः प्रयोग इत्यत आह—मुखेनेत्यादि। तदा विकार एवेति। तथा चाविकृतमुखवृत्ति यत् सहजसंस्थानशून्यत्वं तद्वन्मुखवांस्त्रिलोचन इति, एवं विकृतकायवृत्ति यत् सहजसंस्थानशून्यत्वं तद्वत्कायवान् दशवक्त्र इति बोधः। तत्र सहजसंस्थानशून्यत्वे निप्रतिपन्नं प्रत्याह-नो चेदिति। तथा च मुखवृत्तित्रिलोचनवान्, कायवृत्तिदशवक्त्रवानिति बोधः। ननु तृतीयाया वैशिष्ट्यवाचित्वं कुत इत्यत आह-जटाभिस्तापस इति। पर्यवसितेः-पर्यवसानात्। ननु किं नाम वैशिष्ट्यमित्यत आह—वैशिष्ट्यं चात्रेति। आत्मनि जटासंयोगस्य वृत्त्यनियामकत्वात् जटाभिरिति तृतीया न स्यात् अतः सम्बन्धितामात्रं वेति। प्रयोगापत्तेरिति।

(१) 'इत्थंभूतलक्षणे' (२।३।२१) इति पा० सूत्रोदाहरणान्याह मुखेनेति।

गापत्तेः, परन्त्वतद्व्यावृत्तत्वम्, तथाच अजटव्यावृत्तिमांस्तापस इत्याकारस्तत्र फलितार्थः। इदन्तु बोध्यम्—प्रकृत्यर्थस्य निरुक्तवैशिष्ट्यं यदि वर्त्तमानतया तया प्रत्याय्यते तदेदं विशेषणत्वेन, यदि चावर्त्तमानत्वेन तदोपलक्षणत्वेन व्यपदिश्यते, यथा 'शिखया परिव्राजको वर्त्तत' इत्यादौ यथा वा 'गुरुणा टीका, कुरुणा क्षेत्रमि'त्यादौ ।

'पुत्रेण सहागतः, सूपेन सार्द्धं भुक्तः, चक्रेण सार्द्धं दण्डेन जनितः, पुत्रेण समं मित्राय दानमि'त्यादौ स्वान्वयितत्तत्कर्तृत्वादिकारकावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वरूपं साहित्यं सहाद्यव्ययस्यार्थः, तदेकदेशे च कर्तृत्वादिकारके स्वप्रकृत्यर्थस्याधेयत्वं तृतीयया बोध्यते, तेन पुत्रवृत्तिकर्तृताकाऽऽगतिकालीनाऽऽगतिकर्तृतावान्, सूपनिष्ठकर्मताकभोजनकालीनभोजनकर्मतावान्, चक्रनिष्ठकरणताकोत्पत्तिकालीनदण्डनिष्ठकरणताकोत्पत्तिमान्, पुत्रसम्प्रदाताकदानकालीनं मित्रसम्प्रदानताकं

---

कृष्णकान्तीटीका ।

मेयत्वाधिकरणत्वादेः पटादावक्षतत्वात्, न चेष्टापत्तिरनुभवविरोधादिति भावः । तदा किमित्याकांक्षायामाह परन्त्विति । अतद्व्यावृत्तत्वं—तदभावाभाववत्त्वम्, अजटव्यावृत्तिमान्—जटाभावाभाववानित्यर्थः । तथा च मेयत्वस्याव्यावृत्तेरप्रसिद्ध्या न तादृशप्रयोग इति भावः । निरुक्तेति—अतद्व्यावृत्तिरूपेत्यर्थः । तया—तृतीयया, इदं-तृतीयाप्रकृतिप्रतिपाद्यजटाशिखादिकं, विशेषणत्वेन व्यपदिश्यत इति परेणान्वयः, साक्षाद्व्यावर्तकत्वेन व्यवह्रियते इत्यर्थः । अवर्त्तमानत्वेनेति, तया प्रत्याय्यते इति पूर्वेणान्वयः । उपलक्षणत्वेन—धर्मान्तरोपस्थितिद्वारा व्यावर्तकत्वेनेत्यर्थः । विशेषणतया व्यपदेशस्थलस्य जटाभिरित्यादिना दर्शितत्वात्, उपलक्षणत्वेन व्यपदेशस्थलं दर्शयति—यथा शिखयेति । इत्यादावित्यादिपदेन काकैर्गृहमित्यादिपरिग्रह । तत्रोद्गतशिखामूलवत्त्वोद्गततृणवत्त्वादिधर्मान्तरोपस्थितिद्वारा काकशिखादेर्व्यावर्त्तकत्वादिति भावः । व्युत्पत्तिवैशद्याय स्थलान्तरमपि दर्शयति—गुरुणा टीकेत्यादि । गुरूपलक्षिता टीका, कुरूपलक्षितं क्षेत्रमित्यर्थः ।

स्वान्वयीत्यादि—स्वं-समभिव्याहृतक्रिया, तथा च यादृशक्रियान्वयि यत्र यत्कारकं तत्र तत्कारकावच्छिन्नतादृशक्रियाकालीनत्वं सहार्थ इत्यर्थः । तेनेति, इत्याकारकस्तत्र बोध इति परेणान्वयः । नन्वेवं 'तुल्यवदेकक्रियान्वयः

दानमित्याकारकस्तत्र बोधः। "तुल्यवदेकक्रियान्वयित्वं साहित्य"मिति प्रवादस्याप्येककारकान्वयित्वेन तुल्ययोरेकजातीयक्रिययोरन्वयित्वं समानकालीनत्वमित्यत्र तात्पर्य्यात्। 'पुत्रेण सह गत' इत्यत्र समभिव्याहृतापि गतिक्रिया न कर्मत्वादिनाऽन्वयिनी, किन्तु निष्ठार्थकर्तृत्वेनेति पुत्रकर्मकत्वाद्यवच्छिन्नगतिकालीनत्वस्य न तत्रावगमः। 'पुत्रेण सह गतं चैत्रेणे'त्यादावपि तृतीयार्थ एव कर्तृत्वे गतिक्रियाऽन्विता। यत्तु—'पुत्रेण सहागत' इत्यत्र समभिव्याहृतगत्यादिक्रियाकालीनत्वमेव सहाद्यव्ययस्यार्थस्तन्निविष्टगतौ पुत्रादिपदोत्तरतृतीयालब्धस्य पुत्रनिष्ठकर्तृत्वस्यान्वयादेव पुत्रकर्तृकगतेर्लाभात्—इति। तन्न, तृतीयार्थकर्तृत्वस्य धात्वर्थ एव साकाङ्क्षत्वेन सहाद्यर्थे तदन्वयस्याव्युत्पन्नत्वात्। 'पुत्रेण समं मित्रं प्राप्तश्चैत्र' इत्यादौ तु तात्पर्यवशात् पुत्रकर्तृकमित्रप्राप्तिकालीनमित्रकर्मकप्राप्तिकर्तृत्वं, कदाचिच्च पुत्रकर्मकप्राप्तिकालीनमित्रकर्मकप्राप्तिकर्तृत्वं चैत्रस्य बुध्यते, समभिव्याहृतायाः प्राप्त्यादिक्रियायाः कर्तृत्वे इव कर्मत्वेऽप्यन्वयितया तत्प्रत्येकावच्छिन्नप्राप्त्यादिकालीनत्वबोधने सहाद्यव्ययस्य सामर्थ्याप्रच्यवात्। न चान्यकर्तृकध-

---

कृष्णकान्तीटीका।

यित्वं साहित्यमि'तिप्राचीनप्रवादासंगतिरित्यत आह—तुल्यवदेकेति। तात्पर्यादिति—उक्तार्थस्य शब्दादभानादिति भावः। कर्तृत्वादौ समभिव्याहृतक्रियान्वयित्वव्यावृत्तिमाह—पुत्रेणेति। न कर्मत्वादिनाऽन्वयिनीति। कर्मत्वस्य तत्राभानादिति भावः। तदा किमवच्छिन्नेत्याकांक्षायामाह—किन्त्विति। उपसंहरति—इतीत्यादि। यदि सान्वयित्वं स्वनिष्ठप्रकारतानिरूपितविशेष्यत्वं तदा भावप्रत्ययस्थलासंग्रह इति विषयतात्वेन तन्निवेशयन्नाह—पुत्रेण सह गतं चैत्रेणेति। कर्तृत्व इति सप्तमीनिर्देशात् तस्य विशेष्यत्वं व्यञ्जितम्। स्वान्वयित्वस्य यथाश्रुतार्थवादिनां(१) मतमुपन्यस्य दूषयति—यत्त्विति। ननु यत्र तादृशक्रिया उभयकारकान्वयिनी तत्र किन्नाम कारकावच्छिन्नतादृशक्रियाकालीनत्वं सहार्थ इत्याकांक्षायामाह—पुत्रेण समं मित्रं प्राप्तश्चैत्र इत्यादौ त्विति। तात्पर्यवशादिति प्राचीनमतानुसारेण, स्वयं तात्पर्यज्ञानस्य हेतुत्वानङ्गीकारात्, स्वमते तु प्रकरणज्ञानवशादिति बोध्यम्। कु-

---

(१) भवानन्दसिद्धान्तवागीशादीनामित्यर्थस्तच्च षट्कारकविवेचनादौ द्रष्टव्यम्।

नप्राप्तिदशायां ग्रामप्राप्तिमत्यपि मैत्रे 'धनेन सहाऽयं ग्रामं प्राप्त' इति प्रयोगापत्तिः, तस्य धनकर्मकप्राप्तिकालीनग्रामकर्मकप्राप्तिमत्त्वानपायादिति वाच्यम् । 'घटत्वेन सह घटमवगाहते बुद्धिरि'त्यादौ क्वचित् कर्तृत्वावच्छिन्नायाः समानकर्तृकत्वस्येव सर्वत्र कर्मत्वावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वस्येव समानकर्तृकत्वस्यापि सहार्थे निवेश्यत्वात् । यत्तु—स्वान्वयिकर्मत्वाद्यवच्छिन्ना समभिव्याहृतक्रियैव सर्वत्र सहाद्यव्ययस्यार्थस्तस्याश्च समानकालीनत्वैककर्तृत्वोभयसम्बन्धेनैव समभिव्याहृतक्रियायामन्वयान्नोक्तदोष—इति, तत्तुच्छम्, 'शाकस्य भोजनं न सुधया सहे'त्यादिवाक्यानां समानकर्तृकत्वादिसम्बन्धेन सुधाकर्मकभोजनाद्यभावस्य बोधकतायामप्रामाण्यापत्तेः, वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः ।

'पटः पटत्वेन सह भासते' इत्यादौ पटत्वनिष्ठविषयतायाः समान-

---

कृष्णकान्तीटीका ।

त इत्याकाङ्क्षायामाह—समभिव्याहृताया इति । शंकते—न चेति, वाच्यमिति परेणान्वयः । दृष्टान्तपूर्वं समाधत्ते—घटत्वेन सहेत्यादिना, सहार्थे निवेश्यत्वादित्यन्तेन । क्वचिदिति । तथाच यथा क्वचित् कर्मसमभिव्याहारस्थले कर्तृत्वावच्छिन्नक्रियासमानकालीनत्वमिव समानकर्तृकत्वमपि सहार्थे निवेश्यते, तथा सर्वत्रैव तादृशस्थले कर्मत्वावच्छिन्नक्रियाकालीनत्वमिव समानकर्तृकत्वमपि सहार्थे निवेश्यत इत्यर्थः, अन्यथा विभिन्नज्ञाननिरूपितविषयतामादाय घटत्वेन सह घटमवगाहते इति प्रयोगापत्तेः । पुत्रेण सहागतश्चैत्र इत्यादावेककर्तृकत्वाभावेऽपि क्षतिविरहाद क्वचिदित्युक्तमिति भावः । उक्तापत्तौ समाधानान्तरवादिनां मतमुपन्यस्य दूषयति—यत्त्विति । स्वान्वयीति । स्वं—विशेष्यीभूता क्रिया । सर्वत्रेति । कर्मसमभिव्याहारस्थले इति शेषः । तस्याः—स्वान्वयिकर्मत्वावच्छिन्नक्रियायाः । नोक्तदोष इति । अन्यकर्तृकधनप्राप्तिदशायां ग्रामकर्मकप्राप्ते सत्यपि मैत्रे धनेन सहायं ग्रामं प्राप्त इति प्रयोगापत्तिरूपो दोषो नेत्यर्थः । दूषयति तत्तुच्छमिति । कुत इत्याकाङ्क्षायामाह वृत्त्यनियामकेति । वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकत्वाप्रसिद्धेरित्यर्थः, अन्यथा सिद्ध्यसिद्धिव्याघातापत्तेः । अस्मन्मते च समानकर्तृकसुधाकर्मकभोजनकालीनत्वबोधानुपपत्तिरिति भावः ।

ननु कर्मसमभिव्याहारस्थले समानकर्तृकत्वभाननियमेऽपि तदसमभिव्याहारस्थले पटः पटत्वेन सह भासत इत्यादौ विभिन्नज्ञानीयविषयतामादाय

कालीनत्वमिव समानप्रतियोगिकत्वमप्यर्थः, विभिन्नज्ञानीयविषयतायां तादृशाप्रयोगात् । 'पुत्रेण सह गतिरि'त्यादौ कर्तृत्वाद्यन्वयिक्रियासमभिव्याहारविरहेण शक्त्या पुत्रकर्तृकगतिकालीनत्वादेर्बोधयितुमशक्यत्वादनन्यगत्या सहादेस्तादृशार्थे निरूढलक्षणा । 'पुत्रेण सह स्थूल' इत्यादावपि समभिव्याहृतनामार्थतावच्छेदकीभूतस्थौल्यादिसमानकालीनत्वे, तथा च पुत्रवृत्तिस्थौल्यकालीनस्थौल्यवानित्याकारस्तत्र बोधः । 'पत्न्या सहाग्निमादध्यादि'त्यादौ पत्नीकर्तृकस्याग्न्याधानस्यालीकत्वेन तत्समानकालीनत्वस्य प्रमापयितुमशक्यत्वात् सामानाधिकरण्यपर्यवसितसहभावमात्रं तत्र सहस्यार्थः, यथा 'घटेन सह पटवद्गृहमि'त्यादौ । एतेन 'यत्कर्तव्यं तदनया सहे'त्यादिको विधिरपि व्याख्यातः । 'पुत्रेणागत' इत्यादौ विनापि सहादिप्रयोगं तदर्थस्य प्रतीतिस्तृतीयाया एव तत्र कर्तृत्वाद्यवच्छिन्नागतिसमानकालीनत्वादिकमर्थः, तन्निविष्टे च कर्तृत्वादौ प्रकृत्यर्थस्य पुत्रादेराधेयत्वेनान्वयः ।

---

कृष्णकान्तीटीका ।

तादृशप्रयोगापत्तिरित्यत आह—पटः पटत्वेन सह भासत इत्यादाविति । पटत्वनिष्ठविषयताया इति । भासधातोर्विषयतार्थकत्वादिति भावः । समानप्रतियोगिकत्वमपीति । तथा च विषयत्वार्थकधातुयोगित्वमेव कर्तृत्वमिति भावः । ननु विभिन्नज्ञानविषयतामादाय तादृशप्रयोग इष्ट एवेत्यत आह—विभिन्नेत्यादि । तादृशाप्रयोगात्-तादृशप्रयोगस्याननुभवासिद्धत्वादित्यर्थः । ननु कर्तृबोधकपदासमभिव्याहारस्थले कर्तृत्वाद्यन्वयिक्रियाया अभावात् तत्र का गतिरित्यत आह—पुत्रेण सह गतिरित्यादाविति । स्थौल्यादिसमानकालीनत्व इति, निरूढलक्षणेति पूर्वेणान्वयः । प्रमापयितुमिति । प्रमां प्रतिपादयितुमित्यर्थः । भ्रमात्मकज्ञानजनने बाधकाभावादिति भावः । ननु सामानाधिकरण्यस्य सहार्थत्वं न दृष्टचरं कुत्रापीत्यत आह—यथेत्यादि । एतेन-सहशब्दस्य क्वचित् सामानाधिकरण्यार्थकत्वेन, कर्तव्यं-कृतिसाध्यत्वेन विधिबोधितम् , अनया-पत्न्या । व्याख्यात इति । तत्रापि सहशब्देन लक्षणया सामानाधिकरण्यस्यैव बोधनादिति भावः । ननु यत्र सहशब्दप्रयोगो नास्ति तत्र का गतिरित्यत आह—पुत्रेणागत इत्यादाविति । समानकालीनत्वादिकमर्थ इत्यादिना प्राक्तनादिपदग्राह्य-पटत्वेन पटमवगाहते बुद्धिरि-

'धनेन कुलं, दण्डेन घट' इत्यादौ व्यापारगर्भस्य करणत्वस्याप्रतीतावपि हेतुत्वप्रत्ययात् 'अभिघातेन क्रिये'त्यादौ करणत्वस्य बाधाच्च तत्र जनकत्वरूपं हेतुत्वमेव तृतीयार्थः, तथा च धननिष्ठहेतुताकं कुलमित्याकारस्तत्र बोधः । न च 'गोत्वं न धनेने'तिवत् 'कुलं न धनेने'त्यपि स्यात् , निरूपकत्वादेः सम्बन्धस्य वृत्त्यनियामकतया तदवच्छिन्नाभावस्य प्रत्येतुमशक्यत्वादिति वाच्यम् । 'कुले धनस्य हेतुत्वं, गवि द्विजस्य सम्प्रदानत्वं, पतने वृक्षस्यापादानत्वं, वह्नौ धूमस्य ज्ञापकत्वं, धने चैत्रस्य स्वामित्वं, घटे भूतलस्याधिकरणत्वमि'त्यादिप्रतीत्या निरूपकत्वस्यापि सम्बन्धस्य क्वचिद्वृत्तिनियामकत्वात् , न हि कुलादिनिरूपितं हेतुत्वादिकमेव धनादिनिष्ठत्वेन तासु भासते धनादिनिष्ठहेतुत्वादेः सम्बन्धविशेषेण कुलादिवृत्तिताया अप्यनुभावकत्वेनैकशेषस्य दुष्करत्वात् । वृत्त्यनियामकस-

---

कृष्णकान्तटीका ।

त्यादिस्थलीयसमानकर्तृकत्वादिपरिग्रहः । सुब्विभक्तेरानुशासनिकातिरिक्ते न लक्षणा इत्यस्य प्रवादमात्रत्वादिति भावः ।

हेत्वर्थतृतीयास्थलं दर्शयति—धनेन कुलमिति । करणत्वप्रत्ययस्यात्यन्तासम्भवस्थलमभिप्रेत्याह अभिघातेन क्रियेति । अत्र व्यापारासम्भवेन करणत्वप्रत्ययस्याप्रसक्तेरिति भावः । शाब्दबोधप्रकारमाह—तथा चेति । शंकते—न चेति । तदवच्छिन्नाभावस्येति । तदवच्छिन्नप्रतियोगिताकाभावस्येत्यर्थः । अशक्यत्वादिति । सुतरां संयोगादिसम्बन्धावच्छिन्नाभावस्य प्रत्येतव्यत्वात् इति भावः । परिहरति—कुले धनस्येति । व्युत्पत्तिवैशद्यायानेकस्थलप्रदर्शनम् । ननु कुले धनस्य हेतुत्वमित्यादिषु सर्वत्र दर्शितस्थलेषु सप्तम्यर्थो निरूपितत्वं, षष्ठ्यर्थो निष्ठत्वं, तथा च कुलनिरूपितं हेतुत्वं धननिष्ठमित्यन्वयबोधो न तु वैपरीत्येन धननिरूपितं हेतुत्वं कुलवृत्तीत्यन्वयबोधः, तथा च कुतो निरूपकत्वसम्बन्धस्य वृत्त्यनियामकतेत्यत आह—नहीति । तासु—उक्तशाब्दप्रतीतिषु । शङ्कां परिहरति—धनादिनिष्ठहेतुत्वादेरिति। सम्बन्धविशेषेण—निरूपकतासम्बन्धेन, (अनुभावकत्वेन--(?) अनुव्यवसायसिद्धत्वेन, दुष्करत्वात् इति । तात्पर्यादिवशात् क्वचित् धननिष्ठस्य क्वचित् कुलनिष्ठत्वादेर्बोध इति प्रकृताक्षतेरिति भावः । ननु धने कुलस्य हेतुत्वमित्यादिप्रतीतिभिया न निरूपकतासम्बन्धस्य वृत्तिनियामकत्वं व्यवस्थापयितुमर्हति, तासामन्यार्थकत्वसम्भवात्, कथमन्यथा सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीत्या गुणावच्छेदेन द्रव्यत्वसामानाधिकरण्याभावोऽपि सत्तायां न

म्बन्धस्य प्रतियोगितानवच्छेदकत्वे 'पतनमिदं वृक्षान्न तु गृहात्, गमनमिदं ग्रामस्य न तु गृहस्ये'त्यादौ पञ्चम्याद्यर्थस्य विभागादेरनुकूलत्वसम्बन्धावच्छिन्नाभावस्य प्रत्ययायोगाच्च, तत्र पञ्चम्यादिलक्षितस्य विभागाद्यनुकूलत्वस्यैव नञा विरहबोधने 'गोत्वं न धनेने'त्यादावपि तृतीयादिलक्षणालब्धस्य धनादिनिष्ठहेतुतानिरूपकत्वादेरभावस्य नञा बोधसम्भवात्। अस्तु वा हेतुत्वादिविहिततृतीयादेर्जन्यत्वसम्प्रदेयत्वादिकमेवार्थः, तथा च कुलं धनजन्यतावदित्याकार एवास्तु तत्र बोधः। 'धूमेन वह्निरणुत्वेन द्रव्यत्वमित्यादौ तु वह्न्यादेर्धूमाद्यजन्यत्वेन धूमादिनिष्ठजनकत्वानिरूपकत्वादनायत्या ज्ञापकत्वलक्षणं गौणमेव हेतुत्वं तत्र तृतीयार्थः, तेन धूमनिष्ठं यज्ज्ञापकत्वं तद्वान् वह्निरित्याकारस्तत्र बोधः। तद्वत्त्वञ्च स्वप्रतियोगिविषयत्वसम्बन्धेन ग्राह्यम्। न च धूमादेर्वह्न्यादिभानजनकत्वं बाधितं, लिङ्गस्यानुमितावहेतुत्वादिति वाच्यम्। वह्न्याद्यवगाहिनि स्वसा-

कृष्णकान्तीटीका।

सिध्येदित्यत आह—वृत्त्यनियामकसम्बन्धस्येति। प्रत्ययायोगाच्चेति। तथा च निरूपकत्वादिसम्बन्धानां वृत्त्यनियामकत्वेऽपि प्रतियोगितावच्छेदकत्वस्वीकारात् नोक्तातिप्रसंग इति भावः। 'पतनमिदं वृक्षान्न गृहादि'त्यादौ पञ्चम्या लक्षणया विभागाद्यनुकूलत्वाभाव एव बोध्यत इति कुतो वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकतास्वीकार इत्याशङ्कने समाधानस्य तौल्यमित्याह तत्रेत्यादि। नञ्समभिव्याहारस्थलमात्र एव लक्षणास्वीकारोऽनुभवविरुद्ध इति लक्षणाग्रहस्यासार्वत्रिकत्वेन यत्र लक्षणाऽग्रहस्तत्र शाब्दबोधानुपपत्तिरित्यत आह—अस्तु वेति। ननु लक्षणाया असार्वत्रिकत्वे धूमेन वह्निरित्यादौ कथं शाब्दबोध इत्यत आह—धूमेनेत्यादि। ननु जन्यसामान्यं प्रति कालत्वेन जन्यसत्त्वावच्छिन्नं प्रति च द्रव्यत्वेन हेतुत्वात् तत्र कथं न लक्षणा इत्यतः स्थलान्तरमाह—अणुत्वेनेति। अणुत्वस्यापि क्वचिदनुमित्यादौ जन्यत्वसम्भवात् अत्यन्तासम्भवाभिप्रायेण द्रव्यत्वमित्युक्तम्। अजन्यत्वेनेति—अनिरूपकत्वादित्यत्र हेतुः, जनकतानिरूपकत्वस्य जन्यत्वनियतत्वादिति भावः। अनायत्येति। तथा चागत्या लक्षणास्वीकारेऽपि गत्यन्तरसत्त्वे तत्स्वीकारोऽनुचित इति भावः। ननु ज्ञापकत्वं जनकत्वम्, तस्य धूमपदलक्षितधूमज्ञाननिष्ठत्वेऽपि कुतो वह्न्यादिनिष्ठत्वमित्यत आह—तद्वत्त्वं चेति। स्वनिरूपकानुमितिविषयत्वसम्बन्धेनेत्यर्थः। शंकते—न चेति, वाच्यमिति परेणान्वयः। शंकां परिहरति—वह्न्याद्यवगाहिनीति। स्वसाक्षात्कारे-धूमसाक्षात्कारे। विष-

क्षात्कारे विषयविधया स्वनिष्ठत्वेनाभावप्रत्यक्षे च सन्निकर्ष-घटकतया धूमादेर्जनकत्वसम्भवात् । 'धूमेनेत्यत्र धूमपदस्य धूम-ज्ञाने, अणुत्वेनेत्यादौ च त्वादिप्रत्ययस्य स्वार्थज्ञाने लक्षणया तन्निष्ठत्वेन ज्ञापकत्वमुक्तस्थले तृतीयया बोध्यत' इति तु चिन्तामणिकृतः । यद्यप्यु-क्तदिशा व्याप्तिभ्रमेण च वह्न्यादेरपि धूमादिज्ञापकत्वमस्त्यतो वह्निना धू-मवानित्यादेरपि प्रामाण्यापत्तिः, तथापि तत्तदर्थकपदोत्तरतृतीयायास्तत्तदर्थ-व्यापकनिष्ठेनैव स्वप्रतियोगिविषयत्वादिसम्बन्धेन तत्तदर्थनिष्ठज्ञापकत्वादेर-न्वयबोधं प्रति हेतुत्वात् धूमादेश्च वह्न्याद्यव्यापकत्वान्न तथा । न च धूमादेरपि द्रव्यत्वादिरूपेण वह्न्यादिव्यापकत्वादुक्तदोषतादवस्थ्यं, धूमत्वावच्छिन्नस्य वह्निव्यापकत्वस्य सम्बन्धत्वे च धूमो न वह्निनेत्यादेरप्रा-माण्यापत्तिर्निरुक्तसंसर्गस्याप्रसिद्ध्या, तेन वह्निनिष्ठज्ञापकत्वाभावस्य नञा बोधयितुमशक्यत्वादिति वाच्यम् । धूमत्वादिविशिष्टे तृतीयार्थस्य वह्न्यादि-ज्ञापकत्वस्य बोधने विशिष्टप्रतियोग्यनधिकरणवह्न्यादिमन्निष्ठाभावीयधूम-

---

कृष्णकान्तीटीका ।

यविधयेति । धूमादेर्जनकत्वसम्भवादिति परेणान्वयः । तथा च लौकिकप्रत्यक्षे वि-षयस्य हेतुतया धूमजन्यज्ञानविषयत्वं वह्न्यादेरक्षतमिति भावः । अणुत्वेन द्रव्यत्व-मित्यादौ अणुत्वस्य लौकिकप्रत्यक्षासम्भवाद् विषयविधया जनकत्वासम्भव इत्यत आह—स्वनिष्ठत्वेनेति । अभावप्रत्यक्षे इति वह्न्याद्यवगाहि-नीति पूर्वेणान्वयः । धूमाद्रिनिष्ठविशेषणतया धूमादिस्वरूपत्वादिति भाव इति केचित् । वस्तुतस्तु लौकिकप्रत्यक्षे विषयस्य हेतुतायामविवादत्वादाह—स्वनिष्ठत्वेनेति । अर्थस्तु पूर्ववत् । अणुत्वादौ अभावलौकिकप्रत्यक्षासम्भवात् चिन्तामणिकृन्मते निर्भरं व्यञ्जयन्नाह—धूमेनेत्यत्रेति—त्वादिप्रत्ययस्येति । अणुत्वस्य वाक्यतया लक्षणाया असम्भवादिति भावः । चिन्तामणिकृत इत्यनेन निर्भरः सूचितः । शंकते—यद्यपीत्यादि । उक्तदिशा—वह्निपदस्य वह्निज्ञानलक्षणया । व्याप्तिभ्रमेण शंकां परिहरति—तथापीत्यादिना । स्वप्रतियोगीत्यादि । स्वनि-रूपकनिरूपितविषयत्वादीत्यर्थः । तथाहेतुत्वेऽपि कथं तादृशप्रयोगवारणमित्यत आह धूमादेश्चेति । न तथेति । न वह्निना धूमवानित्यादेः प्रामाण्यापत्तिरित्यर्थः । शंकते न चेति । सम्बन्धत्वे—व्यापकतायाः सम्बन्धघटकत्वे, निरुक्तसंसर्गस्य—धूमत्वा-वच्छिन्नव्यापकताविशिष्टस्य स्वप्रतियोगिनिरूपितविषयत्वस्य । शंकां निरस्यति—

स्वान्यधूमवृत्तिधर्मानवच्छिन्नप्रतियोगित्वस्य धूमत्वावच्छिन्नप्रतियोगित्वस्य च द्वित्वाद्यवच्छिन्नाभावरूपाया एव वह्न्यादिव्यापकतयाः संसर्गत्वेन घटादावेव तादृशव्यापकतायाः सुप्रसिद्धत्वात् । निरुक्तप्रतियोगिताद्वयोरभावश्च साध्यताघटकसम्बन्धावच्छिन्नप्रतियोगितानिरूपितेनैव स्वरूपसम्बन्धेन ग्राह्यः, तेन व्यधिकरणसम्बन्धद्वयावच्छिन्नयोर्वह्नित्वावच्छिन्नप्रतियोगित्वयोर्वह्नौ सत्त्वेऽपि वह्निर्धूमेनेत्यादेर्नायोग्यत्वमिति युक्तमुत्पश्यामः ।

यत्तु–वह्न्यादिपदोत्तरयोः तृतीयापञ्चम्योर्वह्न्यादिव्यापकतावच्छेदकरूपावच्छिन्नं वह्न्यादिज्ञाप्यत्वमेवार्थः, तस्य च धूमत्वादिविशिष्टे धूमत्वाद्यवच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धेनैव साकाङ्क्षत्वात् वह्निना धूम इत्यादिको न योग्यः, किन्तु वह्निना न धूम इत्यादिरेव वह्न्यादिव्यापकतावच्छेदकीभूतरूपावच्छिन्नस्य वह्न्यादिजन्यज्ञानविषयत्वस्य धूमत्वादिविशिष्टे धूमत्वाद्यवच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धेनासत्त्वात्–इति, तच्चिन्त्यम्, 'वह्निना धूम'इत्यादौ वह्न्यादिव्यापकत्वस्य प्रकारतया भानेऽनुभवविरो-

---

कृष्णकान्तीटीका ।

धूमत्वादिविशिष्ट इति । धूमेन वह्निरित्यादौ धूमाधिकरणे शिखराद्यवच्छेदेन वह्न्यभावसत्त्वात् वह्न्यादेर्धूमाद्यव्यापकतापत्तिरतो विशिष्टप्रतियोग्यनधिकरणेति व्यापकताविशेषणम् । जात्या (गुणो ?) विशिष्टसत्तावानित्यादेः प्रामाण्यापत्तिवारणाय विशिष्टेति । स्वप्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । धूमवति वह्न्यादेर्द्वित्वावच्छिन्नाभावसत्त्वात् अनवच्छिन्नान्तं प्रतियोगिताविशेषणम् । तादृशप्रतियोगित्वस्य द्वित्वाद्यवच्छिन्नाभावमादायैव सर्वत्र व्यापकताप्रसिद्ध्यर्थं द्वित्वाद्यवच्छिन्नाभावत्वनिवेशनम् । अन्यत्स्वयमूह्यम् । व्यधिकरणसम्बन्धद्वयावच्छिन्नेति, द्वयेति सम्पातादायातम्, व्यधिकरणसम्बन्धावच्छिन्नयोरित्यस्यैव सम्यक्त्वात् ।

वह्निना धूम इत्यादिप्रयोगस्य प्रामाण्यं प्रकारान्तरेण वारयतां मतमुपन्यस्य दूषयति–यत्त्विति । न योग्य इति । धूमत्वावच्छिन्नप्रकारत्वीयस्वरूपसम्बन्धस्य वह्निव्यापकतावच्छेदकरूपावच्छिन्नवह्निज्ञाप्यत्वस्य व्यधिकरणत्वादिति भावः । इत्यादिरेवेति । वह्नित्वावच्छिन्नप्रकारत्वीयस्वरूपसम्बन्धस्य तादृशधूमज्ञाप्यतायाः समानाधिकरणत्वादिति भावः । वह्न्यादिजन्यज्ञानविषयत्वस्येति, वह्न्यादिपदस्य स्वज्ञानत्वाक्षणिकत्वाभिप्रायेणोक्तम्, अन्यथा वह्निज्ञानविषयस्य वह्निज्ञाप्यत्वरूपत्वाभावात् असंगत्यापत्तेः। क्वचिद्वह्न्यादिज्ञानजन्यज्ञानवि

धादिति दिक् । धूमादिनिष्ठपञ्चम्यर्थज्ञापकत्वादिविशिष्टस्य च वह्न्यादेः धूमादिमदनुयोगिकेनैव तद्व्यापकताघटकसंयोगादिसम्बन्धेन मतुबाद्यर्थे साकाङ्क्षत्वा'दयःपिण्डं धूमेन वह्निमदि'त्यादिको न प्रयोगः । 'दण्डाद्घटो धूमाद्वह्निरि'त्यादौ च हेतुतार्थिकायाः पञ्चम्या अप्युक्तदिशैवाऽन्वयो द्रष्टव्यः ।

'घटेन शून्यो, विधुरो, रहित' इत्यादौ घटत्वाद्यवच्छिन्नप्रतियोगिगित्वमेव शून्यत्वाद्यन्वयि तृतीयार्थः । 'प्रकृत्या कृपणः, स्वभावेन सरल' इत्यादौ प्रकृत्यादिपदं यावदाश्रयवृत्तिधर्मपरं, तृतीयार्थश्चाभेदस्तादात्म्यं वा, "प्रकृत्यादिभ्यश्चे"ति सूत्रेण तत्रैव तद्विधानात्, एवञ्च स्वाश्रयाधिकरणयावत्कालवृत्तिकार्पण्यवानित्याकारस्तत्र बोधः । 'सुरथो नाम राजे'-त्यत्र सुरथः सुरथशब्दवाच्यः, तदेकदेशे च शब्दे लुप्ततृतीयाकेन संज्ञार्थकनामेत्यव्ययेन प्राप्तस्य संज्ञातादात्म्यस्यान्वयः, तेन संज्ञातादात्म्यवत्-सुरथशब्दवाच्यो राजेत्यर्थः । 'नामेत्यव्ययार्थः सम्भाव्यत्वं, तच्च सुरथेऽन्वितमि'ति कश्चित् । 'नाम्ना चन्द्रमुखी'त्यादौ अनव्ययेनापि नामपदेनोक्तदिशैवान्वयः । 'धान्येन धनं, घटत्वेन साजात्यं, वाजपेयेन यज

---

कृष्णकान्तीटीका ।

घटत्वस्येत्येव पाठः । दूषयति—तच्चिन्त्यमिति । स्वयमेव चिन्ताबीजमाह—वह्निना धूम इति । यद्यपि धूमेन वह्निरित्यत्रापि व्यापकत्वस्य प्रकारतया भानमनुभवविरुद्धम्, तथापि तत्र संसर्गविधया व्यापकताभानस्वीकारेऽपि क्षत्यभावात्, वह्निना धूम इत्यादेः प्रामाण्यवारणस्य एतेषामुद्देश्यत्वात् तन्मात्रोक्तिः, अत एव 'वह्न्यादिपदोत्तरतृतीयापंचम्योरि'त्यादिना तन्मतं दर्शितम् । अनुभवविरोधादिति । व्यापकत्वस्याखंडस्याप्रसिद्ध्या तदन्तर्भावेण तृतीयापंचम्योर्वृत्तिकल्पनासम्भवात् खण्डशो वृत्तिकल्पनापत्तिरिति भावः । ननु धूमेन वह्निमदयोगोलकमित्यादेः प्रामाण्यापत्तिः वह्नेर्धूमादिज्ञापकत्वस्यायोगोलके च वह्निमत्त्वस्याबाधादित्यत आह—धूमादिनिष्ठेति ।

तृतीयार्थ इति । तथा च घटत्वावच्छिन्नघटप्रतियोगिताकाभाववान् इत्यादिकस्तत्र बोध इति भावः । स्वकार्पण्यादिव्युत्पत्तिवैचित्र्येणैकदेशान्वयस्वीकारादिति भावः। लुप्ततृतीयाकेनेति । तथा च नामेत्यव्ययस्य संज्ञा इत्यर्थः। तृतीयायास्तादात्म्यमर्थ इति भावः । मतान्तरमाह—नामेतीति । तच्च—सम्भाव्यत्वं च । क्वचित्तत्रेति पाठः, तादृशप्रयोगस्थले इति तदर्थः । सम्भाव्यत्वं—ज्ञानार्हत्वं, तथा च ज्ञानार्हः सुरथो राजा इत्यन्वयबोध इति भावः । नामेत्यस्य सम्भाव्यत्वार्थकत्वेऽनुशासना-

नमि'त्यादावपि धनाधन्वयी धान्यादेरभेद एव तृतीयार्थः। 'तत्र धूमेन वह्निरित्यादाविव ज्ञापकत्वं तथे'त्यपि वदन्ति। 'जात्या ब्राह्मण' इत्यादौ ब्राह्मणपदस्यादृष्टविशेषप्रयोज्यधर्मवत्परतया तादृशधर्मं एव जात्यभेदस्यान्वयः, स्वरूपत उपस्थिते ब्राह्मण्ये तदन्वयायोगात्। 'घटत्वेन जन्यत्वं, प्रकारकत्वमि'त्यादौ अवच्छेदकत्वमवच्छेद्यत्वं वा तृतीयार्थः। 'चैत्रेण चैत्रस्य वा तुल्य' इत्यादौ भिन्नत्वे सति धर्मवत्त्वं तुल्यता, तन्निविष्टे च भेदे तृतीयार्थस्य प्रतियोगित्वस्य धर्मे चाधेयत्वस्यान्वयात् चैत्रत्वाद्यवच्छिन्नान्यत्वे सति चैत्रवृत्तिधर्मवानित्यर्थः। 'चैत्रेण चैत्रस्य वा सादृश्यमि'त्यादावपि तथैवान्वयः। "तुलोपमयोर्योगे तृतीया नेष्यत" इति पाणिनीयाः(१)। 'तुलामधारेण शरद्घनेन, केनोपमा भवतु तेऽस्य पराक्रम-

कृष्णकान्तीटीका।

भावात् कश्चिदित्युक्तम्। उक्तदिशैवेति। नामपदस्य संज्ञार्थः, चन्द्रमुखी—चन्द्रमुखीशब्दवाच्या, तृतीयार्थस्तादात्म्यं, तथा च संज्ञातादात्म्यवच्चन्द्रमुखीशब्दवाच्या इत्यन्वयः। अभेद एवेति। तथा च धान्याभिन्नं धनं, घटत्वाभिन्नं साजात्यं, वाजपेयाभिन्नं यजनम् इत्यादयोऽन्वयबोधा इति भावः। धनान्तरतात्पर्येण तादृशप्रयोगस्य सम्प्रदायविरुद्धत्वाद् 'वदन्ती'त्युक्तम्। ननु तृतीयाया अभेदार्थकत्वे जात्या ब्राह्मण इत्यादेरपार्थकत्वापत्तिः उद्देश्यविधेययोरैक्यादित्यत आह—जात्या ब्राह्मण इति। तथा चोद्देश्यविधेयतावच्छेदकयोर्वैलक्षण्यान्नानुपपत्तिरिति भावः। ननु स्वरूपतो ब्राह्मणत्वे जातित्वेन तदन्वये न किञ्चिद्बाधकमिति लक्षणास्वीकारोऽनुचित इत्यत आह—स्वरूपत उपस्थित इति। तदन्वयायोगात्—जातित्वेन ब्राह्मणत्वान्वयायोगादित्यर्थः। निर्धर्मितावच्छेदककशाब्दानभ्युपगमादिति भावः। नन्ववच्छेदकत्वस्य तृतीयार्थत्वे घटत्वेन जन्यत्वं न पटत्वेन इत्यादावन्वयबोधानुपपत्तिरतोऽवच्छेद्यत्वं वेति। चैत्रेऽपि चैत्रप्रतियोगिकभेदसत्त्वात् चैत्रेण तुल्यश्चैत्र इत्यपि प्रयोगः स्यादतस्तृतीयाद्यर्थप्रतियोगित्वे स्ववृत्तिचैत्रत्वावच्छिन्नत्वमेव प्रकृत्यर्थावच्छिन्नत्वस्य सम्बन्धो वाच्यः, इति तदेवाह—चैत्रत्वाद्यवच्छिन्नान्यत्वे इति। तथैवान्वय इति। चैत्रान्यत्वे सति चैत्रवृत्तिधर्मवत्त्वमित्यन्वय इत्यर्थः। पाणिनिमतमुपन्यस्य च्छलतो दूषयति—तुलोपमयोरित्यादि। ननु तुल्यपदस्योक्तार्थकत्वे 'गजेन तुल्यगमन' इत्यादौ गमने गजवृत्त्यसाधारणधर्मवत्ताभावादयोग्यत्वापत्तिरिति तत्रत्यतृती-

(१) 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' इत्यत्र पा० सूत्रेऽतुलोपमाभ्यामित्युक्तेरिति भावः।

स्य' इत्यादिकस्तु दृश्यते प्रयोगः । 'गजेन तुल्यगमनो, वृषस्य सदृशेक्षणः' इत्यादौ तु गत्यादिकं तृतीयार्थः, तेन गजगतितुल्यगतिमान्, वृषेक्षणतुल्येक्षणवानित्याकारस्तत्र बोधः । 'भोगेषु प्रसितः, उत्सुकः' इत्यादौ सप्तम्या इव, 'भोगैः प्रसितः, उत्सुक' इत्यादौ तृतीयाया अपि विषयत्वलक्षणं गौणमधिकरणत्वमर्थः, तेन भोगेष्वनुरक्त इत्येवं तत्र बोधः । 'पुष्ये स्नायादि'त्यादौ पुष्यादितः कालार्थकताद्धितस्य लुकि ततः सप्तमीवत् 'पुष्येण स्नायादि'त्यादावपि तादृशार्थकतृतीयया अधिकरणत्वं बोध्यते, तथा च पुष्ययुक्तकाले स्नायादित्येवं तत्र बोधः । 'पुष्ये रूपमि'त्यादौ, रूपादेः पुष्यवृत्तित्वं प्रतीयते न तु तद्युकालवृत्तित्वम्, अतः पुष्येण रूपमित्यादिको न प्रयोगः ।

[४] मन्यतेः(१)कर्मणो यस्मादयुक्तैवापकृष्टता ।
नञ्बोध्याऽस्मात् द्वितीयावच्चतुर्थी प्राणिवर्जितात् ॥

कृष्णकान्तटीका ।

याया अर्थान्तरपरतयाऽयोग्यत्वं वारयति—गजेन तुल्येत्यादि । अधिकरणत्वमर्थ इति, अधिकरणसप्तमीत्यावेदनाय । तेनेति । तथा च भोगविषयकानुरागवानित्यर्थः । तादृशार्थकेति । कालार्थकेत्यर्थः । अधिकरणत्वं—अधिकरणकालवृत्तित्वम् इति यावत् । क्वचिदधिकरणवृत्तित्वमिति पाठः, स चोक्तार्थक एव । ननु पुष्ये स्नायादित्यादौ सप्तम्या अपि तादृशार्थकत्वमावश्यकम् अर्थान्तरस्य वक्तुमशक्यत्वादिति पुष्ये रूपमित्यादेरयोग्यत्वापत्तिः, पुष्याधिकरणकालसमवेतत्वस्य रूपेऽसत्त्वात् । न च जन्यमात्रस्य कालोपाधित्वे तदधिकरणघटादिसमवेतत्वस्य कालिकसम्बन्धेन वृत्तित्वस्य रूपादावबाधात् कथमनुपपत्तिरिति वाच्यम् । तथापि समवायेन पुष्ये रूपमित्यादेरयोग्यत्वापत्तेर्दुर्वारत्वादित्यत आह—पुष्ये रूपमित्यादाविति । पुष्यवृत्तित्वं—पुष्यसमवेतत्वम् । तादृशसामानाधिकरण्याप्रतीतौ युक्तिमप्याह—अत इति । पुष्यवृत्तित्वप्रतीतेः । नप्रयोग इति । अन्यथा निरुक्तसामानाधिकरण्यस्य रूपादावसत्त्वात् तादृशप्रयोगः प्रमाणं न स्यादिति भावः ।

उपपदविभक्तिकथनप्रस्तावे तृतीयापर्यन्तप्रयोगं सन्दर्श्य चतुर्थीप्रयोगं दर्शयितुमुपक्रमते—मन्यतेरित्यादि । विवृणोति—मन्यतेरिति(?) । द्वितीयावदित्यनेन द्वितीयाप्रसक्तिस्थल एव चतुर्थीविधानस्य प्राप्तत्वात् कर्मणोनुक्तत्वमर्थायातमिति

(१) 'मन्यकर्मण्यनादरे विभाषाप्राणिषु' (२।३।१७) इति पा० सूत्रोदाहरणानि प्रदर्शयितुमाह मन्यतेरित्यादिना ।

इति भाष्यस्मृतेर्मन्यतेरनुक्तकर्मणि यदवधिकापकृष्टत्वं नञा बोध्यं तत्र द्वितीयावच्चतुर्थ्यपि प्रमाणम्, तेन 'न त्वा तृणं मन्ये' इत्यादाविव 'न त्वा तृणाय मन्ये' इत्यादावपि त्वां तृणादपकृष्टं मन्ये इत्यर्थः। 'द्रौणिर्भर्योदयो हीनो ब्राह्मणो नैष दुर्मति'रित्यादावसमस्तस्यापि नञोऽपकर्षप्रत्यायकत्वात्। 'न त्वं कीटो मतो मम'त्यादौ मन्यतेः कर्मापि त्वदादिकं नानुक्तम्। 'जारजं न द्विजं मन्ये' इत्यादौ जारजादेर्द्विजाद्यपकृष्टत्वं नायुक्तमबाधितत्वात्।

न नावं मन्यते योऽश्वं न काकं मन्यते शुकम्।
नान्नं स मन्यते सर्पिर्न शृगालं स मानुषः॥

इत्यादौ तु नावाद्याः प्राणिन एव—

नौकाकान्नशृगालानां प्राणित्वं शाब्दिकस्मृतेः।

'न तृणाय युवां मन्ये, न त्वा तृणाभ्यां मन्ये' इत्यादिकस्तु न प्रयोगः, भेदस्येवापकर्षस्याप्यसमस्तनञाबोधने प्रतियोग्यनुयोगिनोः समानवचनान्तत्वस्य तन्त्रत्वात्।

---

कृष्णकान्तीटीका।

तदेव स्पष्टयति—अनुक्तेति। कर्मणीति सप्तमीनिर्देशात् कारिकास्थकर्मपदोत्तरषष्ठ्या आधेयत्वमर्थ इति व्यञ्जितम्। यस्मादिति पञ्चम्या अवधित्वमर्थ इति व्यञ्जयन्नाह—यदवधिकेति। प्राणिवर्जितयदवधिकेत्यर्थः। अपकृष्टत्वमिति। अनुक्तमिति शेषः। आकाङ्क्षानिवृत्त्यर्थं पूरयति—प्रमाणमिति। तेन—द्वितीयावच्चतुर्थ्याः प्रमाणत्वेनेत्यर्थः, उदीच्येनार्थं इत्यनेनान्वयः। ननु असमस्तस्य नञोऽपकृष्टार्थकत्वं न दृष्टचरम्, इत्यत आह—द्रौणिरिति। एष—दुर्मतिः अश्वत्थामा, न ब्राह्मणः ब्राह्मणादपकृष्ट इत्यर्थः। अनुक्तत्वनिवेशव्यावृत्तिमाह—न त्वं कीट इत्यादि। अपकृष्टतानिष्ठायुक्तत्वनिवेशव्यावृत्तिमाह—जारजमिति। अबाधितत्वादिति। तथा च बाधितत्वमेवायुक्तत्वमिति भावः। प्राणिवर्जित इत्यस्य व्यावृत्तिमाह—न नावमित्यादि। ननु प्राणिपदपरिभाषिताः के इत्याकाङ्क्षायामाह—नौकाकेत्यादि। 'अन्येभ्यो ब्राह्मणो यस्तु शूद्राणामन्नपाचक' इत्यादौ प्रतियोग्यनुयोगिनोः समानवचनान्तत्वाभावेऽपि तथाबोधादसमस्तनञेत्युक्तम्। तन्त्रत्वादिति। प्रायस्तन्त्रत्वादित्यर्थः। अतो "वेदा नष्टा न शूद्राणामवैधाचारभाजिनाम्'इत्यादौ तथान्वयबोधनेऽपि न क्षतिः। ननु नञा

सदृशत्वं तृणादीनां मन्यकर्मण्यनुक्तके ।
द्वितीयावच्चतुर्थ्यापि बोध्यते बाधितं यदि ॥

इत्यापिशलेर्मतम्, तेन 'तृणाय त्वां मन्यते' इत्यादेस्तृणसदृशं त्वां मन्यते इत्यर्थः । तन्मत एव—

तृणाय मत्वा रघुनन्दनोऽथ बाणेन रक्षः प्रधनान्निरास्थत ॥

इति भट्टिः ( स० २ श्लो० ३६ ) । प्रधनं—युद्धम् ।

(१)'पुष्पमिदं विष्णवे नम' इत्यस्य विष्णुप्रीत्युद्देश्यकमन्त्रकरणत्यागस्य कर्मेदं पुष्पमित्यर्थः, तत्र चतुर्थ्या प्रीत्युद्देश्यकत्वं तादिच्छाधीनत्वरूपं नमःपदार्थे मन्त्रकरणकत्यागे बोध्यते, प्रकृत्यर्थस्य च विष्ण्वादेः प्रीतौ तदिच्छायां वाऽन्वयः । ब्राह्मणप्रीत्युद्देश्यकस्य च गवादित्यागस्य मन्त्रकरणकत्वे प्रमाणाभावाद् 'ब्राह्मणाय नम' इत्यादिको न प्रयोगः । 'ब्राह्मणेभ्यो नमो नित्य'मित्यादौ तु नमःपदार्थो नतिरेवेति तत्र विषयत्वं (च) चतुर्थ्या बोध्यते । 'पुष्पमिदं परमात्मने नम' इत्यादौ परमात्मनः प्रीत्यसत्त्वेऽपि तत्प्रीतित्वप्रकारकेच्छासम्भवान्न तत्प्रीत्युद्देश्यकत्वाप्रसिद्धिः । स्वस्वकरणको हविस्त्यागः स्वधास्वाहयोरर्थः, तेन 'इदं पित्रे

---

कृष्णकान्तीटीका ।

तादृशार्थबोधने यदि चतुर्थी तदा "तृणाय मत्वा रघुनन्दनोऽथ" इत्यादिभट्टिग्रन्थानुपपत्तिरित्यतस्तदुपपादयति सदृशत्वमिति । तथा च तन्मते नञोऽनपेक्षणादिति भावः । आपिशलिः ग्रन्थकारः, तस्य मतमित्यर्थः, तेन-सादृश्यार्थेऽपि द्वितीयावच्चतुर्थीविधानेन, इत्यर्थ इत्यनेनास्यान्वयः। तन्मत एव (इत्यर्थः?) कुत इत्याकाङ्क्षायामाह-तत्रेत्यादि । तदिच्छाधीनत्वरूपमिति-'इदं पुष्पं विष्णुस्वत्ववद्भवतु' इत्याकारकनमःपदार्थोपायेच्छायां फलेच्छाविधया विष्णुप्रीतीच्छाया हेतुत्वादिति भावः। प्रीताविति, आधेयतयेत्यादिः । तदिच्छायां—विष्णुप्रीतीच्छायां, विषयतयेत्यादिः । मन्त्रकरणकत्वनिवेशव्यावृत्तिमाह—ब्राह्मणप्रीत्युद्देश्यकेति । 'ब्राह्मणाय नमः अयं गौरि'त्यादिः, तथा च तदनिवेशे तादृशप्रयोगः स्यादिति भावः । नतिरेवेति । स्वावधिकोत्कर्षप्रकारकज्ञानानुकूलव्यापारो नतिपदार्थस्तदेकदेशे ज्ञाने विषयत्वस्यान्वय इति भावः । तत्प्रीतित्वप्रकारकेच्छासम्भवादिति । फलत्वावच्छेदकरूपेणैव फले-

---

( १ ) 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' ( २।३।१६ ) इति पा०सूत्रोदाहरणान्यह पुष्पमिदमिति ।

स्वधा, अग्नये स्वाहे'त्यादौ पित्रुद्देश्यकस्य स्वधापदकरणकस्य हविस्त्यागस्य कर्मेदमित्याकारकस्तत्र बोधः। पैतृके त्यागे स्वाहादेर्दैविके च स्वधादेर्न करणत्वं तद्ग्राहकप्रमाणाभावादतः 'पित्रे स्वाहा, अग्नये स्वधे'त्यादिको न प्रयोगः। 'वषडिन्द्राये'त्यत्राप्युक्तादिशैवान्वयः। 'स्वस्ति प्रजाभ्य' इत्यादेः प्रजानिष्ठं कुशलमित्यर्थः, स्वस्तिशब्दस्य कुशलवाचित्वात्। कुशलस्याशंसास्थले तु 'स्वस्त्यस्तु प्रजाभ्य' इतिवत् 'स्वस्त्यस्तु प्रजानामि'त्यपि प्रमाणम् "आशंस्यैर्धनकुशलायुष्यार्थैर्योगे चतुर्थी वेति" भागुरिस्मृतेरित्यपि वदन्ति(१)। 'चैत्रस्य सुखं, मैत्राय हितमि'त्यादित इव 'चैत्राय सुखं मैत्राय हितमित्यादितोऽपि चैत्रादिनिष्ठत्वेन सुखादेर्बोधात्तत्राप्याधेयत्वं चतुर्थ्यर्थः। 'सुखायालं समर्थो योग्यं वा भोजनमि'त्यादावलमादिपदार्थैकदेशे सामर्थ्ये सुखादिनिरूपितत्वं चतुर्थ्या बोध्यते। 'अलमनेने'त्यादौ वैफल्यमेवालम्पदस्यार्थो न तु सामर्थ्यम्। 'यूपाय दारु, रन्धनाय स्थाली'त्यादौ तु यूपाद्यनुकूलस्वरूपं तादर्थ्यमेव दार्वादौ, 'पाकाय व्रजती'त्यादावपि पाकाद्युद्देश्यकत्वं तदिच्छाधीनत्वरूपं व्रजनादौ, भावकृदन्तात् तुमर्थे चतुर्थ्यनुशिष्टेः। अत एव परपाकार्थं गच्छत्यपि पुरुषे 'पक्तुं व्रजती'त्यादिक इव 'पाकाय व्रजती'त्यादिको न प्रयोगः, समानकर्तृकत्वस्यापि तुमर्थेऽन्तर्भावात्।

---

कृष्णकान्तीटीका।

च्छाया उपायेच्छाजनकत्वात् प्रीतित्वप्रकारतानिवेशस्यावश्यकत्वात् विसंवादीच्छामादायैव तत्र प्रसिद्धिरिति भावः। पित्रादेरुद्देश्यत्वं प्रीतिद्वारा बोध्यम्। उक्तदिशैवेति। इन्द्रोद्देश्यकमन्त्रकरणकहविस्त्यागस्य कर्मेदमित्यर्थः। प्रजानिष्ठमित्यादि। तथा चाधेयत्वं चतुर्थ्यर्थं इति भावः। कुत इत्याकाङ्क्षायामाह—आशंस्यैरित्यादि। वदन्तीत्यनेन निजासम्मतत्वं व्यञ्जितम्। सुखादिनिरूपितत्वमिति। तथा च सुखनिरूपितप्रयोजकत्वाभाववदिति बोध इति भावः। न तु सामर्थ्यमिति। तथासति चतुर्थ्यापत्तेरिति भावः। दार्वादाविति, चतुर्थ्या बोध्यत इति पूर्वेणान्वयः। एवमग्रेऽपि। कुत इत्याकांक्षायामाह—भावकृदन्तादिति। अत एव-चतुर्थ्यास्तुमर्थोद्देश्यत्वरूपार्थकत्वादेवेत्यर्थः। न प्रयोग इति। ननूद्देश्यत्वस्य

---

(१) पाणिनिमते तु 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' इति सूत्रेण पक्षे षष्ठी बोध्या। एवमग्रे चैत्रस्य सुखमित्यादौ द्रष्टव्यम्।

'पटाय व्रजती'त्यादौ च पटादेर्भावकृदन्तानुपस्थाप्यत्वान्न तदिच्छाधीनत्वादेर्व्रजनादाववगमः, तुम इव तदर्थकचतुर्थ्या अपि धात्वर्थ एव स्वार्थे साकाङ्क्षत्वाच्च । 'पाकाय स्थाली'त्यादितो न पाकेच्छाधीनत्वादेः स्थाल्यादौ ।

कृष्णकान्तीटीका ।

तत्राविशिष्टत्वात् कथं न तादृशप्रयोग इत्यत आह—समानकर्तृकत्वस्यापीति ।''इच्छार्थेष्वेककर्तृकेषु तुमु'' इत्यनुशासनादिति भावः । समानकर्तृकत्वं-विशेष्यीभूतक्रियाकर्तृकत्वं, तच्च विशेषणीभूतक्रियायामन्वितम् । अथ वा स्वकर्तृकर्तृकत्वं स्वोद्देश्यकत्वमुभयमेव चतुर्थ्यर्थः, तच्च विशेष्यीभूतव्रजनादिक्रियायामन्वितं, तथा च पाकोद्देश्यकपाककर्तृकव्रजनवानित्याकारकस्तत्र बोध इति, परकीयपाकोद्देश्यकव्रजने नान्तरीयकपाककर्तृकव्रजने च तादृशोभयस्य बाधात् तादृशव्रजनतात्पर्येण न तादृशप्रयोग इति भावः । व्रजनादौ पाकेच्छाधीनत्वन्तु तदिच्छाधीनेच्छाविषयत्वरूपं, फलेच्छाया उपायेच्छाजनकत्वात्, तथा च परकीयेच्छास्थले न तादृशप्रयोगापत्तिः, स्वकीयेच्छायां परकीयेच्छाया अहेतुत्वात् । न च नान्तरीयकपाकस्थलेऽपि 'अस्य पाको भवतु' इतीच्छात एवास्य व्रजनं भवतु इतीच्छा यत्र तत्र तादृशप्रयोगापत्तिरिति वाच्यम् । पक्तुं व्रजतीत्यादौ स्वसमवेतपाकेच्छावान् व्रजतीत्याकारकबोधस्यानुभवविरुद्धतया इच्छासामानाधिकरण्यस्यापि उद्देश्यत्वान्तर्गतत्वात् । केचित्तु स्वकर्तृकत्वं स्वेच्छासामानाधिकरण्यमित्युभयमेव चतुर्थ्यर्थः, तथा च नोक्तापत्तिरित्याहुः । तन्न, पाकेच्छावति भोजनार्थं गच्छति पुरुषे पाकाय व्रजतीति प्रयोगापत्तेः, अस्मन्मते तु तत्रत्यगमनस्य पाकेच्छानधीनत्वान्नापत्तिरित्यास्तां विस्तरः । भावकृदन्तोपस्थाप्यस्यैवोद्देश्यत्वं चतुर्थ्या प्रत्याय्यते (१)''तुमर्थाच्च भाववाचिनः'' इति सूत्रात्, तत् किमर्थमित्याकाङ्क्षायामाह—पटायेत्यादि । तदिच्छाधीनत्वादेरित्यादिना एककर्तृकत्वेच्छासामानाधिकरण्याद्युपग्रहः । न च पटादेरेककर्तृकत्वाप्रसिद्ध्या न तथा, किं सूत्रे भाववाचिन इत्यनेनेति वाच्यम् । आदिपदेन सुखाय व्रजतीत्यादिपरिग्रहात्, तत्र समवायिसमवेतत्वरूपसमानकर्तृकत्वबोधाद् व्रजनादाववगम इति तादर्थ्यावगाहितयैव पटाय व्रजतीत्यादौ प्रामाण्यसम्भवाद्बाधाभावेन तदापत्त्यसम्भवादिति भावः । ननु पाकाय स्थालीत्यादौ कथं तादृशार्थावगमः ? न च स्थाल्यादौ पाकसमानकर्तृकत्वपाकेच्छासामानाधिकरण्ययोर्बाधात् न तथेति वाच्यम् । तथापि पाकायादृष्टमित्यादौ तथावगमापत्तेर्दुर्वारत्वादित्यत आह—पाकाय स्थालीत्यादित इति । स्थाल्यादाविति । अवगम इति पूर्वेणान्वयः, प्रथमादिपदात् पाकायादृष्टमित्यादेः, द्वितीयादिपदात् समान-

(१) 'तुमर्थाच्च भाववचनात्' इति (२।३।१५ पा० सूत्रम् ।

'फलेभ्यो व्रजती'त्यादेः 'फलान्याहर्तुं व्रजती'त्यादिसमानार्थकत्वानुरोधात्तत्र फलकर्मकाहरणेच्छाद्यधीनत्वं फलाद्युत्तरचतुर्थ्या व्रजनादौ बोध्यते, रीतिरुक्तैव ।

[५]'पूर्वो (१)ग्रामादि'त्यत्रोदयाचलसन्निकृष्टरूपस्य पूर्वपदार्थस्यैकदेशे-तादृशसन्निकृष्टत्वे ग्रामाद्यवधिकत्वं पञ्चम्या बोध्यते, 'ग्रामादुत्तरो दक्षिण' इत्यादावपि कैलाससन्निकृष्टत्वादिपर्य्यवसितोत्तरत्वादौ, 'ग्रीष्मात् पूर्वो वसन्तः, कृष्णात् पूर्वो हलायुध' इत्यादौ तु प्रागभावक्षणोत्पन्नत्वादिपर्य्यवसन्नस्य पूर्वत्वादेर्घटके प्रागभावादौ ग्रीष्मादिनिष्ठप्रतियोगिताकत्वम् , 'घटादन्यो-भिन्नः, पृथगि'त्यादौ घटत्वाद्यवच्छिन्नमवधित्वं प्रतियोगित्वं वा अन्याद्येकदेशे भेदे निरूपितत्वसंसर्गेण, तेन घटनिष्ठघटत्वावच्छिन्नावधिताक-भेदवानित्याकारकस्तत्र बोधः । 'गृहाद्गङ्गा मम परा, काश्याः सैवापरा मम' इत्यादौ विप्रकृष्टत्वसन्निकृष्टत्वरूपयोर्दैशिकपरत्वापरत्वयोरन्वितं गृहकाश्यादिसापेक्षत्वं पञ्चम्यर्थः, स च स्वरूपसम्बन्धः पदार्थान्तरं वा,

कृष्णकान्तीटीका ।

कर्तृकत्वादेः, तृतीयादिपदाददृष्टादेः परिग्रहः । बोध्यत इति । तादर्थ्यस्य प्रयोजकतारूपत्वेनात्र स्वकर्मकाहरणेच्छाधीनेच्छाविषयत्वरूपप्रयोजकत्वं चतुर्थ्या बोध्यते इति फलबलात् कल्प्यत इति भावः । ननु यस्य पुरुषस्य फलकर्मकाहरणमप्रसिद्धं तत्र तादृशेच्छाप्रसिद्धया कथं तादृशबोध इत्यत आह--रीतिरुक्तैवेति । फलकर्मकाहरणत्वप्रकारकेच्छाया निविष्टत्वादिति भावः ।

पञ्चम्या बोध्यत इति । तथा च ग्रामावधिकं यदुदयाचलसन्निकृष्टत्वं तद्वानिति तत्र बोधः । कैलाससन्निकृष्टत्वादित्यादिना विप्रकृष्टत्वादिपरिग्रहः । उत्तरत्वादाविति । ग्रामाद्यवधिकत्वं पञ्चम्या बोध्यत इति पूर्वेणान्वयः । आदिना दक्षिणत्वपरिग्रहः । प्रागभावक्षणेति । प्रागभावाधिकरणक्षणेत्यर्थः । क्वचित्-'प्रागभावप्रतियोगिक्षणे'ति पाठः, स च प्रामादिकः । प्रतियोगिपदमधिकरणपरमित्युच्छृङ्खलाः । प्रतियोगिताकत्वमिति, पञ्चम्या बोध्यत इति पूर्वेणान्वयः । एवमग्रेऽपि । अभावनिरूपितावधित्वस्य प्रतियोगित्व एव पर्यवसानात् तदेवाह—प्रतियोगित्वं वेति । आश्रयतया भेदेऽसत्त्वात् निरूपकत्वसंसर्गेणेति,

(१) क्रमप्राप्तं पञ्चम्युपपदस्थलेषु शाब्दबोधप्रकारं दर्शयितुम् 'अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते' इति पा०सूत्रोदाहरणान्याह पूर्व इत्यादिना ।

तेन गृहापेक्षया मद्विप्रकर्षवती गङ्गा, काश्यपेक्षया मत्सन्निकर्षवती गङ्गेत्याकारस्तत्र बोधः । (१)'परिगृहाद्गतः, अपगृहाद्भुक्त' इत्यादौ पर्य्यपयोः परित्यज्येत्यर्थः, स च धात्वर्थ एव साकाङ्क्षस्तेन गृहात्परि चैत्र इत्यादिको न प्रयोगः । 'आदेहाद्वस्त्रं, आगृहादुद्यानमि'त्यत्राभिव्याप्तत्वं मर्य्यादा वाऽऽङोऽर्थः, तेन देहव्याप्तं वासो, गृहमर्य्यादाकमुद्यानमित्याकारस्तत्र बोधः, तदुभयञ्च निरुक्तं प्राक् ।

वैश्येभ्यः क्षत्रियाः शूराः, शूद्रेभ्यो धनिनो विशः ।

इत्यत्र वैश्यशौर्य्यादधिकशौर्य्यवन्तः क्षत्रियाः, शूद्रधनादधिकधनवन्तो वैश्या इत्यर्थः, सजातीयाधिक्यरूपे व्यतिरेकेऽपि पञ्चम्या अनुशिष्टेः । शौर्य्यादेर्वैश्यशौर्य्याद्यधिकत्वञ्च वैश्यशौर्य्यादिमात्रवृत्तिसंख्यासामा-

कृष्णकान्तीटीका ।

इदं प्राचीनमतानुसारेण । नव्यमते तु प्रतियोगितानिरूपकत्वमेव तदर्थः, अतः 'पटो घटाद्भिन्नो न पटादि'त्यादौ नानुपपत्तिरिति । परिशब्दस्त्यागार्थकः, तथा च गृहं परित्यज्य गतः इत्याकारकस्तत्र बोध इति भावः । स चेति । तादृशार्थश्चेत्यर्थः । तेनेति । तादृशार्थस्य धात्वर्थमात्रसाकाङ्क्षत्वेनेत्यर्थः । न प्रयोग इति प्रामाणिक इति शेषः । मर्यादा वेति । तथा च निरुक्तस्थलद्वये यथाक्रमेणार्थद्वयमिति भावः । शाब्दबोधप्रकारमाह—तेनेति । ननु किं नामाभिव्याप्तत्वं मर्यादा चेत्यत आह—तदुभयञ्चेति । अभिव्याप्तत्वमर्यादोभयञ्चेत्यर्थः । निरुक्तं प्रागिति । 'नदीं यावन्मम पुरं, गृहं यावद् धनं तत्रे'त्यत्र यावदित्यव्ययस्य मर्यादा अभिविधिश्च क्रमेणार्थ इत्यादिग्रन्थेनेत्यर्थः । तत्पर्यन्तत्वं तदवधिकविप्रकर्षशून्यत्वे सति तत्सन्निकृष्टत्वरूपं मर्यादापदार्थः । तदभिव्याप्तत्वं तदारम्भकावयवावच्छेदेन तत्संयुक्तत्वमित्यादेः स्वयमेवोक्तत्वादिति भावः । वैश्यशौर्यादिमात्रवृत्त्येति । वैश्यशौर्यत्वव्यापकेत्यर्थः । तथा च वैश्यशौर्यत्वव्यापकसङ्ख्यात्वव्यापकत्वं भेदे लभ्यते, तच्च न निविष्टम्, अनतिप्रयोजनकत्वात्, अपि तु वैश्यशौर्यवृत्तिसंख्यात्वव्यापकत्वमेव भेदे निवेश्यते, तत एव क्षत्रियस्य यत्किञ्चिच्छौर्यसंख्याया वैश्यशौर्यसंख्याभेदसत्त्वेन 'न क्षत्रियेभ्यो वैश्याः शूराः' इत्यादिप्रयोगवारणसम्भवात् तादृशभेदस्य क्षत्रियशौर्यवृत्तिसंख्यात्वाव्यापकत्वात् । केचित्तु तन्मात्रवृत्तित्वं तत्पर्याप्तत्वं, तदनिवेशे तत्प्रयोगापत्तेरित्याहुः । तन्मन्दम्, व्यापकत्वादन्यस्य सामान्यत्वस्य दुर्वचतया निरुक्तव्या-

(१) अपपरीवर्जने, आङ्मर्यादावचने, पंचम्यपाङ्परिभिः (२।३।१०) इति पा०सूत्राण्यत्र द्रष्टव्यानि ।

न्यनिष्ठभेदप्रतियोगितावच्छेदकीभूतजातिमत्संख्यापर्य्याप्त्यधिकरणत्वम् । तच्छौर्य्यपर्य्याप्तसंख्यासामान्यनिष्ठभेदप्रतियोगितावच्छेदकीभूतजातिमद्बहुत्ववत्त्वन्तु न तथा, यस्यैकमेव शौर्य्यं यस्य च शौर्य्यद्वयमेव तद्वतः 'स शूर' इत्यादेरयोग्यतापत्तेः, तदुभयशौर्य्ययोः पर्य्याप्तसंख्याबहुत्वयोरप्रसिद्धेः । इदन्तु बोध्यम्—'निरुक्तवैश्यादिशौर्याद्यधिकत्वे वैश्यादेः प्रकृतिलभ्यत्वादितरभागः खण्डशो वृत्त्या पञ्चम्या प्रतिपाद्यत' इति ।

[६]'चैत्रस्य(१) धनं, वृक्षस्य शाखाः, स्फटिकस्य लौहित्यमि'त्यादौ

कृष्णकान्तीका ।

पकतानिवेशेनैवोपपत्तेः । न च तत्तत्संख्यात्वव्यापकत्वमेव भेदे निवेश्यते वृत्त्यन्तं परिचायकमेवेति वाच्यम् । अनन्तव्यापकतायाः पञ्चम्यर्थकल्पने गौरवात् । न च यस्य कस्यचिद् वैश्यस्य क्षत्रियापेक्षयाऽधिकशौर्यसमशौर्यवत्त्वे तादृशप्रयोगो न स्यादिष्टत्वात् । तादृशसंख्यात्वव्यापकत्वन्तु संख्यानिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपम्, अतो वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेऽपि न क्षतिः । 'न पचतीत्यादौ अन्वयबोधानुरोधेन तादृशसम्बन्धावच्छिन्नावच्छेदकतायाः सर्वैः स्वीकारात् । न्यूनशौर्यवत्यपि समवायेन तादृशसंख्यावत्त्वात् पर्याप्तिनिवेशः । केचित्तु तादृशजातिमत्संख्यात्वेनानन्तसंख्यायास्तदर्थप्रवेशे गौरवात् बहुत्वत्वेन तन्निवेशनमुचितमित्याहुः, तन्मतमुपन्यस्य दूषयति—तच्छौर्यपर्याप्तेति । अत्रापि पर्याप्तेति सम्पातायातं, तत्तत्संख्यात्वव्यापकतानिवेशे च प्रकृत्यर्थस्यानन्वयापत्तेरिति ध्येयम् । वस्तुतः स्वमते वृत्तित्वमात्रं निविष्टम्, एतन्मते पर्याप्तत्वम्, अत एव 'पर्याप्तसंख्याबहुत्वयोरप्रसिद्धेरि'त्यनेन पर्याप्तिनिवेशनमपि दूषयिष्यतीति । तद्वत–एकविधशौर्यवतः, स–शौर्यद्वयवान्, तदुभयशौर्ययोः–तयोरेकविधद्विविधशौर्ययोः । पर्याप्तसंख्याबहुत्वयोरिति । तथा चैकविधशौर्ये पर्याप्तसंख्याया द्विविधशौर्ये च बहुत्वस्य चाप्रसिद्धेरित्यर्थः । यद्यपि तदुभयेत्यसंगतम्, तथापि तत्तद्वृत्तित्वेनोभयत्वमुक्तम् । केचित्तु तदुभयोरिति यथाश्रुतार्थकं, पर्याप्तसंख्याबहुत्वयोरित्यत्र पर्याप्तबहुत्वसंख्याया इति कल्पयन्ति, अत एव 'एकत्वं एकस्मिन्नेव पर्याप्तं न तु द्वित्वे' इति प्रतीतिबलादेकत्वसंख्यायाः पर्याप्तिसत्त्वेऽपि ग्रन्थसंगतिरित्याहुः । प्रकृत्यर्थस्य प्रकृतिलभ्यत्वेन अवशिष्टस्यार्थस्याप्रसिद्धया तत्र पञ्चम्या वृत्तिकल्पनमसम्भवीति प्रकृतेस्तात्पर्यग्राहकत्वे प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमो भज्येतेति पञ्चम्यास्तादृशविशिष्टार्थघटकाभावप्रतियोगित्वाधिकरणत्वजातिसंख्यादिषु खण्डशो वृत्तिमभ्युपगच्छति इदन्तु बोध्य-

(१) षष्ठ्युपपदेषु 'शेषे षष्ठी' (२।३।५०) इत्यस्योदाहरणमाह चैत्रस्येति ।

स्वत्वस्य समवेतत्वादिकं प्रातिस्विकरूपेणैव षष्ठ्यर्थः, सम्बन्धत्वेन तथात्वे चैत्रस्थे परधने नेदं चैत्रस्येत्यादेरयोग्यतापत्तेः, सम्बन्धत्वस्यानुगतस्य दुर्वचत्वाच्च ।

विशेषस्य स्वेतरसामान्यव्यावृत्तधर्मवत्त्वं निर्धारणं, तच्च समुदितं न षष्ठ्यर्थः, सामान्यतन्निष्ठधर्मयोः स्वपदोपात्तत्वात्, किन्तु विशेषान्यत्वं व्यावृत्तत्वं च, विशेषस्तु समभिव्याहृतः क्षत्रियादिविशेष्यग्राह्यः, व्यावृत्तत्वञ्च भेदप्रतियोगित्वम्, तथा च 'नराणां क्षत्रियः शूरतम' इत्यत्र क्षत्रियस्य नरविशेषतया षष्ठ्यर्थेन क्षत्रियान्यत्वेन विशिष्टस्य तत्प्रकृत्यर्थस्य नरस्य तादृशनरत्वावच्छिन्नाधेयत्वसंसर्गेण भेदेऽन्वयलब्धस्य क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य शूरतमे, शूरतमस्य च क्षत्रिये तादात्म्येनान्वय इति क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्व-

---

कृष्णकान्तीटीका।

मित्यादिना । इतरभागः-शौर्याधिकरणत्वान्तभागः ।

समवेतत्वादिकमित्यादिना च स्वाश्रयसंयुक्तत्वादिरूपपरम्परादिपरिग्रहः । ननु किमेतत् सकलानामेव सम्बन्धानामेकत्रैव षष्ठ्यर्थत्वम् ? इत्याकांक्षायामाह— प्रातिस्विकरूपेणेति । प्रत्येकमात्रवृत्तिस्वत्वादिनैव न तु सम्बन्धत्वतादृशान्यतमत्वादिनेत्यर्थः । केचित्तु प्रातिस्विकरूपेण क्रमिकत्वेन क्रमेणेति यावदित्याहुः । तन्मन्दम्, तथासत्येवकारव्यवच्छेद्ये दोषदानस्य समुचितत्वेन 'सम्बन्धत्वेन तथात्वे' इत्यादिग्रन्थस्यासुपष्टम्भत्वापत्तेः अर्थान्तरकरणे च उदक्षरत्वापत्तेश्च । अयोग्यतापत्तेरिति । आधेयत्वरूपस्यैव चैत्रसम्बन्धस्य तद्धने सत्त्वादिति भावः । ननु तदादिपदशक्यतावच्छेदकानुगमकबुद्धिविषयत्ववत्सम्बन्धत्वमप्यनुगमकम्, अतो नैष दोष इत्यत आह—सम्बन्धत्वस्येति । दुर्वचत्वाच्चेति । इदमुपलक्षणम्— तादृशान्यतमत्वादेर्दुर्ज्ञेयत्वाच्चेत्यपि बोध्यम् ।

निर्द्धारणस्थले शाब्दबोधप्रकारमभिधातुं भूमिकामाह—विशेषस्येति । तच्च-तादृशधर्मवत्त्वञ्च । तन्निष्ठेति । सामान्यनिष्ठेत्यर्थः । स्वपदोपात्तत्वात्—सामान्यवाचकपदोपात्तत्वात् । ननु विशेष(त्व)स्य सार्वत्रिकत्वात् 'नराणां न क्षत्रियः शूरः' इति प्रयोगः(स्यात्?) यत्किञ्चिद्विशेषान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य क्षत्रियेऽसत्त्वात्, विशेषसामान्यभेदनिवेशे च 'नराणां क्षत्रियः शूरः' इत्यपि प्रयोगो न स्यात् तादृशभेदस्यासिद्धेरित्यत आह—विशेषस्त्विति । तथा चेति, इत्याकारस्तत्र बोध इति परेणान्वयः । तादृशनरत्वावच्छिन्नेति । क्षत्रियान्यनरत्व-

च्छूरतमाभिन्नः क्षत्रिय इत्याकारकस्तत्र बोधः। क्षत्रियान्यनरस्याधेयतामात्रेण भेदेऽन्वये 'नराणां क्षत्रियः सुन्दर' इत्यपि प्रयोगापत्तेः, क्षत्रियान्यकुरूपनरनिष्ठभेदप्रतियोगित्वस्य सुन्दरे सत्त्वात्, एवञ्च नरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य शूरतमे बाधादुक्तवाक्यस्यायोग्यत्वापत्तिरतः षष्ठ्यर्थेन क्षत्रियान्यत्वेन तत्प्रकृत्यर्थो नरो विशेषितः। न च 'घटानां क्षत्रियः शूर' इत्यपि स्यात्, क्षत्रियान्यघटत्वावच्छेदेन शूरभेदस्य सत्त्वादिति वाच्यम्। 'राहोः शिर' इत्यादाविव प्रकृतेऽपि क्षत्रियान्वयिनः स्वप्रकृत्यर्थतादात्म्यस्य षष्ठ्या बोध्यत्वात्। न च संख्यान्यसुबर्थस्य प्रकृत्यर्थविशेष्यत्वनियमात् क्षत्रियान्यत्वरूपस्य षष्ठ्यर्थस्य प्रकृत्यर्थनरे प्रकारत्वायोग इति वाच्यम्। सम्बोध्यत्वादौ व्यभिचारेण तादृशव्याप्तेः प्रायिकत्वस्य प्रागुक्तत्वात्। न च 'नराणां क्षत्रियो द्रव्यमि'त्यपि स्यात्, क्षत्रियान्यनरत्वावच्छेदेन द्वित्वाद्यवच्छिन्नद्रव्यप्रतियोगिताकभेदसत्त्वादिति वाच्यम्। द्रव्यत्वादिविशिष्टे धर्मिणि द्रव्यत्वाद्यवच्छिन्नस्यैव भेदप्रतियोगित्वस्य बोधेन निर्धारणषष्ठ्याः समर्थत्वात्। यद्यपि भेदः प्रतियोगित्वञ्च द्वयमेव निर्द्धारणषष्ठ्यर्थः, क्षत्रियशब्देनैवोपस्थापितस्य क्षत्रियस्य षष्ठ्यर्थभेदे तस्य च नरे नरस्य च पुनर्भेदे पुनर्भेदस्य च प्रतियोगित्वेऽन्वयादेव क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य शूरतमेऽन्वयसम्भवात्, तथापि क्षत्रियादिनामोपस्थाप्यस्य क्षत्रियादेस्तादृशनामोक्त-

---

कृष्णकान्तीटीका।

व्यापकाधेयत्वेत्यर्थः। संसर्गघटकव्यापकत्वनिवेशव्यावृत्तिमाह—क्षत्रियान्यनरस्येति। नरत्वव्यापकत्वमुपेक्ष्य विशिष्टनरत्वव्यापकत्वनिवेशव्यावृत्तिमाह—एवञ्चेति। नरत्वव्यापकत्वनिवेशे चेति तदर्थः। उक्तवाक्यस्य—नराणां क्षत्रियः शूर इति वाक्यस्येत्यर्थः। अयोग्यत्वापत्तिरिति। क्षत्रियभेदाधेयत्वस्य नरत्वव्यापकत्वादिति भावः। घटत्वावच्छेदेनेति कथनात् तादृशाधेयत्वं न प्रकृत्यर्थस्य सम्बन्धः, परन्तु स्वनिष्ठाभावाप्रतियोगित्वमेव लाघवादिति व्यञ्जितम्। बोध्यत्वादिति। तथा च घटाभेदस्य क्षत्रिये बाधात् न तादृशप्रयोग इति भावः। शंकते-न चेति। व्यभिचारेणेति। सम्बोध्यत्वस्य तत्र प्रकृत्यर्थप्रकारतयैव भानादिति भावः। शंकते—न चेति। समर्थत्वादिति। फलानुरोधित्वात् कल्पनाया इति भावः। ननु क्षत्रिय-

रविभक्त्यर्थ एव भेदेनान्वयस्य व्युत्पन्नत्वात् नरपदोत्तरषष्ठ्यर्थे तदन्वयासम्भवात् क्षत्रियान्यत्वं विशिष्टमेव षष्ठ्यर्थो, न त्वन्यतामात्रम् । न च 'नरस्य क्षत्रियः शूर' इत्यपि स्यात्, 'पाणिपादस्य पाणिः पवित्र' इत्यत्रेवान्यत्राप्येकवचनस्य निर्द्धारणार्थकत्वे क्षत्यभावात्, अत एव 'द्वन्द्वः सामासिकस्य चे'ति गीतापि सङ्गच्छते, एकवचनभिन्नयोरेव षष्ठीसप्तम्योरुक्तनिर्द्धारणबोधकत्वव्युत्पत्तिस्वीकाराद्वा । ननु 'पाथःपृथिव्योर्जलं स्नेहवदि'त्यादौ जलभिन्नयोः पाथःपृथिव्योरप्रसिद्धेः पाथःपृथिव्युभयवृत्तिभेदप्रतियोगित्वस्य स्नेहवति बाधेन च जलान्यपाथःपृथिव्युभयत्वावच्छिन्नवृत्तिकभेदप्रतियोगिनः स्नेहवतो बोधासम्भवः । न च द्विपदद्वन्द्वोत्तरनिर्द्धारणषष्ठ्या अन्यतरवृत्तिभेदप्रतियोगित्वमेवार्थः, तन्निष्ठे चान्यतरास्मिन्नेकपदोपात्तत्वेन जलान्यत्वादेः षष्ठ्यर्थान्तरस्यान्वयः, तथा च जलान्यो यः पाथःपृथिव्योरन्यतरस्तन्निष्ठस्य भेदस्य प्रतियोगित्वं स्नेहवति वर्तत एवेति वाच्यम् । तावतापि पाथःपृथिव्युभयतादात्म्यस्य जले बाधादुक्तवाक्यस्यायोग्यतातादवस्थ्यात्, 'पाथःपृथिव्योस्तेज उष्णमि'त्याद्यप्रयोगेन निर्द्धारणषष्ठ्यास्तादात्म्यवाचिताध्रौव्याद्, 'घटतद्भिन्नयोर्घटः कम्बुग्रीवादिमानि'-

---

कृष्णकान्तीटीका ।

पदादेव क्षत्रियलाभसम्भवे किं षष्ठ्यर्थमध्ये तन्निवेशेनेत्याशक्य समाधत्ते—यद्यपीत्यादिना । ननु निर्धारणस्थले एकवचनप्रयोगोऽपि स्यादित्यत्रेष्टापत्तिमाह—न चेत्यादि । तथाप्रयोगे साधकमप्याह—अत एवेति । सामासिकस्येति स्वार्थे इकण् । ननु 'पाणिपादस्य पाणिः पवित्र' इति प्रयोगोऽसिद्ध एव पाणिपादोभयत्वावच्छिन्ने पाणिभेदासत्त्वात्, तत्समाहारे पाणिभेदसत्त्वेऽपि समाहारभेदस्य पाणावभावात्, किन्तु सम्बन्धे षष्ठी, एतेन गीताग्रन्थोऽपि व्याख्यात इत्यत आह—एकवचनेति । अप्रसिद्धेरिति । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशभेदास्वीकारादिति भावः । शङ्कते—न चेति । तन्निष्ठे चेति । तथा चान्यतरत्वस्याव्यासज्यवृत्तित्वेन तदवच्छिन्ने एकदेशभेदसत्त्वे बाधकाभाव इति भावः । तादात्म्यस्येति । तस्यापि षष्ठ्यर्थत्वस्योक्तत्वादिति भावः तादवस्थ्यादिति । अन्यतराभेदस्य षष्ठ्यर्थत्वे 'नरघटयोः क्षत्रियः शूर' इति प्रयोगापत्तेरिति भावः । ननु 'घटेषु क्षत्रियः शूर' इति प्रयोगवारणाय तत्रत्यषष्ठ्यास्तादृशार्थकत्वेऽपि पाथःपृथिवीतिद्वन्द्वोत्तरषष्ठ्यास्तादृशार्थकत्वं न वाच्यमित्यत आह—पाथःपृथिव्योस्तेज

त्यादौ घटतद्भिन्नान्यतरत्वाप्रसिद्ध्या तादृशान्यतरवृत्तिभेदस्य बोधयितुमशक्यत्वाच्चेति चेन्न । द्वन्द्वोत्तरनिर्द्धारणषष्ठ्याः पर्य्याप्तसंख्याश्रयेऽपि शक्तत्वेन तस्मिन्नेवैकपदोपात्तत्वेन षष्ठ्यर्थस्य जलाद्यन्यत्वरूपनिर्द्धार्य्यभेदस्यान्वयेन सर्वसामञ्जस्यात् । 'पाथःपृथिव्योर्जलं स्नेहवदि'त्यादौ जलभिन्नो यः पाथःपृथिवीपर्य्याप्तसंख्याश्रयस्तत्त्वावच्छिन्नवृत्तिकभेदप्रतियोगिस्नेहाभिन्नं पाथःपृथिवीपर्य्याप्तसंख्याश्रयो जलमित्यन्वये बाधकाभावात् । 'घटपटमठानां घटः कम्बुग्रीवादि'मानित्यादावप्युक्तरीत्यैवान्वयधीः ।

इदन्तु बोध्यम्-यत्रोद्देश्यविधेययोस्तादात्म्येनान्वयबोधसामग्री तत्रैव निर्द्धारणषष्ठ्या भेदप्रतियोगित्वमर्थः, यत्र तु सम्बन्धान्तरेण तत्रात्यन्ताभावप्रतियोगित्वमतो 'नराणां क्षत्रिये शौर्य्यमि'त्यादौ क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकस्यात्यन्ताभावस्यैव प्रतियोगित्वं शौर्य्यादौ प्रतीयते न तु तादृशभेदस्य, 'नराणां क्षत्रिये रूपमि'त्यपि प्रयोगापत्तेः । 'नराणां मध्ये क्षत्रियः शूर' इत्यादौ तु निर्द्धारणवाचिनो मध्ये इत्यव्ययस्य तदर्थकषष्ठ्या सह सम्भेदे 'हे चैत्र !' इत्यादाविव नान्यतरवैयर्थ्यम् । 'नरेषु क्षत्रियः शूर' इत्यादौ निर्द्धारणसप्तमीस्थलेऽप्युक्तदिशैवान्वयो द्रष्टव्यः । यत्तु-'नराणां क्षत्रियः शूरतमः' इत्यादौ 'राहोः शिर' इत्यत्रेवाभेद एव षष्ठ्यर्थस्तादात्म्यं वा, तथा च नराभिन्नक्षत्रियत्वावच्छेदेन शूरतमस्याभेदस्तत्र वाक्या-

---

कृष्णकान्तीटीका ।

इत्यादि । ननु तथाप्युच्चारणभेदेन षष्ठ्यादिभिन्नस्थले तत्रत्यषष्ठीव्यक्तेस्तादृशार्थकत्वं न वाच्यम् इत्यत आह—घटतद्भिन्नयोरिति । समाधत्ते—चेन्नेति । बाधकाभावादिति । तादृशसंख्याया द्वित्वरूपत्वेऽपि संख्यात्वस्य व्यासज्यवृत्तितानवच्छेदकत्वादिति भावः । उक्तरीत्यैवेति । तत्रापि घटभिन्नो यः घटपटमठपर्याप्तसंख्याश्रयः तदवच्छिन्नवृत्तिकभेदस्य प्रतियोगिकम्बुग्रीवादिमदभिन्नो घटपटमठपर्याप्तसंख्याश्रयः कम्बुग्रीवादिमानित्यन्वयधीरित्यर्थः ।

न तु तादृशभेदस्येति । प्रतियोगित्वं शौर्यादौ प्रतीयत इति पूर्वेणान्वयः । कुत इत्याकाङ्क्षायामाह-नराणामित्यादि । सम्भेदे-समभिव्याहारे । इत्यादाविवेति । तत्रापि प्रथमाया इव हेशब्दस्यापि सम्बोध्यार्थकत्वादिति भावः । मतान्तरमुपन्यस्य दूषयति-यत्त्विति । अभेदवादाह—तादात्म्यं वेति । वाक्यार्थ

र्थः, तेन 'नराणां क्षत्रियोऽर्जुन' इत्यादिको न प्रयोगः, नराभिन्नक्षत्रियत्वावच्छेदेनार्जुनाभेदस्यासत्त्वात् , न वा 'नराणां वानरः पशुरि'त्यादिकः, कीशे(१) पश्वभेदसत्त्वेऽपि मानुषाभेदस्य विरहात्—इति । तत्तुच्छम् , नराणां क्षत्रियः प्राणी, क्षत्रियाणां नरः शूर' इत्यादिवाक्यस्य दुर्वारतापत्तेः ।

केचित्तु 'नराणां क्षत्रियः शूर' इत्यादौ क्षत्रियान्यो नरः शूरभिन्नो नराभिन्नः क्षत्रियश्च शूर इत्येवमन्वयितावच्छेदकधर्मावच्छेदेन धियमुररीकुर्वन्तो भेदमभेदञ्च निर्द्धारणवाचिषष्ठीसप्तम्योरर्थमाहुः । तच्चिन्त्यम् , नामार्थमुख्यविशेष्यकान्वयबोधे नाम्नः प्रथमान्तत्वापेक्षायाः परित्यागापत्तेः, स्वप्रकृत्यर्थावच्छिन्नस्यैव संख्याशून्यसुबर्थस्य शब्दान्तरार्थेन सहान्वयस्य व्युत्पन्नत्वेन षष्ठ्यर्थे केवलभेदे शूरादेरन्वयायोगाच्चेत्यास्तां विस्तरः ।

'क्षितौ घटस्तन्तुषु पटः, स्फटिके लौहित्यमि'त्यादौ दैशिकसम्बन्धावच्छिन्नमेवाधेयत्वं कालिकादिसंसर्गवाचिशब्दासमभिव्याहृतसप्तम्या बोध्यते, तथैव तस्याः साकाङ्क्षत्वात् , अन्यथा क्रियायां मूर्तान्यद्रव्ये वा

कृष्णकान्तीटीका ।

इत्यनेनावच्छेद्यावच्छेदकभावो वाक्यार्थमर्यादया भासत इति व्यञ्जितम् । तेन—अवच्छेदकभाननियमेन, न प्रयोग इत्यत्र हेतुमाह—नराभिन्नेति । अर्जुनाभेदस्य नराभिन्नक्षत्रियत्वाव्यापकत्वादिति भावः । दुर्वारतापत्तेरिति । क्षत्रियाभिन्ननरत्वावच्छेदेन प्राण्यभेदस्य नराभिन्नक्षत्रियत्वावच्छेदेन शूराभेदस्य सत्त्वादिति भावः ।

मतान्तरमुपन्यस्य दूषयति—केचित्त्विति । परित्यागापत्तेरिति । तथा च नरस्य मुख्यविशेष्यत्वानुपपत्तिरिति भावः । ननु क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकः शूरभेद इत्यादिबोधे न किञ्चिद्बाधकमित्यत आह—स्वप्रकृत्यर्थावच्छिन्नस्यैवेति ।

कथमित्याकाङ्क्षायाह । तथैवेति । नन्वाधेयतामात्रस्य तादृशसप्तम्यर्थत्वे क्षतिविरहात् किं सप्तमीविशेषस्याधेयताविशेषबोधकत्वमुक्तमित्यत आह—अन्यथेति । क्रियायामिति । ननु कालिकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नाधेयताबोधकत्वोक्तौ नैष दोष इत्यत आह—मूर्तान्यद्रव्य इति । मूर्त्ते इत्यस्यैव सम्यक्त्वाद्द्रव्यपदं गोबलीवर्दन्यायादविरुद्धम् । क्वचिन्मूर्तान्येति पाठः, स च प्रामादिकः,मूर्त्तस्यैव दिगुपाधितया मूर्त्तान्यस्मिन् दिक्कृतविशेषणतया वृत्त्यसम्भवात् । न च कालिकसम्बन्धावच्छिन्नाधेयताबोधसम्भावनायां स्थलद्वयमुक्तं दिक्कृतविशेषणतासम्बन्धावच्छिन्नाधेयताबोधस्थलन्तु ग्रन्थकृता नोक्तमित्युक्तौ न कोऽपि दोष इति वाच्यम् । तथापि मूर्त्तान्य-

(१) वानरं, मर्कटो वानरः कीश' इत्यमरसिंहोक्तेः ।

पटत्वमित्यपि प्रयोगापत्तेः, क्रियादावपि कालिकादिसम्बन्धेन पटत्वादेर्वृत्तिमत्त्वात् । 'घटे कालिकेन दिकृकृतेन वा सम्बन्धेन पटत्वमि'त्यादौ तादृशसम्बन्धवाचिशब्देन समभिव्याहृतैव सप्तमी । एवञ्च कालत्वान्तर्भावेन शक्तिमद्भ्यः शरदादिशब्देभ्यः सप्तम्याः कालिकसम्बन्धावच्छिन्नाधेयत्वस्य बोधनाय "कालभावयोः सप्तमी" इति विध्यन्तरमपि सङ्गच्छते, अधिकरणसप्तम्या तदनिर्वाहात् । तथा च 'शरदि पुष्पन्ति सप्तच्छदा' इत्यत्र शरत्कालवृत्तिर्यः पुष्पोत्पादस्तद्वन्तः सप्तच्छदा इत्यर्थः, पुष्पतेरुत्पादरूपस्यैव कर्तृत्वस्य तिङोपस्थापनात्, तत्रैव च तिङर्थे व्युत्पत्तिवैचित्र्येण सुबर्थस्याधेयत्वस्यान्वयादत एव पलाशादेः शरत्कालीनपुष्पस्य वसन्ताद्यवच्छेदेनोत्पत्तिमत्त्वेऽपि 'शरदि पुष्पन्ति पलाशा' इत्या-

---

कृष्णकान्तीटीका ।

स्वोपादानवैयर्थ्यापत्तेः, व्यावर्त्तनीयसकलाप्रदर्शनेन न्यूनत्वापत्तेश्चेति सम्प्रदायविदः । नव्यास्तु—ननु क्रियायां पटत्वमित्यस्येदानीं पटत्वमित्यादिभिः समानविषयकतया सप्तमी न निरुक्तरूपाक्रान्तेत्याधेयताविशेषोपादानव्यावृत्तिर्न सम्भवतीत्यतः स्थलान्तरमाह—मूर्त्तान्यद्रव्य इति। तत्र 'मूर्ते पटत्वं, द्रव्ये पटत्वमि'ति प्रयोगद्वयं युज्यत एव पटस्य मूर्ततया द्रव्यतया च समवायेन पटत्वस्य तत्र वृत्तेः मूर्तान्यस्मिन्नपि ज्ञानादौ विषयितया पटत्वस्य वृत्तेर्मूर्तान्यद्रव्य इत्युक्तम् । मूर्त्तान्यद्रव्य इति पाठः प्रामादिकः, द्रव्य इत्यस्य वैयर्थ्यात्, वाकारासंगतेश्च । इत्यपीत्यपिकारात् स्वासमानकालीने पटान्यमूर्त्ते पटीयरूपमित्यादिप्रयोगसंग्रहः, क्रियादावित्यादिपदात् स्वासमानकालीनपटान्यमूर्त्तस्यापि संग्रहः । कालिकादीत्यादिना दिक्कृतविशेषणतापरिग्रहः । पटत्वादेरित्यादिपदात् पटीयरूपादेः परिग्रह—इति सम्यक् व्याचक्षुः । सप्तमीविशेषणासमभिव्याहृतान्तव्यावृत्तिमाह घटे कालिकेनेत्यादि । एवञ्च—निरुक्तसप्तम्याः कालिकसम्बन्धावच्छिन्नाधेयताबोधकत्वे चेत्यर्थः, संगच्छत इति परेणान्वयः । तदनिर्वाहात्—कालिकसम्बन्धावच्छिन्नाधेयताबोधानिर्वाहात् । शाब्दबोधप्रकारमाह—तथा चेति । ननु पुष्पधात्वर्थस्योत्पादाघटितत्वात् कुतस्तादृशार्थ इत्यत आह—पुष्पतेरित्यादि । ननु शरदि पुष्पन्ति पलाशा इत्यपि प्रयोगः स्यात्, वसन्तोत्पत्तिकस्य पलाशपुष्पस्य शरत्कालेऽपि सत्त्वादित्यत आह—तत्रैव चेति । तिङर्थे उत्पाद एव चेत्यर्थः, सुबर्थसप्तमीरूपस्य तिङर्थसुबर्थयोरन्वयबोधास्वीकारात् व्युत्पत्तिवैचित्र्येणेत्युक्तम्। अत एव-

दिको न प्रयोगः। 'शरदि पुष्पन्ति पद्मिन्य' इत्यादिकस्त्विष्यत एव। 'शरदि सुन्दरश्चन्द्रमा' इत्यादावपि शरदादिकालवृत्तित्वबोधिका सप्तमी कालसप्तम्येव।

'शरदि पुष्पन्ती'त्यत्र कालसप्तम्या उत्पत्तिरर्थः तिङस्त्वारम्भकत्वम्, तथाच शरदुत्पत्तिकस्य पुष्पस्यारम्भकाः सप्तच्छदा इत्याकारस्तत्र बोध इति तु प्राञ्चः। तच्चिन्त्यम्।

(१)'गोषु दुह्यमानासु आगत' इत्यत्र गवाद्यभेदान्वयसाकाङ्क्षं कालार्थककृदन्तं यन्नाम तदुत्तरभावसप्तम्यास्तादृशकृदन्तनामप्रवृत्तिनिमित्तीभूतं वर्तमानकालवृत्तित्वमर्थः, पाचकत्वमित्यादाविव प्रकृतेऽपि शब्दबोध्यतावच्छेदकत्वेन तस्य भावत्वात्, तथाच गवाभिन्नानां वर्तमानदोहनकर्मणां सम्बन्धिनि वर्तमानकाले आगत इत्याकारस्तत्र बोधः, गवां तत्कालवृत्तिदोहनकर्मणां सम्बन्धिनि तत्काले आगत इति तु फलितार्थः। सर्वसाधा-

कृष्णकान्तीटीका।

तादृशाधेयत्वस्योत्पत्तावन्वयादेव। इष्यत एवेति। शरत्कालेऽपि तत्पुष्पोत्पत्तेरिति। ननु शरदि सुन्दरश्चन्द्रमा इत्यत्रापि काले सप्तमी स्यात् कालिकसम्बन्धावच्छिन्नाधेयताबोधकेत्यस्याविशिष्टत्वादित्यत्रेष्टापत्तिमाह शरदि सुन्दर इति।

प्राचाम्मतमुपन्यस्यति शरदि पुष्पन्तीत्यत्रेति। आरम्भकत्वमिति, अर्थ इत्यन्वयि। तच्चिन्त्यमिति। तस्य तिङर्थत्वे प्रयोजनाभावेनाधेयत्वापेक्षयोत्पत्तेर्गुरुत्वञ्चेति चिन्ताबीजम्। तादृशेत्यादि। गवाद्यभेदान्वयसाकाङ्क्षकालार्थकेत्यर्थः। प्रवृत्तिनिमित्तीभूतं-तज्जन्यबोधविषयतावच्छेदकीभूतम्, इदञ्च वर्तमानकालान्वयि। आनशादेर्वर्तमानकाले विधानात्तत्कालस्य दुह्यमानपदबोध्यतावच्छेदककाल एव प्रकृते भावपदार्थ इति भावः। ननु शब्दबोध्यतावच्छेदकस्य भावपदार्थत्वमपसिद्धान्तं, भावपदेन क्रियायाः शक्यतावच्छेदकस्य वाऽबोधनात्, दुह्यमानादेर्वाक्यत्वेन शक्त्यभावात्, कालस्य क्रियात्वाभावाच्चेत्यत आह पाचकत्वमित्यादि। तस्य-तादृशकालस्य। भावत्वादिति। तथा च "तस्यौभावे" इति सूत्रस्थभावपदस्य तादृशार्थपरत्वेऽत्रापि भावपदस्य तादृशार्थकत्वे नापसिद्धान्तमिति भावः। तत्र शाब्दबोधप्रकारमाह—तथा चेति। गवाभिन्नानामिति। तथा च गोष्विति विशेषणपदं आगत इति। ननु तत्तत्प्रयोगाधिकरणकालस्वरूपवर्तमानत्वं नानुगतम्, अत आवश्यकतत्तद्व्यक्तित्वेन तन्निवेशयति गवामित्यादि। सर्वसाधारणस्येति। सकलतत्तत्प्रयोगाधिकरणसा-

(१) अथ 'यस्य च भावेन भावलक्षणम्' इति (२।३।३७) पा०सूत्रोक्तभावसप्तम्यर्थोदाहरणान्याह गोष्विति।

णस्य वर्त्तमानत्वस्यासत्त्वाद् 'गोषु दुग्धास्वागत इत्यत्र' गवाभिन्नानां वर्त्तमानध्वंसप्रतियोगिदोहनकर्मणां सम्बन्धिनि तत्तत्काले आगत इति बोधः, 'गोषु दोग्धव्यासु आगत' इत्यत्र च गवाभिन्नानां विद्यमानप्रागभावप्रतियोगिदोहनकर्मणां सम्बन्धिनि तादृशकाले आगत इत्याकारः। 'नष्टेषु गोषु आगत' इत्यादौ वर्तमानकालस्य नष्टाधिकरणत्वाभावेऽपि यथाकथञ्चित्सम्बन्धित्वमक्षतमेव। 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'। 'भुक्तवत्सु च विप्रेषु पिण्डान् दर्भेषु निर्वपेत्' इत्यादावप्युक्तदिशैव भावसप्तम्यर्थो बोध्यः। पाचकादिकं कृदन्तमपि न कालार्थकतदन्तम्, कालार्थकप्रत्ययान्तमपि दृष्टचरादिकं न तदर्थककृदन्तम्, अत 'श्चैत्रेषु पाचकेषु व्रजति, मैत्रेषु दृष्टचरेषु पश्यती'त्यादिको न प्रयोगः। 'स्तोकं मैत्रस्य गते तिष्ठती'त्यादौ स्तोकाद्यभिन्नस्य मैत्रीयातीतगत्यादेः काले तिष्ठतीत्येवमन्वयबोधे कारककृदन्तबोध्यतावच्छेदक एव वर्त्तमानकालो भावपदार्थो वाच्यः। निरुक्तश्चायं भावसप्तम्यर्थो धात्वर्थ एवान्वेति न तु नामाद्यर्थे,

---

कृष्णकान्तीटीका।

धारणस्येत्यर्थः। तत्तत्काले–वर्तमानकाले इत्यर्थः। न च वर्तमानकालस्य दुग्धादिपदबोधकतावच्छेदकत्वाभावात् कथं तादृशकालवृत्तित्वं सप्तम्या बोध्यत इति वाच्यम्। अतीतत्वभविष्यत्वयोरपि वर्तमानकालघटितत्वात्। तादृशकाले–वर्तमानकाले इत्यर्थः। अधिकरणत्वमपहाय सम्बन्धित्वनिवेशव्यावृत्तिमाह नष्टेष्विति। यथाकथञ्चिदिति। स्वप्रतियोगिकनाशसम्बन्धिन (त्वम्?) इत्यर्थः। उक्तदिशैवेति। वर्तमानध्वंसप्रतियोगिदर्शनविषयपरमात्मसम्बन्धिवर्तमानकालवृत्तिक्षयप्रतियोगीनि अस्य जीवात्मनः कर्म्माणीत्यर्थः, विप्राभिन्नवर्तमानध्वंसप्रतियोगिभोजनकर्तृसम्बन्धिवर्तमानकालवृत्तिपिण्डकर्मताकदर्भाधिकरणकनिर्वाप इष्टसाधनमित्यर्थश्च क्रमेण बोध्यः। कालार्थकत्वनिवेशव्यावृत्तिमाह पाचकादिकमिति। ननु कालप्रत्ययान्तत्वनिवेशेनैवोपपत्तौ किं कृत्पर्यन्तनिवेशेनेत्यत आह कालार्थकप्रत्ययान्तमपीति। न तदर्थकेति। न कालार्थकेत्यर्थः। ननु तयोस्तथात्वे का क्षतिरित्यत आह अत इति। न प्रयोग इति। तथा च तदनिवेशे तादृशप्रयोगः प्रामाणिकः स्यादिति भावः। अन्वयबोध इति। आनुभविके सतीति शेषः। वाच्य इति। भावविहितकृत्प्रत्ययान्तस्य कारककृदन्तत्वाभावादिति भावः। ननु गोषु दुह्यमानासु घट इत्यपि प्रयोगः स्यात्, घटादेरपि तादृशकालवृत्तित्वादित्यत आह—निरुक्तश्चाय-

तथैव साकाङ्क्षत्वात् , अत एव घटादेर्दुह्यमानगवाद्यधिकरणवर्त्तमानकालवृत्तित्वेऽपि 'गोषु दुह्यमानासु घट' इत्यादिको न प्रयोगः। यत्तु—'गोषु दुह्यमानासु आगत' इत्यादौ पूर्वस्याः सप्तम्याः कर्मत्वं, परस्यास्तु कालवृत्तित्वं, शानजादिकृताञ्च भावविहितत्वाद्वर्त्तमानादिकालमात्रं ताद्रूप्येणार्थः, तेन गोकर्मकवर्त्तमानदोहनकालवृत्त्याऽऽगतिमानित्याकारस्तत्र बोध—इति । तत्तुच्छम् , गोदुह्यमानयोरभेदबोधस्यापलापापत्तेः, भावक्तान्तनाम्नो नपुंसकत्वनियमात् 'गोषु दुग्धासु' इत्यादौ स्त्रीलिङ्गाद्यनुपपत्तेः, 'गोषु चैत्रेण दुग्धास्वागत' इतिव 'गोषु चैत्रस्य दुग्धासु आगत' इत्यपि प्रयोगापत्तेर्भावक्तान्तस्य कर्त्तरि तृतीयावत् षष्ठ्या अग्रे व्युत्पाद्यमानत्वात् , सप्तम्याः कर्मादिवाचितायामनुशिष्टेरसत्त्वेन प्रमाणाभावात् , 'गोषु यान्तीषु गच्छती'त्यादौ कर्त्तर्य्येवानुशिष्टस्य शतृप्रभृतेर्भावे विधानायोगाच्चेति दिक् ।

हन्तेः कर्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमीम् ।
चतुर्थीबाधिकामाहुश्चूर्णि—भागुरि—वाग्भटाः ॥

इति भर्त्तृहरिस्मरणात् 'चर्मणि द्वीपिनं हन्ती'त्यत्र चर्म प्राप्तुं द्वीपिनं हन्तीत्यर्थः। 'चर्मणे द्वीपिनं बध्नाति, हिनस्ती'त्यादौ द्वीपिप्रभृतिकं न हन्तेः कर्म, 'वित्ताय विप्रं हन्ती'त्यादौ हन्तेः कर्मणि विप्रादौ संयुक्तमपि वित्तादिकं न तदुपष्टब्धं, दन्तकेशत्वगादिष्वेव प्राणिनामुपष्टम्भाख्यसंयोगस्यो-

---

कृष्णकान्तीटीका ।

मिति। कुत इत्याकांक्षायामाह तथैवेति। मतान्तरमुपन्यस्य दूषयति—यत्त्विति। अनुभवे विप्रतिपन्नं प्रत्याह—भावक्तान्तेति। सम्पदादिशब्दवत् कथञ्चिदुपपादनेऽपि दोषान्तरमाह गोषु चैत्रेणेति। इष्टापत्तावप्याह सप्तम्या इत्यादि। प्रमाणाभावादिति। छविभक्तेरानुशासनिकातिरिक्ते न लक्षणेति नियमादिति भावः। ननु तादृशनियमोऽप्रामाणिकः, तथासति तृतीयार्थोऽवच्छेदकत्वमित्याद्यभिधानस्य ग्रन्थकतॄणामुन्मत्तप्रलपितत्वापत्तेरित्यत आह गोषु यान्तीष्वित्यादि। कारिकायामुपष्टम्भादित्यस्योपष्टम्भकसंयोगाश्रयादित्यर्थः। हिंसार्थकधातुमुपेक्ष्य हनधातुनिवेशव्यावृत्तिमाह चर्म्मणि द्वीपिनं बध्नातीति। उपष्टम्भनिवेशव्यावृत्तिमाह वित्तायेति। अत एव—दन्तादिष्वेव तादृशसंयोगस्वीकारादेवेत्यर्थः। कथमित्याकाङ्क्षायामाह समवायिनेति। तदभावात्—उपष्टम्भाख्यसंयोगास्वीकारात्।

पगमात् , अत एव शृङ्गं प्राप्तुमित्यर्थे 'शृङ्गे हरिणं हन्ती'त्यादिको न प्रयोगः समवायिना समं द्रव्यस्य तदभावात्(१) ।

मुक्ताफलाय करिणं हरिणं पलाय सिंहं निहन्ति भुजविक्रमसूचनाय ।
का नीतिरीतिरियती रघुवंशवीर ! शाखामृगे जरति यस्तव बाणमोक्षः ॥

इत्यादौ तु करिण्युपष्टब्धमपि मुक्ताफलं प्राप्तुमिति नार्थः किन्त्वाहर्तुमित्यादि ।

'उपरागे स्नानं, विवाहे श्राद्धमि'त्यादौ स्नानादावुपरागादिजन्येष्टजनकत्वलक्षणमुपरागादिनिमित्तकत्वं सप्तम्या बोध्यते, 'गोवधे प्रायश्चित्तमि'त्यादौ तु दुरितनाशकत्वेन विहितत्वरूपस्य प्रायश्चित्तस्यैकदेशे दुरितादौ गोवधादिजन्यत्वलक्षणं तन्निमित्तकत्वम् ॥ ९४ ॥

॥ ※ ॥ इतिश्रीजगदीशतर्कालङ्कारकृतौ शब्दशक्तिप्रकाशिकायां कारकप्रकरणं समाप्तम् ॥ ※ ॥

## ( ६ ) आख्यातप्रकरणम् ।

तदेवं सामान्यतो विशेषतश्च सुपं निरूप्य क्रमप्राप्तां तिङं लक्षयति विभजते च—

**स्वेतरप्रथमान्तस्य नाम्नोऽर्थे बोधनक्षमाः ।**
**प्रत्ययाः स्वार्थसंख्यायास्तिङो दशविधाश्च ताः ॥९५॥**

---

कृष्णकान्तीटीका ।

निमित्तसप्तमीस्थलमाह—उपरागे स्नानमित्यादि । ननु निमित्तसप्तम्या उक्तार्थकत्वे गोवधे प्रायश्चित्तमित्यादौ का गतिः, इष्टे तादृशगोवधजन्यत्वासम्भवात्, तत्रार्थान्तरमाह गोवध इत्यादि । दुरितनाशकत्वेनेति—दुरितनाशमात्रजनकत्वेनेत्यर्थः । विहितत्वं-विधिबोधितत्वम् , अत एव पापक्षयमात्रसाधकत्वेन विधिबोधितं कर्म प्रायश्चित्तमिति तु स्मार्त्ताः ॥ ९४ ॥

इति श्रीकृष्णकान्तविद्यावागीशकृत-कारकार्थेतरार्थनिरूपणशब्दशक्तिप्रकाशिकाटीका समाप्ता ॥ ※ ॥

---

( १ ) अथ 'निमित्तात्कर्मयोगे चे'ति वार्तिकं पाणिनीयमतेन द्रष्टव्यम् ।

स्वभिन्नप्रथमान्तस्य नाम्नोऽर्थे स्वार्थसंख्याबोधं प्रति समर्थाः प्रत्ययास्तिङ उच्यन्ते । प्रथमा तु प्रथमान्तस्य नाम्नोऽर्थे स्वार्थसंख्याबोधिकापि न स्वेतरप्रथमान्तस्येति तद्व्युदासः । 'चैत्रस्तथे'त्यादौ स्वार्थैकत्वबोधकोऽपि तथादिनिपातो न प्रत्ययः। ताश्च तिङो—लट्१लोट्२लिङ्३लङ्४लुङ्५लिट्६लुट्७आशीर्लिङ्८लृङ्९लृट्१०भेदेन दशविधाः ।

ननु 'चैत्रः पचती'त्यादौ प्रथमयैवान्यत्र क्लृप्तशक्तिकया चैत्रादेरेकत्वाद्यवगमादाख्यातस्य संख्यावाचित्वे मानाभावः, 'चैत्रो मैत्रश्च गच्छत' इत्यादावपि चेनैव निपातेनोपस्थितस्य द्वित्वादेश्चैत्रमैत्रादावनुभवात् । न च तसाद्युपस्थाप्यस्य धात्वर्थावच्छिन्नकृत्यादेर्विशेष्यविधयाऽन्वयबोधं प्रत्यवश्यं तसादिसमानवचनप्रथमान्तनामोपस्थाप्यत्वं तन्त्रमन्यथा 'पचतः, पचन्ति

---

कृष्णकान्तीटीका ।

विवृणोति—स्वभिन्नेत्यादि । स्वं—लक्ष्यत्वेनाभिमतं, तथाच स्वभिन्नप्रत्ययान्तनामार्थधर्मिकस्वार्थसंख्याप्रकारकान्वयबोधजनकतावच्छेदकप्रकारताश्रयानुपूर्वीमत्प्रत्ययत्वं तिङ्त्वमिति पर्यवसितम् । तत्र प्रथमायां स्वेतरत्वनिवेशव्यावृत्तिमाह—प्रथमा त्विति । न स्वेतरप्रथमान्तस्येति,नाम्नोऽर्थे इति पूर्वेणान्वयः । तद्व्युदासः—प्रथमाव्युदासः । प्रत्ययत्वनिवेशव्यावृत्तिमाह—चैत्र इत्यादि । दशविधाश्च ता इति विभागग्रन्थं विवृणोति ताश्चेति । सप्तम्या(तृतीयाय?)अपि संज्ञा लिङ्, अतो वैलक्षण्यायाशीर्लिङ् इत्युक्तम् । शङ्कते—नन्विति । विनिगमनाविरहं निराकरोति–अन्यत्रेति । आख्यातासमभिव्याहारस्थले चैत्र इत्यादौ एकत्ववांश्चैत्र इत्याद्यन्वयबोधात् इति भावः । मानाभाव इति । तथा च स्वार्थसंख्याऽप्रसिद्ध्याऽसम्भव इति भावः । ननु 'चैत्रो मैत्रश्च गच्छत' इत्यादौ द्वित्ववाचकप्रथमाया अभावात् तत्रागत्या आख्यातस्य संख्यावचितायौगे आख्यातत्वस्यैव शक्ततावच्छेदकत्वमुपेयते इत्यतिप्रसक्तिभङ्गाय संख्यात्वस्यैव तच्छक्यतावच्छेदकत्वात् नाख्यातैकवचनेऽतिव्याप्तिरित्याशङ्कां निराकरोति—चैत्र इत्यादि । अनुभवादिति । तथा च कथमाख्यातस्य संख्यावाचिताध्रौव्यमिति भावः । ननु तादृशप्रयोग एवासिद्धः कुतस्तदनुरोधेन निपातस्य संख्यार्थकत्वकल्पनमित्याशंक्य निषेधयति—न चेत्यादि, उपस्थाप्यतामात्रस्य तन्त्रत्वादित्यन्तेन । कृत्यादेरित्यादिना आश्रयत्वप्रतियोगित्वपरिग्रहः । अन्वयबोधं प्रतीति । तादृशकृत्यादिप्रकारतानिरूपितविशेष्यताशालिबोधं प्रतीत्यर्थः । नन्वेतावता 'चैत्रो मैत्रश्च गच्छत' इत्यादौ तादृशशक्तेरभावे का क्षतिः, संख्याभाने बाधकाभाव इत्यत ब-

वा चैत्र' इत्यादितोऽपि चैत्रादौ पाककर्तृत्वादेरन्वयबोधापत्तेः, तथा चोक्तस्थले तिङर्थसंख्याया अन्वयधीरेव न, भावनाविशेष्य एव तिङः स्वार्थसंख्याबोधकत्वस्य वाच्यत्वादिति वाच्यम्। द्वित्वाद्यनवच्छिन्न एव नामार्थे तसादिना धात्वर्थविशिष्टस्वार्थान्वयबोधने तत्समानवचनान्तनामोपस्थाप्यत्वस्य तन्त्रत्वात्तदवच्छिन्ननामार्थे तु तसादिना तादृशस्वार्थबोधने प्रथमान्तनामोपस्थाप्यतामात्रस्य तन्त्रत्वात्। अत एव 'स च त्वञ्च गच्छथः, स च त्वञ्चाहञ्च गच्छाम' इत्यादौ युगपन्नानापुरुषेष्वपि एकक्रियान्वयस्थले सुबाख्यातयोर्न वचनैक्यादरः। अस्तु वाऽऽख्यातस्य द्विवचनादेर्द्वित्वादिवाचकत्वम्, तथापि तदेकवचनस्य नैकत्ववाचित्वं मानाभावात्, सुपामेकत्वाशक्तत्वग्रहदशायां तिपा चैत्रादावेकत्वानुभवस्य सन्दिग्धत्वात्, अन्यथा तिङः कर्तृत्वाद्यशक्तत्वधीदशायामपि 'चैत्रः पचती'त्यादितः पाककर्तृत्वादेश्चैत्रादावन्वयानुभवानुरोधेनाभिहिताधिकारीयप्रथमायाः

---

कृष्णकान्तोका।

पसंहरति—तथा चेति। भावनाविशेष्य एवेति। आख्यातार्थविशेष्य एवेत्यर्थः। अपचन् चैत्रः पचतोत्यादिप्रयोगापत्तेरिति भावः। वाच्यत्वादिति। तथा च भावनाया अभावे संख्याभानासम्भवात् 'चैत्रो मैत्रश्च गच्छत' इत्यादौ तिङर्थसंख्याभानप्रसक्तिरेव नास्ति कुतस्तदनुरोधेन तिङः संख्यावाचकत्वं कुतो वा तन्निराकरणमिति भावः। तन्त्रत्वादिति। तथा च तत एव 'चैत्रो मैत्रो गच्छत' इति प्रयोगवारणादिति भावः। तन्त्रत्वादिति। तथा च चकारद्वयेनैव द्वित्वबोधनात् तादृशप्रयोगः प्रामाणिक एवेति भावः। अत एवोक्तस्थले प्रथमान्तनामोपस्थाप्यतामात्रस्य तन्त्रत्वादेवेत्यर्थः। ननूक्तस्थले चकारस्य द्वित्वादिवाचकत्वं न दृष्टचरम्, अस्तु वा तस्य तथात्वं विनिगमनाविरहात् तसादेस्तत्त्वं सिध्यतीत्यत आह—अस्तु वेति। मानाभावादिति। तथा चाख्यातलक्षणस्यैकवचनतिबादावव्याप्तिरिति भावः। ननु सुपामेकत्वाद्यशक्तत्वग्रहदशायामपि तिपा चैत्रादावेकत्वाद्यनुभवादेवै कवचनस्यैकत्वे शक्तिरावश्यकीत्यत आह—सुपामित्यादि। सन्दिग्धत्वादिति। तथा चाख्यातैकवचनं एकत्वशक्तं तादृशशक्तत्वग्रहकालोनैकत्वानुभवजनकत्वादित्यनुमानं न सम्भवति, साध्यव्याप्यतया प्रकृतहेतुसत्तानिश्चयाभावादिति भावः। तादृशानुभवस्य सन्दिग्धत्वे विप्रतिपन्नं प्रति प्रतिबन्धिमाहान्यथेति। 'सन्दिग्धस्याप्येकत्वे आहान्यथेति' इत्यप्याहुः। प्रथमाया इति। पचतोत्यादेरसमभिव्याहारेऽपि तादृशबाधवारणाय शपादेः

शपादेर्वा कर्तृत्वादिवाचितापत्तेः । न चाख्यातैकवचनान्येकत्वशक्तान्येकवचनादित्येवमनुमानं मानम्, अप्रयोजकत्वात्, स्वमूटादिसप्तान्यतमत्वं सुत्वाम्स्वादिसप्तानां प्रत्येकं वा धर्ममपेक्ष्यातिगुरोस्तिबादिसप्तषण्ठ्यन्यतमत्वरूपस्यैकत्वशक्ततानवच्छेदकत्वात् सुत्वादिप्रत्येकरूपेण ज्ञानादुपस्थिताया एवैकत्वादिसंख्यायाः शाब्दमतावनुप्रवेशाच्च । यत्तु—केवलादपि 'पचती'त्यतः पक्तैकत्ववानित्यनुभवादाख्यातैकवचनस्यापि संख्यावाचित्वं शक्त्या निरूढलक्षणया वा तिपा कर्तुरुपस्थापनात्—इति । तत्तुच्छम्, आख्यातस्यैकत्वशक्तिवादिनामपि धात्वर्थान्वितस्वार्थान्वयिन्येव स्वार्थसंख्याबोधकत्वव्युत्पत्तेर्वक्तव्यत्वात्, अन्यथा 'चैत्रः पचती'त्यादौ सुपा चैत्रादौ तिपा च पक्तर्य्येकत्वबोधनेऽनुभवबाधितस्य द्विविधैकत्वभानस्य दुर्वारतापत्तेः ॥ ९५ ॥

अस्तु वा तत्र यथा तथा तथापि 'मत्स्यण्डी फाणितं खण्डविकारौ, देवो विप्रश्च विबुधावि'त्यादौ स्वप्रकृत्यर्थभिन्नेऽपि मत्स्यण्डीप्रभृतौ

---

कृष्णकान्तीटीका ।

ति । शंकते—न चेति । अप्रयोजकत्वादनुकूलतर्कविरहात् । निरुक्तसप्तान्यतमत्वघटकभेदानां विशेष्यविशेषणभावे विनिगमनाविरहेण तादृशसप्तानामन्यतमत्वानां शक्तावच्छेदकत्वापेक्षया सुप्त्वादिसप्तानामेव तथात्वमुचितमिति तदेवाह—सुत्वामूत्वादीति। शक्ततानवच्छेदकत्वादिति । ननु तादृशान्यतमत्वस्यैकत्वशक्ततानवच्छेदकत्वेऽपि प्रत्येकधर्माणां तथात्वे बाधकाभावः, एवं सुत्वादिपदज्ञानविरहदशायां तिप्त्वादिना पदज्ञानादेकत्वोपस्थित्या शाब्दबोधोदयावश्यकत्वेनापि प्रत्येकधर्माणां तथात्वं स्वीकरणीयम् ? नेत्यत आह—सुत्वादीति । तथाच तथाविधैकत्वोपस्थित्यनन्तरं शाब्दबोध एव न जायते इति भावः । मतान्तरमुपन्यस्य निरस्यति—यत्त्विति । संख्यावाचित्वमिति । ननु कर्तुरुपस्थापकपदाभावात् कथं तादृशबोध इत्यत आह—शक्त्येत्यादि । वैयाकरणमतानुप्रवेशभयादाह—निरूढेति । व्युत्पत्तेरिति । तथा चोक्तस्थले पाककर्तुरन्वयिनोऽभावात् न तादृशान्वयबोध इति भावः । अन्यथा—उक्तव्युत्पत्त्यनादरे । दुर्वारतापत्तेरिति । निरुक्तव्युत्पत्तिस्वीकारे एकधर्मावच्छिन्ने एकमेवैकत्वं भासते 'सम्भेदे नान्यतरवैयर्थ्य'मिति न्यायात् ॥ ९५ ॥

ननु तिप्त्वादिना पदज्ञानजन्यैकत्वोपस्थितेः शाब्दाजनकत्वे मानाभावः, विनिगमनाविरहेणापि तस्यास्तथात्वं सेत्स्यतीति अत आह—अस्तुवेति । द्वित्वादि-

सुपो द्वित्वादिबोधकत्वात् तस्यामतिव्याप्तिरेवातो निरुक्त्यन्तरमाह—

**स्वेतरार्थयुतस्वार्थावच्छिन्नार्थविशेष्यके ।**
**शाब्दे स्वरूपयोग्यो वा प्रत्ययस्तिङिति स्मृतः ॥९६॥**

तिबाद्याः साशीतिशतं ( १८० ) पदार्थान्तरविशिष्टस्वार्थावच्छिन्नावगाहिताकं शाब्दं प्रति स्वरूपायोग्याः, 'पचंश्चैत्रो गच्छती'त्यादित इव 'पचती चैत्रो गच्छती'त्यादितो जात्वपि पक्तृत्वाद्यवच्छिन्नधर्मिकान्वयमतेरनुत्पादात्, धात्वर्थावच्छिन्नस्वार्थविधेयताके तत्तुल्ययोगक्षेम एव चान्वयबोधे तिङः स्वरूपयोग्यत्वात्। अत एव 'चैत्रः पचती'त्यत्रेव 'चैत्रो न पचति, पचत्येव, पचतीवे'त्यादौ निपातार्थे निषेधादौ विधेयतावच्छेदकत्वेन तिङर्थस्य कृत्यादेर्बोधो न तु सर्वत्र, 'चैत्रः पचति पुरुष' इत्यादितश्चैत्रादौ पचतः पुरुषादेरबोधात। सुबाद्यास्तु प्रत्ययाः 'पीतः पाराशर्यः, पाचकः पिपक्षुर्वा पुरुषस्तिष्ठती'त्यादौ प्रकृत्यर्थविशिष्टे तादात्म्यापत्यादिस्वार्थैरवच्छिन्नपुरुषादिधर्मिताके एव शाब्दे स्वरूपयोग्याः। चादयस्तु

---

कृष्णकान्तीटीका ।

बोधकत्वादिति, पदनिष्ठेत्यादिः। तस्यां—प्रथमाद्विवचनात्मकेऽपि। अतिव्याप्तिरेवेति। तत्र एतौ खण्डविकारवाचकौ एतौ विभुत्वशब्दप्रतिपाद्यौ इति शाब्दबोधोदयात् विकारादिपदोत्तरस्वार्थस्य द्वित्वस्य स्वभिन्नप्रथमान्तरपदोपस्थाप्यमतखण्डीपददेवादिपदप्रभृतिषु सुप्यतिव्याप्तिरिति भावः। स्वेतरार्थयुतेत्यादि। तथा च यादृशानुपूर्वीप्रकारकज्ञानत्वं स्वाश्रयार्थभिन्नार्थावच्छिन्नस्वाश्रयार्थावच्छिन्नविशेष्यकशाब्दबोधजनकतानवच्छेदकं तादृशानुपूर्वीमत्प्रत्ययत्वं तिङ्त्वमिति पर्यवसितम्। लक्ष्ये लक्षणं संगमयन्नाह—तिबाद्या इत्यादि। नजर्थं हेतुमाह—पचन्नित्यादि। ननु कृत्युद्देश्यकतावच्छेदकशाब्दबोधे तिङः स्वरूपयोग्यत्वं कथमित्याकांक्षायामाह—धात्वर्थावच्छिन्नेति। प्रायेणेत्यादिः। अथ वा शाब्दबोधे स्वार्थप्रकारकत्वमपि विशेषणम्, अतो 'यो यः शूद्रस्यान्नं पचति सोऽतिनिन्दित' इत्यादेश्चैत्रः पचति चैत्रत्वादित्यादिन्यायस्य साधुत्वेऽपि न क्षतिः। तुल्ययोगक्षेम इति। तुल्यसम्बन्धावगाहिनीत्यर्थः, न स्वेन विशिष्टेऽपरावगाहिनीति यावत्। ननु धात्वर्थावच्छिन्नस्वार्थविधेयकान्वयबुद्धावेव तिङः स्वरूपयोग्यत्वे विधेयतावच्छेदकत्वेन तद्भानं न स्यादित्यतस्तादृशबोधं प्रत्येव तिङः स्वरूपयोग्यत्वमाह—अत एवेति। प्रायशस्तद्विधेयताकान्वयबोधे तिङः स्वरूपयोग्यत्वादेवेत्यर्थः। अलक्ष्ये लक्षणागमनं स्पष्ट-

निपाताः पदार्थान्तरविशिष्टस्वार्थावच्छिन्नविषयताकबोधं प्रति असमर्था अपि न प्रत्ययाः ॥ ९६ ॥

'यो यः शूद्रस्य पचति द्विजोऽन्नं सोऽतिनिन्दित' इत्यादौ वीप्सादिसमभिव्याहाराद् यदि शूद्रान्नपक्तृद्विजत्वाद्यवच्छेदेन निन्दितत्वादेरन्वयस्तदोक्तानिरुक्तेरसम्भवापातेरत आह—

धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने ।
समर्थः स्वार्थयत्नस्य शब्दो वाऽऽख्यातमुच्यते ॥९७॥

धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थः शब्दो वाऽऽख्यातं, तदेव च तिङित्यर्थाल्लभ्यते, तिङाख्यातयोः पर्य्यायत्वात् । 'पाकश्चैत्रस्ये'त्यादौ नामार्थेनैव विशिष्टस्य स्वार्थकर्तृत्वस्याभिधायकः षष्ठ्यादिको न तु धात्वर्थेन विशिष्टस्य । 'चैत्रः पचती'त्यादौ धात्वर्थावच्छिन्नस्य यत्नस्य विधेयतया बोधकावपि नामधातू न स्वार्थस्य । 'चैत्रः पाचक'इत्यादौ तु धात्वर्थविशेषितस्य यत्नस्य न विधेयत्वं किन्तु कर्त्तुरेव, कृतां धर्मिशक्तत्वादन्यथा 'पाचको भुङ्क्ते' इत्यादिकमयोग्यं स्यात् , स्याच्च 'गुणः पाचक' इत्यादिकं योग्यमिति, प्रातिपदिकार्थयोः प्रयत्नचैत्रयोर्भेदेनान्वयस्याव्युत्पन्नतया कृदर्थकृतश्चैत्रादावन्वयायोगाच्च । 'अयं पक्तुं काल'

---

कृष्णकान्तटीका ।

यति—सुबाद्यास्त्विति । प्रत्ययत्वनिवेशव्यावृत्तिमाह—चादयस्त्विति ॥९६॥

ननु तिङां प्रायेण तादृशबोधाजनकत्वेऽपि कदाचित् तादृशबोधस्यापि जनकत्वा(जनना?) दसम्भवः, लक्षणघटकशाब्दबोधे स्वार्थप्रकारकत्वानिवेशे च वक्ष्यमाणापेक्षया गौरवमित्यभिप्रायेणावतरणिकामाह—यो य इत्यादि । विवृणोति-धात्वर्थावच्छिन्नेति । तथा च यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थावच्छिन्नस्वाश्रयार्थविधेयकान्वबोधजनकतावच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तिङ्त्वमित्यर्थः । ननु तिङ्लक्षणप्रस्तावे आख्यातलक्षणाभिधानमर्थान्तरग्रस्तमित्यत आह—तदेव चेति । इतरार्थावच्छिन्नत्वमपहाय धात्वर्थावच्छिन्नत्वनिवेशव्यावृत्तिमाह—पाकश्चैत्रस्येति । स्वार्थनिवेशव्यावृत्तिमाह-चैत्रः पचतीत्यादाविति । विधेयतानिवेशव्यावृत्तिमाह-पाचक इत्यादौ त्विति ।न विधेयत्वमिति। विधेयत्वस्य प्रकारतावच्छेदकादिव्यावृत्तत्वादिति भावः। ननु कृतामपि कृतौ शक्तिरित्यत आह-अन्यथेति। अयोग्यं स्यादिति। पाककृतौ भोजनासम्भवादिति भावः। अयोग्यस्यापि योग्यत्वापत्तिमाह-स्याच्चेति। अन्वया-

इत्यादौ तुमादिना धात्वर्थावच्छिन्नोऽनुकूलत्वादिः, 'इयं चिकीर्षे'त्यादौ च सनादिनेच्छादिरेव विधेयत्वेनानुभाव्यत इति न तेष्वतिप्रसङ्गः।

अत्रेदं तत्त्वम्—जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकम्, न तु चेष्टाया जनकत्वस्य चिकीर्षाया वा जन्यत्वस्यावच्छेदकतया सिद्धं प्रवृत्तित्वम, चैत्रो निःश्वसिती'त्यादितोऽपि निःश्वासाद्यनुकूलप्रयत्नस्य प्रतीतेः। तिङर्थकृतौ च धात्वर्थस्य 'तं करोमी'तिप्रतीतिनियामकः साध्यत्वाख्यविशेष्यताप्रभेदस्तद्विशिष्टं फलोपधायकत्वलक्षणमनुकूलत्वं वा संसर्गमर्य्यादया भासते तथैव साकाङ्क्षत्वादतो गत्यादिगोचरनिवृत्तिदशायां 'गच्छती'त्यादिको न प्रयोगः। तत्र निःश्वासवत्त्वमात्रप्रतीतावपि प्रय-

---

कृष्णकान्तीटीका।

योगाच्चेति। इदमुपलक्षणम्—चैत्रः पाचकौ इत्यपि प्रयोगापत्तेः, अभेदान्वयबोध एव समानवचनकत्वस्य तन्त्रत्वादिति भावः। यत्नत्वनिवेशव्यावृत्तिमाह—अथमित्यादि। इच्छादिरेवेति। न तु यत्न इत्यर्थः।

तिङः शक्यतावच्छेदकं विवेचयति—अत्रेदं तत्त्वमिति। ननु शरीरक्रियात्मकचेष्टां प्रति न प्रवृत्तित्वेन हेतुत्वं, जीवनयोन्यादितोऽपि चेष्टोत्पत्तेरनुभविकत्वादित्यत आह—चिकीर्षाया वा जन्यत्वस्येति। कृत्यसाध्ये प्रवृत्तिवारणाय तं प्रति चिकीर्षात्वेन हेतुतायाः सर्वसिद्धत्वादिति भावः। नञर्थे हेतुमाह—चैत्र इत्यादि। प्रयत्नस्य जीवनयोनिरूपप्रयत्नस्येत्यर्थः। तथा च प्रवृत्तेर्निःश्वासानुकूलत्वेन प्रवृत्तित्वस्य तिङः शक्यतावच्छेदकत्वे तादृशप्रयोगो न स्यादिति भावः। कृतौ चेति चकारो भिन्नक्रमे, तथा च साध्यत्वाख्यविषयताप्रभेदश्च संसर्गमर्यादया भासत इति परेणान्वयः। तथा च साध्यत्वानुकूलत्वैतदुभयसम्बन्धेन यत्ने धात्वर्थस्यान्वय इति भावः। लाघवादाह—तद्विशिष्टमिति। साध्यत्वविशिष्टमित्यर्थः। स्वरूपयोग्यत्वस्याव्यावर्तकत्वादाह-फलोपधायकत्वलक्षणमिति। कथमित्याकाङ्क्षायामाह—तथैवेति। अतः—फलोपधायकत्वनिवेशात्, अन्यथा यत्नत्वेन निवृत्तेर्गमनस्वरूपयोग्यतया तत्र तादृशप्रयोगो दुर्वार एवेति भावः। ननु प्रवृत्तित्वमेव तिङः शक्यतावच्छेदकं, धात्वर्थस्य स्वरूपयोग्यत्वमेव सम्बन्धः, निवृत्तेर्गमनस्वरूपयोग्यत्वविरहादेव न तत्र तादृशप्रयोगः। इदमुपलक्षणम्—साध्यत्वानिवेशे च नान्तरीयकफलाय पाकस्थले 'फलाय पचती'ति प्रयोगापत्तेः विषयतामात्रनिवेशे पाकं करोतीत्यत्र भोजनं करोतीति प्रयोगापत्तेः, पाककृतेरपि भोजनविषयत्वादित्यपि बोध्यम्। निःश्वसितीत्यादौ निःश्वासाश्रयत्वमेव भासते न

यत्वमेव तिङः शक्यं न तु प्रवृत्तित्वम्, 'पचती'त्यतः पाककृतिमानित्येव प्रतीतेः, न हि प्रवृत्तित्वमेव कृतित्वम्, 'पाके निवृत्तोऽस्मी'त्यस्येव 'पाके प्रवृत्तोऽस्मी'त्यस्याप्यनुभवस्य 'पाकं करोमी'त्यतो विषयवैलक्षण्यस्य सर्वसिद्धत्वात्, नित्यकृतौ रागप्रयोज्यस्य प्रवृत्तित्वस्य बाधा'दीश्वरः करोती'त्यादिवाक्यस्यायोग्यतापाताच्च । निबिडनिखातस्थस्तु पुरुषः समुत्थानगोचरप्रयत्नवानपि न तदुपधायकप्रयत्नवान् अतस्तत्र 'अयमुत्तिष्ठती'त्यादिको न प्रयोगः । न चैवमीश्वरः पचतीत्यपि स्यात्, तस्यापि पाकानुकूलप्रयत्नवत्त्वादिति वाच्यम् । तिङर्थकृतेरवच्छेदकत्वेनैव संसर्गेण नामार्थेऽन्वयस्य व्युत्पन्नत्वा'दङ्गुली पचती'त्यादिप्रयोगस्येष्टत्वादन्त्यावयविनिष्ठावच्छेदकत्वस्यैव तादृशतिङर्थकृतेः संसर्गत्वेऽपि क्षत्यभावाच्च । नित्यप्रय-

कृष्णकान्तीटीका ।

तु तदनुकूला कृतिरिति यदि ब्रूयात्तदाप्याह--तत्रेति । शक्यं-शक्यतावच्छेदकम् । इत्येवेति । न तु पाकप्रवृत्तिमानित्यर्थः, तथा च शाब्दबोधे कृतित्वेन मानस्यानुभवसिद्धतया यत्नत्वमेव, शक्यतावच्छेदकमिति भावः । शंकते--न हीति । सर्वसिद्धत्वादिति । यथा पाके निवृत्तोऽस्मीत्यनुभवस्य पाकं करोमीत्यतो वैलक्षण्यं तथा पाके प्रवृत्तोऽस्मीत्यनुभवस्य सर्वसिद्धत्वादित्यर्थः । कृतित्वस्य प्रवृत्तिरूपत्वे साधकाभावमुक्त्वा बाधकमप्याह--नित्यकृताविति । रागप्रयोज्यस्येति । तथा चेश्वरकृतेर्नित्यतया इच्छाप्रयोज्यत्वासम्भवात् तन्नियतप्रवृत्तित्वस्य तत्र बाधितत्वादिति भावः। ननु गमनादौ यत्नत्वेन न हेतुत्वमपि तु प्रवृत्तित्वेन तस्यातिप्रसक्तत्वात्, तथा चात इत्यादिग्रन्थोक्ता फलोपधायकत्वनिवेशव्यावृत्तिरसङ्गता निवृत्तेः स्वरूपयोग्यत्वाभावात् अतः स्थलान्तरे तद्व्यावृत्तिमाह निबिडेत्यादि । तादृशप्रयत्नस्यापि प्रवृत्तित्वेन नोत्थानस्वरूपयोग्यत्वादिति (योग्यतेति(१) सम्प्रदायविदः । नव्यास्तु अत इत्यादिग्रन्थो न तद्व्यावृत्तिदानपरः किन्तु साध्यत्वनिवेशस्य,(१) निवृत्तेस्तादृशविषयत्वे मानाभावात्, अत एव 'तं करोमीति प्रतीतिनियामक' इत्युक्तम्, अतोऽत्र उपधायकत्वनिवेशव्यावृत्तिरभिहिता इति प्राहुः। शंकते—न चैवमिति । एवं-नित्यकृतिसाधारणप्रयत्नत्वस्य तिङः शक्यतावच्छेदकत्वे, इदं च नित्यकृतेरपि साध्यत्वाख्यविषयताभ्युपेत्योक्तम् । व्युत्पन्नत्वादिति । तथा च शरीरस्यैव तदवच्छेदकत्वात् ईश्वरकृतेरवच्छेदकासत्त्वात् न तथा प्रयोग इति भावः । ननु चैत्रः पचतीत्यादिवत् अङ्गुली पचतीति प्रयोगः स्यादिति तत्रेष्टापत्तिमाह—अङ्गुलीति । नन्वेवमनुभवविरोध इत्यत

(१) व्यावृत्ति दानपर इति सम्बन्धः ।

त्तव्यावृत्तस्यैवानुकूलत्वविशेषस्य तिङर्थकृतौ धात्वर्थस्य संसर्गत्वमित्यप्याहुः ।

'ईश्वरो जानाती'त्यादौ 'रथो गच्छती'त्यादौ च ज्ञानादिमत्त्वमात्रप्रतीतेः समवायित्वे 'चैत्रो जानाती'त्यादाववच्छेदकत्वे 'बुद्धिरवगाहते' 'घटो भासते' इत्यादौ दैशिकाश्रयत्वे, 'नश्यती'त्यादौ च प्रतियोगित्वे तिङो निरूढलक्षणा । कृतित्ववदाश्रयतात्वादेरखण्डत्वे तदवाच्छिन्नेऽपि तिङः शक्तिरेव । हस्तादिकस्त्ववयवः प्रयत्नस्यैवावच्छेदको न तु ज्ञानेच्छादेरपि प्रमाणाभावादतः 'करो जानाती'त्यादिको न प्रयोगः, प्रागुक्तैव वा रीतिरत्रापि । 'पयः पतति, स्यन्दते' इत्यादावपि पतनादेः समवायित्वमेव तिङानुभाव्यते न तु तदनुकूलगुरुत्वद्रवत्वादि, येन कृतितुल्य-

---

कृष्णकान्तीटीका ।

आह—अन्त्यावयवीति । तथा चाङ्गुल्यादेरसमवायिद्रव्यत्वरूपान्त्यावयवित्वविरहात् नातिप्रसङ्ग इति भावः । आहुरित्यस्वरससूचनाय । स च चैत्रः पचतीति प्रयोगानुरोधेनावच्छेदकतायाः कृतिसम्बन्धत्वमावश्यकमिति । न च चैत्रादिपदं चैत्रशरीरावच्छिन्नत्वपरमिति वाच्यम् । तथासति आत्मा पचतीति प्रयोगापत्तेः । इष्टापत्तावनुभवविरोधादित्यलमनुकूलत्वविशेषस्य संसर्गत्वस्वीकारेणेति । ननु कृतेस्तिङ्शक्यत्वे ईश्वरो जानातीति प्रयोगो न स्यात्, ज्ञानानुकूलकृतेरप्रसिद्धेरित्यत आह—ईश्वरो जानातीत्यादि । चैत्रो जानातीत्यादौ अवच्छेदकत्वस्यैव तिङर्थत्वात् समवायित्वस्य तिङर्थस्थलत्वासम्भवादीश्वरेति । निरूढेति । अनादितात्पर्यमूलकलक्षणेत्यर्थः । प्राचीनमतानुसारेणाह—कृतित्ववदिति । ननु हस्तादेरपि अवच्छेदकज्ञानाश्रयत्वात् चैत्रो जानातीतिवत् करो जानातीति प्रयोगः स्यादित्यत आह—हस्तादिकस्त्विति । ननु खण्डशरीरनाशोत्तरक्षणे जानातीति प्रयोगस्येष्टत्वेऽपि ईश्वरे जन्यज्ञानवारणाय जन्यज्ञानं प्रति शरीरस्य हेतुताया आवश्यकत्वम् इत्यत आह—प्रागुक्तैव वेति । तद्व्यावृत्तमवच्छेदकत्वमेव संसर्ग इति भावः । ननु पचतीत्यादौ कृतेरिव पचतीत्यादौ गुरुत्वे कथं न शक्तिः, तुल्यशरीरत्वात् अनुकूलत्वविशेषाच्च इत्यत आह—पयः पततीति । ननु यदि पतप्रभृतिसहचारतितिङः समवायित्वमर्थः, तदा पटानां शतं पचतीति प्रयोगो न स्यात्, संख्यायाः पतनत्वसमवायित्वविरहादित्यत आह—पटानामित्यादि । न त्वविरिति । तथा च शतशब्दस्य यदि गुणिवाचकत्वं तदा गुणवाचकत्वं न स्यात्, इत्यत आह—पटानां शतं संख्येति ।

शरीरेषु तेष्वपि तिङः शक्तिरापद्येत । 'पटानां शतं पतती'त्यादौ च शतपदार्थस्यैकदेश एव शतत्वसंख्यायां षष्ठ्यर्थपर्याप्तेरन्वयात संख्यायाः पतनादिसमवायित्वविरहेऽपि न क्षतिः, 'पटानां शतं संख्ये' त्याद्यनुरोधेनैव शतादेर्गुणवाचित्वसम्भवात् ।

ननु कृत्यादिकं नाख्यातस्यार्थः किन्तु कालः संख्या च, तयोः प्रकारान्तरालभ्यत्वात्, 'चैत्रः पचति, रथो गच्छती'त्यादौ धात्वर्थस्यैव पाकगत्यादेः कृतिमत्त्वस्वाश्रयत्वादिसम्बन्धेन चैत्रादौ प्रकारत्वात् । 'मैत्रः पच्यते' इत्यादितो मैत्रादेः कर्तृत्वादिना, 'तण्डुलः पचती'त्यादौ तण्डुलादेः कर्मत्वादिना संसर्गेण पाकादावनन्वयेन धात्वर्थे एव धर्मिणि नामार्थस्य भेदेनान्वयोऽव्युत्पन्नो न तु नामार्थेऽपि धात्वर्थस्य । न चैवं 'ज्ञानं चैत्र' इत्यादितोऽपि बोधरूपस्य धात्वर्थस्याश्रयत्वसम्बन्धेन चैत्रे धर्मिण्यन्वयप्रसङ्गः, तत्र ज्ञानादिपदस्य बुद्ध्यर्थकनामतया तदर्थस्य नामान्तरार्थे भेदेनान्वयस्याव्युत्पन्नत्वादेव तदसम्भवात् इति प्राभाकराः ।

तदसत्, धात्वर्थान्वयिस्वार्थकर्तृतायामेव लडादेः स्वोपस्थाप्यवर्त्तमानत्वाद्यनुभावकत्वव्युत्पत्तेः कृत्यादेस्तिङर्थत्वं विना तदनुपपत्तेः, अन्यथाऽतिप्रसङ्गात् । न च प्रकृत्यर्थ एव तिङां स्वार्थवर्त्तमानत्वाद्यनुभावक-

---

कृष्णकान्तीटीका ।

प्राभाकरमतमुपन्यस्य निरस्यति—नन्वित्यादिना । तयोः कालसंख्योरेवेति सावधारणम् । प्रकारान्तरालभ्यत्वादिति । विना शक्त्या शाब्दविषयत्वासम्भवात । नन्वेवं कृत्यादिकं कथं भासते इत्याकाङ्क्षायामाह—चैत्रः पचतीति । प्रकारत्वादिति । तथा च संसर्गतयैव कृत्यादेर्भानसम्भवादिति भावः । ननु कर्तृत्वादेराख्यातार्थत्वाभावे मैत्रकर्तृकपाकस्थले मैत्रः पच्यते इति प्रयोगापत्तिः, नामार्थधात्वर्थयोर्भेदान्वयस्याव्युत्पन्नत्वेन तद्वारणे चैत्रः पचतीत्यादावपि शाब्दबोधानुपपत्तिरित्यत आह—मैत्र इत्यादि । न तु नामार्थेऽपि धात्वर्थस्येति । तथा च चैत्रः पचतीत्यादौ न शाब्दबोधानुपपत्तिरिति भावः । शंकते—न चैवमिति । एवं—नामार्थधर्मिकताहशबोधस्याव्युत्पन्नत्वाभावे । समाधत्ते—तत्र ज्ञानादिपदस्येति । तदसम्भवात्–ताहशबोधासम्भवात ।

तन्मतं दूषयति—तदसदिति । तदनुपपत्तेः—स्वोपस्थाप्यवर्त्तमानत्वाद्यनुपपत्तेः । अतिप्रसंगादिति । पाककृतेरतीतत्वस्थलेऽपि पचतीति प्रयोगप्रसङ्गादित्यर्थः ।

त्वनियमः, पाकं निष्पाद्य क्रियान्तरव्यासक्तेऽपि पुरुषे 'पचतीति' प्रयोगापत्तेः, तदानीमपि पाकस्यानुवर्त्तमानत्वात् । तिबाद्यन्तधात्वर्थस्य पाकादेर्वर्त्तमानकृत्यादिसम्बन्धेनैव प्रथमान्तस्य नाम्नोऽर्थे साकाङ्क्षत्वात् नैवमिति चेत्, किं कालस्यापि तिङर्थत्वप्रत्याशया ? संसर्गविधयैव तस्य लब्धत्वात्, 'पचती'त्यादितो वर्त्तमानत्वादिप्रकारकप्रतीतेरानुभाविकत्वाच्च । किञ्च धात्वर्थस्यैव कृत्यादिसम्बन्धेन चैत्रादावन्वये पचत्यपि चैत्रे 'नायं पचती'ति प्रयोगप्रसङ्गः, संयोगादिसम्बन्धेन पाकाद्यभावस्य तत्र सत्त्वात्, कर्तृत्वादेर्वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नपाकाद्यभावस्यालीकत्वेन प्रत्येतुमशक्यत्वात् ।

एतेन—मण्डनमते फलस्य धात्वर्थत्वात् तदनुकूलक्रियैवाऽऽख्यातेन चैत्रादावनुभाव्यत इति कृतेस्तिङर्थत्वाभावादुक्तलक्षणमसम्भवि—इत्यपि प्रत्युक्तम् । फलस्य धात्वर्थत्वे संयोगो गुण इतिवत्, गतिर्गुणोऽनेकाश्रित इत्यादिप्रयोगापत्तेश्च, न हि भावकृतामपि क्रियार्थः, प्रमाणाभावात् । ननु यदि स्वार्थकर्तृत्व एव लडादिना वर्त्तमानत्वमनुभाव्यत इति नियमः, कथं तर्हि केवलात् 'पच्यत' इत्यादितः पाकादौ

---

कृष्णकान्तीटीका ।

पुनः शंकते—न चेति । ननु क्रियान्तरारम्भकाले पाक एव नास्ति, कुतस्तस्य वर्त्तमानत्वमित्यत आह—तदानीमिति । वर्तमात्वं कृत्यादिरूपसंसर्गांशे भासत इत्युक्तौ तु न कोपि दोष इत्याशङ्कते—तिबाद्यन्त इति । तस्य लब्धत्वादिति । पदोपस्थाप्यस्य संसर्गतया भानानङ्गीकारात्, अङ्गीकारेऽपि तस्य प्रकारान्तरालभ्यत्वाभावेन शक्तिकल्पनाया असम्भवादिति भावः । नन्विष्टापत्तिरित्यत आह—पचतीत्यादि । अनुभवे विप्रतिपन्नं प्रत्याह—किञ्चेति । पचत्यपि-पाककृतिमत्यपि । कुत इत्याकाङ्क्षायामाह—संयोगादीति । ननु कृतिसम्बन्धावच्छिन्नाभाव एव तद्विषय इत्यत आह—कर्तृत्वादेरिति ।

मण्डनमिश्रमतं दूषयति—एतेनेति । पचतीत्यादौ कृतिप्रकारकबोधस्यानुभविकत्वेनेत्यर्थः । केचित्तु वक्ष्यमाणदोषेणेति तदर्थमाहुः । तन्मदम्, तथासति चकारासङ्गतेः । ननु तत्र गमधात्वर्थः संयोगः, क्तिप्रत्ययार्थः क्रिया इति नातिप्रसङ्ग इत्यत आह न हीति । प्रमाणाभावादिति । भावप्रत्ययस्य स्वरू-

वर्त्तमानत्वधीरिति चेत्। क एवमाह, तत्राप्येकपदोपात्तत्वेन कर्माख्यातोपस्थापिते कर्तृत्व एव वर्त्तमानत्वस्यान्वयात्। इयान् परं विशेषो—यत् कर्तृविहितेन लटा धात्वर्थस्य विशेष्यत्वेन, कर्मविहितेन तु तस्य विशेषणत्वेन स्वार्थकर्तृत्वमनुभाव्यते, तथैव साकाङ्क्षत्वात्। एतेन—'चैत्रेण पक्वमि'त्यादाविव 'चैत्रेण पच्यते' इत्यत्रापि तृतीययैव कर्तृत्वमनुभाव्यते न त्वाख्यातेन, तिङर्थकृतेर्धात्वर्थविशेष्यत्वनियमात्—इति दीधितिकृन्मतमप्यनादेयम्, एकपदोपात्तत्वेन स्वार्थ एव कर्तृत्वे शतृशानजादेरिव लडादेर्वर्त्तमानत्वबोधकतया सुबर्थकृतौ तदन्वयासम्भवात्, सुबर्थे तिङर्थान्वयस्यादृष्टचरत्वाच्चेति।

शाब्दिकास्तु—'चैत्रः पचती'त्यादितः पाकादिकृतिमत्तयैव तत्कर्त्रभेदेनापि चैत्रादेरन्वयस्यानुभविकत्वात् कृतिरिव कर्त्तापि तिङर्थः। कृतित्वमपेक्ष्य कर्तृत्वस्य गुरुत्वान्न तदाख्यातस्य शक्यतावच्छेदकमिति तु रिक्तं वचः, लक्ष्यतावच्छेदके लक्षणाया इव शक्यतावच्छेदकेऽपि शक्तेरसत्त्वमते तद्गुरुत्वस्याकिञ्चित्करत्वात्, एकैकात्मनिष्ठानामनन्तकृतीनां शक्यत्वमपेक्ष्य निखिलात्मनामेव कर्तृत्वेन शक्यतायां विपरीतलाघवाच्च।

कृष्णकान्तीटीका।

पार्थकतायाः सर्वसिद्धत्वादिति भावः। क एवमाह इति। अपि तु न कोऽपीति भावः। तदा तत्र कुत्र वर्तमानत्वधीरित्यत आह—तत्रेत्यादि। ननु यदि कर्माख्यातस्यापि कर्तृत्वमर्थस्तदा कर्तृविहितकर्मविहिताऽऽख्यातयोः समानार्थकत्वेन शाब्दवैलक्षण्यं न स्यादित्यत आह—इयान् परमिति। विशेष्यत्वेनेति। स्वार्थकर्तृत्वमनुभाव्यत इति परेणान्वयः। कर्मविहितेनेति, न चेति पूर्वेणान्वयः(१)। तस्य—धात्वर्थस्य। कथमित्याकाङ्क्षायामाह—तथैवेति। दीधितिकृन्मतमुपन्यस्य निरस्यति—चैत्रेणेति। ननु सुबर्थकृतौ तदन्वये किं बाधकमित्यत आह—सुबर्थे तिङर्थान्वयस्येति।

कृतिमत्तयैवेति, न्यायमतानुसारेण। एवमग्रेपि। कर्त्रभेदेन—कर्तृविशेषेण। तिङर्थः—तिङ्शक्यः। शंकते—कृतित्वमिति। इति केचित्। वस्तुतः शाब्दिकमते उभयत्रैव शक्तिरिति यथाश्रुतमेव सम्यगिति। तत्—कर्तृत्वम्। शक्यतावच्छेदकमिति।

(१) कर्मविहितेन लटा धात्वर्थस्य विशेष्यत्वे न नच स्वार्थकर्तृत्वमनुभाव्यत इति पूर्वेणान्वय इति कथं चिदयं टीकाग्रन्थो योजनीयः।

न च कर्त्रनुभवजनकतया सङ्केतितत्वरूपं कर्तृशक्तत्वमेव तिङामप्रसिद्धम्, कर्त्रन्वयानुभवजनकतासत्त्वे तत्प्रकारकेश्वरसङ्केतस्य तत्रावश्यम्भावादीश्वरेच्छायाः सदर्थावगाहित्वनियमात्, अन्यथा कर्त्रनुभवस्वरूपायोग्यत्वादेव तिङां कर्त्तर्य्यशक्तत्वसम्भवे कृत्यपेक्षया कर्त्तरि गुरुत्वोपन्यासस्योन्मत्तप्रलपितत्वापत्तेः। अथैवं पटपदस्यापि लक्षणादिना घटाद्यन्वयानुभावकत्वात् तत्प्रकारकनित्यसङ्केतवत्त्वेन तदपि घटशक्तं स्यात्। न स्यात् 'पटपदं घटे न शक्तमि'त्यादिव्यवहारस्य प्रामाणिकत्वेन घटादिपदनिष्ठस्यैव घटानुभावकतया नित्यसङ्केतितत्वस्य घटशक्तित्वात्, इह त्वाख्यातं न कर्तृशक्तमित्येवं व्यवहारस्यासत्त्वात्, प्रत्युत पाणिन्यादिप्रामाणिकैस्तिङः कर्तृशक्तत्वेन व्यवहृतत्वात्। एतेन गुणवचनस्य नीलादेर्गुण्यशक्तत्वमपि व्याख्यातम्। यत्तु—'यस्य नाम्नोऽर्थे विशेषणत्वेन तिङा स्वार्थः कर्त्राऽनुभाव्यते, तस्योक्तार्थत्वात् प्रथमान्तत्वमपेक्षितं, यस्य च नाम्नोऽर्थे विशेष्यविधया तस्यानुक्तार्थत्वात् तृतीयान्तत्वमित्युक्तानुक्तस्थलीयसुपो व्यवस्थार्थमवश्यं कर्त्तुराख्यातवाच्यता—इति। तन्न, यस्य नाम्नोऽर्थे तिङा स्वार्थः क्वतिरुक्तदिशाऽनुभाव्यते तत्रैव प्रथमातृतीययोरपेक्षेत्येवमभिहिताधिकारयिसुपां व्यवस्थासम्भवादिति प्राहुरित्यास्तां विस्तरः ९७

तिङ्सु लटं[१] लक्षयति, विभजते च—

**स्मयोगाभावतः स्वार्थातीतत्वानवबोधिका।**

---

कृष्णकान्तटीका।

तथा च कर्तृत्वं लक्ष्यतावच्छेदकमिति भावः। अकिञ्चित्करत्वादिति। अन्यथा गुरुधर्मस्य लक्ष्यतानवच्छेदकत्वप्रसङ्गादिति भावः। शङ्कते—न चेति। शङ्कां निरस्यति—कर्त्रन्वयानुभवेति। अन्यथा—तिङां कर्त्रनुभवस्वरूपायोग्यत्वे। शंकते—अथेति। तदपि—पटपदमपि। समाधत्ते—न स्यादिति। एतेन—गुणत्वापेक्षया गुणित्वस्य शक्यतावच्छेदकत्वे लाघवेनेत्यर्थः, नीलादेः पदस्येति शेषः। व्याख्यातमिति। तथा च नीलादिपदस्य नीलगुणविशिष्टेऽपि शक्तिरिति भावः। कर्त्तुः शक्यत्वे युक्त्यन्तरमुपन्यस्यतां मतमुत्थाप्य निराकरोति—यत्त्विति। दूषयति तन्नेति। उक्तदिशा—विशेषणतया विशेष्यतया वा॥ ९७॥

लड्विभक्तेर्लक्षणविभागयोः प्रतिपादिकां कारिकामवतारयति—तिङ्सु इति।

**लडियं पदभेदेन द्विविधान्या अपीदृशाः ॥ १८ ॥**

याद्दशतिङः स्मशब्दोपसन्धानाभावप्रयुक्तः स्वार्थातीतत्वबोधकत्वाभावस्तादृशी तिङ् लङुच्यते । इयञ्च परस्मैपदात्मनेपदभेदेन द्विविधा । अन्या लोडाद्या अपि लिङः ईदृशो द्विविधा इत्यवान्तरभेदः संक्षेपार्थमेकग्रन्थेनोक्तः । 'जानाति, जानीते, पचति, पचते' इत्यादौ तिबादीनामष्टादशानामपि स्मशब्दोपसन्धानाभावप्रयुक्तो ज्ञानादिधर्मिकातीतत्वबोधस्य फलोपधायकत्वाभावः, तदुपसन्धाने 'जानाति स्मे'त्यादितस्तथानुभवात् , 'जानीयादि'त्यादौ लिङादेर्लक्षणादिना स्वोपस्थाप्यस्यातीतत्वस्यानुभावकत्वाभावो न स्मशब्दसन्दंशाभावप्रयुक्तः, सत्यपि तत्सान्निध्ये 'जानीयात् स्मे'त्यादितस्तादृशबोधानुत्पत्तेः । द्विरुक्तधात्वनाकाङ्क्षत्वेन प्रकृत्यर्थे परोक्षत्वनिराकाङ्क्षत्वेन वा विशेषणीया, 'नातो बुभुजे, बुभुजाते' इत्यादिस्थलीयलिट्यतिप्रसङ्गः । आख्यातसामान्यस्य च वर्तमानत्वमर्थः, तद्धि 'पचती'त्यादौ धात्वर्थे तदनुकूलस्वार्थकृत्यादौ वा लडादिनाऽनुभाव्यते ।

---

कृष्णकान्तीटीका ।

विवृणोति—यादृशतिङ इत्यादि । तथा च यादृशानुपूर्व्यवच्छिन्ननिष्ठस्वाश्रयार्थधर्मिकातीतत्वप्रकारकान्वयबोधजनकत्वानधिकरणत्वं स्मशब्दसमभिव्याहाराभावप्रयोज्यं तादृशानुपूर्वीमत्तिङ्त्वं लट्त्वमिति पर्यवसितम् । अनुभवसिद्धश्चायं स्वरूपसम्बन्धरूपप्रयोज्यप्रयोजकभावः । परप्रतीकं व्याकुरुते—इयञ्चे'ति । अन्या अपि ईदृश इत्यस्य व्याख्यामाह—लोडाद्या अपीति । लक्ष्ये लक्षणं सङ्गमयन् अलक्ष्ये तद्वारयति—जानातीत्यादि । अतीतत्वबोधे स्मशब्दस्य द्योतकतया स्वरूपयोग्यतानिवेशेऽसम्भवः स्यात् इति फलोपधायकत्वाभाव एव लक्षणे निविष्ट इत्यभिप्रायेणोक्तं फलोपधायकत्वाभाव इति । कथमित्याकाङ्क्षायां सत्यपीति । तत्सान्निध्ये-स्मशब्दसमभिव्याहारे । तादृशबोधानुत्पत्तेरिति । प्रयोज्याभावस्यैव प्रयोजकाभावप्रयुक्तत्वनियमादिति भावः । ननु परोक्षाया 'पु आते' इतिवचनद्वयस्य वर्तमानायास्तादृशवचनद्वयादवैलक्षण्येन तत्रातिव्याप्तिरित्यत आह—द्विरुक्तेति । जुहोति इत्यादौ तिङः संग्रहाय प्रकृत्यर्थ इति। धात्वर्थनिष्ठं यत् परोक्षत्वं तन्निराकाङ्क्षत्वेनेत्यर्थः। विशेषणीयेति । तिङ् इति शेषः । वैयाकरणमतं च्छलतो दूषयन्नाहाख्यातसामान्यस्य चेति । तद्धि-वर्तमानत्वं हीत्यर्थः । धात्वर्थं इति कृत्यबोधस्थलाभिप्रायेण । कृतिबोधस्थलाभिप्रायेणाप्याह—स्वार्थकृत्यादावीति । ध्वंसादावीति । तदनु-

'अपचत्, पक्ष्यती'त्यादौ तु लङ्लृडादिभिः स्वार्थयोरेव ध्वंसप्रागभाव-प्रतियोगित्वयोरेकदेशे ध्वंसादौ, अन्यथा वर्त्तमानध्वंसाद्यन्तर्भावेन तासु शक्त्यन्तरकल्पने महागौरवापत्तेः। 'सम्प्रति पचती'त्यादौ सम्प्रति-लटोः सम्भेदे नान्यतरवैयर्थ्यम्। इदन्तु बोध्यम्—वर्त्तमानत्वमत्र न कालवृत्तित्वं, कृतपाकेऽपि 'अयं पचती'ति प्रयोगापत्तेः, परन्तु तत्तत्कालवृत्तित्वमनन्तमेव, गौरवस्य प्रामाणिकत्वादित्थञ्च प्रागुक्तस्य पश्चादुच्चार्यस्य च पचतीत्यस्य भूतभावितत्तत्कालवृत्तित्वेन पाकादेरनुभावकत्वानुरोधाल्लटस्तत्र शक्तेरा-वश्यकत्वादिदानीमुच्चरितस्यापि 'पचती'त्यस्य भूतभावितत्तत्कालवृत्तित्वेन पाकाद्यनुभावकत्वापत्तिरतस्तत्तदाख्यातजन्यायां तत्तत्कालवृत्तित्वेन क्रिया-द्यन्वयबुद्धौ तत्तदाख्यातस्य तत्तत्कालोच्चरितत्वं, तत्तदाख्यातधर्मिकतत्त-त्कालवृत्तित्वज्ञानं वा नियामकं वाच्यम्, अत एव श्रूयमाणाख्यातव्य क्तेरेवातीतादिकालोच्चरितत्वभ्रमदशायामिदानीन्तनादपि 'पचती'ति प्रयो-गादतीतादितत्तत्कालवृत्तित्वेन पाकादेः सर्वजनसिद्धो बोधः सङ्गच्छते। न च पचत्यपि चैत्रे 'नायं पचती'ति प्रयोगः स्याद्वर्त्तमानायाः पाककृतेर-

कृष्णकान्तीटीका।

भाव्यते इति योजना। अतीतत्वस्य वर्त्तमानध्वंसप्रतियोगित्वरूपत्वात् भविष्यत्वस्य च वर्तमानप्रागभावप्रतियोगित्वरूपत्वादिति भावः। अन्यथा—केवललटो वर्तमानार्थकत्वे। ननु संप्रति पचतीत्यादौ वर्तमानत्वस्य द्विधाभानप्रसंग इत्यत आह—संप्र-तीत्यादि। एतन्मते संप्रति पचतीत्यादिवत् सम्प्रत्यपचत इत्यादिप्रयोगवारणप्रकारा-न्तरश्चिन्तनीयः। नन्वाख्यातसामान्यस्य वर्तमानवाचित्वे 'सम्प्रति वर्तमाना' इत्याद्य-भियुक्तानुशासनविरोध इत्यभिप्रायेणाह—इदन्तु बोध्यमिति। चेत् यस्य मतं दूषि तं तदुक्तानुशासनविरोधो नास्माकं क्षतिकरः। प्रयोगापत्तेरिति। तत्पाककृतेरती-तकालवृत्तित्वेन कालवृत्तित्वानपायात्। इदमुपलक्षणम्, भविष्यत्यपि तादृशप्रयोग-पत्तिर्द्रष्टव्या। प्रयोगत्वस्याननुगततया प्रयोगाधिकरणकालवृत्तित्वमपहाय पर्यवसि-तार्थमाह—तत्तदिति। तत्तत्कालोच्चरितत्वमिति, नियामकमिति परेणा-न्वयः, तथा च इदानीन्तनाख्यातानुभूतभाविकालवृत्तित्वेन पाकाद्यन्वयबोधः, तन्नियामकस्य भूतभाविकालोच्चरितत्वस्य तत्र बाधादिति भावः। कल्पान्तर-माह—तत्तत्कालवृत्तित्वज्ञानं वेति। अत एवेति। द्वितीयकल्पादरणादेव। शङ्कते—न चेति। तदसम्भवात्—तादृशप्रयोगासम्भवात्। न च तथापि घटा-

भावस्य समयान्तरावच्छेदेन चैत्रे सत्त्वादिति वाच्यम्। तत्र नञर्थ एव लडर्थवर्त्तमानत्वस्यान्वयेन वर्त्तमानकालावच्छेद्यस्य पाककृत्यभावस्य चैत्रे बाधेन तदसम्भवात्। गुरुमते 'न कलञ्जं भक्षये'दित्यादावस्मन्मतेऽपि 'अतिरात्रे षोडशिनं न गृह्णाति' इत्यादौ नञर्थेऽपि तिङर्थान्वयस्य व्युत्पन्नत्वात्। एतेन—'भाविदिने चैत्रो नापाक्षीत्, अतीतदिने चैत्रो न पक्ष्यती'त्यपि स्यात् भाविदिनादौ चैत्रेऽतीतपाककृत्यादेरभावसत्त्वात्—इत्यपि समाहितम्, तत्राप्यतीतादिकालस्य नञर्थ एवान्वयेनातीतादिकालावच्छेद्यत्वविशिष्टस्य पाककृत्यभावस्य भाव्यादिदिनावच्छेदेन चैत्रादावसत्त्वादेव तादृशाप्रयोगात्। अत एव च 'निष्पन्नान्नं न पक्ष्यती'त्यादौ निष्पन्नान्नकर्मकभाविकृतेरप्रसिद्धावपि न क्षतिः, भविष्यत्कालावच्छेदेन तादृशान्नकर्मकपाककृतेरभावस्यैव तत्र बोध्यत्वादिति युक्तमुत्पश्यामः।

क्वचिद्वर्त्तमानसामीप्यमपि लटोऽर्थः, तच्च द्विविधं—वर्त्तमानक्षणाव्यवहितोत्तरकालावच्छेद्यत्वं तादृशक्षणाव्यवहितप्राक्कालावच्छेद्यत्वञ्च, तेन चैत्रः कदा गमिष्यतीति जिज्ञासायामेष गच्छतीत्युत्तरस्य वर्त्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्र इत्यर्थः। चैत्रः कदा समागत

---

कृष्णकान्तीटीका।

द्यवच्छेदेन कृत्यभावसत्त्वात्तादृशप्रयोगापत्तिरिति वाच्यम्। देशविशेषावच्छेद्यत्वासम्भवेनापरस्यसम्भवात्। वर्तमानकालस्य तदवच्छेदकत्वे वर्तमानकाले घटाद्यवच्छेद्यतादृशकृत्यभावासत्त्वप्रसंगात्। ननु नञर्थे कृत्यतिरिक्ततिङर्थान्वयस्याव्युत्पन्नत्वात् कथमेतदित्यत आह—गुरुमत इत्यादि। तत्र कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववदिति बोधस्य सम्मतत्वादिति भावः। न्यायमते तु तत्राभावे एव विध्यर्थबोधात् स्थलान्तरमाह—अस्मन्मत इत्यादि। अत्र तादृशग्रहणाभावस्येष्टाजनकतया नञर्थे विध्यर्थान्वयासम्भवेन धात्वर्थ एव विध्यर्थान्वितनञर्थान्वयस्योपगन्तव्यत्वादिति भावः। एतेनेति। तत्तत्कालस्य नञर्थेऽन्वयेनेति तदर्थः। समाहितमिति। तत्र तदन्वयेऽपि कुतस्तादृशप्रयोगवारणमित्याकाङ्क्षायामाह—तत्रापीत्यादि। अत्र तदन्वये युक्त्यन्तरमप्याह—अत एवेति।

तच्च—वर्तमानसामीप्यञ्च। द्विविधमिति, प्रागभावस्य प्रतियोगिसामग्रीनाश्यत्वमतमवलम्ब्य, अन्यथा वर्तमानक्षणाव्यवहितत्वमेव तत्सामीप्यमेकविधमेव बोध्यम्, अव्यवहितत्वं च स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति प्रागभावध्वं-

इति जिज्ञासायामेष आगच्छतीत्युत्तरस्य वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यागमनवान् इति न प्रश्नोत्तरभावासङ्गतिः ॥ ९८ ॥

लडादेः पदभेदेनोद्दिष्टं द्वैविध्यं निर्वक्ति—

**धातोरर्थस्य कर्तृत्वबोधकं क्यजूयङन्तयोः ।**
**परस्मैपदमाख्यातमात्मनेपदमेव च ॥ ९९ ॥**

क्यजन्तस्य धातोरर्थस्य स्वार्थे कर्तृत्वेऽन्वयबोधनक्षमे यादृशमाख्यातं तत्परस्मैपदम् । 'पुत्रीयती'त्यादावेव पुत्रादीच्छाकर्तृत्वमाश्रयत्वलक्षणं बोध्यते, न तु 'पुत्रीयते' इत्यादौ । इच्छार्थस्य क्यचो निवेशात् 'चित्रीयते' इत्यादौ आत्मनेपदे नातिप्रसङ्गः सम्पद्यते । घातिता; 'घातितारावि'त्यादावात्मनेपदानां निरुक्ताख्यातत्वेऽपि तदन्यत्वेन विशेषणान्न प्रसङ्गः ।

यङन्तस्य धातोरर्थस्य स्वार्थकर्तृत्वबोधनक्षममाख्यातमात्मनेपदम् । 'चैत्रः पापच्यते' इत्यादिकमेव पौनःपुन्यविशिष्टस्य पाकादेः कर्तृत्वं बोधयति, न तु 'पापच्यती'त्यादिकम् । 'बोभवीती'त्यादौ तु यङो लुकि धातोर्न तदन्तत्वं श्रुतिगर्भत्वादिहान्तत्वस्य । 'पचते'त्यादौ परस्मैपदस्य वारणं

---

कृष्णकान्तीटीका ।

सान्यतरसम्बन्धेन स्वाधिकरणत्वं तादृशाधिकरणत्वं वेति ॥ ९८ ॥

परस्मैपदादिलक्षणप्रतिपादककारिकावतारणिकामाह—लडादेरित्यादि । विवृणोति क्यजन्तस्येति । तथाच यादृशानुपूर्वीप्रकारकज्ञानं स्वाश्रयार्थकर्तृत्वधर्मिकक्यजन्तधात्वर्थप्रकारकान्वयबोधजनकं तादृशानुपूर्वीमदाख्यातत्वम् । लक्ष्ये लक्षणं संगमयति—पुत्रीयतीत्यादावेवेति । एवकारेणात्मनेपदस्य स्वरूपयोग्यत्वशंका निराकृता । यथाश्रुतकर्तृत्वशब्दात् कृतिमत्त्वप्रत्यायनात् निरुक्तधात्वर्थस्य तादृशकर्तृत्वमसम्भवीति तत्तात्पर्यार्थमाह—आश्रयत्वलक्षणमिति । एवकारव्यवच्छेद्यं स्वयमेवाह—न त्विति । ननु आश्चर्यं चित्रं करोतीत्यर्थे चित्रीयधातोरुभयपदित्वात् आत्मनेपदस्यापि तादृशस्वरूपयोग्यतयातिव्याप्तिरित्यत आहेच्छार्थस्येति। तादृशस्य क्यच इच्छार्थत्वाभावात् नातिप्रसङ्ग इति भावः । ननु परस्मैपदात्मनेपदयोस्ता तारौ तारस् इत्येतेषां समानानुपूर्वीकतया तादृशात्मनेपदेष्वतिव्याप्तिरित्यत आह—बोभवीतीत्यादाविति । लुकीति शेषः । श्रुतीति । तथा च श्रूयमाणयङन्तत्वं लक्षणे निविष्टमिति भावः । ननु पञ्चमीमध्यमपुरुषबहुवचनतकारस्य ह्यस्तन्यात्मनेपदतकारसमत्वात् तत्रातिव्याप्तिरित्यत आह—पचतेति । पूर्ववदिति । तत्तद्व्यक्ति-

पूर्ववत् । अत्रोभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठं तत्रात्मनेपदम्, यत्र च कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु "स्वरितञितः कर्त्रभिप्राये क्रियाफले" (१।३।७२) इति सूत्रेण कर्तारमभिप्रैति सम्बध्नातीति व्युत्पत्त्या कर्तृसम्बन्धे क्रियाफल एवात्मनेपदस्य विधानात् । अत एव—

स्वरिञ्ञिणण्यन्तधातूनां कर्तृनिष्ठे क्रियाफले ।
आत्मनेपदमुद्दिष्टं तदनिष्ठे पदान्तरम् ॥

इत्यापिशलीयाः पठन्ति । तदनुसृत्यैव दानादिस्थले स्वगते फले 'ददे' इत्येवं परगते तु 'ददानी'त्येव वाक्यं प्रयुञ्जते वृद्धाः । 'स्वर्गकामो यजेत' इत्यादौ च सामान्यतः श्रुतमपि फलं कर्तृनिष्ठमेव 'शास्त्रदेशितं फलमनुष्ठातरी'ति मीमांसयोत्सर्गतस्तथाकल्पनादिति प्राञ्चः । चिन्तामणिकृतस्तु—यत्र क्रियाफले कर्त्तुरभिप्राय इच्छा तत्रैवात्मनेपदमिति सूत्रार्थस्तेन याजकाद्यैर्दक्षिणादिलाभेच्छयैव यागादिकरणे 'यजन्ति याजकाः, पठन्ति पाठकाः' इति परस्मैपदम् । परगतस्यापि यागादिफलस्येच्छया तत्करणे तु 'यजन्ते याजका इत्यादिकः' साधुरेव प्रयोगोऽत एव 'पितृस्वर्गकामः पुष्करिण्या यजेत' इत्यादावप्यात्मनेपदम्, 'धनकामो गणपतिम् मोक्षकामोऽर्चयेद्धरिमि'त्यादौ च परस्मैपदं सङ्गच्छत—इत्याहुः ॥ ९९ ॥

---

कृष्णकान्तीटीका ।

भेदनिवेशेनेत्यर्थः। ननूभयपदिधातूनां क्वचित् परस्मैपदं क्वचिदात्मनेपदमित्यत्र किं नियामकं स्वार्थकर्तृत्वादिबोधस्योभयत्राविशेषादिति तन्नियामकमाह—अत्रेति । ननु 'स्वरितञित' इत्यादिपाणिनिसूत्रात् तादृशार्थाप्रतीतेः कथमेतदित्यत आह—स्वरितेति । स्वोक्तार्थं प्रमाणयति—अत एवेति । तदनुसृत्यैव—उक्तार्थमनुसृत्यैव । नन्वेवं स्वर्गकामो यजेतेत्यत्र कथमात्मनेपदमित्यत आह—स्वर्गकाम इति । कर्तृनिष्ठमेवेति । कुत इत्याकाङ्क्षायामाह—शास्त्रदेशितमिति । उत्सर्गतः—बाधकं विनेत्यर्थः । तथाकल्पनात्—कर्तृनिष्ठत्वकल्पनात् । चिन्तामणिकृन्मतमाह—चिन्तामणिकृतस्त्विति । सूत्रार्थः—स्वरित इति सूत्रार्थः। परस्मैपदमिति। तत्र क्रियाफलस्य स्वर्गादेर्याजकाद्यभिप्रायाविषयत्वादिति भावः । ननु परगतेऽपि फले यत्र कर्तुरिच्छा तत्रापि आत्मनेपदं स्यादित्यत्रेष्टापत्तिमाह—परगतस्यापीति । अत एवेति । उक्तसूत्रस्य तादृशार्थकरणादेव । आत्मनेपदमिति, सङ्गच्छते इति परेणान्वयः ।

लोटं लक्षयति—

**स्ववक्त्रनुमतत्वस्य धात्वर्थेऽन्वयबोधने ।**
**अनुकूला यादृशी तिङ् सैव लोट् परिभाष्यते ॥१००॥**

[१]'करोतु, कुरुतां, कुर्वन्तु' इत्यादौ तु ताम्प्रभृतयश्चैत्राद्युक्तत्वधी-सहकृताः कृत्यादौ प्रकृत्यर्थे चैत्राद्यनुमतत्वं बोधयन्ति, न तु तिबादयः । 'अर्थापत्तिर्गुरूणामि'त्यादौ षष्ठ्यनुमतत्वं न धात्वर्थेऽनुभाव्यते किन्तु कृदर्थे, नवा स्ववक्तृत्वेन ज्ञातस्य । [२]'पत्नी पचत्वि'त्यादौ अनुज्ञैव

कृष्णकान्तीटीका ।

कर्तुरिच्छायास्तत्र सत्त्वादिति भावः । परस्मैपदमिति । कर्तुरिच्छायास्तत्रास-त्त्वादिति भावः ॥ ९९ ॥

लोड्लक्षणप्रतिपादककारिकामवतारयितुमाह—लोटं लक्षयतीति । लोड्लक्ष-णानुकूलव्यापारवान् ग्रन्थकर्तेति तदर्थः। इदञ्चावधारणार्थमुक्तं, स्ववक्त्रनुमतत्वस्ये-ति। तथा च यादृशानुपूर्वीप्रकारकज्ञानं स्वाश्रयवक्त्रनुमतत्वप्रकारकधात्वर्थविशेष्यका-न्वयबोधजनकं तादृशानुपूर्वीमदाख्यातत्वं तत्त्वमिति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयन् अलक्ष्ये तदभावं व्यञ्जयति—करोतु कुरुतामित्यादि । ननु शाब्दबोधे स्ववक्तृत्वेन चैत्रादेर्न भानम् अनुभवविरोधात्, किन्तु चैत्रत्वादिनैवेति चत्रोच्चरिततादृशवाक्यात् कथं न मैत्रत्वानुमतबोधः मैत्रेऽपि तद्वृत्तेरावश्यकत्वात्, अतस्तेन तदनुमतत्वबोधे तत्र तद्वक्तृत्वधीः सहकारिणीति वाच्यम्, न च तद्वक्तृत्वभ्रमेऽपि तदनुमतत्वबोधः स्यादिष्टत्वादित्यभिप्रायेणाह—चैत्रा-द्युक्तत्वधीसहकृता इति । धात्वर्थविशेष्यकत्वनिवेशव्यावृत्तिं छलतः प्रकाशय-ति—अर्थापत्तिरित्यादि । तदा कुत्रेत्याकांक्षायामाह किन्त्विति । कृदर्थे—स्वरूपादौ, तथा च षष्ठ्यां नातिव्याप्तिरिति भावः । वस्तुतः तादृशग्रन्थो न व्यावृत्तिपरः, तथा सति नवेत्यादिग्रन्थासंगतेः किन्त्वाशंकासमाधानपरः । न च तथापि लक्षणे आख्यातत्वनिवेशसत्त्वादुक्ताशंकैव नावतरति इति वा-च्यम् । कारिकास्थतिङ्पदस्य विभक्तिमात्रार्थपरत्वमित्यभिप्रायात् । अर्थापत्तिर्गुरू-णामस्ति इत्यत्र तिपि अतिव्याप्तिसमाधानपरत्वात् ततितिङ्व्यक्तेरपि यथाश्रुततादृ-शबोधानुकूलत्वात् । गुरुविप्रतपस्व्यादाविव यदि धात्वर्थेऽपि षष्ठ्यन्वयः स्वीक्रियते तदाप्याह—न चेति । ज्ञातस्येति । तथा च तद्दोषवारणायैव स्ववक्तृत्वेन ज्ञातं यत् तदनुमतत्वप्रकारकत्वं लक्षणघटकशाब्दबोधे निवेशनीयमिति । एतत्सर्वमापा-ततः, विवक्षितविवेके न कोऽपि दोष इति ध्येयम् । निष्कृष्टे तु यत्र चैत्राद्यनुमतगमना-दौ गमादिधातोर्लक्षणा, तत्र तिबादावतिव्याप्तिवारणाय धात्वर्थविशेष्यकत्वनिवेशः ।

लोटोऽर्थः, सा च कर्त्तुरिष्टत्वे सति वक्त्रनुमतत्वं, तेन चैत्रवक्तृकताद्दशवाक्याच्चैत्रानुमतत्वेष्टस्य पाकस्य कर्त्री पत्नीत्येवं बोधः । [३]'शूलं विश, विषं भुङ्क्ष्वे'त्यादिराजवाक्यस्थले तु नानुज्ञा प्रत्ययार्थः, शूलप्रवेशादौ कर्त्तुरिष्टत्वाभावात् किन्त्वाज्ञैव, सा च वक्त्रनुमतत्वे सति कर्त्तुरनिष्टहेतुत्वम्, तथा च राजानुमतत्वानिष्टहेतुशूलप्रवेशकर्तृताबांस्त्वमित्याकारस्तत्र बोधः । [४]'पर्वतमप्युत्पाटयानि, समुद्रमपि शोषयाणी'त्यादौ लोटः समर्थना अर्थः, सा च पराशक्यधर्मिकस्वशक्यत्वाध्यवसायः, तथा च स्वेतराशक्यं यत् पर्वतोत्पाटनं तद्धर्मिकस्वशक्यत्वाध्यवसायवानहम् इत्येव तत्रान्वयबोधः । स्वीयैकार्थविशिष्टप्रकृत्यर्थान्वयिस्वार्थान्तरबोधकत्वञ्च प्रत्ययस्य नाव्युत्पन्नमिति वक्ष्यते । अस्तु वा निपातस्यैवापेर्धात्वर्थान्वितं पराशक्यत्वमर्थः, तिङस्तु स्वशक्यताध्यवसायमात्रम् । अध्यवसायोऽवधारणम् । [५] क्वचिद्वक्त्राशंसनमपि लोडर्थस्तेन चैत्रोक्ता'ज्जीवतु भवानि'ति वाक्यात् चैत्राशंसाविषयवर्त्तमानजीवनवांस्त्वमित्येवं तत्र बोधः । 'घटो नीलो भवतु, भवान् सुखी भवतु' इत्यादौ तु धातुनैव ल-

---

कृष्णकान्तीटीका ।

स्ववक्तृत्वेन ज्ञातत्वन्तु न निविष्टं प्रयोजनाभावात्, अपि तु वक्तृत्वोपलक्षितधर्मावच्छिन्नानुमतत्वमेव निविष्टमिति युक्तमुत्पश्यामः । शाब्दबोधप्रकारमाह—तेनेत्यादि । अनुज्ञाया एतद्रूपत्वेनेत्यर्थः । कत्रेष्टस्येति । अत्र स्वपदार्थः पत्नी । अनुज्ञापदार्थघटकसत्यन्तव्यावृत्तिं छलतो दर्शयितुं आज्ञास्थलीयशाब्दबोधप्रकारमाह—शूलमित्यादि । कर्तुरिष्टत्वाभावादिति । तथा चानुज्ञात्वशरीरे सत्यन्तानिवेशे आज्ञाया अपि अनुज्ञात्वापत्तिरिति भावः । तदाऽत्र कः प्रत्ययार्थ इत्याकाङ्क्षायामाह—किन्त्विति । सा च—आज्ञा च । शाब्दबोधप्रकारमाह—तथा चेति । समर्थनास्थलमाह—पर्वतमित्यादि । साच—समर्थना च, स्वशक्यत्वाध्यवसायः—स्वशक्यत्वप्रकारकावधारणात्मकज्ञानम् । शाब्दप्रकारमाह तथा चेति । ननु प्रत्ययानामेकस्वार्थविशिष्टप्रकृत्यर्थेऽपरस्वार्थान्वयबोधकत्वमव्युत्पन्नमित्यत आह—स्वीयैकार्थेति । नन्वेकप्रत्ययार्थयोः कृतिवर्त्तमानत्वयोः परस्परमन्वयस्य वक्ष्यमाणत्वेऽपि एकार्थविशिष्टप्रकृत्यर्थेऽपरार्थान्वयस्याव्युत्पन्नत्वमेवेत्यत आह—अस्तु वेति । अध्यवसायपदार्थं स्वयमेवाह—अध्यवसाय इति । वक्त्राशंसनमपीति । आशंसनमिच्छाविषयकः शब्दः । ननु घटो नीलो भवतु इत्यादौ नामार्थस्य नीलादेः कथं भेदेन धात्वर्थ उत्पत्तावन्वय इत्यत आह—घट इत्यादि । लक्षणां विनाप्युपपादयति—अस्तु

क्षणयोपस्थापितायां नीलाद्युत्पत्तौ तिङा आशंसनीयत्वं प्रतीयते, नामार्थस्य नीलादेर्घात्वर्थोत्पत्तौ भेदेनान्वयस्याव्युत्पन्नत्वात्, एवञ्चाशंसाविषयवर्त्तमाननीलोत्पत्तिमान्नीलो घट इत्याकारस्तत्र बोधः। अस्तु वा नीलादिपदसन्दंशवशान्नीलादिविशिष्टस्यैव स्वस्याधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपोत्पत्तिस्तत्र धात्वर्थः ॥ १०० ॥

[३]लिङं लक्षयति—

लड्लोडन्या विधेर्बोधे समर्था तिङ् लिङुच्यते।
प्रवर्त्तकचिकीर्षाया हेतुर्धीविषयो विधिः ॥ १०१ ॥

विध्यन्वयबोधं प्रति समर्था लटो लोटश्च भिन्ना तिङ् लिङुच्यते। विधिस्तु नेह कृत्यात्मकं विधानमाख्यातमात्रस्य तद्बोधसमर्थत्वात्, किन्तु प्रवर्त्तकचिकीर्षायां यत्प्रकारकज्ञानस्य हेतुत्वं स तथा, तादृशश्च कृतिसाध्यत्वमिष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वञ्च प्रत्येकमेव, यागपाकादेधर्मिकतन्निश्चयादेव यागादिधर्मिकचिकीर्षोत्पत्त्या तत्र प्रवृत्तेः, एवञ्च 'यजेत पचेते'त्यादौ यागः कृतिसाध्य इष्टसाधनं बलवदनिष्टाननुबन्धी च इत्याकारको बोधः। 'पटमानय' इत्यादौ 'सप्तमं पदं गृह्णाती'त्यादौ च

---

कृष्णकान्तीटीका।

वेति। सन्दंशवशात्—समभिव्याहारवशात्। तत्र धात्वर्थ इति। तथा च नीलपदं तात्पर्यग्राहकमिति भावः ॥ १०० ॥

अथ विधिः। लिङं लक्षयतीति। लिङ्लक्षणानुकूलवर्तमानव्यापारवान् ग्रन्थकर्तेत्यर्थः। विवृणोति—विध्यन्वयबोधं प्रतीति। तथा च लड्लोड्भिन्नत्वे सति यादृशानुपूर्वीप्रकारकज्ञानत्वं विध्यन्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लिङ्त्वमिति पर्यवसितम्। ननु को नाम विधिपदार्थ इत्याकांक्षायामाह—विधिस्त्विति। आख्यातमात्रस्येति। तथा च लड्लोड्भिन्नाख्यातमात्रस्य लिङ्त्वापत्तिरिति भावः। किन्त्विति। तथा च प्रवर्तकचिकीर्षाजनकतावच्छेदकप्रकारताश्रयत्वं विधित्वमित्यर्थः। तादृशप्रकारतावच्छेदकतापर्याप्तिनिवेशे प्रयोजनविरहो विधित्वस्य व्यासज्यवृत्तित्वापत्तिश्चातस्तदनिवेशयन् विधित्वस्याव्यासज्यवृत्तित्वमाह—तादृशश्चेति। चिकीर्षाजनकतावच्छेदकप्रकारताविशेषाश्रयश्चेत्यर्थः। प्रत्येकमेवेति। तथा च विधित्वं न व्यासज्यवृत्तीति भावः। विधौ विधिलक्षणं सङ्गमयति—यागपाकादीति। तन्निश्चयादेव—कृतिसाध्यत्वनिश्चयादेव। लक्ष्ये प्रकृतलक्षणं संगमयति—एवञ्चेति।

विधिं बोधयन्त्यावपि लोड्लटौ न ताभ्यां भिन्ने, 'यष्टव्यं, देयमि'त्यादौ तु तव्यादिकं कार्य्यत्वादिकं बोधयदपि न तिङ् । भावित्वाद्यप्रत्यायकत्वेन विशेषणाच्च 'पच्यादि'त्यादावाशीर्लिङि न प्रसङ्गः । यद्यपीदानीन्तनस्वकृति-साध्यताज्ञानस्यैव प्रवर्त्तकत्वमन्यथा स्वस्यैव कालान्तरीणायाः परस्य चेदानीन्तन्याः कृतेः साध्यताग्रहादपि प्रवृत्त्यापत्तेः, तथापि इदानीन्तनस्वकृत्यन्तर्भावेणापि लिङः शक्त्यापत्तिरतः प्रवर्त्तकज्ञानप्रकारत्वं तत्राप्रयोजकम् । तथापि 'पङ्गुः समुद्रं न तरेदि'त्यादौ नञादिना समुद्रतरणादेः पङ्गुप्रभृतिकृतिसाध्यत्वविषेधबोधानुरोधादवश्यं कृतिसाध्यत्वं लिङर्थः । तथा 'तृप्तिकामो जलं न ताडये'दित्यादौ तृप्तिकामेष्टसाधनत्वस्य 'न कलञ्जं भुञ्जीते'त्यादौ च कलञ्जभक्षणादेर्बलवदनिष्टाजनकत्वस्य निषेधानुपपत्त्या

---

कृष्णकान्तीटीका ।

यजेतेत्यादौ कृतिसाध्यत्वादेर्विधित्वे चेत्यर्थः । अन्यान्तव्यावृत्तिमाह—पटमानय,सक्ष्मं पदं गृह्णातीत्यादाविति । आदिपदादग्निहोत्रं जुहोतीत्यादिपरिग्रहः । तिङ्त्वनिर्देशव्यावृत्तिमाह—यष्टव्यमित्यादि । ननु आशीर्लिङ् 'यात' इत्यादेः समानानुपूर्वीकत्वात् तत्रातिव्याप्तिरित्यत आह—भावित्वाद्यप्रत्यायकत्वेनेति । शंकते—यद्यपीत्यादि । तत्राप्रयोजकमिति । तत्र—कृतिसाध्यत्वे, तथा च तन्निष्ठतादृशप्रकारत्वं विधित्वाप्रयोजकमित्यर्थः । तद्विहाय इष्टसाधनत्वादकं विधिरिति फलितम् । समाधत्ते—तथापीति । नञोऽसमभिव्याहारस्थले इष्टसाधनत्वादिमात्रबोधेनाप्युपपत्तेर्नञ्समभिव्याहारस्य नानुधावनम् । कृतिसाध्यत्वनिषेधबोधानुरोधादिति । इष्टसाधनत्वाभावादेस्तत्र बाधादिति भावः । लिङर्थ इति । तथा चेदानीन्तनकृतिसाध्यत्वस्य गुरुत्वेऽप्यगत्या तत्र लिङः शक्तिरावश्यकीति भावः । ननु तन्मात्र एव तच्छक्तिरावश्यकत्वादस्तु किमपरयोर्द्वयोस्तत्कल्पनेनेत्यत आह—तृप्तिकाम इति । इष्टसाधनत्वस्येति, निषेधानुपपत्त्येति परेणान्वयः । तथा च जलताडने कृतिसाध्यत्वाभावस्य बलवदनिष्टाननुबन्धित्वाभावस्य च बाधादगत्येष्टसाधनत्वेऽपि तच्छक्तिरावश्यकीति भावः । न कलञ्जमिति । विषाक्तबाणहतमृगपक्षिमांसं शुष्कमांसं वा कलञ्जम्, तदुक्तम्—

विषाक्तेनैव बाणेन हतौ यौ मृगपक्षिणौ ।  
तयोर्म्मांसं कलञ्जं स्याच्छुष्कमांसमथापि वा ॥ इति ।

बलवदनिष्टाजनकत्वस्येति । तद्भक्षणे इष्टसाधनत्वस्य कृतिसाध्यत्वस्य च सत्त्वादगत्या बलवदनिष्टाननुबन्धित्वेऽपि तच्छक्तिरावश्यकीति भावः ।

इष्टसाधनत्वादिकमपि । न चाहोरात्रावच्छेद्यभोजननिवृत्तिरूपस्योपवासस्य कृत्यसाध्यत्वात् 'अष्टम्यामुपवसे'दितिविधेर्बाधः, कृत्यधीनसमयसम्बन्धरूपस्य क्षैमिककृतिसाध्यत्वस्य नित्येऽप्यनपायात्, तादृशप्रयोगे भोजनादिप्रतिकूलव्यापारस्यैव वा धात्वर्थत्वात् । 'पाकं कुर्यादि'त्यत्र कृतिसाध्यत्वस्य, 'जलं ताडयेदि'त्यत्रेष्टसाधनत्वस्य, 'श्येनेन यजेते'त्यादौ च बलवदनिष्टाजनकत्वस्य धात्वर्थे बाधाचत्र यथायोगमिष्टसाधनत्वादिकमेव लिङा प्रमाप्यते, तदप्रामाण्यव्यवहारस्तु इष्टसाधनत्वादिभ्रमहेतुत्वप्रयुक्तः ।

यत्तु—कृतिसाध्यत्वबलवदनिष्टाजनकत्वाभ्यां विशिष्टमेवेष्टसाधनत्वं लिङर्थ इति तद्बोधकतया 'जलं ताडयेदि'त्यादेरप्रामाण्यमेव—इति । तन्न, कृतिसाध्यत्वादेर्विशेष्यविशेषणभावव्यत्यासेन गुरुतरशक्तिषट्कापत्तेः, 'श्येनेनाभिचरन् यजेते'त्यादिश्रुतेरप्रामाण्यापत्तेश्च, श्येनस्य वैरिवधकामकर्त्तव्यत्वेन बलवदनिष्टस्य दुरितस्यानुबन्धित्वात् । न च तत्रेष्टसाधनत्वमात्रे लक्षणा त्वन्मतेऽपि 'अगम्यां गच्छे'दित्यादेः प्रामाण्यस्य दुर्वारत्वापत्तेः,

---

कृष्णकान्तीटीका ।

इष्टसाधनत्वादिकमपीति, लिङर्थ इति पूर्वेणान्वयः, आदिना बलवदनिष्टाननुबन्धित्वपरिग्रहः, अपिकारात् कृतिसाध्यत्वपरिग्रहः । शङ्कते—न चेति । समाधत्ते—कृत्यधीनेति । नित्यस्य समयसम्बन्धे यदि कृत्यधीनत्वं न स्वीक्रियते तदाप्याह—तादृशेति । धात्वर्थत्वादिति । तथा च तादृशव्यापारे कृतिसाध्यत्वस्य बोधितत्वेन तत्र तादृशबोधो न भ्रम इति भावः । ननु पाकं कुर्यादित्यादौ कृतिसाध्यत्वबाधात् कथं तादृशवाक्येऽप्रामाण्यमित्यत आह—पाकमिति । इष्टसाधनत्वादिकमेवेति । तथा च उक्तविध्यर्थानां यत्र योऽबाधितस्तत्र तदवगाहिबोधजनकत्वेनैव तादृशवाक्यस्य प्रामाण्यमिति भावः । नन्वेकतराभावमादायापि तत्राप्रामाण्यव्यवहारः स्यादित्यत आह—तदप्रामाण्यव्यवहारस्त्विति । तथा च यादृशवाक्येन यादृशविध्यर्थावगाहिज्ञानं जन्यते तादृशवाक्यविषयकाप्रामाण्यव्यवहारस्यापि तादृशविध्यर्थे भ्रमजनकत्वमेव विषय इति तत्र तादृशव्यवहारो न प्रामाणिक इति भावः ।

विशिष्टस्येष्टसाधनस्य विध्यर्थतावादिनां मतमुपन्यस्य दूषयति—यत्त्विति । इत्यादिरित्यादिपदात् पाकं कुर्यात् श्येनेन यजेतेत्याद्युपग्रहः । शक्तिषट्कापत्तेरिति। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह—श्येनेनाभिचरन्निति । कथमित्याकाङ्क्षायामाह—श्येनस्येति । शङ्कते—न चेति । ननु लक्षणास्वीकार एवदोष इत्यत आह—त्वन्मत इति । प्रत्येकशक्तिवादिनस्तव मतेऽपीत्यर्थः । दुर्वारत्वापत्तेरिति । तथा

'न विधौ परः शब्दार्थः' इत्यस्य व्याकोपापत्तेश्च । ननु बलवदनिष्टाजनकत्वविशिष्टेऽपीष्टसाधनत्वे लिङः शक्तिग्रहादिष्टसाधनतामात्रस्य श्येनादावनुभावकत्वसम्भवात् न तत्र लिङो लक्षणा, यद्रूपेणान्वयधीस्तन्मात्रप्रकारकशक्तिज्ञानत्वापेक्षया लघुत्वेन तत्प्रकारकशक्तिज्ञानत्वेनैव तत्र हेतुत्वादत एव—'श्रोतव्यः श्रुतिवाक्येभ्य' इत्यत्र स्मृत्यादिभिन्नप्रमाणशब्दत्वेन शक्तमपि श्रुतिपदं प्रमाणशब्दत्वेन श्रुतिस्मृतौ बोधयन्न लाक्षणिकम्, अन्यथा श्रुतिपदस्य वेदमात्रपरत्वे तज्जन्यशाब्दत्वेन मुक्तिहेतुत्वे नियमादृष्टकल्पनापत्तेः—इति पक्षधरमिश्रैरप्युक्तमिति चेन्न । पश्वादिपदस्यापि लाङ्गूलादिमत्तया मूषिकादिबोधने मुख्यत्वापत्तेः ।

---

कृष्णकान्तीटीका ।

च बलवदनिष्टाननुबन्धित्वमात्रबोधानुरोधेन भवन्मतेऽपि लक्षणास्वीकार आवश्यक इति भावः । समाधत्ते—न विधाविति । तथा च विधिवाक्यघटकपदार्थः परो न—शक्यादन्यः न, शक्यार्थ एव विधिवाक्यविषय इति यावत्, इति नियमव्याघातापत्तेरित्यर्थः । अस्मन्मते च 'अगम्यां गच्छेदि'त्यादौ फलबलाद्बलवदनिष्टाननुबन्धित्वघटितविशेष्यकबलवदनिष्टाननुबन्धित्वप्रकारकत्वरूपप्रामाण्यस्यैव प्रामाण्यव्यवहारविषयत्वकल्पनान्न तत्र लक्षणेति भावः । पुनः शङ्कते—नन्वित्यादि । बलवदिष्टाजनकत्वे सति कृतिसाध्यत्वेत्यादिः, 'बलवदनिष्टाजनकत्वादिविशिष्टेऽपी'त्यपि क्वचित् पाठः । तत्रादिपदात् कृतिसाध्यत्वादिपरिग्रहः । प्रकृतानुपयोगितया कृतिसाध्यत्वानुक्तिरित्यपि कश्चित् । अनुभावकत्वसम्भवादिति । शक्तिग्रहनिष्ठजनकतावच्छेदकप्रकारतायाः पर्याप्तिनिवेशे प्रयोजनाभावादिति भावः । ननु विशिष्टशक्तिज्ञानात् प्रत्येकशाब्दबोधवारणमेव प्रयोजनमित्यत आह—यद्रूपेणेति । तत्र हेतुत्वादिति । तत्प्रकारकशाब्दबोधहेतुत्वादित्यर्थः । निरुक्तकार्यकारणभावे मिश्रोक्तयुक्त्यन्तरमप्याह—अत एवेति । विशिष्टशक्तिग्रहस्यैकतरप्रकारकानुभवजनकत्वादेवेत्यर्थः । न लाक्षणिकमिति । स्मृत्यादिभिन्नप्रमाणशब्दत्वप्रकारकश्रुतिपदशक्तिज्ञानादपि केवलप्रमाणशब्दत्वेन शाब्दबोधोदयात् श्रुतिपदस्य प्रमाणशब्दे न लक्षणेति भावः । ननु तत्र विशिष्टानुभवजनने का क्षतिरित्यत आह—अन्यथेति । नियमाद्दृष्टकल्पनापत्तेरिति । वेदजन्यशाब्दबोधाभावे दुरदृष्टजनकत्वकल्पनापत्तेरित्यर्थः । यथा 'ऋतौ भार्यामुपेया'दित्यादौ तादृशभार्यागमनाभावे दुरदृष्टजनकत्वं बोध्यते तथेहापीति भावः । श्रुतिजन्यबोधस्यैवादृष्टजनकत्वापत्तेरित्यर्थ इत्यपि कश्चित् । समाधत्ते चेन्नेति । मुख्यत्वापत्तेरिति । तथा चैतद्दोषभियैव तत्प्रकारकशाब्दबुद्धौ तत्पर्याप्तप्रकारकशक्तिज्ञानस्यैव हेतुतया 'श्येनेनाभिचरन् यजेते'त्यादिश्रुतेः प्रामाण्यानुरोधेन तव मतेऽपीष्टसाधनत्वे लिङो लक्षणाऽऽवश्यकेति भावः ।

स्यादेतत्, इष्टसाधनत्वं यदि विध्यर्थस्तदा 'स्वर्गकामः पचेते'त्यादेरपि प्रमाणतापत्तेः, स्वर्गकामकृतिसाध्यस्य पाकादेरोदनादिरूपेष्टसाधनत्वादिति चेन्न। स्वर्गकामादिसमभिव्याहृतविधिप्रत्ययस्य स्वर्गादिरूपेष्टसाधनत्वान्वयबोधं प्रत्येव साकाङ्क्षत्वेनेष्टान्तरसाधनत्वे शक्तिमत्त्वेऽप्युक्तविधेस्तद्बोधकत्वासम्भवात्। इयांस्तु विशेषो—यदिष्टस्य स्वर्गत्वाद्यवान्तररूपेणैव यदि विधिवाक्याद्बोधस्तदा तादृशावान्तररूपेणैवेष्टं विधेः शक्यतावच्छेदकं नो चेदिष्टत्वेनैव, अत एव 'विश्वजिता यजेते'त्यादौ इष्टसामान्यसाधनत्वस्यैव विधिना बोधनात् प्रवर्त्तकस्येष्टविशेषसाधनत्वावगाहिज्ञानस्य सम्पत्तये प्राच्यैः स्वर्गः फलं कल्प्यते। यत्तु—साधनत्वमात्रं विध्यर्थः, स्वर्गादिफलसाधनत्वन्तु स्वर्गकामादिपदसमभिव्याहारलभ्यम्—इति। तत्तुच्छम्, पदानुपस्थितस्य स्वर्गादेर्विध्यर्थसाधनत्वेऽन्वयायोगात्, स्वर्गकामादिवृत्तिशब्दैकदेशार्थस्य स्वर्गादेस्तत्रान्वये नि-

---

कृष्णकान्तीटीका।

एतावता निवृत्ते विशिष्टशक्तिवादिनि स्वमते दोषमुद्घाटयन् परिष्कुरुते स्यादेतदिति। ननु स्वर्गादेरिष्टत्वेन विधिशक्यतावच्छेदकत्वे स्वर्गत्वव्याप्यवैजात्यपुरस्कारेण विधिवाक्यात् स्वर्गादिबोधो न स्यादित्यत आह—इयांस्त्विति। नो चेदिति। यदीष्टत्वेनैव विधिवाक्याद्बोधस्तदेत्यर्थः। विधिवाक्यादिष्टत्वेनैवेष्टबोधे युक्तिमप्याह—अत एवेति। इष्टत्वेनैवेष्टसामान्यस्य विधिशक्यतावच्छेदकत्वादेवेत्यर्थः। स्वर्गादिफलेच्छुकव्यक्तेः स्वर्गादिसाधनताज्ञानं विना प्रवृत्त्यनुपपत्तेः स्वर्गादेः फलत्वं कल्प्यते इति भावः। नव्यैः स्वर्गत्वावान्तररूपेण विधिशक्यतावच्छेदकतास्वीकारात्तन्मते नानुपपत्तिरिति प्राच्यैरुक्तम्। मतान्तरमुपन्यस्य दूषयति यत्त्विति। ननु पदानुपस्थितसंसर्गस्येव बाधाभावरूपयोग्यताबलात् प्रकारतयापि स्वर्गादिभानं भविष्यतीति चेन्न। तत्प्रकारकशाब्दबोधे तत्प्रकारकवृत्तिज्ञानहेतुताया आवश्यकतया पदानुपस्थितस्य प्रकारतया शाब्दबोधे भानासम्भवात्, अत एव 'द्वारमि'त्यादौ 'पिधेही'ति पदं कल्प्यते तार्किकैरिति। ननु 'स्वर्गकाम' इत्यादिस्वर्गपदेनैव स्वर्गोपस्थापनात् कुतस्तस्य पदानुपस्थितत्वमित्यत आह—स्वर्गकामादीति। निराकाङ्क्षत्वादिति।

प्रतियोगिपदादन्यत् यदन्यत् कारकादपि।
वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते॥

राकाङ्क्षत्वात्, फलाव्यवहितनियतपूर्ववर्त्तित्वविशेषात्मनः कारणत्वस्य फलगर्भतया तदनन्तर्भाव्य साधनत्वशक्तेरशक्यवचनत्वाच्च । नन्वेवं स्वर्गत्वावच्छिन्ना यावती व्यक्तिस्तत्प्रत्येकाधिकरणावच्छेदेन तत्प्रत्येकाव्यवहितप्राक्काले यद्धर्मावच्छिन्नस्य यादृशः सम्बन्धोऽन्यथासिद्ध्यनिरूपकस्तद्धर्म एव तादृशसम्बन्धेन स्वर्गत्वाद्यवच्छिन्नं प्रति साधनत्वं वाच्यं, तच्च यागादौ बाधितमप्रसिद्धं वा यागत्वादेर्निरुक्तस्वर्गाव्यवहितपूर्ववर्त्तितानवच्छेदकत्वात्, दानादितोऽपि स्वर्गाद्युत्पत्तेः, सत्त्वगुणत्वादेश्च तादृशस्य स्वर्गत्वाद्यवच्छिन्नं प्रति अन्यथासिद्ध्यनिरूपकत्वादतः कथमिष्टसाधनत्वं विधेः शक्यमिति चेत् । सत्यम्, स्वर्गवृत्तियत्किञ्चिद्धर्मावच्छिन्नं प्रति साधनत्वस्यैव विध्यर्थत्वात्, तस्य च स्वर्गवृत्तिवैजात्यविशेषावच्छिन्ना यावन्तस्तत्प्रत्येकाव्यवहितप्राक्कालवृत्तितावच्छेदकभूताश्वमेधत्वादिकमादायैव यागादौ सत्त्वात् । न चैवं वैध एव बोधे स्वर्गगतवैजात्यस्य

---

कृष्णकान्तीटीका ।

ङ्गतिप्राचीनानुशासनादिति भावः । यदि च व्युत्पत्तिवैचित्र्यात् तत्र तदन्वयः स्वीक्रियते तदाप्याह—फलाव्यवहितेति । अशक्यवचनत्वाच्चेति । कारणत्वस्य स्वरूपसम्बन्धरूपत्वे न कोऽपि दोष इति ध्येयम् । शङ्कते नन्वेवमित्यादि । यत्किञ्चित्स्वर्गसाधनस्य स्वर्गत्वावच्छिन्नं प्रति साधनत्ववारणाय यावती व्यक्तिरिति । यावतामेकाधिकरणाप्रसिद्ध्या तत्प्रत्येकेति । स्वर्गत्वावच्छिन्नाव्यवहितप्राक्कालसत्त्वमप्रसिद्धमतस्तत्प्रत्येकेति । काल इति सम्बन्धप्राक् इत्यन्वयि, तथा च तादृशकालवृत्तिर्यद्धर्म्मावच्छिन्नस्य यादृशः सम्बन्ध इत्यर्थः । तच्चेति । स्वर्गत्वावच्छिन्नसाधनत्वञ्च । बाधितमिति । यागस्य स्वर्गाव्यवहितप्राक्काले स्वर्गाधिकरणावच्छेदेन यागीयसमवायसम्बन्धस्यासत्त्वादपूर्वादौ प्रसिद्धस्य तादृशसाधनत्वस्य च यागादावभावादिति भावः । यदि चापूर्वसम्बन्धेन यागः कारणमित्युच्यते, तदा न बाध इत्यत आह—अप्रसिद्धं वेति । तत्र हेतुमाह—यागत्वादेरिति । कुत इत्याकांक्षायामाह—दानादितोऽपीति । ननु सत्त्वगुणत्वादेरेव तादृशधर्मस्य तत्र सत्त्वात् कुतोऽप्रसिद्धिरिति सत्त्वगुणत्वादेस्तादृशत्वमेव खण्डयति—सत्त्वगुणत्वादेरिति । आदिनेच्छात्वपरिग्रहः । समाधत्ते—चेत् सत्यमित्यादि । तस्य चेति । विजातीयस्वर्गसाधनत्वस्य चेत्यर्थः । तस्य सत्त्वादिति परेणान्वयः । तथा च वैजात्यविशेषावच्छिन्नं प्रत्येवाश्वमेधत्वादिना हेतुत्वमिति भावः । शङ्कते—न चैवमिति । वैध एवेति ।

मानादप्रकल्प्यत्वव्याकोपः, स्वर्गवृत्तियत्किञ्चिद्धर्मत्वेन गृहीतस्यापि वैजात्यस्य यागविशेषजन्यतावच्छेदकजातित्वादिना कल्पनस्यो- दीच्यत्वात् । यदि च—जातित्वसामान्यलक्षणया निखिलजात्युप- स्थित्यनन्तरं जातिमत्त्वप्रत्यासत्त्या जातित्वेन सकलजातिविशिष्टस्यानुभवे सत्युत्तरकालं शुद्धतत्तद्वैजात्येन विशिष्टस्य वैजात्यादौ स्वर्गादेः स्मृतौ बाधकाभावः, संस्कारसत्त्वेऽपि जातित्वांशस्योद्बोधकाभावेनाग्रहसम्भवात्, समानप्रकारत्वेनैव हि स्मृतावनुभवस्य हेतुत्वं, न तु समानप्रकारताव- च्छेदकत्वेन गौरवात्, यदि वा तत्तद्वैजात्यावच्छिन्नस्वर्गादिनिरूपितस मवायेन सुखादिमत्ताज्ञानानन्तरं तादृशवैजात्यावच्छिन्नसुखस्य उपनीतभानं प्रामाणिकं संसर्गतासाधारणविशेषणविषयताकज्ञानस्यैव विशिष्टधीहेतु- तुत्वात्, इत्थमेव च शुद्धमनस्त्वादिविशिष्टस्योपस्थितौ तत्र मनःपदादेः शक्तिग्रह—इति विभाव्यते, तदा तत्तद्वैजात्यावच्छिन्नस्यैव स्वर्गस्य निरु-

---

कृष्णकान्तीटीका ।

विधिवाक्यजन्य एव, कल्प्यवैजात्यस्य विधिवाक्यादेव भाने किमर्थमसौ तदनुमीयते इति तस्यानुमेयत्वे प्राचीनसिद्धान्तभङ्ग इति भावः । उदीच्यत्वादिति । तथा च जातित्वेन कल्पन एव तेषां तात्पर्यमिति भावः । शुद्धवैजात्यावच्छिन्नस्वर्गसाधनत्वे वि- धिशक्तिरिति व्यवस्थापयितुं शुद्धवैजात्यावच्छिन्नस्वर्गसाधनत्वे शक्तिग्रहं सम्पादयन्नाह— यदि चेति । ननु स्मृतौ जातित्वं तदा कथं न भासत इत्यत आह—संस्कारस- त्त्वेऽपीति । अग्रहसम्भवादिति । ननु तद्धर्मावच्छिन्नप्रकारकस्मृतौ तादृशानुभवस्य हेतुतया कथं जातित्वावच्छिन्नप्रकारकानुभवात् स्वरूपतो जातिप्रकारकस्मृतिरित्यत आह—समानप्रकारकत्वेनैवेति । गौरवादिति । तथा च जातित्वेन जाति- प्रकारकानुभवात् स्वरूपतो जातिप्रकारकस्मृतौ बाधकाभावः । नन्वेवं प्रमेयत्वसामा- न्यलक्षणया निखिलप्रमेयज्ञानात् स्वरूपतो घटत्वपटत्वादिस्मृत्युत्पत्त्या सार्वज्ञापत्तिरिति समानप्रकारकत्वेनैव स्मृत्यनुभवयोर्हेतुहेतुमद्भाव आवश्यक इत्यत आह—यदि वे- त्यादि । ननु विशिष्टबुद्धौ विशेषणनिष्ठसंसर्गावच्छिन्नविषयताकज्ञानस्य हेतुतया कथं तद्वैजात्यसंसर्गकज्ञानात् तद्वैजात्यप्रकारकोपनीतभानमित्यत आह—संसर्गतासाधा- रणेति । निरुक्तकार्यकारणभावे युक्तिमप्याह—इत्थमेव चेति । निरुक्तकार्यकारण- भावस्वीकारेणैव चेत्यर्थः । शक्तिग्रह इति । अन्यथाऽतीन्द्रियतया स्वरूपतो मन- स्त्वादिविशिष्टस्य पूर्वं ग्रहासम्भवेन तत्र मनःपदशक्तिग्रहो न स्यात्, अधुना तु जातित्व- सामान्यलक्षणया मनस्त्वज्ञानोत्तरं मनस्त्वावच्छिन्ननिरूपितसंयोगसम्बन्धेन द्रव्यवत्ता-

क्तसाधनत्वं विधेः शक्यं शक्यग्रहमिति तदेव यागादौ लिङ्गैरनुमा-
व्यताम्, अनुभाव्यतां वा स्वर्गप्रतियोगिकाभावप्रयोजकाभावप्रतियोगित्व-
लक्षणमेव स्वर्गसाधनत्वम् तच्च वैजात्यावच्छिन्नप्रतियोगिताकस्यैव
स्वर्गाभावस्य प्रयोजकीभूतो योऽश्वमेधत्वाद्यवच्छिन्नाभावस्तत्प्रतियोगि-
त्वेन यागादेः सुघटमेव, कारणाभावस्यैव कार्य्याभावप्रयोजकत्वात् ।
साधनतायाः पदार्थान्तरत्वमतेऽपि तन्मात्रस्य न लिङर्थत्वम् 'जलं न ताड-
ये'दित्यादौ तस्य निषेधविधेरप्रामाण्यापत्तेः, परन्तु स्वर्गादिनिरूपितस्येति
सम्प्रदायविदः ।

रत्नकोषकृतस्तु —पाकादिकृतित्वावच्छिन्नोद्देश्यताकेच्छाया एव पा-
कादिचिकीर्षात्वात् सैव पाकादौ प्रवर्तिकेति, तस्याञ्च पाकादिकृतित्वा-
वच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वात् कृतिगतमेवेष्टसाधनत्वं लि-
ङर्थः, तादृशचिकीर्षायां क्रियाधर्मिकायाः कृतिसाध्यत्वस्येष्टसाधनत्वस्य
वा धियः कारणत्वाभावेन क्रियागतयोस्तयोरविध्यर्थत्वात् । 'पाको म-

---

कृष्णकान्तीटीका ।

ज्ञानोत्तरं वा स्वरूपतो मनस्त्वविशिष्टज्ञानसम्भवात्तत्र शक्तिः शक्यग्रहेति भावः ।
प्रयासबाहुल्यं विनाप्युपपादयति अनुभाव्यतां वेति । तच्च-तादृशसंसर्ग-
साधारणत्वञ्च, सुघटमिति परेणान्वयः । कुत इत्याकांक्षयामाह—कारणा-
भावस्यैवेति । ननु साधनतायाः पदार्थान्तरत्वमते केवलसाधनत्वे विधिक-
ल्पनेऽपि व्युत्पत्तिवैचित्र्येण स्वर्गादिपदोपस्थापितस्य स्वर्गादेः साधनत्वेऽ-
न्वयादेव विशिष्टलाभो भविष्यतीत्यत आह—साधनताया इति । अप्रामा-
ण्यापत्तेरिति । दुःखसाधनत्वस्य तत्र सत्त्वेन साधनत्वसामान्याभावस्य बाधादिति
भावः । स्वर्गादिनिरूपितस्येति । साधनत्वस्य लिङर्थत्वमिति पूर्वेणान्वयः ।

रत्नकोषकृतस्त्विति । प्रवर्तकचिकीर्षाजनकज्ञानविषयस्यैव विधित्वात्
कृतिगतेष्टसाधनत्वे तादृशविषयत्वं सम्पादयन् तस्य लिङर्थत्वमाह—पाकादी-
ति । सैव—पाककृतिर्मे भवत्वित्याकारिकेच्छैव । तस्याञ्च—तादृशेच्छायाञ्च, क्रिया-
निष्ठकृतिसाध्यत्वेष्टसाधनत्वयोर्न निरुक्तविधित्वमित्याह—तादृशचिकीर्षायामि-
ति । ननु पाकधर्मिककृतिसाध्यत्वप्रकारकेच्छाया अपि प्रवर्तकतया तस्याञ्च
पाकधर्मिककृतिसाध्यताज्ञानत्वेन हेतुतया क्रियानिष्ठकृतिसाध्यत्वस्यापि निरुक्त-
विधिलक्षणाक्रान्ततया विध्यर्थत्वमावश्यकमेवेत्यत आह—पाको मत्कृत्येति ।

त्कृत्या साध्यताम्' इतीच्छायाः प्रवर्त्तकत्वेऽपि न तस्यां पाकधर्मिककृतिसाध्यताज्ञानत्वेन हेतुत्वं मानाभावात्, किन्तु मत्कृतिसाध्यपाकत्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेनैव, इष्टस्य ताद्रूप्येण इच्छां प्रति तदवच्छिन्नधर्मिकेष्टसाधनत्वधियः कारणत्वस्य क्लृप्तत्वात्, अन्यथा स्वगृहवृत्तित्वादिविशिष्टपाकत्वप्रकारकेच्छां प्रति पाकधर्मिकस्वगृहवृत्तित्वाद्यनन्तधर्मप्रकारकज्ञानत्वेनाप्यनन्तहेतुतापत्तेः। एवञ्च 'स्वर्गकामो यजेते'त्यादाविष्टसाधनीभूतयागकृतिमान् स्वर्गकाम इत्याकार एव बोध इति भावनाविशेष्य एव स्वर्गकामादौ लिङादिना स्वार्थः संख्याऽनुभाव्यते, अन्यथा यागः स्वर्गकामस्य कृतिसाध्य इत्यन्वये प्रथमायाः प्रकृत्यर्थमुख्यविशेष्यकान्वयबोधकत्वभङ्गप्रसङ्गः, 'स्वर्गकामौ यजेते'त्यपि प्रयोगापत्तिश्च। स्वार्थभावनाविशेष्य एव लिङः सङ्ख्याभिधायित्वेन स्वर्गकामस्यातथात्वे तत्र तिङर्थसङ्ख्याया उदासीनत्वात्। बलवदनिष्टाजनकत्वन्तु लिङर्थः स्वार्थकृताविव धात्वर्थेऽपि विशेषणत्वेनाऽन्वेतुमर्हति, प्रत्ययानामेकस्वार्थान्वयिपदान्तरार्थान्वयित्वेन स्वार्थान्तराबोधकत्वानियमस्य 'जानाती'त्यादावेव व्यभिचारात्। इत्थञ्च 'पङ्गुः समुद्रं न तरेदि'त्यादाविष्टसाधनीभूतायाः समुद्रतरणकृतेरभाववान् पङ्गुरिति, 'तृप्तिकामो जलं न ताड-

---

कृष्णकान्तीटीका।

ननु तादृशकारणत्वस्याक्लृप्तत्वेऽपि फलबलात्तद्धर्म्मविशिष्टपाकत्वप्रकारकेच्छायां तद्धर्मप्रकारकज्ञानस्य हेतुत्वमावश्यकमित्यत आह—अन्यथेति। अनन्तहेतुतापत्तेरिति। तथा च गौरवान्न तादृशहेतुत्वकल्पनमिति भावः। तन्मते शाब्दबोधप्रकारमाह—एवञ्चेति। कथञ्चित्तादृशव्युत्पत्तेः स्वीकारेऽप्याह—स्वर्गकामाविति। स्वर्गकामद्वयकृतिसाध्ययागस्यैकत्वादिति भावः। ननूक्तापत्तिवारणाय स्वर्गकाम एव स्वार्थसंख्याऽन्वयः स्वीकरणीयः, परन्तु यागमुख्यविशेष्यक एव बोधः शाब्दबोधः इत्यत आह—स्वार्थभावनाविशेष्य एवेति। अतथात्वे-स्वार्थभावनाया अविशेष्यत्वे। तत्र-स्वर्गकामे, उदासीनत्वात्-तद्विशेष्यकनियतशब्दबोधाप्रकारत्वात्। क्रियानिष्ठबलवदनिष्टाननुबन्धित्वस्यापि पुनरेतन्मते विध्यर्थत्वमाह—बलवदनिष्टाजनकत्वन्त्विति। ननु प्रत्ययानामेकस्वार्थान्वयिपदार्थान्तरे स्वार्थान्तराबोधकत्वनियमो भज्येतेत्यत आह—प्रत्ययानामिति। व्यभिचारादिति। आश्रयस्वरूपकस्वार्थान्वयिनि ज्ञाने वर्त्तमानत्वरूपस्वार्थान्तरबोधनादिति भावः। उपसंहरति-

येदि'त्यादावपि इष्टसाधनत्वशून्याया जलताडनकृतेराश्रयस्तृप्तिकाम इति, 'परदारान्न गच्छेदास्तिक' इत्यादौ बलवदनिष्टाजनकत्वशून्यायाः परदारगमनकृतेराश्रय आस्तिक इत्यर्थ—इत्याहुः।

इदन्तु बोध्यम्—बलवदनिष्टाजनकत्वमत्र न तीव्रदुःखाजनकत्वम् बह्वायाससाध्ययागादौ तस्य बाधात्, नापि बलवद्द्वेषाविषयदुःखाजनकत्वम् दुःखमात्रस्य विरक्तानां बलवद्द्वेषविषयत्वेनाऽव्यावर्तकतापत्तेः, तज्ज्ञानस्याप्रवर्त्तकतया तस्य विधित्वायोगाच्च, यत्र च बलवान् द्वेषस्वज्जनकताज्ञानत्वेन बलवद्द्वेषविषयत्वेन वा प्रवृत्तिसामान्यं प्रति प्रतिबन्धकत्वात्, परन्तु नरकाजनकत्वं पापाजनकत्वं वा, तद्विरहस्यैव कलञ्जभक्षणादौ नञा बोधनात्। 'ज्वरार्त्तो ना(म्ल)न्नमश्नीयात्' इत्यादिलौकिकविधौ तु ज्वरादिप्रयोज्यतत्ताद्विजातीयदुःखाजनकत्वे लिङो लक्षणा। तथा 'अष्टमचन्द्रे न गच्छे'दित्यादावपि बाधोर्गतिहेतुदुरिते, तेनाष्टमचन्द्रकालीनगतिहेतुदुरितं तत्तदनिष्टाजनकं नेत्येवं तत्र

---

कृष्णकान्तीटीका।

इत्यर्थश्चेति। आहुरित्यस्वरससूचनाय, स च 'पङ्गुः समुद्रं न तरे'दित्यादौ कृतिसाध्यत्वाभावबोधस्यापलापप्रसङ्गः, कृत्यसाध्ये प्रवृत्तिवारणाय कृतिसाध्यताज्ञानस्य प्रवृत्तिं प्रति हेतुताया आवश्यकत्वेन तस्यापि विध्यर्थकल्पनस्यौचित्याच्चेति।

बलवदनिष्टाजनकतापदार्थं निर्वक्ति—इदन्तु बोध्यमित्यादिना। तस्य बाधादिति। तथा च यागादौ प्रवृत्तिर्न स्यादिति भावः। अव्यावर्त्तकतापत्तेरिति। यागादिजन्यदुःखस्यापि तादृशत्वादुक्तदोषतादवस्थ्यादिति भावः। बलवदन्यद्वेषाविषयदुःखाजनकत्वोक्तौ नोक्तदोष इत्यतो दोषान्तरमाह—तज्ज्ञानस्येति। विधित्वायोगाच्चेति। प्रवर्तकज्ञानविषयस्यैव विधित्वादिति भावः। ननु तज्ज्ञानस्याप्रवर्तकत्वे बलवद्द्वेषविषयेऽपि प्रवृत्तिः स्यादिष्टापत्तावनुभवविरोधादित्यत आह—यत्र चेति। लाघवादाह—बलवद्द्वेषविषयत्वेन वेति। लाघवादाह—पापाजनकत्वं वेति। तद्विरहस्यैवेत्येवकारेण बलवदनिष्टाजनकत्वत्वावच्छिन्नाभावव्यवच्छेदः। ननु ज्वरार्त्तो ना(म्ल)न्नमश्नीयादित्यादेरप्रामाण्यापत्तिः, नरकाजनकत्वादेस्तत्र सत्त्वादित्यत आह—ज्वरार्त्त इति। लक्षणेति। तथा च ज्वरप्रयुक्तविजातीयदुःखजनकत्वाभाववद(म्ल)न्नभोजनमिति तत्र बोध इति भावः। गतिहेतुदुरित इति, लक्षणेति पूर्वेणान्वयः। शाब्दबोधप्रकारमाह—तेनेति। यथाश्रुतार्थस्तु न सम्भवतीत्याह—अन्यः

बोधः, अन्यथा तथाविधगतेः पापाजनकत्वे तद्द्वारा कालान्तरभाविदुःखाजनकत्वे वा प्रमाणाभावेनासङ्गत्यापत्तेः, 'गोचरे वा विलग्ने वा ये ग्रहा रिष्टसूचका' इत्यादिवचनेभ्यो ग्रहाणां शुभाशुभसूचकत्वोपगमात्। एतेन 'स पापस्तुलां नारोहे'दित्यादिपरीक्षाविषयोऽपि व्याख्याताः, तत्रापि धातोरारोहणहेत्वदृष्टलक्षकत्वात्, अत एव—

जयेतरनिमित्तस्य वृत्तिलाभाय केवलम्।
परीक्ष्य समवेतस्य परीक्षाविषयो मताः॥

(न्या० कु० १ स्त० १३ का०) इत्याचार्यैरप्युक्तमिति वदन्ति।

परे तु साध्यताविशिष्टमेव विध्यर्थः, तत्राप्येवकारस्थल इव नियतोत्तरवर्तिंतावच्छेदकधर्मवत्त्वलक्षणसाध्यताघटकप्रत्येकवस्तुन्येव लिङादेः शक्तिः, विशिष्टन्तु वाक्यार्थमर्यादया लभ्यम्, अत एव सामान्यतो नियतोत्तरवर्तित्वस्य दुर्वचत्वेऽपि न क्षतिः, एवञ्च स्वर्गकामो यागानुकूलकृतिमान् यागसाध्येष्टवांश्च इत्याकारक एव 'स्वर्गकामो यजेते'त्यादौ बोधः, तेन भावनायाः प्रथमान्तार्थान्वयित्वानियमः सम्पद्यते, सम्पद्यते च 'शास्त्रदेशितं फलमनुष्ठातरी'त्यादिकः प्रवादः। यागादौ स्वर्गादिसाधनत्वस्य विधिबोध्यत्वे तु तदुभयमेव व्याकुलीभवेत् फलं प्रति कर्त्तुरौदासीन्याद्भावनाविरहाच्च, धात्वर्थावच्छिन्नतिङर्थस्यैव तथात्वादिति।

---

कृष्णकान्तीटीका।

थेति। धातोर्मिश्रकार्थे लक्षणाया अस्वीकार इति तदर्थः। प्रमाणाभावमेव स्पष्टयति-गोचरे वेति। एतेन-धातोर्लक्षणास्वीकारेण। लक्षकत्वादिति। तथा च तुलारोहणहेत्वदृष्टं मेषसाधनमिति तत्र बोधः। अत एवेति। धातोस्तादृशादृष्टलक्षकत्वादेवेत्यर्थः। परीक्ष्य समवेतस्यैवेत्यनेनादृष्टस्यैव कथनादिति भावः।

मतान्तरमाह-परेत्विति। ननु साध्यत्वं नियतोत्तरवर्त्तितावच्छेदकधर्मवत्त्वं, तच्चानुगतमिति कथं तद्विशिष्टे विधिशक्तिरित्यत आह-अत एवेति। दुर्वचत्वेऽपीति, अननुगतत्वेत्यादिः। एतन्मते स्वर्गकामो यजेत इत्यादौ शाब्दबोधप्रकारमाह-एवञ्चेति। एतादृशार्थे युक्तिमप्याह-तेनेति। तदुभयमेवेति। उक्तनियमप्रवादोभयमित्यर्थः। औदासीन्यात्-अन्वयानिरूपकत्वात्, भावनाविरहाच्चेति। प्रथमार्थस्य कर्त्तुरित्यादिः, तथा च भावनायाः प्रथमार्थान्वयित्वनियमभङ्ग इति भावः। शङ्कते—

न चैवं 'पितृस्वर्गकामो गयायां पिण्डं दद्या'दित्यादिविधेर्बाधः, तत्र स्वाश्रयपितृकत्वादिपरम्परासम्बन्धेनैव पिण्डदानजन्येष्टस्य कर्तर्यन्वयात्, इतरगतत्वे प्रमाणासत्त्वस्थले एव साक्षात्सम्बन्धेन कर्तरि तदन्वयस्य व्युत्पन्नत्वात् । यद्यपीष्टं परित्यज्य साध्यमात्रं विध्यर्थोऽस्तु, स्वर्गकामादिसमभिव्याहारादेव यागसाध्यत्वेन स्वर्गादेर्भानसम्भवात्, 'विश्वजिता यजेत राजन्य' इत्यत्रापि विश्वजिद्यागसाध्यवान् क्षत्रियः इत्यन्वयबोधोत्तरं साध्यविशेषाकाङ्क्षयैव स्वर्गस्य तथात्वेन कल्प्यत्वात्, तथापि 'तृप्तिकामो जलं न ताडयेदि'त्यादौ तृप्तिकामादेर्जलताडनसाध्यसामान्याभावस्य बोधने बाधादिष्टत्वेन तदवान्तरस्वर्गत्वादिना वाऽन्वयबोधस्यानुभविकत्वाच्च ताद्रूप्येण शक्तिः, अन्यथेष्टमात्रं शक्यं, स्वसाध्यत्वसंसर्गेण धात्वर्थस्य तत्रान्वयात् विशिष्टार्थलाभ इत्येव किं न रोचयेः । अत एव इष्टत्वेन फलस्य शक्यत्वे ज्ञेयत्वादिप्रकारेणापि तथात्वापत्तिर्विनिगमकाभावादित्यपि प्रत्युक्तमिति प्राहुः ।

प्राभाकरास्तु—'स्वर्गकामो यजेते'त्यादौ यागः स्वर्गकामस्य कृतिसा-

---

कृष्णकान्तोटीका ।

न चैवमिति । बाध इति । अनुष्ठातरि फलाभावादिति भावः । समाधत्ते—तत्रेति । ननु कुत्र साक्षात्सम्बन्धेनेष्टान्वयः, कुत्र वा परम्परयेत्याकाङ्क्षायामाह—इतरगतत्व इति । कर्तृभिन्नगतत्व इत्यर्थः, तदन्वयस्य—इष्टान्वयस्य । पुनः शङ्कते—यद्यपीति । अस्त्विति । नामत्वादित्यादिः । ननु तदा कुतो यागस्य साध्यत्वेन स्वर्गादेर्भानमित्यत आह—स्वर्गकामादीति । ननु विश्वजिता यजेतेत्यादौ स्वर्गादिबोधकपदाभावात्तत्र कथं तादृशयागसाध्यत्वेन स्वर्गादिबोध इत्यत आह—विश्वजितेत्यादि । तथात्वेन—तादृशयागसाध्यत्वेन, कल्प्यत्वात्—अनुमेयत्वात् । समाधत्ते—तथापीति । बाधादिति । जलताडनसाध्यदुःखस्यैव तत्र सत्त्वादिति भावः । अत्र 'इष्टत्वेनेति'-प्राचीनमतानुसारेण, 'तदवान्तरे'ति नव्यमतानुसारेण । अनुभवे विप्रतिपन्नं प्रत्याह—अन्यथेति । किन्न रोचयेरिति । तथा च साध्यत्वस्य प्रकारतया भानस्यानुभवसिद्धत्व एतदपि तथेति भावः । अत एवेति—साध्यत्वविशिष्टत्वेन फलस्य विधिशक्यत्वादेवेत्यर्थः, प्रत्युक्तमिति परेणान्वयः ।

प्राभाकरमतमुपन्यस्यति—प्राभाकरास्त्विति । तमर्थे हेतुमाह—तत्कामकार्यत्वस्येति । स्वर्गकामकृतिसाध्यत्वस्येत्यर्थः, तत्साधनतया—स्वर्गसाधनतया । लाघ-

ष्यतावानित्याकारकः प्रथमं न बोधः, तत्कामकार्यत्वस्यान्वये प्रयोजकस्य तत्साधनतया ज्ञातत्वस्य तत्साधनत्वस्य वा पूर्वं यागेऽगृहीतत्वात्, साक्षात् स्वर्गसाधनत्वस्य तत्रासत्त्वात् स्वर्गपर्यन्तस्थायिस्वव्यापारवत्त्वस्य तादृशव्यापारानुपस्थित्या ग्रहासम्भवात्, 'स्वर्गकामः पचेते'त्यादावप्रामाण्यानुरोधेन उक्तरीत्या योग्यताधियः कारणत्वस्यावश्यकत्वात्, नित्यस्य कर्मणः फलाभावेन 'प्रत्यहं शुचिः सन्ध्यामुपासीते'त्यादिविधेरप्रामाण्यभिया इष्टसाधनत्वस्य विध्यर्थत्वाभावात्। अत एव स्वर्गकामनियोज्यताको नियोज्यतासम्बन्धेन स्वर्गकामीयो वा यागः कार्यतावान् इत्यपि नादिमो बोधः, स्वर्गकामस्य नियोज्यत्वं हि न तत्कृतिसाध्यत्वम् स्वर्गकामकार्य्यताविशिष्टे यागे लिङर्थकार्य्यत्वस्यान्वये निराकाङ्क्षत्वापत्तेः, नापि तदीयकृतिसाध्यत्वधीविशेष्यत्वम् 'स्वर्गकामः पचेते'त्यादेः प्रमाणतापत्तेः, परन्तु स्वर्गकामनिष्ठस्य स्वर्गसाधनताधीजन्यकार्य्यताज्ञानस्य विशेष्यत्वम्,

---

कृष्णकान्तीटीका।

वादाह-तत्साधनत्वस्येति। स्वर्गसाधनत्वस्येत्यर्थः। अगृहीतत्वादिति। एतन्मते अन्वयप्रयोजकरूपत्वं योग्यत्वम्, तदन्वयप्रयोजकत्वञ्च तदभावप्रयोजकाभावप्रतियोगित्वम्, घटेन जलमाहरेत्यादौ जलाहरणसाधनत्वान्वयप्रयोजकं छिद्रेतरत्वमिव स्वर्गकामकृतिसाध्यत्वाभावप्रयोजको य इष्टसाधनत्वाभावः तत्प्रतियोगीष्टसाधनत्वं तत्र योग्यत्वमिति भावः। कुत इत्याकाङ्क्षयामाह—साक्षादिति। व्यापारमद्वारीकृत्येति तदर्थः। ग्रहासम्भवादिति। तथा चेष्टसाधनत्वान्वययोग्यत्वस्य स्वर्गपर्यन्तस्थायिव्यापारत्वस्य ग्रहो न सम्भवति तादृशव्यापारस्यापूर्वस्य पूर्वमग्रहादिति भावः। ननूक्तयोग्यत्वज्ञानं न हेतुरित्याकाङ्क्षायामाह-स्वर्गकामः पचेतेत्यादि। आवश्यकत्वादिति। अन्यथा स्वर्गकामकृतिसाध्यत्वस्य पाकादावभावात् तादृशविधेः प्रामाण्यापत्तेः, अधुना च स्वर्गसाधनत्वस्य तत्रासत्त्वान्न तथेति भावः। ननु इष्टसाधनत्वस्य विध्यर्थत्वादेव तदप्रामाण्योपपत्तिरित्यत आह-नित्यस्येति। विध्यर्थत्वाभावादिति। तन्मत इत्यादिः, तैरर्थवादानां प्रामाण्यानुपगमेन सन्ध्योपासनाजन्यफलास्वीकारादिति भावः। अत एवेति। वक्ष्यमाणदोषादेवेत्यर्थः, हि-यस्मात्, तत्कृतिसाध्यत्वं—स्वर्गकामकृतिसाध्यत्वम्। निराकाङ्क्षत्वापत्तेरिति। उद्देश्यतावच्छेदकविधेययोरैक्यादिति भावः। प्रमाणतापत्तेरिति। योग्यताज्ञानस्य शाब्दबोध एव हेतुतया कृतिसाध्यत्वज्ञानसामान्ये इष्टसाधनत्वज्ञानस्यानपेक्षितत्वादिति भावः। परन्त्विति। स्वर्गकामनिष्ठा या स्वर्गसाधनत्वधीस्तज्जन्यं

तदन्वयप्रयोजकञ्च स्वर्गसाधनत्वं साक्षादसाधनस्य यागादेः स्वर्गपर्यन्तस्थायिव्यापारानुपस्थित्या परम्परासम्बन्धेन साधनत्वग्रहेण प्रथमं दुर्ग्रहमेवेति । तस्मात् कार्य्ये एव लिङः शक्तिः, अतस्तत्रैव धात्वर्थयागस्य स्वर्गकामनियोज्यकत्वस्य च युगपदन्वयात् यागस्य कार्य्यं स्वर्गकामनियोज्यताकं स्वर्गकामकृतिसाध्यं वेत्याकारक एव प्रथमं बोधः, स्वर्गकामनियोज्यताद्यन्वयप्रयोजकस्य साक्षात्स्वर्गसाधनत्वस्यैव शचीसम्पर्कादिके कार्य्ये पूर्वं गृहीतत्वात, उत्तरकालन्तु यागकार्य्यस्य स्वर्गकामकृतिसाध्यत्वं स्वर्गनियोज्यताकत्वं वा यागस्य तथात्वं विनाऽनुपपन्नमित्यनुपपत्तिधीसहकृतादुक्तवाक्याद् यागः स्वर्गकामस्य कृतिसाध्य इत्याकारकः स्वर्गकामनियोज्यताको यागः कृतिसाध्य इत्याकारको वा प्रवृत्त्यौपयिक औपादानिको बोधः, स्वर्गाव्यवहितप्राक्कालवृत्तिस्वव्यापारस्य पूर्वमुपस्थित्या स्वर्गकामनियोज्यत्वाद्यन्वयप्रयोजकस्य स्वर्गसाधनत्वस्य यागे सुग्रहत्वात् । न च 'तृप्तिकामो भुञ्जीते'त्यादिलौकिकस्थले लघुनि कार्य्यत्वे शक्तस्य लिङादेः 'स्वर्गकामो यजेते'त्याद्यलौकिकस्थले कार्य्यत्वविशिष्टे लक्षणैवाऽस्तु तावतैव स्वर्गकामनियोज्यतान्वययोग्यतासम्पत्तेरिति वाच्यम् । तथासति अपूर्वस्य ताद्रूप्येण विध्यनुभाव्यत्वानुपपत्तेः, कार्य्यत्वावच्छि-

---

कृष्णकान्तीटीका ।

यत्कार्य्यताज्ञानं तद्विशेष्यत्वमित्यर्थः-तदन्वयप्रयोजकञ्च स्वर्गसाधनत्वं, दुर्ग्रहमिति परेणान्वयः । उपसंहरति—तस्मादिति । तत्रैव—कार्ये एव, स्वर्गकामनियोज्यताकं—स्वर्गकामनिष्ठस्वर्गसाधनताधीजन्यकृतिसाध्यताज्ञानविशेष्यताकमित्यर्थः । लाघवादाह—स्वर्गकामकृतिसाध्यं वेति । ननु स्वर्गकामनियोज्यत्वान्वयप्रयोजकस्य साक्षात्स्वर्गसाधनत्वस्य प्रागग्रहात् कुतः प्रथमं तादृशबोध इत्यत आह—शचीसम्पर्कादिक इति । इन्द्राणीसहयोगे साक्षात्स्वर्गसाधनत्वस्य यथाकथञ्चिद्ग्रहसम्भवादिति भावः । तथात्वं विना—स्वर्गसाधनत्वं विनेत्यर्थः । इत्याकारक इति, प्रवृत्त्यौपयिक इति परेणान्वयः । औपादानिकबोधे स्वर्गकामनियोज्यत्वस्यापि भानसम्भवात् तदभिप्रायेण बोधप्रकारमाह—स्वर्गकामनियोज्यताक इति । तत्र हेतुमाह—स्वर्गाव्यवहितेति । शङ्कते—न चेति । कार्य्यत्वं—कृतिसाध्यत्वम् । एवमग्रेऽपि । अशक्तस्य लक्षणाया असम्भवात् शक्तस्येत्यन्तम् । समाधत्ते—तथासतीत्यादि । ताद्रूप्येण—कार्य्यत्वरूपेण । अनुपपत्तेरिति । ननु कार्य्यत्वविशिष्टे लक्षणाग्रहादेव तदु-

न्नशक्तत्वेन पदज्ञानस्य तदवच्छिन्नानुभावकत्वात् । न चैवं 'गङ्गायां घोषो दृश्यतामि'त्यादौ लक्ष्यस्य तीरादेरन्वयधीविषयत्वं न स्यात्, इष्टत्वात्, शक्तपदान्तरस्यैव तत्रोपस्थिततीरादिसाकाङ्क्षस्वशक्यार्थानुभावकत्वात्, पाकं करोतीत्यादिप्रत्यक्षे पाकादेरिव तत्रापि तीरादेस्तटस्थज्ञानविषयत्वेनैव विशेषणत्वात्, अत एव—न तावद्विशिष्टधीविषयस्यैव विशेषणत्वम्, क्वचित्तदभिनिवेशस्तु सामग्रीवशात्—इत्याचार्य्यैरप्युक्तम्, लौकिकलिङ्क्रियायां कार्य्यत्वानुभावकत्वे तु तादृशलिङ्त्वावच्छेदेन कार्य्यत्वे शक्त्यन्तरं वाच्यं, नो चेत्तत्रापि उक्तैव गतिः । अत एव 'लोके लिङ् लाक्षणिकी'ति गुरूणां सिद्धान्तः सङ्गच्छत—इत्याहुः ।

---

कृष्णकान्तीटीका ।

पपत्तिः सम्भवतीत्यत आह—कार्य्यत्वावच्छिन्नशक्तत्वेनेति । एवकारेण लाक्षणिकत्वव्यवच्छेदः । न चेति, न स्यादिति परेणान्वयः । ननु तदा तत्र कथमन्वयबोधः इत्याकाङ्क्षायामाह—शक्तपदान्तरस्येति । घोषादिपदस्येत्यर्थः । अनुभावकत्वादिति । तेषां मते पदजन्ययत्किञ्चित्पदार्थोपस्थितिसंवलितानां यथाकथञ्चित्सकलार्थोपस्थितीनामेवान्वयबोधहेतुत्वादिति भावः । अत एव तै'र्द्वारमि'त्यादौ 'पिधेही'ति पदं नाध्याह्रियते परन्तु पिधानरूपार्थ एवेति केचित् । तन्न, तीरादेर्विशेषणत्वसम्पादकोत्तरग्रन्थासङ्गतेराशङ्काया एवानवतारादिति । वस्तुतस्तादृशज्ञानं तीरांशे स्मरणात्मकमित्यत्रैव तात्पर्यम्, तेषां मते गुणगतजातेरभावेन ज्ञानद्वययौगपद्यस्वीकारे क्षत्यभावात् । ननु तीरादेः कथं शाब्दबोधे घोषांशे विशेषणत्वम् इत्यत आह—पाकमित्यादि । तटस्थज्ञानविषयत्वेनैव—स्वतन्त्रज्ञानविषयत्वेनैव । विशेषणत्वादिति । तैर्विभिन्नज्ञानविषययोरपि परस्परमाकाङ्क्षास्वीकारात्, आकांक्षा चातिरिक्तः पदार्थः, निरूप्यनिरूपकभावस्थलातिरिक्त इति भावः । अत एव तद्रूप्येणैव ज्ञानद्वयात्मकभ्रमज्ञानस्य प्रतिबन्धकत्वं तैः स्वीक्रियत इति तात्पर्यार्थः । एतादृशविशेषणत्वे आचार्यसंवादमप्याह—अत एवेति । तदभिनिवेशस्तु—स्थितिविशिष्टधीविषयत्वरूपविशेषणत्वन्तु इत्यर्थः । ननु तृप्तिकामो भुञ्जीतेत्यादौ लौकिकलिङ्प्रत्ययस्थले का गतिरित्यत आह—लौकिकलिङीति । तादृशेति । लौकिकेत्यर्थः । उक्तैव गतिरिति । गङ्गायां घोष इत्यादिस्थलोक्ता गतिरित्यर्थः । अत्र प्रमाणतया प्राचीनसंवादमप्याह—अत एवेति । लौकिकलिङः क्रियानिष्ठकार्यत्वे शक्त्यभावादेवेत्यर्थः । लाक्षणिकीति । शक्तिं विनाप्यन्वयबोधजनिकेति तदर्थः ।

नन्विष्टसाधनत्वस्य विध्यर्थत्वे 'प्रत्यहं सन्ध्यामुपासीते'त्यादिविधेरप्रामाण्यापत्तिः,

तच्चिन्त्यम्, इष्टसाधनत्वस्य विध्यर्थत्वादेव 'स्वर्गकामः पचेते'त्यादेरप्रामाण्यसम्पत्तावुक्तक्रमेण यागादौ स्वर्गकामकृतिसाध्यत्वस्य तत्कामनियोज्यताकत्वस्य वाऽन्वये स्वर्गसाधनत्वादेः प्रयोजकत्वे मानाभावात्, 'प्रत्यहं सन्ध्यामुपासीते'त्यादिनित्यविधेरपि 'सन्ध्यामुपासते ये तु' इत्यर्थवादेनोपस्थितब्रह्मलोकप्राप्त्यादिसाधनतावाचित्वात् विधिशेषीभूतार्थवादस्य गुरुणापि प्रामाण्योपगमात् । न च नित्यकर्मणां काम्यत्वे नित्यत्वविरोधः, न हि फलकामनां विना क्रियमाणत्वं नित्यत्वमप्रसिद्धेः प्रवृत्तिसामान्यं प्रत्येव काम्यसाधनताधियः कारणत्वात्, किन्तु यदकरणात् प्रत्यवायस्तत्त्वम्, तच्च काम्यत्वेऽप्यविरुद्धम्, नियोज्यान्वयस्य प्रामाणिकत्वेऽपि साक्षात्परम्परासाधारणस्वर्गसाधनतामात्रस्य तद्योग्यताविधया प्रागेव यागादौ सुग्रहत्वाच्च, स्वर्गादिनियतपूर्ववर्त्तित्वावच्छिन्नसम्बन्धवत्ताकान्यथासिद्ध्यनिरूपकधर्मवत्तारूपस्यातिरिक्तरूपस्य वा सामान्यतः स्वर्गधनत्वस्य व्यापारत्वाद्यघटितत्वेन तद्ग्रहे बाधकाभावादित्येषा दिक् ।

---

कृष्णकान्तीटीका ।

नित्यकर्म्मणः फलाभावादित्यत आह—प्रत्यहमिति । सन्ध्यामुपासते इत्यादीति ।

सन्ध्यामुपासते ये च नियतं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥

इत्यर्थवादोपस्थितेत्यर्थः । ननु गुरुमते अर्थवादस्याप्रामाण्यात् कथमेतत् ? विधिशेषीभूतार्थवादस्येति, आकांक्षोत्थाप्यविध्यात्मकार्थवादस्येत्यर्थः । अन्यथा 'भुंक्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डित' इत्यादेरप्यप्रामाण्यापत्तेरिति भावः । शंकते—न चेति । तत्त्वमिति । तथा च प्रत्यवायप्रयोजकाभावप्रतियोग्यनुष्ठानकत्वं नित्यत्वमिति पर्यवसितम् । तच्च–तादृशनित्यत्वञ्च । अविरुद्धमिति । अत एव दुर्गोत्सवादौ तदुभयोः समावेश इति भावः । ननु नियोज्यान्वयस्य गुरूणामनुभवसिद्धतया तन्मते कार्ये शक्तिरावश्यकीत्यत आह—नियोज्यान्वयस्येति । सुग्रहत्वाच्चेति । कथमित्याकाङ्क्षायामाह—स्वर्गादिनियतेति । स्वर्गादिनियतपूर्ववर्त्तिनी स्वावच्छिन्ननिरूपितसम्बन्धवत्ता यस्य, तत्त्वे सति अन्यथासिद्ध्यनिरूपको यो धर्मः यागत्वादिरूपः तद्वत्त्वं स्वर्गसाधनत्वमित्यर्थः । यदि चाव्यवहितपूर्वत्वस्य स्वस्वगर्भतया अननुगतत्वात् स्वर्गत्वावच्छिन्नसाधनत्वञ्चाप्रसिद्धमित्युच्यते, तदाप्याहातिरिक्तरूपस्य वेति । बाधकाभावादिति । तथा च कथं कार्ये लिङः शक्तिरिति भावः ।

'श्राद्धे भुञ्जीत भवान् , इह भुञ्जीथास्त्वमि'त्यादौ श्राद्धे भोजनाय निमन्त्रितो भवानित्यनुभवात् निमन्त्रितत्वमेव[४] तत्र लिङर्थः तच्च स्वकर्त्तव्यत्वप्रकारकधीजनकवाक्यप्रतिपाद्यत्वं, तदेकदेश एव च कर्त्तव्यत्वबोधे धात्वर्थो विशेष्यत्वेनान्वेति, तथा च श्राद्धभोजनधर्मिकस्वकर्त्तव्यत्वप्रकारकधीजनकवाक्यप्रतिपाद्यो भवानित्याकारस्तत्र बोधः, तादृशधीजनकस्य 'भवताऽत्र भोक्तव्यमि'त्यादिवाक्यस्य निमन्त्रणरूपतया भवदादेस्तत्प्रतिपाद्यत्वात् स्वपदस्य निरुक्तप्रतिपाद्यत्वाभिमतभवदादिपरत्वात् , अत एव 'यस्य प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रण'मिति वृद्धस्मरणात् निरुक्तधीजनकवाक्यमप्रत्याख्येयत्वेन विशेषणीयम्, तच्च प्रत्यवायजनकप्रत्याख्यानकत्वम् , श्राद्धमुपक्रम्य 'अनिन्दितेनामन्त्रितो नापगच्छे'दिति श्रुतेः। एवञ्च 'पुत्रोत्सवे भवान् भुञ्जीते'त्यादौ न निमन्त्रितत्वं लिङर्थः, तत्प्रत्याख्याने प्रत्यवायाश्रुतेः किन्त्वामन्त्रितत्वमेव(२), तच्च स्वकर्त्तव्यत्वप्रकारकधीजनकप्रत्याख्यानार्हवाक्यप्रतिपाद्यत्वम् , प्रत्याख्यानार्हत्वञ्च प्रत्यवायाजनकप्रत्याख्यानकत्वम् , 'यत्र प्रत्याख्याने कामचारस्तदामन्त्रणमिति' स्मृतेः, 'बालं युद्धात्तारयेस्त्वं जलाद्विप्रं समुद्धरे'रित्यादावप्युक्तरीत्यैवान्वयो द्रष्टव्यः।

'धेनुं दद्यास्त्वमस्मभ्य'मित्यत्र प्रार्थना [५]लिङर्थः, तच्च स्वसम्प्रदानकदानधर्मिकसम्बोध्यकर्त्तव्यत्वप्रकारकवक्त्रिच्छाविषयत्वम् ,तेन चैत्र-

---

कृष्णकान्तीटीका।

अत एवेति। तादृशवाक्यस्य निमन्त्रणरूपत्वादेवेत्यर्थः। तच्च—अप्रत्याख्येयत्वं च, प्रत्याख्यानस्य प्रत्यवायजनकत्वे श्रुतिं प्रमाणयति—नापगच्छेदिति। न प्रत्याख्यानं कुर्यादित्यर्थः। एवं च—तत्र तादृशविशेषणदाने च। तच्च—आमन्त्रितत्वं च। अत्र-प्राचीनसंवादं प्रमाणयति यत्रेति। उक्तरीत्यैवेति। आमन्त्रितत्वमेव यत्र लिङर्थस्तत्रेत्यर्थः। तथाच युद्धाद्वालकतारणधर्मिकजलाद्विप्रगमन ( समुद्धरण ? ) धर्मिकस्वकर्तव्यत्वप्रतिपाद्यो भवानिति तत्र बोध इति भावः।

तच्च—प्रार्थनञ्च, स्वसम्प्रदानकदानधर्मिका या स्वसम्बोध्यकर्तव्यत्वप्रकारिका स्वेच्छा तद्विषयत्वमित्यर्थः। स्वपदेन तादृशवाक्योच्चारयिता चैत्रादिर्धर्तव्यः। शाब्दबोधप्रकारमाह—तेनेति। स्वसम्बोध्यत्वन्तु स्वनिविष्टमित्यावेदयितुं युष्मदित्युक्तम्।

वक्तृकताद्दशवाक्यस्थले धेनुकर्मकचैत्रसम्प्रदानत्वावच्छिन्नधर्मिका या युष्मत्कर्त्तव्यत्वप्रकारिका चैत्रेच्छा तद्विशेष्यीभूतस्य दानस्यानुकूलकृतिमांस्त्वमित्याकारकस्तत्र बोधः ।

'भिक्षां देहि त्वमर्थिभ्य' इत्यादौ क्वचिल्लोटोऽपि निरुक्तप्रार्थनाऽर्थः, तत्र च भिक्षा भिक्षणीयं 'कृद्विहित' इति न्यायात् । 'ह्रदो यदि धूमवान् स्यादि'त्यादौ धातोर्निरूढलक्षणया भेदोऽर्थः, तदुत्तरलिङश्चाश्रयत्वम् [६], यदि शब्दस्तु लक्षणाया निरूढत्वसम्पत्तये, तेन धूमवद्भेदाश्रयतावान् ह्रद इत्यर्थः। 'धूमवानि'त्यत्र निपातार्थ इव धात्वर्थेऽपि भेदे प्रतियोगित्वसम्बन्धेन नामार्थस्य धूमवदादेः क्वचित् व्युत्पत्तिवैचित्र्येणान्वये क्षत्यभावात् । 'ह्रदो यदि धूमवानि'त्यादौ तु यद्यादिनिपातस्यैव भेदादिरर्थः । इत्थञ्च 'ह्रदो यदि धूमवान् स्यात् वह्निमान् स्यात्' इत्यत्रापि धूमवद्भिन्नो ह्रदो धूमव्यापकवह्निमद्भेदवानित्याकारको बोधः, 'स वह्निमान् , यो धूमवानि'त्यादौ 'यो धूमवान् स वह्निमानि'त्यादौ च यद्योगप्राथम्यादिवशादिव प्रकृतेऽपि स्याद्योगप्राथम्यादिवशात् धूमादिव्यापकतया वह्न्यादेर्भानसम्भवात्। अत एव 'ह्रदो यदि धूमवान् स्यात् घटवान् स्यादि'त्यादिको न प्रयोगः,

---

कृष्णकान्तीटीका।

कृद्विहित इति । कृद्विहितो भावो द्रव्यवत्प्रकाशत इति न्यायादित्यर्थः । तथा च चैत्रवक्तृकताद्दशवाक्यस्थले भिक्षणीयकार्यसंप्रदानकदानत्वावच्छिन्नधर्मिका या युष्मत्कर्तव्यत्वप्रकारिका चैत्रेच्छा तद्विशेष्यीभूतस्य दानस्यानुकूलकृतिमांस्त्वमित्याकारकस्तत्र बोधः। शाब्दबोधप्रकारमाह—तेनेति । ननु नामार्थधात्वर्थयोर्भेदान्वयस्याव्युत्पन्नतया कथं धात्वर्थे भेदे प्रतियोगितया नामार्थस्य धूमवदादेरन्वय इत्यत आह—निपातार्थ इवेति । तथा च तन्नियमघटकनाम्नि निपातभेदस्येव फलानुरोधेन तत्तद्धातुभेदस्यापि निवेशनीयत्वमित्यावेदनाय तदुक्तिरिति भावः । ननु यत्र धातुसमभिव्याहारो नास्ति तत्र का गतिरित्यत आह—ह्रदो यदीति । इत्थञ्च—भसधातोस्ताद्दशार्थे लक्षणास्वीकारे च। धूमव्यापकेति । वह्निपदस्य धूमव्यापकवह्नौ लक्षणेति भावः । ननु वह्निपदस्य ताद्दशवह्नौ लक्षणाया निरूढत्वसंपादकं किमित्याकांक्षायामाह—स वह्निमानिति । यद्योगस्थलमुक्त्वा प्राथम्यस्थलमाह—यो धूमवानित्यादि । प्रकृतेऽपि—ह्रदो यदि धूमवान् स्यात् वह्निमान् स्यात् इत्यत्रापि । अत एव—वह्निपदस्य धूमव्यापकवह्नौ लक्षणाया निरूढत्वादेवेत्यर्थः । ननु धूमवद्भेदाश्रयतावान् ह्रदो घटवद्भेदा-

घटादेर्धूमाद्यव्यापकत्वात् । ह्रदो यदि धूमवान् स्यात् यदि घटवान् स्यादित्याद्यर्थे तु तादृशप्रयोगो योग्य एव, तत्र धूमस्योद्देश्यकुक्षावनिक्षेपात् । यद्योगः प्राथम्यञ्च प्रत्येकमेव व्यापकताग्रहे तन्त्रं न तु यद्योगस्य प्राथम्यम्, 'स शूरः स च विक्रान्तो यस्त्वया देवि ! वीक्षित' इत्यादौ 'न षट्पदोऽसौ न जुगुञ्ज यः कलम्' इत्यादौ च विनापि यद्योगप्राथम्यं तन्मात्रादेव शौर्य्यादौ लक्ष्मीवीक्षितत्वादिव्यापकत्वग्रहात् । 'गुणत्वं यदि घटे स्यात् द्रव्ये स्यादि'त्यादौ तु धातोरत्यन्ताभाव एवार्थः, तदुत्तरलिङस्तु पूर्ववदाश्रयत्वम्, तथाच घटवृत्तित्वाभाववद्गुणत्वं घटवृत्तित्वव्यापकीभूतस्य द्रव्यवृत्तित्वस्याभाववदित्येवं तत्र बोधः ।

परे तु 'ह्रदो यदि धूमवान् स्यात् वह्निमान् स्यादि'त्यादौ तु प्रथमस्य स्याच्छब्दस्यापादकत्वं द्वितीयस्य चापत्तिरर्थः, तेन धूमवत्तापादकताकतादृशवह्निमत्तापत्तिविशेष्यो ह्रद इत्याकारकस्तत्र बोधः, यदिशब्दस्तु तादृशार्थतात्पर्य्यग्राहकः । 'यद्ययं धूमवान् वह्निमानपि स्यादि'त्यादौ तु यदिशब्दस्यैवापादकत्वमर्थ इत्याहुः ।

'यो ब्राह्मणायावगुरेत् तं शतेन यातया(य)दि'त्यादौ च "हेतु-

---

कृष्णकान्तीटीका ।

अयतावांश्चेत्यर्थे तादृशप्रयोगो युक्त एवेत्यत्रेष्टापत्तिमाह—ह्रदो यदीति । कुत इत्याकांक्षायामाह—तत्रेति । अनिक्षेपादिति । विधेयवाचकपदस्योद्देश्यतावच्छेदकव्यापकविधेय एव लाक्षणिकत्वादिति भावः । ननु स वह्निमान् यो धूमवान् इति निरुक्तस्थले यद्योगस्य प्राथम्याभावात् कुतस्तत्र तस्य निरूढत्वसम्पादकत्वमुक्तमित्यत आह—यद्योग इति । तन्त्रं नियामकमित्यर्थः । एवकारव्यवच्छेद्यं स्वयमेवाह—न त्विति । ननु किं राज्ञामाज्ञा इत्यतः प्रमाणमाह—स शूर इत्यादि । तन्मात्रादेवेति । यद्योगमात्रादेवेत्यर्थः । व्यापकत्वग्रहादिति । एवं षट्पदभिन्नत्वादौ कलगुञ्जनकर्तृत्वाभावव्यापकत्वग्रहादित्यपि बोध्यम् । व्युत्पत्तिवैशद्याय स्थलान्तरमपि दर्शयति—गुणत्वं यदीति । शाब्दबोधप्रकारमाह—तथा चेति ।

मतान्तरमाह—परे त्विति । ननु यदिशब्दस्य वैयर्थ्यमित्यत आह—यदिशब्दस्त्विति। ननु यत्र स्याच्छब्दो नास्ति तत्र का गतिरित्यत आह—यद्ययमिति । आहुरित्यस्वरससूचनाय, स च स्याच्छब्दस्यातिरिक्तस्याभावात् अक्रियापदस्य तादृशार्थकत्वं न सम्भवतीति ।

हेतुमतोर्लिङ्(३।३।१५६)इत्यनुशासनात् यः शतयातनाहेतुब्राह्मणावगोरणवान् तदीयशतयातनं ब्राह्मणावगोरणजन्यम् इत्याकारको बोधः। ब्राह्मणायावगोरणं हन्तुमुद्यमः। पौर्वापर्यमात्रं तत्र लिङर्थः न हेतुहेतुमद्भावः, पश्चात्तस्य कल्प्यत्वात्, अन्यथा दुरितापूर्वस्य वाच्यत्वापत्तेरिति तु प्राभाकराः। 'यन्नाम्ना पातयेत् पिण्डं तं नयेद् ब्रह्मशाश्वत'-मित्यादावप्युक्तरीत्याऽन्वयः।

'ऋतौ स्वदारानुपेया'दित्यादौ च स्मृतौ न स्वदारगमनादेरिष्टसाधनत्वे विधेस्तात्पर्यम्, दारगमनादिलौकिकप्रमाणावगतेष्टसाधनताकत्वेनाविधेयत्वात्, प्रमाणान्तराप्राप्तप्रापकस्यैव श्रौतविधित्वात्, किन्त्वयोगव्यवच्छेदपर्य्यवसिते नियमे[७],स च प्रत्यवायजनकीभूताभावप्रतियोगित्वरूपः, तेन तदेकदेश एवाभावे ऋतुत्वादिकालस्यावच्छेदकत्वेनान्वयात् ऋतुकालावच्छेद्यत्वविशिष्टस्य प्रत्यवायजनकीभूताभावस्य प्रतियोगिस्वदारगमनमिकारकस्तत्र बोधः। यद्वा प्रत्यवायहेतुत्वमभावश्च द्वयं तत्र लिङर्थस्तेन प्रतियोगिविधया धात्वर्थस्यावच्छेद्यत्वेन च कालस्यान्वयिनि अभावे लिङा प्रत्यवायहेतुत्वस्य बोधनात् ऋतुकालावच्छेद्यः स्वदारगमनाभावः प्रत्यवायहेतुरित्याकार एव तत्र बोधः। न च येषां दाराणां गमनमलीकं तेषामृतावगमने प्रत्यवायो न स्यात्, उक्तवाक्यात्तदलाभादिति वाच्यम्। स्वदारपदस्य स्वदारभिन्नो यः स्वसमानकालीनस्तदन्यस्त्रीपरतया उक्तस्मृत्यैव

---

कृष्णकान्तोका।

प्रभाकरमतमुपदर्शयति पौर्वापर्यमात्रमिति। अन्यथा—हेतुहेतुमद्भावस्य लिङर्थत्वे। वाच्यत्वापत्तेरिति। शतयातनादौ अवगोरणस्य साक्षाद्धेतुत्वासम्भवेन दुरदृष्टेऽपि लिङः शक्तिकल्पनापत्तेरिति भावः। उक्तरीत्येति। अत्रापि लिङो हेतुहेतुमद्भावोऽर्थं इति भावः।

श्रौतविधित्वादिति। 'अप्राप्तप्रापको विधिरि'त्यभियुक्तस्मृतेरिति भावः। नियम इति। विधेस्तात्पर्यमिति पूर्वेणान्वयः। स च—नियमश्च। ननूक्तार्थे स्वदारगमनप्रतियोगिकाभावस्यैव प्रत्यवायजनकत्वलाभाभावात् तदानीं स्वदारगमने प्रवृत्तिर्न स्यात् स्वदारगमनसत्त्वेऽपि तत्प्रतियोगिकाभावसत्त्वे बाधकाभावादित्यत आह—यद्वेति। अलीकेन चेति, वाच्यमिति परेणान्वयः। समाधत्ते स्वदारपदस्येति।

तत्र स्वदारर्तुकालावच्छेद्यस्य स्वदारभिन्नस्वसमानकालीनेतरस्त्रीगमनाभावस्य प्रत्यवायहेतुत्वबोधनात्, स्वसमानकालीनस्त्रीगमन एव तादृशगमनत्वस्य सुप्रसिद्धत्वात्। एतेन श्राद्धदिने 'पितृशेषं भुञ्जीते'त्यादिकोऽपि नियमविधिर्व्याख्यातः।

'पञ्च पञ्चनखान् भुञ्जीते'त्यादिलिङोऽपि नेष्टसाधनत्वे तात्पर्य्यं भोजनस्य रागप्राप्तत्वेनाविधेयत्वात्, नापि प्रागुक्तनियमे पञ्चनखानां पञ्चानामभोजनस्य प्रत्यवायहेतुत्वे मानाभावात्, 'ऋतावुपेयात् स्वां भार्य्यामन्यथा भ्रूणहा भवे'दित्यादिनिन्दार्थवादबलात् ऋतौ स्वदारगमनाद्यभावस्य दुरितहेतुत्वव्यवस्थित्यैव तद्विधेर्नियमपरत्वकल्पनात्, किन्त्वन्ययोगव्यवच्छेदपर्य्यवसन्नायां परिसंख्यायाम्[८]। सा च यद्यपि न शशादिपञ्चविधान् पञ्चनखानेव भुञ्जीतेत्याकारा पञ्चनखभिन्नस्य ओदनादेर्भोजनस्य निषिद्धत्वे प्रामाणाभावात्तथापि पञ्चैव पञ्चनखान् भुञ्जीतेत्याकारा, तेन शशादिपञ्चभिन्नानां पञ्चनखानां भोजनं प्रत्यवायहेतुरित्येव तत्र वाक्यार्थ इति, तत्रत्यलिङा प्रत्यवायहेतुत्वमात्रं प्रत्याय्यते प्राथमिकपञ्चपदस्य लक्षणया शशादिपञ्चभिन्नार्थकत्वात्। ननूक्तलिङा परिसंख्यया पञ्चविधान्यपञ्चनखानां भोजनस्य प्रत्यवायहेतुत्वबोधने पञ्चपदस्यापि लक्षणापत्तिरतः शशादिपञ्चपञ्चनखभोजनाभावस्यैव प्रत्यवायहेतुत्वं बोधयन्नियमविधिरेवायमुचितः, भोजनतदभावयोरेकस्यापि प्रमाणान्तरेण प्रत्यवायहेतुत्वस्याक्लृप्तत्वादिति

---

कृष्णकान्तीटीका।

एतेन—नियमविधेरेतादृशार्थकत्वेन, व्याख्यात इति परेणान्वयः। श्राद्धदिनावच्छेद्यत्वविशिष्टस्य प्रत्यवायजनकीभूताभावस्य प्रतियोगिपितृशेषभोजनमित्याकारः, श्राद्धदिनावच्छेद्यः पितृशेषभोजनाभावः प्रत्यवायहेतुरित्याकारो वा तत्र बोध इति भावः।

परिसंख्यास्थलमाह—पञ्च पञ्चेत्यादि। मानाभावादिति। ननु ऋतुकाले भार्य्यागमनाभावस्यापि प्रत्यवायजनकत्वे प्रमाणाभाव इत्यत आह—ऋतावुपेयादिति। परिसंख्यायामिति;लिङस्तात्पर्यमिति पूर्वेणान्वयः, सा च—परिसंख्या च। पञ्चनखानेव भुञ्जीत—पञ्चविधपञ्चनखातिरिक्तं न भुञ्जीत इत्यर्थः। शाब्दबोधप्रकारमाह—तेनेति। कथमित्याकांक्षायामाह—तत्रत्यलिङेति। शङ्कते नन्विति। पञ्चपदस्यापीत्यपिकाराल्लिङः परिग्रहः, तथा च न केवलं लिङः पञ्चपदस्यापीत्यर्थः। ननु अप्राप्तप्रापकत्वाभावादेव न तस्य नियमविधिपरत्वसम्भव इत्यत आह—भोजनतदभावयो·

चेन्न । प्रोक्तविधेर्नियमपरत्वे पञ्चनखपदस्य व्यर्थत्वापत्तेः, 'शशादिपञ्च भुञ्जीत' इत्यत्रैव पञ्चभोजनाभावस्य प्रत्यवायहेतुत्वस्यावगतेः सम्भवात्,

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतो दतः ॥

इति मनुवचने ( ५।१४ ) पञ्चनखेष्विति निर्द्धारणसप्तम्या शल्यकादिपञ्चभिन्नपञ्चनखानां भक्षणस्य प्रत्यवायहेतुतायाः क्लृप्तत्वाच्च, श्वाविधमित्यस्य शल्यकविशेषणत्वात् । एवञ्च 'याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जये'दित्यादावपि लिङः परिसंख्यैवार्थस्तेन याजनादिभिन्नैर्ब्राह्मणस्य धनार्जनं प्रत्यवायहेतुरिति वाक्यार्थः, 'न कृष्याद्यैरनापन्नो ब्राह्मणो धनमर्जये'दित्यादिवचनैरुपायान्तरेण विप्राणां धनार्जनस्य प्रत्यवायहेतुत्वस्य स्फुटत्वात्, न तु याजनाद्यैर्ब्राह्मणो धनमर्जयेदेव इति नियमविधिर्याजनादिना धनानर्जने ब्राह्मणस्य प्रत्यवायाश्रुतेः ॥ १०१ ॥

लङं लक्षयति—

**या स्मयोगे विना धातोः शबन्तस्यार्थधर्मिके ।**
**अतीतत्वग्रहे हेतुस्तादृशी तिङ् लङुच्यते ॥ १०२ ॥**

---

कृष्णकान्तीटीका ।

रिति । समाधत्ते चेन्नेति । व्यर्थत्वापत्तेरिति । कुत इत्याकांक्षायामाह—शशादीति । ननु पञ्चनखपदं तत्र तात्पर्यग्राहकमित्यत आह—श्वाविधमिति । सकण्टकसकण्टकभेदेन द्विविधशल्यमित्यर्थः । शल्यकमिति निष्कण्टकतालाभाय । श्वाविधमिति । कुक्कुरसदृशमित्यर्थः । अनुष्ट्रांश्चैकतो दत इति । उष्ट्रभिन्नानेकदन्तपङ्क्तिमत इत्यर्थः । क्लृप्तत्वादिति । प्रमाणान्तरसिद्धत्वाच्चेत्यर्थः । तथा च सकलमनुवचनस्यापि तादृशश्रुतिमूलकतया तादृशश्रुतेः परिसंख्यापरत्वमावश्यकमिति भावः । ननु श्वाविधशब्देन कुक्कुरसदृशजन्त्वन्तरस्य बोधात् कुतः पञ्चत्वमित्यत आह—श्वाविधमित्यस्येति । एवञ्च—उक्तलिङः परिसंख्यापरत्वे च, नियमपरतयोपपादनासम्भवे चेति यावत् । शाब्दबोधप्रकारमाह—तेनेति । ननु तादृशोपार्जनस्य प्रत्यवायहेतुत्वे किं मानमित्यत आह—न कृष्याद्यैरिति । अनापन्नः—आपच्छून्यः । निरुक्तविधेर्नियमपरत्वं न सम्भवतीत्याह—न त्विति । कुत इत्याकांक्षायामाह—याजनादिनेति । इति विधिविचारः ॥ १०१ ॥

लङ्लक्षणप्रतिपादिकां कारिकामवतारयति लङं लक्षयतीति । ननु कारि-

स्मशब्दस्य योगं विना शबन्तस्य धातोरर्थेऽतीतत्वस्यान्वयधीहेतुर्यादृशी तिङ् तादृशी तिङ् लङ् उच्यते। "सुखादिभ्यस्त्विनेव स्यादि"-त्यत्रेव द्विरुक्तेरनित्यत्वम्। लङोच्यते इति वा पाठः। तिबादिश्च स्मशब्दोपसन्धानं विना धातोरर्थे नातीतत्वं बोधयति। 'पपाचे'त्यादौ लिडादिरतीतत्वं बोधयन्नपि न शबन्तस्य,'अपचदि'त्यादौ तु विनापि स्मशब्दयोगं लङस्तथात्वम्। 'अदीव्यदि'त्यादौ शबन्तस्य धातोरर्थे स्वार्थमबोधयन्नपि दिवादिस्तत्सजातीय एव। 'तण्डुलमपचत्'इत्यादावमो निरुक्ततत्सजातीयत्वेऽपि न तिङ्त्वमतस्तद्व्युदासः। प्रकृत्यर्थेऽनुमतत्वाद्यतनत्वाद्यनाकाङ्क्षितत्वेन विशेषणाच्च 'पच्यतां, पच्येतां, पचतामि'त्यादा'वपक्तां, अपक्षातमि'त्यादौ च लोटो लुङस्तामातांप्रभृतौ न प्रसङ्गः।

---

कृष्णकान्तीटीका

कार्यां लङुच्यते इत्यत्र कुतो न द्विर्भावः "ङणना ह्रस्वोपधाः स्वरे द्वि"रित्यनुशासनादित्यत आह–'सुखादिभ्यस्त्विनेव स्यात्' इति। इदमुपलक्षणं "यणाशिषोर्ये" "सनन्ताशंसिभिक्षामुः" "चण्परोक्षाचेक्रीयितसनन्तेषु" इत्यादिष्वपि ज्ञेयम्। ननु सूत्रे द्विर्भावस्यानित्यत्वेऽपि अत्रानित्यत्वे किं मानमित्यत आह––लङोच्यत इति वा पाठ इति। लङा इत्यानुपूर्व्या उच्यते इत्यर्थः। तथा च स्मशब्दसमभिव्याहाराभावविशिष्टयादृशानुपूर्वीप्रकारकज्ञानत्वं शबन्तधात्वर्थधर्मिकातीतत्वप्रकारकशाब्दधीजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लङ्त्वमिति पर्यवसितमिति भावः। स्मशब्दसमभिव्याहाराभावनिवेशव्यावृत्तिमाह––तिबादिरिति। तथा च तदनिवेशे तिबादावतिव्याप्तिरिति भावः। शबन्तत्वनिवेशव्यावृत्तिमाह––पपाचेत्यादि। बोधयन्नपीति अतीतत्वमिति पूर्वेणान्वयः। तथा च लिडादावतिव्याप्तिवारणाय शबन्तनिवेश इति भावः। लक्ष्ये लक्षणं सङ्गमयति––अपचदित्यादौ त्विति। तथात्वं-अतीतत्वग्रहहेतुत्वम्। स्वरूपयोग्यत्वनिवेशव्यावृत्तिमाह–अदीव्यदिति। अबोधयन्नपि-बोधानुपधायकोऽपि। तत्सजातीय एव–तादृशबोधजनकतावच्छेदकानुपूर्वीमानेव, तथा च फलोपधायकतानिवेशे तत्राव्याप्तिः स्यादिति स्वरूपयोग्यत्वं निवेशितमिति भावः। प्रत्ययत्वमुपेक्ष्य तिङ्त्वनिवेशव्यावृत्तिमाह––तण्डुलमपचदित्यादाविति। निरुक्ततत्सजातीयत्वेऽपि–तादृशबोस्वरूपयोग्यत्वेऽपीत्यर्थः। ननु लोट्–लुङोस्तामातांप्रभृतावतिव्याप्तिः समानानुपूर्वीकत्वादित्यत आह––प्रकृत्यर्थ इति। तथा च प्रकृत्यर्थनिष्ठं यदनुमतत्वं अद्यतनत्वञ्च तदनाकांक्षत्वस्य सामानाधिकरण्यसम्बन्धेन लक्षणविशेषणान्नातिव्याप्तिरिति भावः। प्रभृताविति प्रभृतिपदेन 'तं–त' परिग्रहः।

अत्र 'अपचदि'त्यादौ लङोऽतीतः काल इव तन्निष्ठं ह्यस्तनत्वमप्यर्थः, तच्च पूर्वदिनवृत्तित्वमिति कौमाराः । ह्यस्तनत्वं लङो नार्थः किन्त्वद्य-तनाभिन्नत्वम् "अनद्यतने लङि"ति [ ३।२।१११ ] पाणिन्यनुशिष्टेरि-त्यपरे । तथा च वर्त्तमानध्वंसप्रतियोगिपूर्वदिनवृत्तिपाककृतिमान्, तादृ-शप्रतियोग्यनद्यतनकालवृत्तिपाककृतिमान् इति वा तत्र बोधः । प्रायि-कश्चेदम्, तेन ह्यस्तनत्वादिशून्येऽपि काले क्वचिल्लङादेः प्रयोगाः । 'ह्योऽपचदि'त्यादौ ह्यःपदाख्याताभ्यामेकमेव निरुक्तं ह्यस्तनत्वं बोध्यते, सम्भेदन्यायात्, अन्यथा 'पक्वा,पचती'त्यत्रेव निराकाङ्क्षतापत्तेः ॥१०२॥

लुङं लक्षयति—

**हन्तेः कृतवधेरर्थे याऽतीतत्वस्य बोधिका ।**
**सिजन्तस्याथ वा धातोस्तादृशी तिङ् लुङोच्यते १०३**

कृतवध्यादेशस्य हन्तेरर्थे किंवा सिजन्तस्य धातोरर्थे याऽतीत-त्वस्य बोधिका तादृशी तिङ् लुङा लुङ्शब्देनोच्यते । 'जघान, हन्ति-स्म' इत्यादौ लिङ्लङादिको हन्तेरर्थेऽतीतत्वस्य बोधकोऽपि न कृतव-

---

कृष्णकान्तीटीका ।

प्रकारान्तरेणैतदतिव्याप्तिं वारयतां मतमाह—अत्रापचदित्यादाविति । तच्च—ह्यस्तनत्वं च । मतान्तरमाह—ह्यस्तनत्वं लङो नार्थ इति । परमतद्वये क्रमेण बोध-द्वयमाह—तथा चेति । नन्वतीतसामान्येऽपि लङः प्रयोगादिदमयुक्तमित्यत आह—प्रायिकश्चेदमिति । लङादेः प्रयोगा इति । 'सर्वे एवाहनन् पृथगि'त्यादावित्या-दिः । ननु ह्योऽपचदित्यादौ ह्यःशब्देन ह्यस्तनत्वबोधात् पुनरुक्तिरित्यत आह—ह्योऽप-चदित्यदाविति । सम्भेदन्यायादिति । "सम्भेदे नान्यतरवैयर्थ्यमिति" न्यायादि-त्यर्थः । तदर्थस्तु सम्भेदे—एकार्थकपदद्वयसमवधाने इत्यर्थः । अन्यथा—ह्यस्तनत्वद्वय-भाने, निराकाङ्क्षत्वापत्तेरिति । उद्देश्यतावच्छेदकविधेययोरैक्यादिति भावः ॥१०२॥

लुङ्लक्षणप्रतिपादिकां कारिकामवतारयति लुङं लक्षयतीति । विवृणोति—कृत-वध्यादेशस्येति । लाघवादाह—किं वेति । तथा च यादृशानुपूर्वीप्रकारकज्ञान-त्वं कृतवध्यादेशहन्त्यर्थधर्मिकस्य सिजन्तधात्वर्थधर्मिकस्य वाऽतीतत्वप्रकारकबोधस्य जनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लुङ्त्वमिति पर्यवसितम् । कारिकास्थलुङा इति तृतीयासङ्गमनार्थमाह—लुङा लुङ्शब्देनेति । कृतवध्यादेशत्वनिवेशव्यावृत्ति-

ध्यादेशस्य, न वा सिजन्तस्य, 'अवधीत्, अवधिष्टां, अवधिषुरि'त्यादौ तु लुङ्मात्रम्(१)।तथा 'वध्यात्,'वध्यास्तां, वध्यासु'रित्यादौ कृतवध्यादेशस्य तस्यार्थे स्वार्थानुभाविकापि आशीर्नातीतत्वस्य बोधिका। अत्राप्यनुमतत्वह्यस्तनत्वाद्यनाकाङ्क्षितत्वेन विशेषणात् न 'पच्यतां, अपचत्, अपचता'मित्यादौ लोडाद्यतिप्रसङ्गः। अत्र 'अपाक्षीदि'त्यादौ अतीतः काल इव तन्निष्ठमद्यतनत्वमपि लुङामर्थः। तेन वर्त्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमान् इत्येवं तत्र बोधः, रीतिरुक्तैव ॥ १०३ ॥

लिटं लक्षयति—

**द्विरुक्तभिन्नधात्वर्थे स्वार्थस्यान्वयबोधने ।**
**या न योग्या तादृशी तिङ् लिट्पदेनाभिधीयते ॥१०४॥**

'आशिश्रियत्,अदुद्रुवदित्यादौ' द्विरुक्तस्यैव, 'अपाक्षीदि'त्यादौ त-

कृष्णकान्तोटीका।

माह—जघान हन्तिस्म इत्यादाविति। लक्षणान्तरेऽप्येतद्दोषं वारयति—न वेति। लक्ष्ये लक्षणं सङ्गमयति—अवधीदिति। अतीतत्वनिवेशव्यावृत्तिमाह—वध्यादित्यादि। न च परलक्षणेऽतीतत्वप्रकारकत्वनिवेशनमनर्थकं सिजन्तधात्वर्थविषयकान्वयबोधजनकत्वस्यैव सम्यक्त्वादिति वाच्यम्। तल्लक्षणे तस्यानिवेशेऽपि क्षत्यभावात्, ग्रन्थकर्तुर्व्यावृत्तिदानस्य पूर्वलक्षणाभिप्रायकत्वादित्यतोऽपि च लाघवात् परलक्षणाभिधानमिति। न च लक्षणद्वये एव कथं तिङ्त्वनिवेश इति वाच्यम्। शत्रुमवधीरित्यादौ अमादायतिव्याप्त्यापत्तेः। ननु एतल्लक्षणद्वयस्यापि लोड्लङोस्तांप्रभृतावतिव्याप्तिः, समानानुपूर्वीकत्वादित्यत आह—अत्रापीति। परमतमुपदर्शयन्नाह—अत्रेति, रीतिरुक्तैवेति परेणान्वयः। कौमारमते शाब्दबोधप्रकारमाह—तेनेति। रीति रुक्तैवेति प्रायिकञ्चेदम्, तेनाद्यतनत्वादिशून्येऽपि क्वचित् लुङादि-'अभून्नृपो विबुधसखः परन्तप' इत्यादौ, अद्यापाक्षीदित्यादौ अद्यपदाख्यातपदाभ्यामेवाद्यतनत्वं बोध्यते "सम्भेदे नान्यतरवैयर्थ्य"मि"ति न्यायादिति रीतिरित्यर्थः ॥ १०३ ॥

लिड्लक्षणप्रतिपादिकां कारिकामवतारयति—लिटं लक्षयतीति। एषा तु कारिका सुगमत्वान्न विवृता। यादृशानुपूर्वीप्रकारकज्ञानत्वं द्विरुक्तान्यधर्मिकस्वार्थप्रकारकान्वयबोधजनकतानवच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लिट्त्वमिति पर्यवसितार्थो बोद्धव्यः। ननु अभावद्वयनिवेशनं व्यर्थं द्विरुक्तधात्वर्थधर्मिकस्वार्थप्रकारकबोधजनकत्वस्यवसम्यक्त्वादित्यत आह—अशिश्रियदिति। लुङादय इत्यादिना लङ्परिग्रहः,

(१) अतीतार्थत्वबोधक इति पूर्वेणान्वयो बोध्यः।

दन्यस्यापि धातोरर्थे लुङादयः स्वार्थान्वयबोधं जनयन्ति, लिटस्तु 'जघान, जघ्नतुरि'त्यादौ द्विरुक्तस्यैव धातोः स्वार्थे । 'पिपक्षति, पापच्यते' इत्यादौ सनादयस्तादृशा अपि न तिङः । अत्रापि प्रकृत्यर्थे वर्त्तमानत्वाद्यनाकाङ्क्षत्वेन विशेषणात् 'पचे, पचावहे, पचाव' इत्यादौ न लडाद्यतिप्रसङ्गः ॥ १०४ ॥

'कासाञ्चक्रे, लोलूयामास, ईक्षाम्बभूव' इत्यादावाम इव कृञादेरप्यनुप्रयुक्तस्य पदसाधुतामात्रपरत्वादसम्भवापत्तेरन्यथा निर्वक्ति—

द्विरुक्तस्य यजेरर्थे चकास्तेराम्युतस्य वा ।
या स्वार्थस्यान्वये हेतुः सा वा तिङ्कथ्यते लिटा ॥१०५॥

'जुहोती'त्यादौ द्विरुक्तस्य धातोरर्थे स्वार्थ(स्य) बोधकोऽपि लडादिर्न यजेरर्थे । 'चकास्ती'त्यादौ चकासधातोरर्थे तादृशोऽपि नाऽऽमन्तस्य तस्य ।

---

कृष्णकान्तीटीका ।

तस्या अपि अजुहोदित्यादौ तादृशबोधजनकत्वात् । लडादावतिव्याप्तिस्तु स्मशब्दयोगं विना अतीतत्वप्रकारकत्वनिवेशेनापि शक्यवारणेति भावः । लक्ष्ये लक्षणं सङ्गमयति लिटस्त्विवति । स्वार्थे इति, स्वार्थान्वयबोधं जनयन्तीति पूर्वेणान्वयः । तिङ्त्वनिवेशव्यावृत्तिमाह पिपक्षतीत्यादि । तादृशा अपि—द्विरुक्तान्यधात्वर्थधर्मिकस्वार्थान्वयावबोधका अपि । नन्वेतल्लक्षणस्यापि लडादेः "द" "वहे" प्रभृतावतिव्याप्तिरित्यत आह अत्रापीत्यादि । प्रकृत्यर्थ इति । अर्थस्तूक्तप्रायः(१) ॥१०४॥

लिटो लक्षणान्तरप्रतिपादिकां कारिकामवतारयितुं भूमिकामाह—काशाञ्चक्र इत्यादि । पदसाधुतामात्रपरत्वादिति । तथा च द्विरुक्तभिन्नधात्वर्थान्वयबोधजनकत्वमेतेन प्रतिपादितमिति(२) भावः । लिटा—लिट्शब्देनेत्यर्थः । तथा चद्विरुक्तयजधात्वर्थधर्मिकस्य आमन्तचकासधात्वर्थधर्मिकस्य वा स्वार्थप्रकारकान्वयबोधस्य जनकतावच्छेदकं यादृशानुपूर्वीप्रकारकज्ञानत्वं तादृशानुपूर्वीमत्तिङ्त्वं लिट्त्वमिति पर्यवसितम् । पूर्वलक्षणे यजधातुनिवेशव्यावृत्तिमाह—जुहोतीत्यादाविति । यजेरर्थ इति, स्वार्थस्य बोधक इति योजना । परलक्षणे आमन्तत्वनिवेशव्यावृत्तिमाह—चकास्तीत्यादाविति । तादृशोऽपि—स्वार्थबोधकोऽपि, लडादिरिति पूर्वेणान्वयः, क्वचित् 'तादृश्यपी'ति पाठः, स च न सन्दर्भसिद्धः, लडित्यस्याध्याहार्यत्वापत्तेः । न

---

(१) चुल्लीस्थाल्यारोपणादिचुल्ल्यवरोहणान्तः क्रियाकलापरूप इत्यर्थः ।

(२) तथा च कासाञ्चक्रे इत्यादौ लक्षणागमनादव्याप्तिरिति भावः । 'जघान' इत्यादौ लक्षणगमनादसंभवस्तु जगदीशोक्तो विभावनीयः ।

'मनश्चचाल, सुरभिभाग आजगाम' इत्यादावतीतः काल इव धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः, तच्चातीन्द्रियत्वम्, तेनातीतकालवृत्त्यतीन्द्रियचलनवन्मन इत्याद्याकारकस्तत्र बोधः। 'चैत्रश्चारु पपाच' इत्यादौ तु लिडुपस्थाप्यस्यापि परोक्षत्वस्य न पाकादावन्वयोऽयोग्यत्वात् । एतेन 'व्यातेने किरणावलीसमुदयन्' इत्यादि व्याख्यातम् । शेषं पूर्ववत् ॥१०५॥

लुटं आशीर्लिङञ्च क्रमेण लक्षयति—

**धात्वर्थे श्वस्तनत्वस्य बोधिका तिङ् लुडुच्यते ।**
**आशीर्लिङाशंसनस्य भावित्वस्य च बोधिका ॥१०६॥**

'श्वः पक्ष्यती'त्यादौ धात्वर्थे श्वस्तनत्वस्य बोधकमपि श्वःपदं न

---

कृष्णकान्तीटीका ।

च लडेवादिर्यस्येति व्युपत्त्या लड़ादिरिति स्त्रीलिङ्गमिति वाच्यम् । तथासति स्वार्थबोधकोऽपीति पूर्वग्रन्थासङ्गतेः, तत्र स्वार्थबोधिकापीति पाठकल्पने तु न वयं विवदामह इति । तस्य—चकास्तेरिति योजना । अतीन्द्रियकर्तृकस्थले परोक्षत्वमपि लिटोऽर्थ इत्याह—मनश्चचाल इत्यादि । सुरभिभागः—सुरभेरंशः । ननु किन्नाम परोक्षत्वमित्यत आह—तच्चेति । परोक्षत्वञ्चेत्यर्थः । अतीन्द्रियत्वमिति । 'अक्षाणां परं परोक्षमि'ति शाब्दिकस्मृतेरिति भावः । मन इति । इदमुपलक्षणम्, अतीन्द्रियागमनवान् सुरभेरंश इत्यपि बोध्यम् । अयोग्यत्वादिति । चैत्रपाकस्यातीन्द्रियत्वाभावादिति भावः । एतेन—परोक्षत्वस्यासार्वत्रिकत्वेन, व्याख्यातमिति परेणान्वयः । शेषं पूर्ववदिति । प्रकृत्यर्थनिष्ठवर्तमानत्वाधनाकाङ्क्षत्वेन विशेषणात् पचे पचावहे इत्यादौ न लड़ाद्यतिप्रसङ्ग इत्यादिकं पूर्ववदित्यर्थः । केचित्—प्रायिकञ्चेदं इत्यादिकम्—इत्याहुः । तन्मन्दम्, परोक्षत्वभानस्यासार्वत्रिकत्वस्य स्वयमुक्तत्वेन पुनरुक्तत्वापत्तेरिति ॥ १०५ ॥

लुड्लक्षणमाशीर्लिङ्लक्षणञ्चाभिधातुं भूमिकामाह—लुटमित्यादिना । तथा च यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकश्वस्तनत्वप्रकारकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं श्वस्तनत्वमिति पर्यवसितम्, एवं यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकस्याशंसनप्रकारकस्य भावित्वप्रकारकस्य च बोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वमाशीर्लिङ्त्वमिति पर्यवसितम् । लुड्लक्षणे तिङ्त्वनिवेशव्यावृत्तिमाह—श्वः पक्ष्य.ीत्यादाविति । न तिङिति । प्रत्ययस्य विभक्तित्वस्य वा निवेश एतद्दोषस्य वारणसम्भवेऽपि ओदनं श्वः पक्ष्यतीत्यादौ अमादावतिव्याप्तिवारणाय तिङ्त्वनिवेशनं बोध्यम् । ननु लुडादेरपि धात्वर्थश्वस्तनत्वबोध-

तिङ्, लुडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति न श्वस्तनत्वमपि । 'जीवतु भवानि'त्यादौ तु तुवादिकं आशंसनीयत्वस्य । बोधकमपि न भावित्वस्य, बोधकोऽपि लुडादिर्नाशंसनीयत्वस्य 'भूयात् भूयास्तामि'त्यादौ पुनरष्टादशैवाशीर्लिङः प्रकृत्यर्थस्याशंसां भावित्वञ्चानुभावयन्ति ।

अथ पाकगोचरैककृतिदशायामपि तद्गोचरपरकृतेरतीतत्वाद्भाविष्यत्वाच्च 'तदानीमयं पपाच, पक्ष्यती'त्यादिप्रयोगप्रसङ्गः, पाककृतित्वावच्छेदेनातीतत्वादेरन्वयोपगमेन तद्वारणे तु 'पपाच पक्ष्यती'त्यादेरयोग्यत्वापत्तिः, एतदवच्छेदेनातीतत्वभविष्यत्वयोर्बाधादिति चेन्न ।

पाककृतित्वावच्छिन्नधर्मिकायां तत्तत्पाकगोचरकृतित्वावच्छेद्यस्वरूपसम्बन्धेनैवातीतत्वाद्यन्वयबुद्धौ पाकार्थकधातूत्तरलिट्त्वादिना हेतुतयैव उक्तदोषव्युदाससम्भवात् । चुल्लीस्थाल्यारोपणादिकं हि न प्रत्येकं पा-

कृष्णकान्तीटीका ।

कतया तत्रातिव्याप्तिरित्यत आह—लुडादयस्त्विति । आशीर्लिङ्लक्षणे भावित्वप्रकारकत्वनिवेशव्यावृत्तिमाह—जीवतु भवानित्यादाविति । बोधकोऽपीति । भावित्वस्य बोधकोऽपीति योजना, नाशंसनीयत्वस्येति किन्तु भावित्वस्यैवेति शेषः । लक्ष्ये लक्षणं सङ्गमयति—भूयादित्यादि । अत्रापि तिङ्त्वनिवेशव्यावृत्तिः पूर्ववत् ।

अथेत्यादि । तद्वारणे तु—वर्तमानकृतिदशायां पपाच पक्ष्यतीति प्रयोगवारणे तु इत्यर्थः । पाकानुकूलकृतित्वावच्छेदेन अतीतत्वस्य भावित्वस्य च बाधादिति भावः । यत्र च पाकादिकृतित्वावच्छेदेनातीतत्वं तत्रैवातीतत्वबोधिका तिङ्, यत्र च तथाविधभविष्यत्वं तत्रैव भावित्वबोधिका तिङिति फलबलाद्वाच्यमिति भावः । अयोग्यत्वापत्तिरिति । तथा च पपाच पक्ष्यतीत्यादिप्रयोगो न स्यादिति भावः । अत एव पचतीत्यादेरयोग्यत्वं नापादितं तत्र तादृशविवक्षाया निर्बीजत्वादिति । केचित्तु पक्ष्यतीत्यादिना पचतीत्यादिपरिग्रह इत्याहुः, तच्चिन्त्यम् ।

समाधत्ते—चेन्नेत्यादि । उक्तदोषव्युदाससम्भवादिति । यत्र पचतीति प्रयोगः साधुः तत्रापि पपाच पक्ष्यतीति प्रयोगापत्तिरूपदोषव्युदासादित्यर्थः । तत्र निरुक्तसम्बन्धेनातीतत्वादिभाने शाब्दबोधस्य भ्रमतया तज्जनकप्रयोगस्य न प्रामाण्यम्, अतीतादिकृतिस्थले च पपाच पक्ष्यतीत्यादेर्नायोग्यत्वम्, तत्र पाककृतित्वावच्छेदेनातीतादेर्बाधेऽपि पाककृतित्वावच्छेद्यस्वरूपसम्बन्धेनातीतादेः सत्त्वादिति भावः । ननु चुल्लीस्थाल्यारोपणादेः प्रत्येकं पाकपदार्थतया पचतीत्यत्र पपाचेत्यादि-

कपदार्थः, किन्तु स्थाल्यारोपणाग्निवेशनतुषप्रक्षेपाद्यनुप्रस्फोटनपर्यन्तस्त-त्क्रियाकलाप एव, यदाह दुर्गः—"क्रियते इति क्रिया, सा च पूर्वापरीभूतावयवैवेति", तथा च तावत्क्रियाकलापस्य प्रत्येकगोचरकृतेरतीतत्वभविष्यत्त्वयोर्बाधात् अवान्तरतुषप्रक्षेपादिदशायां 'पपाच, पक्ष्यती'त्यादिको न प्रयोगः। न चैवं सूपपाकं निष्पाद्य तण्डुलं पचत्यपि पुंसि 'अयं पपाच' इति स्यात्, निष्पन्नपाकगोचरयावत्कृतेरतीतत्वादिति वाच्यम्। इष्टत्वात्, 'तण्डुलं पपाचे'त्यादिप्रयोगस्यैव तत्रायोग्यत्वात्, अन्यथा 'सूपमपाक्षीदि'त्यादिप्रयोगस्तत्र कथं स्यात्। अत एव सम्प्रति सूपं पचत्यपि पुरुषे सूपकर्मकनिष्पन्नपाकगोचरकृतित्वावच्छेदेनातीतत्वमुपादाय 'सूपमपाक्षीदि'त्यादिकः प्रयोगो भवत्येव, परन्तु 'अद्य सूपमपाक्षीदि'त्यादिरेव न तत्र प्रयोगः, सूपकर्मकाद्यतनपाकगोचरकृतित्वावच्छेदेनातीतत्वस्य बाधादिति युक्तमुत्पश्यामः॥ १०६॥

लटं लङञ्च लक्षयति—

**क्रियातिपाते कालस्य भाविनः प्राक्तनस्य च।**
**वैशिष्ट्यबोधिका या तिङ् लृट् च लृङ् च क्रमाद्विमे॥**

---

कृष्णकान्तीटीका

प्रयोगो दुर्वार एव, प्रथमपाकानुकूलकृतौ निरुक्तसम्बन्धेनातीतत्वस्य सत्त्वादित्यत आह–चुल्लीस्थाल्यारोपणादिकमिति। तत्तत्क्रियाकलाप इति। तादृशतत्पाककृतित्वावच्छेदेन स्वरूपसम्बन्धेनातीतत्वादेस्तत्र बाधान्नापत्तिरिति भावः। पाकस्य क्रियाकलापरूपत्वे प्रमाणमाह—दुर्ग इति। पाकस्य क्रियाकलापरूपत्वे प्रमाणमाह—दुर्ग इति। पाकस्य क्रियाकलापरूपत्वे उक्तापत्तिर्नास्तीति स्वयमेवाह—तथा चेति। बाधादिति। निरुक्तसम्बन्धेनेत्यादिः। शङ्कते—नचैवमिति। समाधत्ते—इष्टत्वादिति। ननु तदा तण्डुलं पपाच इत्यपि स्यादित्यत आह—तण्डुलमिति। अन्यथेति। पपाचेति प्रयोगस्य तत्रास्वीकार इत्यर्थः। कथं स्यादिति। पाककृतित्वावच्छेदेनातीतत्वादेरसत्त्वादिति भावः। अत एव–यत्किञ्चित्पाकमादाय तादृशप्रयोगस्येष्टत्वादेवेत्यर्थः, कुत इत्याकांक्षायामाह—सूपकर्मकाद्यतनेति॥ १०६॥

लट्लङ्लक्षणप्रतिपादिकां कारिकामवतारयति—लृटं लृङञ्च लक्षयतीति।

या विङ् क्रियाया धात्वर्थस्यातिपाते विगमे भाविकालावच्छेद्यत्वस्य बोधिका तादृशी लृट्, या त्वतीतकालावच्छेद्यत्वस्य तादृशी लृङ् । 'तण्डुलंश्चेत् प्राप्स्यत्योदनमपि पक्ष्यति चैत्र' इत्यादौ स्यतिप्रभृतयश्चैत्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्याद्यभाववत्त्वमनुभावयन्ति, तथा'एधांश्चेद्प्राप्स्यत् ओदनमप्यपक्ष्यत्' इत्यादावतीतकालावच्छेद्यमिन्धनप्राप्त्यभाववत्त्वम्, तथा च भाव्यतीतकालाविव क्रियाप्रतियोगिकोऽभावोऽपि तयोरर्थः ।

वस्तुतस्तु भाव्यादिकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एव उक्तस्थले लृडादिना चैत्रादावनुभाव्यः क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातत्वात्, अत एव 'चैत्रश्चेदपठिष्यत् ग्राममप्यगमिष्यदि'त्यादिको न प्रयोगः । 'तीर्थञ्चेदगमिष्यत् स्वार्थमप्यलप्स्यत' इत्यादिकस्तु चिन्त्यः, स्वार्थलाभाद्यभावस्य तीर्थगत्याद्य-

कृष्णकान्तीटीका ।

विवृणोति या तिङिति । अतीतकालावच्छेद्यत्वस्येति, बोधिका इति पूर्वेणान्वयः । तथा च यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थविगमधर्मिकभाविकालावच्छेद्यत्वप्रकारकबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लृटत्वमिति पर्यवसितम्, एवं यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकातीतकालावच्छेद्यत्वप्रकारकबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लृङ्त्वमिति पर्यवसितञ्चेति भावः । लक्ष्ये लक्षणं सङ्गमयति तण्डुलञ्चेति । ननु क्रियाविगमः कुतो लभ्यत इत्यत आह— तथा चेति । तयोरर्थः-लृट्लृङोरर्थः, तथा च तण्डुलञ्चेदित्यादौ तण्डुले कर्मत्वाप्राप्तेर्भाविकालावच्छेदेनाभाववान् ओदनकर्मकपाकस्य तादृशकालावच्छेदेनाभाववांश्चैत्र इत्याकारको बोधः । एवंरीत्या(१) एधांश्चेदित्यादावपि शाब्दबोध ऊहनीयः ।

समूहालम्बनबोधे विप्रतिपत्तेराह—वस्तुतस्त्विति । ननु निरुक्तार्थस्य कुतो लाभ इत्यत आह—क्रियाविरहप्रयुक्तस्येति । क्रियातिपातत्वादिति । तथा च प्रत्ययलभ्य एव तादृशार्थ इति भावः । अत एव—प्रत्ययस्य एतादृशार्थकत्वादेव । न प्रयोग इति । पाठाभावस्य ग्रामगमनाभावाप्रयोजकत्वादिति भावः । चिन्त्य

(१) एधःसु कर्मत्वाप्राप्तेरतीतकालवच्छेदेनाभाववान् ओदनकर्मकपाकस्य तादृशकालावच्छेदेनाभाववांश्चैत्र इति रीत्येत्यर्थः ।

भावाप्रयुक्तत्वादिति । 'तण्डुलश्चेत् पचेदोदनमपि भुञ्जीते'त्यादौ तु क्रियातिपतनस्य वर्तमानत्वमेव लिङा प्रत्याय्यते न तु भावित्वमतीतत्वं वेति तद्व्युदासः ॥ १०७ ॥

क्रमप्राप्तं धात्वंशप्रत्ययं लक्षयति—

**सुबर्थानन्वितस्वार्थे तिङन्तप्रत्ययस्तु यः ।**
**स धात्वंशोऽथवा धातोरन्तांशप्रत्ययस्तथा ॥१०८॥**

सुबर्थानन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः स तादृशार्थे धात्वंशप्रत्ययः । 'पुत्रीयती'त्यादौ क्यजाद्यर्थस्येच्छादेर्न सुबर्थेऽन्वयः किन्तु तिङर्थे । 'पचती'त्यादौ सुबर्थानन्वितकृत्यर्थकोऽपि तिबादिर्न तिङन्यः । 'पिपक्षया कुरुते' इत्यादौ तु भावकृल्लभ्यस्य इच्छास्वरूपस्यैव सुबर्थकरणत्वादावन्वयः न तु सनन्तार्थपाकेच्छामात्रस्य ।

अस्तु वा सान्वयसंज्ञानुरोधेन धात्वन्तावयवरूप एव प्रत्ययो धात्वंशप्रत्ययः पिपक्षादिधात्वन्तभागत्वात् सनादिप्रत्ययस्य ॥ १०८ ॥

---

कृष्णकान्तीटीका ।

इति । कुत इत्याकांक्षायामाह—स्वार्थलाभाद्यभावस्येति । पूर्वलक्षणे भावित्वनिवेशस्य परलक्षणेऽतीतत्वनिवेशस्य च व्यावृत्तिमाह—तण्डुलश्चेति ॥ १०७ ॥

धात्वंशलक्षणप्रतिपादिकां कारिकामवतारयति—क्रमप्राप्तमिति । विवृणोति सुबर्थानन्वितयादृशस्वार्थक इति । तथा च यादृशानुपूर्वीप्रकारकज्ञानत्वं सुबर्थविषयतानिरूपितयादृशस्वार्थविषयताकान्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङन्यप्रत्ययत्वं तादृशस्वार्थे धात्वंशप्रत्ययत्वमिति पर्यवसितम् । लक्ष्ये लक्षणं सङ्गमयति—पुत्रीयतीत्यादाविति । तिङन्यत्वनिवेशव्यावृत्तिमाह—पचतीत्यादाविति । ननु पिपक्षया कुरुते इत्यादौ सनर्थस्य करणत्वादावन्वयात् सन्प्रत्ययेऽव्याप्तिरित्यत आह—पिपक्षया कुरुत इत्यादाविति । इच्छास्वरूपस्यैव इत्येवकारव्यवच्छेद्यं स्वयमेवाह—न त्विति । पाकेच्छामात्रस्येति । तथा च तत्र भावविहितप्रत्ययार्थस्वरूपस्य सुबर्थान्वितत्वेऽपि सनर्थस्य तदनन्वितत्वेन सन्प्रत्यये नाव्याप्तिरिति भावः ।

परलक्षणावतरणिकामाह—अस्तु वेति । सनर्थपाकेच्छायामेव सुबर्थान्वयोऽस्त्वित्यर्थः । एतल्लक्षणे पूर्वोक्तामव्याप्तिं निरस्यति—पिपक्षादीति ॥ १०८ ॥

विभजते—

**नामप्रकृतिकश्चायं धातुप्रकृतिकस्तथा ।**
**तत्रादिमः क्यच्क्यङादिरपरः सन्यङादिकः ॥१०९॥**

अयं धात्वंशप्रत्ययो नामप्रकृतिको धातुप्रकृतिकश्चेति द्विविधः । तत्रादिमो नामप्रकृतिकः क्यच्क्यङादिः, अपरो धातुप्रकृतिकः सन्यङादिः । 'चैत्रः पुत्रीयती'त्यत्र क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेस्तस्याश्च तिङर्थे आश्रयत्वे निरूपकत्वेनान्वये साकाङ्क्षत्वात् पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयत्ववांश्चैत्र इत्येवमन्वयधीः, अत एव मनुष्यत्वादिप्रकारेण पुत्रेच्छादशायां 'पुत्रीयती'त्यादिको(१) न प्रयोगः किन्तु 'मानुषीयती'त्यादिरेव । अत एव 'आत्मनः पुत्रीयती'त्यादेरात्मपुत्रत्वप्रकारकेच्छाबोधन एवासामर्थ्यम् आत्मपुत्रत्वादेस्तत्र प्रकृत्यर्थतानवच्छेदकत्वात्, आत्मसम्बन्धी यः पुत्रः पुत्रत्वेन तद्गोचरेच्छाया बोधने तु तस्य सामर्थ्यमेव, 'चैत्रस्य गुरुकुलमि'त्यादाविव वृत्तिशब्दैकदेशेऽपि पुत्रादावात्मप्रभृतेः प्रतियोगिविध-

---

कृष्णकान्तीटीका ।

धात्वंशप्रत्ययविभागप्रतिपादिकां कारिकामवतारयति—विभजत इति । धात्वंशप्रत्ययमित्यादिः । विवृणोति—अयमित्यादि । ननु मनुष्यत्वेन पुत्रेच्छादशायां चैत्रः पुत्रीयतीति प्रयोगः कथं न स्यादित्याकाङ्क्षायामाह—चैत्रः पुत्रीयतीत्यत्रेति । न प्रयोग इति । तादृशेच्छायां पुत्रत्वावच्छिन्नविषयतासम्बन्धेन पुत्रस्य बाधादिति भावः । ननु तथासति तदानीं कीदृक् प्रयोग इत्याकाङ्क्षायामाह—किन्त्विति । निरुक्तविषयतायाः संसर्गत्वे युक्तिमप्याह—अत एवेति । प्रकृत्यर्थतावच्छेदकावच्छिन्नविषयतायाः प्रकृत्यर्थसंसर्गत्वस्वीकारादेवेत्यर्थः । कुत इत्याकांक्षायामाह—आत्मपुत्रत्वादेरिति । प्रकृत्यर्थतानवच्छेदकत्वात्—प्रकृत्यर्थतावच्छेदकत्वास्वीकारात्, पुत्रत्वमात्रस्यैव तत्र तथात्वेनोपपत्तेरिति भावः । ननु पुत्रत्वेनेच्छास्थले पुत्रीयतीत्यनेनात्मनोऽन्वये कथं न तादृशप्रयोग इत्यत आह—आत्मसम्बन्धी य इति । ननु वृत्तिशब्दैकदेशान्वयास्वीकारात न तादृशप्रयोग, इति तु न देश्यमित्याह—चैत्रस्येति । व्युत्पन्नत्वादिति ।

---

(१) अत्र 'सुप आत्मनः' क्यच्, (३।१।८) 'क्यचि चे'ति (७।४।३३) च प.० सूत्रं द्रष्टव्यम्।

याऽन्वयस्य व्युत्पन्नत्वात् । 'आत्मपुत्रीयती'त्यादौ पुनरात्मपुत्रत्वादेरपि प्रकृत्यर्थतावच्छेदकत्वात् तदवच्छिन्नपुत्रविषयतेकेच्छाबोधने न किमपि बाधकं पश्यामः । एतेन 'पुत्रं काम्यति, इदं काम्यती'त्यादौ काम्यस्याप्यर्थो व्याख्यातः । 'पुत्रीयति माणवकमि'त्यादौ तु आचारसदृशाचारः क्यजर्थः, तद्विशेषणीभूते आचारे प्रकृत्यर्थस्य विशेष्यीभूते च माणवकादेः कर्मत्वेनान्वयः, तेन पुत्रकर्मकाचरणसदृशं यन्माणवककर्मकाचरणं तदनुकूलकृतिमानित्याकारकस्तत्र बोधः, पुत्रकर्मकाचरणञ्चेहान्नदानादिना संवर्द्धनतोषणादि । 'सर्पीयति शत्रुमि'त्यादौ सर्पकर्मकाचरणतुल्यं यच्छत्रुकर्मकाचरणं तदनुकूलकृतिमानित्यर्थः, सर्पकर्मकाचरणञ्चात्र सर्पकर्मकताडनमारणादि ग्राह्यम् । 'प्रासादे कुटीयती'त्यस्य कुट्यधिकरणकाचारसदृशो यः प्रासादाधिकरणकाचारस्तदनुकुलकृतिमानित्यर्थः, कुट्यधिकरणकाचारश्चेह कुट्यधिकरणकशयनादिरूपो द्रष्टव्यः । कर्माधिकरणयोरेव सदृशाचारे क्यचो विधानात् वह्निकण इवाचरति धूलिः दण्डेनेवाचरति चक्रेणेत्याद्यर्थे च न क्यच् (तेन?) 'धूलिर्वह्निकणीयति, चक्रेण दण्डीयती'त्यादिकः कर्तृकरणादेः सदृशाचारे अप्रयोगः । "मान्ताव्ययाभ्यां न स्या"दित्यनुशिष्टे'रिदमिच्छति स्वरिच्छती'त्याद्यर्थे इदमिवाचरतीत्याद्यर्थे च न क्यच्(१)। 'गव्यति नाव्यती'त्यादावपि गामिच्छति, गामिवाचरति इत्यादिरर्थः, औदोद्भ्यां क्यस्वरवद्भावादवाद्यादेशः(२) ।

---

कृष्णकान्तोटीका ।

प्रतियोगिपदादन्यद्यदन्यत् कारकादपि ।
वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते ॥

इति परिशिष्टानुशासनस्य सत्त्वादिति । आत्मपुत्रीयतीति प्रयोगो भवत्येव इत्याह–आत्मपुत्रीयतीत्यादाविति । व्याख्यात इति । तत्रापि तादृशविषयतया प्रकृत्यर्थस्यान्वय इत्यादिकं सर्वं ज्ञेयमिति भावः । नन्वेवं धूलिर्वह्निकणीयतीत्यादिप्रयोगो न स्यादित्यत आह–वह्निकण इवेति । ननु अत्र कथमवादेश इत्यत

---

(१) पाणिनीयमतेनात्र 'मान्तप्रकृतिकसुबन्तादव्ययाच्च क्यच् न' इति वार्तिकं द्रष्टव्यम् ।
(२) पा॰मते त्वत्र 'वान्तो यिप्रत्यये' इत्यनेनावादेशः ।

नमस्तपोवरिवसां कर्तृत्वेऽपि क्यचो विधानात्(१) 'नमस्यति देवानि'त्यस्य देवनतिं 'तपस्यति शत्रुमि'त्यस्य शत्रुसन्तापं 'वरिवस्यति गुरूनि'त्यस्य च गुरूणां परिचर्यां करोतीत्यर्थः । 'श्येनायते काक' इत्यादौ, क्यङो-ऽपि आचारसदृशाचारोऽर्थः, तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव साकाङ्क्षत्वात् श्येनकर्तृकाचारसदृशाचारवान् काक इत्येव तत्र बोधः, श्येनकर्तृकाचारश्च मांसहरणादिर्विशिष्य ग्राह्यः । श्येनी इवाचरतीत्यर्थे 'श्येनायते काकी'त्यत्र भाषितपुंस्कत्वात् क्यङि पुंवद्भावः । गार्ग्यमिच्छ-तीत्याद्यर्थे 'गार्ग्यीयती'त्यत्र क्यचीव गार्ग्यं इवाचरतीत्याद्यर्थे 'गार्गायते' इत्यत्र क्यङ्यप्यपत्यप्रत्ययस्य लोपः, तथा 'राजीयती'त्यादौ नस्य । 'ओजायते, अप्सरायते, पयायते, पयस्यते, गर्दभति, अश्वती'त्यादा-वप्युक्तरीत्यैवान्वयः ।

ओजसोऽप्सरसो नित्यं पयसः सो विभाषया ।
क्यङोऽपि लोपो द्रष्टव्यो गर्दभस्यश्वतीत्यतः ॥

इति वचनादेषु सादेर्लोपः । अत्रौजःपदस्यौजस्विपरत्वमिति निब-न्धारः । 'गव्यते, नाव्यते' इत्यादेरपि गौरिवाचरतीत्यादिरर्थः, पूर्ववद-वादेशः(२)। पूर्वमनुन्मना उन्मनावदाचरति इत्यर्थेऽपि 'उन्मनायते दुर्मना-यते' । अवेहत् वेहदिवाचरतीत्यर्थे 'वेहायत' इत्यादौ तस्य लुक्, गौ-र्गर्भोपघातिनी–वेहत् । अलोहितो लोहितो भवतीत्यर्थे 'लोहितायति, लोहितायते' स्वरितेत्त्वादुभयपदम् । सुखमनुभावयतीत्यर्थे 'सुखायते' एवं 'दुःखायते, अलीकायते' इत्यादि । शब्दं करोतीत्यर्थे 'शब्दायते' एवं

---

कृष्णकान्तीटीका ।

आह–औदोद्भ्यामिति । न स्येति, लोप इति पूर्वेणान्वयः । क्यङोऽपीत्यपि-कारात् सकारस्य परिग्रहः । ननु ओजसः प्राणित्वाभावात् आचरणमसिद्धमिति कथं तादृशप्रयोग इत्यत आह–अत्रेति । इत्यादिरर्थ इति । उपमानादाचार (३।१।१०) इत्यनुशासनादिति भावः । वेहच्छब्दस्यार्थमाह-गौर्गर्भोपघातिनी

---

(१) पा०मते 'नमोवरिवश्चित्रङः क्यच्' इत्यनुशासनमत्र बोध्यम् ।
(२) औदोद्भ्यां कृद्वत्स्वरवद्भावादित्युक्तरीत्येति भावः ।

'वैरायते, कलहायते'। गिलितस्य पुनश्चर्वणं रोमन्थः, तं करोतीत्यर्थे 'रोमन्थायते गौः'।

मुण्डादेस्तत्करोत्यर्थे गृह्णात्यर्थे कृतादितः।
वक्तीत्यर्थे च सत्यादेरङ्गादेस्तन्निरस्यति ॥

इति भागुरिस्मृतेः 'नरं मुण्डयती'त्यत्र नरनिष्ठमुण्डनं 'जलं मिश्रयती'त्यत्र जलनिष्ठमिश्रणं, 'वासः शिथिलयती'त्यत्र वासोनिष्ठशैथिल्यम्, 'अन्नं मधुरयती'त्यत्रान्ननिष्ठमाधुर्य्यं, 'चैत्रं मित्रयती'त्यत्र चैत्रनिष्ठमित्रत्वं, क-[रोतात्यीदिको नामप्रकृतिकस्य णेरर्थः। तत्र मुण्डादिपदस्य धर्मपरत्वात् मुण्डादिण्यन्तधात्वर्थतावच्छेदकीभूतफलवत्त्वाच्च नरादेः कर्मत्वमिति सम्प्रदायविदः। वासः पृथु मृदु भृशं वा करोतीत्यर्थे 'वासः प्रथयति, म्रदयति, भ्रशयति' इत्यादावृतो रेफादेशः, तथा 'चैत्रं परिव्रढयति' इत्यत्रापि। कण्ड्वादिभ्यस्तत्करोतीत्यर्थे यगेव(१) न तु णिः, तेन 'गात्रं कण्डूयति, कण्डूयते' वा इत्यत्र गात्रस्य कण्डुं करोतीत्यर्थः ञित्त्वादुभयपदम्। एवं स्वर्गलोके महीं वसतिस्थानं करोतीत्यर्थे, 'स्वर्गलोके महीयते' ङानुबन्धेषु पाठादात्मनेपदम्, शब्दादिभ्यः करोतीत्यर्थे क्यङिवेत्युक्तम्। 'कृतयति, वर्णयती'त्यादौ कृतं गृह्णातीत्यादिरर्थः। 'सत्यापयति, अर्थापयति' इत्यत्र च सत्यं वक्तीत्यादिरर्थः, सत्यादित्रिकादावागमश्च।

---

कृष्णकान्तीटीका

वेद्वदिति। भागुरिस्मृतेरिति पञ्चम्यन्तस्य नामप्रकृतिकस्य णेरर्थ इत्यत्रान्वयः। पञ्चम्यन्तद्वितीयान्तानि करोतीत्यत्रान्वितानि। ननु मुण्डादिपदस्य मुण्डनादिविशिष्टपरतया नरादेर्मुण्डादिधात्वर्थतावच्छेकफलवत्त्वाभावात् कथं कर्मत्वमित्यत आह–तत्रेति। फलवत्त्वाच्चेति। मुण्डनानुकूलकृतेर्धात्वर्थतया तज्जन्यफलस्य मुण्डनस्य नरादौ सत्त्वादिति भावः। ऋतो रेफादेश इति। "रशब्द ऋतो लघोर्व्यञ्जनादे"रित्यनुशासनादिति(१) भावः। ञित्त्वात्-ञ्यनुबन्धत्वात्। ननु अत्र कथं नोभयपदमित्यकाङ्क्षायामाह–ङानुबन्धेष्विति। अत एव 'महीङ् महीयते' इति दुर्गसिंहः। वक्तीत्यादिरिति, अर्थ इति पूर्वेणा-

---

(१) पा०मते त्वत्र 'कण्ड्वादिभ्यो यक्' (३।१।२७) इति सूत्रेण यक् द्रष्टव्यः।

(१) अत्र 'रऋतो हलादेर्लघोः' (६।४।१६१) इति पा० सूत्रं बोध्यम्।

प्रियं स्थिरं वा वक्तीत्यर्थे 'प्रापयति, स्थापयति' इत्यादौ प्रियस्थिरादेः प्रस्थाद्यादेशोऽपि । अश्वतरं वदतीत्यर्थे 'अश्वयति' इत्यत्र तरप्रत्ययलोपश्च । गोमन्तमाचष्टे इत्यर्थे 'गवयति' गुणवन्तमाचष्टे इत्यर्थे 'गुणयति' स्रग्विणमाचष्टे इत्यर्थे 'स्रजयति' इत्यादौ तु मन्तुवन्तुविनां लुगपि, तथा कर्त्तारमाचष्टे इत्यर्थे 'कारयती'त्यत्र तृचः । अन्तिकमाचष्टे इत्यर्थे 'नेदयति' वाढमाचष्टे इत्यर्थे 'साधयति' इत्यत्र च "अन्तिकबाढयोर्नेदसाधौ, च"(१) । युवानमल्पं वा वदतीत्यर्थे 'कनयति' "युवाल्पयोः कन्वे"-त्यनुशिष्टेः(२), पक्षे 'यवयति, अल्पयती'त्यपि। स्थूलमाचष्टे दूरमाचष्टे इत्याद्यर्थे "स्थूल-दूर-युव-क्षिप्र-क्षुद्राणामन्तस्थादिलोपो गुणश्चे"(३)त्यनुशिष्टेः क्रमेण 'स्थवयति, दवयति, यवयति, क्षपयति, क्षोदयति' इत्येव प्रयोगः । बहूनाचष्टे इत्यर्थे 'भूययति' "बहोर्भूयादेशश्च"(४)। हस्ताद्यङ्गेभ्यस्तन्निरस्यतीत्यर्थेऽपि णिः, तेन हस्तं निरस्यतीत्याद्यर्थे 'हस्तयते, पादयते' इत्यादि, पूर्ववदात्मनेपदम् ।

तुस्ताद्विघाते संच्छादेर्वस्त्रात्पुच्छादितस्तथा ।
उत्क्षेपादौ कर्मणो णिस्तत्तदव्ययपूर्वतः ॥

इति भागुरिस्मृतेः (५) तुस्तं विनिहन्तीत्यर्थे 'वितुस्तयति', तुस्तं–केशजटा, वस्त्रं संच्छादयतीत्यर्थे 'संवस्त्रयति' पुच्छमुत्क्षिपतीत्यर्थे 'उत्पुच्छयते गौः' एवं 'परिपुच्छयते'। भाण्डानि साञ्चिनोतीत्यर्थे 'संभाण्डयते

कृष्णकान्तीटीका ।

न्वयः । प्रस्थाद्यादेशोऽपीत्यपिकारात् णिप्रत्ययः, रतयोरेफतकारयोः,(१) लुगपीत्यपिना णिपरिग्रहः । तृच इति, लुगपीति पूर्वेणान्वयः । पूर्ववदिति । ङानुबन्धेषु पाठादित्यर्थः । तुस्तशब्दार्थमाह--तुस्तं केशजटेति । आदिपदग्राह्यान् आह–भाण्डानीति । कर्मवाचकपदादित्यर्थककर्मण इत्यस्य व्यावृत्तिमाह–कर्मण

(१) अनेन सूत्रेण अन्तिकादिस्थाने नेदाद्यादेश इत्यर्थः। इदमेव चकाररहितं(५।३।६३) पाणिनीयं सूत्रं द्रष्टव्यम् ।

(२) अत्र 'युवाल्पयोः कनन्यतरस्याम्' (५।३।६४) इति पा० सूत्रं द्रष्टव्यम् ।

(३) 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः (६।४।१५६) इति पा० सूत्रम् ।

(४) 'बहोर्लोपो भू च बहोः इति (६।४।१५८) पा० सूत्रम् ।

(५) 'पुच्छभाण्डचीवराण्णिङ् (३।१।२०) इति पा० सूत्रोदाहरणान्याह तुस्तमिति ।

भिक्षुः' चीवरं सम्मार्जयतीत्यर्थे 'सञ्चीवरयते'। कर्मण इत्युक्तेस्तुस्तेन विनिहन्तीत्याद्यर्थे न णिः, 'तूस्तयति प्रतूयस्तयति' इत्यादितः कथिता-र्थानामप्रतीतेस्तत्तदव्ययपूर्वकत्वानियमः।

वीणात उपगाने स्याद्धस्तितोऽतिक्रमे तथा।
सेनातश्चाभियाने णिः श्लोकादेरप्युपस्तुतौ ॥

इति भागुरिस्मृतेरत्रापि तत्तदव्ययपूर्वत इत्यनुषज्यते, तथा च वीणया उपगायतीत्यर्थे 'उपवीणयति यशः' हस्तिनातिक्रामतीत्यर्थे 'अति-हस्तयति गृहं' सेनयाभिमुखं यातीत्यर्थे 'अभिसेनयति समरं' श्लोकैरुप-स्तौतीत्यर्थे 'उपश्लोकयति शिवमि'त्यादिकः प्रयोगः। कर्मप्रत्यये तु 'उप-वीण्यते यश' इत्यादिः। वीणादेः करणतास्थल एवायं विधिरिति वीणा-यामुपगायतीत्याद्यर्थे न णिः साधुः। अशनधनाभ्यामाय उदकान्न्यः कलोपश्च तादिच्छतीत्यर्थे, तेन 'अशनायति, धनायति, उदन्यती'त्यादाव-शनमिच्छतीत्यादिरर्थः। अशनायादिकं धात्वन्तरमित्यपि वदन्ति।

'चैत्रं भावयति, आत्मानं गमयति' इत्यादौ धातुप्रकृतिकस्य णेरर्थ्य-नुकूलव्यापारो व्यापारमात्रं वाऽर्थः तत्र धात्वर्थस्यानुकूलताया संसर्गवि-षयापि भानसम्भवात्, तेन तत्र चैत्रोत्पत्त्यनुकूलव्यापारवान् आत्मग-त्यनुकूलव्यापारवानित्यादिरर्थः। क्वचिज्ज्ञानानुकूलव्यापारोऽपि ण्यर्थः, यथा 'कथकः कंसं घातयति' इत्यादौ अभिनयादिरूपः। चुरादिभ्यस्तु

---

कृष्णकान्तोटीका।

इत्युक्तेरित्यादि। तत्तदव्ययपूर्वत इत्यस्य व्यावृत्तिमाह··तूस्तयति प्रतूस्तयती-तीत्यादिना इति। मतान्तरमाह अशनायादिकमिति।

नामप्रकृतिकान् प्रयोगानुक्त्वा धातुप्रकृतिकांस्तानाह—चैत्रं भावयतीत्यादि। लाघवादाह—व्यापारमात्रं वेति। ननु तथा सत्यनुकूलत्वस्योपस्थापकपदाभावेन भानं न स्यादित्यत आह—तत्रेति। धात्वर्थस्येति निरूपितत्वं षष्ठ्यर्थः, तथा च धात्वर्थनिरूपितानुकूलताया इत्यर्थः। भानसम्भवादिति। तथा च तदुपस्था-पकपदाभावेऽपि संसर्गतया भाने बाधकाभाव इत्युक्तमधस्तादिति भावः। शाब्द-बोधप्रकारमाह—तेनेति। स च कीदृशो व्यापार इत्याकाङ्क्षायामाह—अभिनया-दिरूप इति-तदर्थः। तथाच कंसहननज्ञानानुकूलव्यापारवान् कथक इति तत्र

स्वार्थिकस्य णेः स्वरूपमर्थः, तेन 'चोरयति, चिन्तयति' इत्यादौ स्तेयादिस्वरूपस्यानुकूलकृतिमानित्यादिरर्थः ।

(१)गुपूधूपविच्छिपणिपनेरायः कमेस्तु णिङ् ।
ऋतेरीयङ् चतुर्लेषु नित्यं स्वार्थे परत्र वा ॥

इति भागुरिः । स्वार्थे स्वरूपार्थे, तेन 'गोपायती'त्यस्य रक्षणस्वरूपं 'धूपायती'त्यस्य सन्तापस्वरूपं 'विच्छायती'त्यस्य गतिस्वरूपं 'पणायते' इत्यस्य व्यवहारस्वरूपं स्तुतिस्वरूपं वा करोतीत्यर्थः । 'आकर्णयामास न वेदनादान्न चोपलेभे वणिजां पणायान्' इति व्यवहारार्थे भट्टिः ( स० ३ श्लो० २७ ) । 'पणायते' इत्यस्य तु स्तुतिस्वरूपं करोतीत्येवार्थः स्वरूपार्थकत्वात् । 'अल्पापि विप्रगोपाया स्वर्गानन्त्यप्रदा भवेत्' इत्यादिकः प्रयोगः अल्पादेः, क्रियाविशेषणत्वे क्लीबत्वापत्तेरित्युक्तप्रायम् । 'स्वर्गं कामयते' इत्यस्य स्वर्गगोचरेच्छास्वरूपवानित्यर्थः, ङानुबन्धत्वादात्मनेपदम् । 'ऋतीयते' इत्यस्य घृणास्वरूपं करोतीत्यर्थः । 'परत्र वे'त्युक्तेश्चतुर्लकारादन्यत्र 'गोप्ता, गोपायिता, कमिता, कामयिता, अर्तिता, ऋतीयिता' इत्यादिको द्विविधः प्रयोगः ।

गुपो वधेश्च निन्दायां क्षमायाञ्च तथा तिजः ।
प्रतीकाराद्यर्थकाच्च कितः स्वार्थे सनो विधिः ॥

इति भागुरिः । तेन 'जुगुप्सते बीभत्सते' इत्यत्र निन्दास्वरूपस्य

---

कृष्णकान्तीटीका ।

बोधः । चतुरिति । चतुर्षु लकारेषु, सार्वधातुकेष्विति यावत् । परत्र—सार्वधातुकभिन्ने वेति, आय इति पूर्वेणान्वयः । स्वार्थं इत्यस्यार्थमाह—स्वार्थ इति । व्यवहारार्थे पणेरायप्रत्यये प्रमाणमाह—आकर्णयामासेति । ननु स्वार्थशब्देन धात्वर्थस्यैव बोधनादायप्रत्ययस्य स्वरूपार्थकत्वे मानाभाव इत्यत आह—पणायत इत्यस्येति । उक्तप्रायमिति । स्वरूपार्थकत्वे प्रत्ययार्थविशेषणत्वात् न तदापत्तिरिति भावः ।

---

( १ ) 'गुपूधूपविच्छिपणिपनिभ्य आय' ( ३।१।२८ ) इति पा०सूत्रोदाहरणानि दर्शयितुं प्राचीनसम्वादमाह गुपू इति ।

कर्त्ता इत्यर्थः, अत एव 'जुगुप्सा स्वश्शापि क्षपयति महत्त्वं परिषदी'-त्यादिकः प्रयोगः। 'तपस्तितिक्षते' इत्यस्य तपःकर्मकसहनस्वरूपस्य कर्त्तेत्यर्थः। 'चिकित्सत्यातुरमि'त्यस्यातुरकर्मकप्रतीकारस्वरूपं करोतीत्यर्थः। 'रिपुं विचिकित्सती'त्यस्य रिपुकर्मकनिग्रहस्वरूपं करोतीत्यर्थः, विचिकित्सति मन्मनः' इत्यादौ च मन्मनः सन्देहस्वरूपवादित्यर्थः। एषामर्थान्तरे तिङो नाभिधानमिति भागवृत्तिः, तेन सङ्गोपन—निशान-निवासाद्यर्थेषु गोपनं तेजनं केतनमित्यादिकमेव प्रत्युदाहरणम्। "मानदानशान्भ्य ऽपि स्वार्थे सन्" तेन मान पूजायां विचारे वा इत्यस्य 'मीमांसते'दान अवखण्डने इत्यस्य 'दीदांसते' शान तेजने इत्यस्य 'शीशांसते' इत्यत्राप्युक्तदिशैवान्वयः। 'पाकं चिकीर्षति, ओदनं बुभुक्षते' इत्यादाविच्छैव सनोऽर्थः, तस्याश्च द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठस्वसमानकर्तृकत्वसम्बन्धेनान्वयात् पाकधर्मिका निरुक्तसम्बन्धेन कृतिमती च इच्छा तद्वानित्यादिरर्थः। समानकर्तृकत्वस्य निवेशात् अन्यदीयकृतिपाकादाविच्छावति 'अयं चिकीर्षति, पिपक्षति' इत्यादिको न प्रयोगः इति चिन्तामणिकृतः।

सोन्दडस्तु—'पाकं चिकीर्षती'त्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थ एवान्वयः, तदर्थस्य तु समानकर्तृकत्वविषयत्वाभ्यां सनर्थे-

---

कृष्णकान्तीटीका।

अत एव—स्वरूपार्थकत्वादेव। परिषदि—सभायाम्। प्रयोग इति। अन्यथा क्रियाविशेषणत्वेन क्लीबत्वापत्तेरिति भावः। उक्तदिशैवान्वय इति। तथाच पूजास्वरूपं विचारस्वरूपं वा खण्डनस्वरूपं वा करोतीति ( आदि ? ) क्रमेणार्थ इति भावः। स्वरूपसम्बन्धेनेति, अन्वयादिति परेणान्वयः। स्वसाध्यत्वादिप्रकारिनिष्ठेति। स्वसाध्यप्रकारतानिरूपकेच्छानिष्ठेत्यर्थः। निरुक्तेति। स्वसाध्यत्वप्रकारित्वेच्छासमानकर्तृकत्वसम्बन्धेनेत्यर्थः। समानकर्तृकत्वनिवेशव्यावृत्तिमाह—समानकर्तृकत्वस्येति। न प्रयोग इति। अत्र कृतीच्छयोः पाकेच्छयोश्च समानकर्तृकत्वादिति भावः।

तदर्थस्य-तादृशार्थस्य, पाकान्वितमूलधात्वर्थस्येति यावत्। शाब्दबोध-

च्छायाम्, तथा च पाकविषयताककृतिसमानकर्तृकतद्गोचरेच्छावान् इत्यादिरेवार्थः, कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वात्, अत एव 'गृहं तिष्ठासती'त्यादिको न प्रयोगः, स्थितेर्गृहकर्मकत्वबाधात्, अन्यथा गृहधर्मिकां स्थितिप्रकारकेच्छां बोधयन्नयमेव प्रमाणं स्यात्, न तु 'गृहे तिष्ठासती'त्यादिः—इति प्राह ।

चिकीर्षादेः प्रवृत्त्यादिरूपेष्टसाधनत्वेन तद्गोचरेच्छासत्त्वेऽपीच्छार्थकसनन्तात् न सन्प्रत्ययः, "सनन्तान्न सनिष्यते"(१) इत्यनुशिष्टेरतश्चिकी·र्षिषती'त्यादिको न प्रयोगः ।

'पापच्यते' इत्यादौ यङः पौनःपुन्यमर्थः, तच्च प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियानन्तर्य्यरूपं प्रकृत्यर्थे विशेषणत्वेनाऽन्वेति, तेन पाकोत्तरपाकानन्तर्य्यवत्पाककर्त्ता इत्येवं तत्र वाक्यार्थः । द्विःपक्तरि पुनःपक्तृत्वेपि न निरुक्तं पुनःपुनः पक्तृत्वम्, अतो न तत्र 'पापच्यते' इति प्रयोगः । पाकोत्तरत्वादिकञ्च तत्समानकर्तृत्वगर्भं बोध्यम्, अतः पुमन्तरीयपाकाद्युत्तरत्वमादाय नातिप्रसङ्गः । 'तण्डुलं पापच्यते' इत्यादौ यङन्तधातूपस्थाप्ये सर्वत्रैव पाकादौ तण्डुल·

---

कृष्णकान्तीटीका ।

प्रकारमाह—तथा चेति । अत्र हेतुमाह—कारकविभक्तेरित्यादि । क्रियायामेव—मूलधात्वर्थ एव, स्वार्थबोधकत्वात्—स्वार्थबोधकत्वनियमात् । अत्र युक्तिमप्याह—अत एवेति । उक्तनियमादेवेत्यर्थः । अयमेव प्रमाणं स्यात्—तादृशप्रयोग एव प्रमात्मकबोधजनकः स्यात् । एवकारव्यवच्छेद्यं स्वयमेवाह—नत्विति । उपपदविभक्तेः कारकविभक्तिर्गरीयसीति भावः ।

तद्गोचरेच्छासत्त्वेऽपि—चिकीर्षागोचरेच्छासत्त्वेऽपि, कुत इत्याकाङ्क्षयामाह—सनन्तादिति ।

तच्च—पौनःपुन्यञ्च । तेन—तादृशपौनःपुन्यनिर्वचनेन । तत्र—द्विःपक्तरि । ननु पुमन्तरीयपाकानुत्तरत्वमादाय पापच्यत इति प्रयोगः स्यादित्यत आह—पाकोत्तरत्वादिकञ्चेति । नातिप्रसङ्ग इति । ननु यत्र मुद्गपाकानन्तरं माषपाकः,

---

(१) शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थियः । सरूपप्रत्ययो नेष्टः सनन्तान्न सनिष्यते ॥ इति सि० कौमुद्याम् ।

कर्मत्वस्यान्वयो व्युत्पत्तिवैचित्र्यात्, नातः क्रमेण मुद्गमाषौ पक्त्वा तण्डुलस्य पक्तरि तथाविधप्रयोगः। 'तुषेण पापच्यते' इत्यादौ कारकान्तरमप्येतेन व्याख्यातम्। 'जङ्गम्यते, चंक्रम्यते' इत्यादौ धात्वर्थगतं पौनःपुन्यमिव कौटिल्यमपि यङोऽर्थः, "गत्यर्थात् कौटिल्य एव" (१)तद्विधानात्, तेन पुनःपुनः कुटिलगतिमान् इत्येवं तत्र बोधः। शेषं पूर्ववत्। (२)'लोलुप्यते चञ्चूर्य्यते, जञ्जप्यते, दंदश्यते, निजेगिल्यते' इत्यादौ निन्दितत्वमपि, तेन पुनःपुनर्गर्हितं लुम्पति चरतीत्यादिकस्तत्रार्थः। अत्रोत्सर्गत एव एकाचो हलादेरेव धातोर्यङ्विधानात्(३) पुनःपुनः कथयति, जागर्त्ति दरद्रातीत्याद्यर्थे कथ्यादेर्न यङ्, नापि पुनःपुनरेति एजते इत्यादाविण्प्रभृतेः, "ऋप्रभृतिभ्यश्चेति" विशेषविधेस्तु पुनःपुनरियर्त्ति, अश्नाति, अटतीत्याद्यर्थे 'अरार्य्यते, अशाश्यते, अटाट्यते' इत्यादिकः प्रयोगः। "शुभिरुचिभ्यां तु न स्यात्" पुनःपुनः शोभते रोचते इत्यर्थे

---

कृष्णकान्तीटीका।

तदनन्तरं तण्डुलपाकः तत्र तण्डुलं पापच्यत इति प्रयोगः स्यादित्यत आह--तण्डुलमित्यादि। तथाविधेति। तण्डुलं मुद्गं माषं वा पापच्यते इति प्रयोग इत्यर्थः। एतेन व्याख्यातमिति। यत्र तुषेण पाकानन्तरं करीषेण पाकः तदनन्तरं काष्ठेन पाकः तत्र तथाविधप्रयोगवारणाय तुषादिकरणकत्वस्येति, यङन्तधातूपस्थाप्ये सर्वत्रैव पाके व्युत्पत्तिवैचित्र्येणान्वयो वाच्य इति भावः। धातुविशेषोत्तरयङोऽर्थविशेषमप्याह--जङ्गम्यत इत्यादि। शाब्दबोधप्रकारमाह--तेनेति। शेषं पूर्ववदिति। कुटिलं जङ्गम्यते इत्यादौ एकमेव कौटिल्यं भासते 'सम्भेदे नान्यतरवैयर्थ्यमि'ति न्यायादित्यर्थः। निन्दितत्वमपीति, यङोऽर्थ इति पूर्वेणान्वयः। शाब्दबोधप्रकारमाह-तेनेति। उत्सर्गतः-विशेषविधिं विना, एकाचो हलादेरेव-एकस्वराद्व्यञ्जनादेरेवेत्यर्थः। एकाच इत्यस्य व्यावृत्तिमाह—पुनः पुनः कथयतीत्यादि। हलादेरित्यस्य व्यावृत्तिमाह—पुनःपुनरेतीत्यादि। उत्सर्गत इत्यस्य व्यावृत्तिमाह—ऋप्रभृ-

---

(१) अत्र पा० मते 'नित्यं कौटिल्ये गतौ' (३।१।२३) इति रूपेणेयङ्विधानं बोध्यम्।

(२) 'लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्' ।३।१।२४। इति पा० सूत्रोदाहरणान्याह लोलुप्यत इति।

(३) अत्र 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति पा०सूत्रं द्रष्टव्यम्।

'शोशुभ्यते' इत्यादेर्निराकाङ्क्षत्वादिति वदन्ति ॥ १०९ ॥

इति श्रीजगदीशतर्कालङ्कारकृतौ शब्दशक्ति-
प्रकाशिकायामाख्यातप्रकरणं समाप्तम् ॥

## (६) तद्धितप्रकरणम् ।

(१) तद्धितं लक्षयति—

**विभक्त्यादित्रिकादन्यः प्रत्ययस्तद्धितं मतम् ।**
**नामप्रकृतिको नैवमतिव्याप्त्यादिदोषतः ॥ ११० ॥**

विभक्तिधात्वंशकृद्भ्योऽन्यः प्रत्ययस्तद्धितम् । 'वृक्षक' इत्यादौ ह्रस्वाद्यर्थकः कादिरपि तद्धितमेव । तदन्यत्वेनापि प्रत्ययं विशेषयन्त्यन्ये ।

---

कृष्णकान्तीटीका ।

तिभ्यश्चेत्यादि । कुत इत्याकाङ्क्षायामाह—पुनःपुनः शोभन इत्यादि ॥१०९॥

इति श्रीकृष्णकान्तविद्यावागीशकृतायां शब्दशक्तिप्रकाशिका-
टीकायामाख्यातप्रकरणं समाप्तम् ।

तद्धितस्य न्यायासंवलितार्थकत्वेन विचारविधुरतया अतिसुगमतया च तट्टीकाकरणे मदीयप्रवृत्तिर्नोत्पन्ना इति समाप्तोऽयं ग्रन्थः ॥

इति श्रीकृष्णकान्तविद्यावागीशभट्टाचार्यविरचिता
शब्दशक्तिप्रकाशिकाटीका समाप्ता ॥

शाके रामाक्षिशैलक्षितिपरिगणिते (१७३२) कर्कटे याति भानौ
विंशाहे विश्वनाथार्चितपदयुगलं श्यामलं मोक्षबीजम् ।
ध्यायन्नध्यापकानां निखिलपदपदार्थादिचिन्तापहन्त्रीं
तेने श्रीकृष्णकान्ताह्वय इह सुकृती टिप्पणीं गूढभावाम् ॥ १ ॥
धीरश्रीकृष्णकान्तेन विद्यावागीशसंज्ञिना ।
कृता सुबुद्धिधीराणां शक्तिसन्दीपनी मुदे ॥ २ ॥

---

(१) २८३ पृष्ठे 'विभक्तिश्चैवे'ति ६० कारिकायां प्रतिज्ञातं तद्धितप्रत्ययं निरूपयितुमाह तद्धितमिति । विभक्तिधात्वंशकृद्भिन्नः प्रत्ययस्तद्धितप्रत्यय इत्यर्थः । अतिव्याप्त्यादिदूषणदूषितत्वान्नामप्रकृतिकप्रत्ययत्वं न तद्धितत्वमिति कारिकार्थः ।

नामप्रकृतिकप्रत्ययत्वन्तु न तद्धितस्य लक्षणम्, विभक्तौ क्यजादौ चा-तिव्याप्तेः, 'पचतितरामि'त्यादौ तरतमाद्यव्याप्तेश्च ॥ ११० ॥

(१)विभजते—

**तस्यापत्यं तद्विशेषस्तद्दृक्षेण युतेन्दुमान् ।**
**कालस्तथा तेन रक्तं तस्य व्यूहोऽथ वेत्ति तत् ॥ १११ ॥**
**अधीते वा देवताऽस्य सैवमादीन् यथायथम् ।**
**बोधयन्विविधानर्थांस्तद्धितं स्यादनेकधा ॥ ११२ ॥**

तस्यापत्यस्य विशेषो गुर्वायत्तत्वप्रथमत्वादिः ॥ १११-११२ ॥

(१)अपत्यार्थकतद्धितप्रकरणम् ।

अपत्यार्थकं तद्धितं व्याकुरुते—

**अण् नाम्नोऽपत्यसामान्ये षष्ठ्यन्तादूबाधकं विना ।**
**अदन्तादिण् निषादादेरन्त्याचोऽक् चेण्णपेक्षितः ॥११३॥**

(२)षष्ठ्यन्तान्नाम्नः साक्षात्परम्परासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः । स च मरीचेरपत्यं 'मारीचः, काश्यपिरि'त्यादौ, अपत्यविशेषमाने तु तद्धितभेदो वक्ष्यते, मरीचिना अपत्यमित्यर्थे तु न षष्ठ्यन्तं नाम ।

(३)अणो बाधकमाह अदन्तादिति । अदन्तान्नाम्नो बाधकं विना इणेव, दक्षस्यापत्यं 'दाक्षिः' अस्यापत्यम् 'इः' इत्यादौ । तत्रापि निषादादेरिणा अपत्यबोधने तदन्तिमाचोऽगादेशोऽपेक्षितः, यथा 'नैषादकिः, वैयासकिः, चाण्डालकिरि'त्यादौ ॥ ११३ ॥

इणोऽपवादमाह—

**शिवादिभ्यस्त्वणेव स्यात् ण्यो गर्गादेर्गणात्तथा ।**
**कुञ्जादेरायनण् ण्यश्च तस्मान्नैष स्त्रियामिति ॥ ११४ ॥**

---

(१) तद्धितप्रत्ययान् अपत्यार्थकचातुरर्थिकशैषिकाख्यान् विभज्य दर्शयतीत्यर्थः । अपत्यार्थे तद्विशेषगुर्वायत्तत्वादौ चापत्यार्थकास्तद्धितप्रत्ययाः, तद्दृक्षयुक्तेन्द्वादिमति काले, तेन रक्तं तेषां समूह इत्याद्यर्थेष्वणादयश्चातुरर्थिकास्तद्धितप्रत्ययाः, तस्येदमिति सम्बन्धिन्यादावर्थे च शैषिकास्तद्धितप्रत्यया अनेकविधा भवन्तीति कारिकाद्वयार्थः ।

(२) पूर्वार्धं व्याचष्टे षष्ठ्यन्तादिति । अत्र 'तस्यापत्यम्' (४।१।९२) इति पा० सूत्रम् ।

(३) उत्तरार्धव्याख्यामवतारयति अण इति । अत्र 'अत इञ्' (४।१।९५) इति पा०सूत्रं बोध्यम् ।

(१)शिव--वरुण--ककुत्स्थ--पुत्र--प्रभृतिभ्योऽणेव, न त्वदन्तादिण् । मुनिषु वशिष्ठादिः, वृष्णिषु वसुदेवादिः, कुरुषु नकुलादिश्च शिवादौ पाठ्यः, तेन 'वाशिष्ठः, वासुदेवः, साहदेवः, नाकुल' इत्यादिरेव तत्र प्रयोगः । 'शतानीकस्तु नाकुलिरि'त्यादौ क्वचिदपवादविषयेऽप्युत्सर्गविधिः, प्रथमापत्यं वा तत्रार्थः ।

(२)गर्गस्यापत्यमित्यर्थे गर्गादिगणात् ण्यः, यथा 'गार्ग्यः, काव्यः, वात्स्यः, पाराशर्य्यः, कार्त्तवीर्य्यः, जामदग्न्यः' इत्यादौ । अत्र गणादित्युक्तेर्गर्गो नाम कश्चित् तस्यापत्यमित्यर्थे गार्गिरित्येव, एवमग्रेऽपि ।

(३)कुञ्जादेर्गणादपत्यसामान्ये आयनण् , तदुत्तरं ण्यश्चास्त्रियाम् , यथा 'कौञ्जायन्यः ब्राध्नायन्यः' इत्यादौ, स्त्रियान्तु 'कौञ्जायनी'त्येव न तु ततो ण्यः, सुमङ्गलादित्वात् ङीप् । अत्रास्त्रियामित्यबहुत्वस्याप्युपलक्षकम्, तेन 'कौञ्जायनः पुमांस' इत्यत्रापि न ण्यः । 'गार्गिः कौञ्जिरि'त्यादौ नापत्यत्वेन बोधः, किन्तु प्रथमापत्यत्वेनेति वक्ष्यते ॥ ११४ ॥

**अदन्ताच्छिल्पिनो ण्यो वा सेनान्ताल्लक्षणादपि ।**
**नडादेर्णायनो नित्यं बाह्वादेस्त्विण् विधीयते ॥ ११५ ॥**

(४)'तान्त्रवाय्यः, तान्त्रवायिः, कौम्भकार्य्यः, कौम्भकारि'रित्यादौ शिल्पिवाचकात् , 'महासैन्यो, महासैनि'रित्यादौ च सेनान्तात् , 'लाक्षण्यो, लाक्षणि'रित्यादौ लक्षणशब्दादिणि प्राप्ते विभाषया ण्यः ।

(५)तथा नडादेर्णायनो नित्यम्, तेन 'नाडीयनः चारायण' इत्यादौ कुञ्जाद्यन्तर्गतो नडादिः । (६)बाह्वादेस्त्विण् , यथा बाहोरपत्यं 'बाहविः' । सुमित्राप्रभृतयस्तु बाह्वादिगणे द्रष्टव्याः ॥ ११५ ॥

---

( १ ) अत्र प्रथमपादं व्याचष्टे शिवेति। अत्र शिवादिभ्यो अण् (४।१।११२) 'गर्गादिभ्यो यञ्' (४।१।१०५) 'गोत्रे कुञ्जादिभ्यश्च्फञ्' ( ४।१।९८ ) इति पा० सूत्राणि क्रमशो लक्ष्याणि बोध्यानि ।

( २ ) द्वितीयं पादं व्याचष्टे गर्गस्येति ।

( ३ ) उत्तरार्धं व्याचष्टे कुञ्जादेरिति ।

( ४ ) सोदाहरणं पूर्वार्धं व्याचक्षाण आह तान्त्रवाय्य इति । अत्र 'सेनान्तलक्षणकारिभ्यश्चे'ति (४।१।१५२) पा० सूत्रम् ।

( ५ ) उत्तरार्धं व्याचष्टे तथेति । अत्र 'नडादिभ्यः फक्' ( ४।१।९९ ) इति पा० सूत्रम् ।

( ६ ) आकृतिगणोऽयमिति पाणिनीयाः ।

अणोऽपवादान्तरमाह—

**स्त्रीप्रत्ययान्तादच्यादेरप्येण् पारिभाषिकात् ।**
**न नदीमानुषीनाम्न आदावाद्वृद्धिवर्जितात् ॥ ११६ ॥**

(१)विनतायाः सौपर्ण्याः कमण्डल्वाः युवत्या वाऽपत्यमित्यर्थे 'वैनतेयः, सौपर्णेयः, कामण्डलेयः, यौवतेय' इत्यादौ स्त्रीप्रत्ययान्तादेयणेव नत्वण् । अत्रेरपत्यमित्यर्थे 'आत्रेयः' । अत्रिपदमप्रत्ययेदन्तद्विस्वरोपलक्षितनाम्नि परिभाषिकम्(२), तेन 'शौचेयः, हारेयः, आग्नेयः' इत्यादिकः प्रयोगः । 'विध्या'दिकं द्विस्वरमपि नाप्रत्ययेदन्तम् । मरीच्यादिकमप्रत्ययेदन्तमपि न द्विस्वरमतो 'वैधो मारीच' इत्यादौ न प्रसङ्गः ।

(३)स्त्रीप्रत्ययान्तादप्यादावाद्वृद्धिवर्जितात् नदीमानुषीनाम्नो नैयण्, यथा 'यामुनः, सप्रः, सारस्वतः' इत्यादौ, यथा वा 'सौभद्रः, कौशल्य' इत्यादौ । आदावाद्वृद्धिमतस्तु तादृशनाम्नो यथाप्राप्तमेयणेव, यथा 'जाह्नवेयः, द्रौपदेयः, कौशलेय' इत्यादौ ॥ ११६ ॥

तथा—

**सुभगादेरिनादेशोऽप्यन्त्यस्यैयणि नित्यशः ।**
**कुलटाया विकल्पेन सती यदि भवत्यसौ ॥ ११७ ॥**

(४)सुभगाप्रभृतेरेयण्यन्त्यस्वरस्य नित्यमिनादेशः, यथा सुभगाया अपत्यमित्यर्थे 'सौभागिनेयः, दौर्भागिनेयः, पारस्त्रैणेय' इत्यादौ, सौहार्दवदिहोभयपदस्य वृद्धिः ।

सुभगा दुर्भगा चैव परस्त्री बन्धकी तथा ।
मध्यमा च कनिष्ठा चेत्यादिकः सुभगागणः ॥

---

(१) सोदाहरणं पूर्वार्धं व्याचक्षाण आह विनताया इति । अत्र 'स्त्रीभ्यो ढक्' (४।१।१२०) इति पा० सूत्रम् ।

(२) अत्र ('द्व्यचः') (४।१।१२१) इति पा० सूत्रं द्रष्टव्यम् ।

(३) उत्तरार्धं व्याचष्टे स्त्रीप्रत्ययान्तादपीति । 'तद्धितेष्वचामादेरि'त्यनेनादिवृद्धिवर्जितादेयण् न भवतीत्यर्थः । 'अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः (४।१।११३) इति पा० सूत्रमत्र द्रष्टव्यम् ।

(४) पूर्वार्धं व्याचष्टे सुभगेति । अत्र 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (७।३।१९) 'कुलटाया वा' (४।१।१२७) इति सूत्रद्वयं लक्ष्यं बोध्यम् ।

(१)कुलटा तु यदि सती तदा तदन्त्यस्वरस्यैयणि विभाषया इनादेशः, यथा 'कौलटिनेयः' इत्यादौ, यदि त्वसती तदा 'कौलटेय' इत्येव प्रयोगः ॥ ११७ ॥

तथा—

**शीलेनाङ्गेन वा हीनात् स्त्रियामादादिकस्तु वा ।**
**एरण् स्याच्चटकायास्तु नित्यमेरण् स्त्रियान्तु लुक् ॥११८॥**

(२)शीलेन हीनानां दास्यादीनाम् , अङ्गेन हीनानां काणादीनाञ्च स्त्रीप्रत्ययान्तानामेरण् वा स्यात् । यथा दास्या अपत्यं 'दासेयः, दासेरः' यथा वा काणाया अपत्यं 'काणेयः' काणेरः' । कुलटाप्यङ्गहीना चेत् 'कौलटेर' इति ।

(३)चटकायास्त्वपत्यमित्यर्थे नित्यमेरण् न त्वेयणपि, यथा 'चाटकेरः' चेटकास्त्र्यपत्ये तु तस्य लुक्, तेन 'चटके'त्येव तत्र प्रयोगः॥११८॥

तथा—

**तिकादेरायनिण् नित्यं तदादेस्तु विभाषया ।**
**ईयः स्वसुः स च व्यश्च भ्रातुर्यः श्वशुराद्भवेत् ॥११९॥**

(४)तिकस्यापत्यमित्यर्थे नित्यमायनिण् । यथा 'तैकायनिः, कौशल्यायनिरि'त्यादौ, 'कौशल्यायनिवल्लभामि'ति भट्टिः । स च तदादेः सर्वनाम्नो वैकल्पिकः । यथा तस्यापत्यमित्याद्यर्थे तादायनिः, तादः, तादेयः, यादायानिः, यादः, यादेय' इत्यादौ ।

(५)स्वसुरपत्यमित्यर्थे 'स्वस्रीयः, भ्रातुरपत्यमित्यर्थे 'भ्रात्रीयः, भ्रातृव्यः' । द्वेष्टरि तु भ्रातृव्यशब्दो रूढ एव, तदुक्तम्—'भ्रातृव्यौ भ्रातृज-द्विषा'विति । श्वशुरस्यापत्यमित्यर्थे यः 'श्वशुर्यः' ॥ ११९ ॥

---

(१) उत्तरार्धं व्याचष्टे कुलटेति ।

(२) पूर्वार्धं विवृणोति शीलेनेति । 'क्षुद्राभ्यो वा' (४।१।१३१) इति पा० सूत्रमत्र बोध्यम् ।

(३) 'चटकाया एरक्' (४।१।१२८) इति पा०सूत्रस्य लक्ष्यमुत्तरार्धव्याख्यया विवृणोति चटकाया इति ।

(४) 'फेश्छच' [४।१।१४९] इति पा०सूत्रव्याख्यानव्याजेन पूर्वार्धं व्याचष्टे तिकस्येति ।

(५) उत्तरार्धं व्याचष्टे स्वसुरिति । अत्र 'स्वसुश्छः' ४।१।१४३ 'भ्रातुर्व्यच्च' [४।१।१४४] 'व्यन्सपत्ने' [४।१।१४५] इति सूत्राणि क्रमशो द्रष्टव्यानि ।

तथा—

**कुलाद्य एयकणीनः सपूर्वात् केवलादपि ।**
**महाकुलादणीनणू च दुष्कुलादेयणो विधिः ॥ १२० ॥**

(१)कुलस्यापत्यमित्यर्थे यः एयकण् च स्यात्, यथा 'कुल्यः, कौलेयकः,' । सपूर्वात् केवलाच्च कुलादनिः स्यात्, यथा 'आढ्यकुलीनः' कुलीन' इत्यादौ । महाकुलादणू ईनण् च स्यात्, यथा 'माहाकुलो, माहाकुलीनः' । दुष्कुलादेयण्, यथा 'दौष्कुलेयः' ।

केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियाम् ।
हृतां माहाकुलीनस्य तस्य लिप्सामहे वयम् ॥

इति भट्टिः । कथं 'महाकुलीनो दुस्कुलीनः' ? सपूर्वादीनः । महदादेः कुलीनेनान्वय इत्यन्ये ॥ १२० ॥

**देशक्षत्रिययो रूढाद्राजापत्येऽप्यणो विधिः ।**
**नादेः कुरोः कोशलाच्च ण्यस्तथेदन्ततोऽप्यसौ॥१२१॥**

देशे क्षत्रिये च शक्तान्नाम्नो राजन्यपत्यार्थे च अणो विधिः । यथा पञ्चालानां राजा अपत्यं वा इत्यर्थे(२) 'पाञ्चालः वैदेहः' एवं 'ऐक्ष्वाकः' । (३)क्वचिदणादावप्युवर्णस्य लोपः ।

नकारादेरुक्तरूढात् कुरुतः कोशलाच्च तादृशार्थे ण्य एव, यथा 'नैषध्यः कौरव्यः कौशल्यः'(४) इत्यादौ । कथं 'हिरण्मयं हंसमबोधि नैषधः, परिरेभिरे कुकुरकौरवस्त्रियः' इति ? तस्येदमित्यण्(५) । इदन्तादप्युक्तरूढात् ण्यः, यथा 'कौन्त्यः' इत्यादौ । कथं कौन्तेयः ? कुन्तीशब्दात् स्त्रीप्रत्ययान्तात् एयण् । स्त्रियान्तु

---

(१) 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' (४।१।१४०, 'कुलात्खः' (४।१।१३९) 'दुष्कुलाड्ढक्' इति पा० सूत्राणामुदाहरणलक्ष्यकारिकां व्याचष्टे कुलस्येति ।

(२) 'जनपदशब्दात्क्षत्रियादञ्' [४।१।१६८] 'कुरुनादिभ्यो ण्यः' [४।१।१७२] इति पा० सूत्रद्वयोदाहरणान्याह पाञ्चाल इत्यादि ।

(३) ननु कथमिक्ष्वाकुरित्युवर्णस्यावर्णत्वमतं आह क्वचिदिति ।

(४) अत्र 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' (४।१।१७१) इति पा० सूत्रं द्रष्टव्यम् ।

(५) शैषिक इत्यर्थः ।

कुन्त्यवन्तिकुरुभ्यो ण्यस्य लुगेव, यथा कुन्तीनां स्त्र्यपत्यमित्यर्थे 'कुन्ती' एवमवन्ती, कुरूः'(१)। कम्बोजादेरपि रूढादपत्ये राजनि च विहितस्याणो लुगेव, यथा कम्बोजानामपत्यं राजा वा इत्यर्थे 'काम्बोजश्चोलः केरल' इत्यादौ(२) ॥ १२१ ॥

**संख्या-षड्-भद्र-पूर्वाया डुरण् मातुः स्त्रियाञ्च ङीप् ।**
**गोर्यो ण्यस्तु यमादित्यादितिभ्यः स्याद्दितेरपि ॥१२२॥**

(३)द्वयोर्मात्रोरपत्यमित्यर्थे 'द्वैमातुरः, त्रैमातुरः, 'षाण्मातुरः शक्तिधरः कुमार' इत्यमरः, 'षाण्मातुरः भाद्रमातुरः' । स्त्रियान्तु तदन्तात् ङीप् 'द्वैमातुरी'त्यादि ।

गोरपत्यमित्यर्थे य एव, 'गव्यो, वत्सः' । एवं यमस्यापत्यं 'याम्यः' आदित्यस्यापत्य'मादित्यः' अदितेरपत्यमित्यर्थे 'आदित्यः' दितेरपत्यं 'दैत्य' इत्यादौ ण्य एव । कथमादितेयो 'दैतेयः' ? अदितिदितिभ्यां स्त्रीप्रत्ययान्तात्वादेयण् ॥ १२२ ॥

**नापत्यप्रत्ययान्तात्स्यादपत्यप्रत्ययः पुनः ।**
**गुर्वायत्ते त्वपत्ये स्यात् पुनर्यूनीति तद्विधेः ॥ १२३ ॥**

(४)उपगोरपत्यस्यापत्यमित्यर्थे औपगवादिपदेभ्यो नापत्यप्रत्ययः, अत एव "एको गोत्रे" ( ४।१।९३ ) इति पाणिनिरप्याह । एकः केवलोऽपत्यप्रत्ययं विनाकृत एव शब्दो गोत्रेऽपत्यसामान्ये विहितप्रत्ययस्य साकाङ्क्ष इति तदर्थः । "पुनर्यूनीति"(५) विध्यन्तरसत्त्वादेव चौपगवस्य गुर्वायत्तादपत्यमित्यर्थे 'औपगविः, गार्ग्यायण' इत्यादौ पुनरपत्यप्रत्ययः । "गुर्वायत्तं यत् प्रशस्तं तदपत्यं युवोच्यत" इति वृद्धाः ॥ १२३ ॥

**ण्यान्तेणन्तादायनण् स्यात् कौञ्जायन्यादिवर्जितात् ।**
**गुर्वायत्ते केवलाच्च द्रोणादेष विभाषया ॥ १२४ ॥**

---

( १ ) इदं 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्चे'त्यस्य ( ४।१।१७६ ) पा० सूत्रस्योदाहरणं द्रष्टव्यम् ।

( २ ) अत्र 'कम्बोजाल्लुक्' इति पा० सूत्रं द्रष्टव्यम् ।

( ३ ) 'मातुरुत्संख्यासम्भद्रपूर्वस्ये'ति ( ४।१।११५ ) 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (४।१।८५) इति च पा०सूत्रोदाहरणप्रदर्शनव्याजेन कारिकां व्याचक्षाण आह द्वयोरिति ।

( ४ ) पूर्वार्धं व्याचष्टे उपगोरिति ।

( ५ ) अत्र 'गोत्राद्यून्यस्त्रियाम्' इति ( ४।१।९४ ) पा० सूत्रं द्रष्टव्यम् ।

ण्यान्तादिणन्ताच्च गुर्वायत्तापत्यस्य बोधने आयनण स्यात्, यथा गार्ग्यस्य गुर्वायत्तापत्यमित्यर्थे 'गार्ग्यायणः, वात्स्यायनः, दाक्षायण' इत्यादौ । ण्यान्तदपि कुञ्जादिगणान्नासौ, तेन तत्र 'कौञ्जायन्योऽय(१)मि'त्यादिरेव प्रयोगः ।

केवलादपत्यप्रत्ययशून्यादपि द्रोणादायनण् , यथा द्रोणस्य प्रशस्तापत्यमित्यर्थे 'द्रौणायनोऽश्वत्थामा' । विभाषयेत्युक्तेः पक्षे 'द्रौणि-रि'त्येव ॥ १२४ ॥

**गर्गादेरपि कुञ्जादेः प्रथमापत्यबोधने ।**
**इणेव स्यान्न तु ण्यः स्यान्नायनण् स्यादिति स्थितिः॥१२५॥**

गर्गस्य प्रथमापत्यमित्यर्थे 'गार्गिः, वात्सिरि'त्यादौ न ण्यः, किन्त्विणेव । तथा कुञ्जस्य प्रथमापत्यमित्यर्थे 'कौञ्जिर्मौञ्जिरि'त्यादावपि नायनण् अपत्याविशेषः ॥ १२५ ॥

(२)चातुरर्थिकप्रकरणम् ।

**(२)तद्दक्षेणेन्दुमत्काले तन्नक्षत्रादणो विधिः ।**
**नक्षत्रद्वन्द्वतस्त्वीयः कथितार्थे विधीयते ॥ १२६ ॥**

पुष्येण सहेन्दुमदित्यर्थे 'पौषं दिनं, पौषी रात्रिः' । एवमा'श्विनं, श्रावणं, कार्त्तिकमि'त्यादौ । तद्दक्षेणेन्दुमत्काल इत्येव, नातः पुष्येण सहेन्दुमत् पुरमित्यर्थे 'पौषं पुरमि'त्यादिकः प्रयोगः ।

(३)नक्षत्रद्वन्द्वात् कथितार्थे अणो बाधक ईय एव, यथा पुष्यपुनर्वसुभ्यां सहेन्दुमद्दिनं 'पुष्यपुनर्वसवीयम्' , एव'मश्विनीभरणीया रात्रिरि'-त्यादिप्रयोगः । नक्षत्रेण युतेन्दुमत्(४) ॥ १२६ ॥

**तद्रागयुक्तमित्यर्थे तस्मादण् स्यादिकण् पुनः ।**
**लाक्षातो रोचनातश्च शकलात्कर्दमात् स वा ॥ १२७ ॥**

---

(१) अत्र 'व्रातच्फञोरस्त्रियामि'ति (५।३।११३) पा०सूत्रं द्रष्टव्यम् ।

(२) तदिति । नक्षत्रविशेषविशिष्टेन्दुमत्कालबोधने तन्नक्षत्रादण् इत्यर्थः । अत्र 'नक्षत्रेण युक्तः काल' इति ४।२।३ पा० सूत्रम् ।

(३) उत्तरार्धं व्याचष्टे नक्षत्रद्वन्द्वादिति । अत्र 'द्वन्द्वाच्छः' [ ४।२।६ ] इति पा० सूत्रम् ।

(४) समाप्तमिति शेषः ।

(१)हरिद्राया रागयुक्तमित्यर्थेऽण् , यथा 'हारिद्रं वासः' एवं 'कौसुम्भम्' । लाक्षया रोचनया वा रक्तमित्यर्थे नित्यमिकण् , यथा 'लाक्षिकं, रौचनिकम्'(२) । शकलकर्दमाभ्यां तेन रक्तमित्यर्थे विभाषयेकण् , यथा 'शाकलिकः शाकलः, कार्दमिकः, कार्दमः' इत्यादौ ॥ १२७ ॥

तथा—

नीलादेः कस्तथा पीतात् त्रिलिङ्गादपि नित्यशः ।
स्वभावरक्ते गौण्या तु वृत्त्या तद्धितमुच्यते ॥१२८॥

(३)नीलेन नील्या वा रक्तमित्यर्थे नित्यमप्रत्ययो, यथा 'नीलः पटः' इत्यादौ । पीतेन पीतया वा रक्तमित्यर्थे तु नित्यं कप्रत्ययो, यथा 'पीतकः पट' इत्यादौ । 'हारिद्रः कुक्कुटपादः, लाक्षिकमधरं, पीतकं स्वर्णमि'त्यादौ स्वभावसिद्धपीतादौ गौणवृत्त्या हरिद्रादै रक्तसदृशे तद्धितं प्रयुज्यते । तेन रक्तम्(४) ॥ १२८ ॥

तेषां समूह इत्यर्थेऽप्यण् पाशादेस्तु यः स्त्रियाम् ।
गर्गादिगोत्रादुक्षादेश्चाकणीयस्तु वा श्वतः ॥ १२९ ॥

(५)काकानां समूहः 'काकम्', एवं शुकानां समूहः 'शौकं' भिक्षाणां समूहः 'भैक्षम्' । युवतीनां समूह इत्यर्थे 'यौवतमि'ति(६) जयादित्यः । तद्धितानपत्यस्वरे पुंवद्भावात् यौवनमिति तु भागवृत्तिः, अत एव—

यमुपास्ते पुण्यभाजं कलाकुशलयौवनम् ।
सरसं नित्यशस्तन्वि ! सफलं तस्य यौवनम् ॥

---

(१) 'तेन रक्तं रागादि'ति (४।२।१) पा०सूत्रोदाहरणप्रदर्शनद्वारा पूर्वार्धं व्याचष्टे हरिद्राया इति ।

(२) अत्र 'लाक्षारोचनाट्ठक्' (४।२।२) इति पा०सूत्रमग्रे च 'शकलकर्दमाभ्यामुपसंख्यानम्' इति वार्तिकं च लक्ष्यं पाणिनीयमतेन बोध्यम् ।

(३) समाप्तामित्यर्थः एवमग्रेपि ।

(४) पाणिनीयमतेन 'नील्या अन्' 'पीतात्कन्' 'हरिद्रामहारजनाभ्यामञ्' इति वार्तिकत्रयोदाहरणकारिकां व्याचष्टे नीलेनेति ।

(५) 'तस्य समूहः' ४।२।३७ 'भिक्षादिभ्योऽण्' (४।२।३८) 'इनण्यनपत्ये' (६।४।१६४) इति पा०सूत्रत्रयोदाहरणानि प्रदर्शयन् कारिकां व्याचष्टे काकानामिति ।

(६) शत्रन्तादनुदात्तादेरञ् यौवतमिति भट्टोजीदीक्षिताः ।

इति तन्मते प्रयोगः। पाशानां समूह इत्याद्यर्थे तु तेभ्यो य एव, तदन्तश्च स्त्रीलिङ्ग एव, यथा 'पाश्या, धूल्या, वात्या, वन्या शरयति(१)। खलरथावपि पाशादौ पठन्ति, यथा 'खल्या, रथ्या' इति।

(२)तथा गर्गादिगोत्रेभ्यः समूहेऽकण्, 'गार्गकं, दाक्षकमि'त्यादौ। उक्षाणां समूह इत्यर्थेऽप्यसौ यथा 'औक्षकम्, औष्ट्रकमि'त्यादौ।

उक्षोष्ट्रोरभ्रवत्साजा राजा राजन्यकस्तथा।
राजपुत्रो मनुष्यश्च वृक्ष उक्षादिको गणः॥

अश्वानां समूह इत्यर्थे त्वीयो विभाषया, यथा 'अश्वीयम् आश्वमि'ति(३)॥ १२९॥

**धेनोरनञः कण् नित्यं केदाराद्यणिकण्णकम्।**
**पिष्टात् कवाचि हस्तिभ्यश्चेकण् केशादिकण्-यणौ॥१३०॥**

(४)धेनूनां समूहो 'धैनुकम्', अधेनोस्तु 'आधेनवमि'त्यणेव। अस्मादेवानञ इति निषेधात् सामूहिप्रत्ययेषु तदन्तविधिरिष्टव्यः, तेन सुन्दरगर्गाणां समूह इत्यर्थे 'सौन्दरगर्गकमि'त्यादि साध्विति शाब्दिकाः। केदाराणां समूह इत्यर्थे यणि 'कैदार्य्यम्' इकणि 'कैदारिकम्,' अकणि 'कैदारकम्' इति त्रिधा प्रयोगः। पिष्टार्थकात् कवाचितो हास्तितश्चेकण्, यथा पूपानां समूहः 'पौपिकं, शाष्कुलिकम्' तथा कवाचिनां समूहः 'कावचिकं' हस्तिनां हस्तिनीनां वा समूहो 'हास्तिकम्'। केशानां समूहे त्विकण् यण् च, 'कैशिकं, कैश्यम्' ॥ १३० ॥

**इनिः खलोलूकन्नाद्रथात् कड्यः स्त्रियामिमौ।**
**गणिकातो ब्राह्मणाच्च माणवाद्वाडवाच्च यण्॥१३१॥**

---

(१) अत्र 'पाशादिभ्यो यः' (४।२।४९) इति 'खलगो रथात्' (४।२।५०) इति च पा०सूत्रं द्रष्टव्यम्।

(२) अत्रापि 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याद्वुञ्' (४।२।३९) 'युवोरनाकौ' (७।१।१) इति च पा० सूत्रद्वयं योजनीयम्।

(३) 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४।२।४८) इति पा० सूत्रोदाहरणमिदं बोध्यम्।

(४) 'अचित्तहस्तिधेनोष्ठक्' (४।२।४७) 'केदाराद्यञ् च' (४।२।४०) 'ठञ् कवचिनश्च' (४।२।४१) 'केशाश्वाभ्यां यञ्छावन्यतरस्याम्' (४।२।४८) इति पा०सूत्रोदाहरणप्रदर्शनव्याजेन व्याचष्टे धेनूनामिति।

(१)खलादित्रिकादिनिः समूहे, यथा 'खलिनी, उलूकिनी, पद्मिनी'। तथा रथात् कड्यः, यथा 'रथकड्ये'ति। इमौ च प्रत्ययौ स्त्रियामेव। गणिकादिभ्यस्तु समूहे यण्, यथा 'गाणिक्यं, ब्राह्मण्यं, माणव्यं, वाडव्यमि'ति ॥ १३१ ॥

**गज-बन्धु-जन-ग्रामसहायेभ्यस्तुतः स्त्रियाम्।**
**पृष्ठाद् यत् क्लीबलिङ्गं तत् चरणेभ्यस्तु धर्मवत्॥१३२॥**

(२)'गजता, बन्धुता, जनता, सहायता' इत्यत्र गजादीनां समूहेऽर्थे तप्रत्ययः, स च स्त्रीलिङ्ग एव। पृष्ठात् समूहे यत्, यथा 'पृष्ठ्यं', तच्च क्लीबलिङ्गमेव, अत एवास्य पाशादिषु अनन्तर्भावः। चरणेभ्यस्तु समूहे धर्मे इव प्रत्ययाः स्युः, यथा कठानां धर्मः 'काठकं' तथा समूहोऽपि, एवं 'छान्दोग्यं, आथर्वणमि'त्यादि तत्समूहः ॥ १३२ ॥

**(३)तद्वेत्ति तदधीते वेत्यर्थेऽप्यण् क्रतुवाचिनः।**
**सूत्रान्तादप्यकल्पादेरुक्थादेश्चेकणो विधिः ॥ १३३ ॥**

निमित्तं वेत्तीत्यर्थे 'नैमित्तः', एवं 'औत्पातः, औहूर्त्तः'। छन्दो वेत्त्यधीते वेत्यर्थे 'छान्दसः, वैयाकरणः'। क्रतुवाचिनोऽग्निष्टोमादेस्त्विकण्, यथा अग्निष्टोमं वेत्ति अधीते वा 'आग्निष्टोमिकः'। अकल्पादेः सूत्रान्तशब्दादप्युक्तार्थे इकण्, यथा 'वार्त्तिकः, सौत्रिकः, साङ्ख्यसूत्रिकः' कल्पादेस्तु सूत्रात् 'काल्पसूत्रम्' इत्यणेव। उक्थं वेत्त्यधीते वा वा इत्यर्थेऽपि 'औक्थिकः, नैयायिकः, पातञ्जलिकः, लोकायतं—बौद्धशास्त्रं तद्वेत्त्यधीते वा 'लौकायतिक' इत्यादि ॥ १३३ ॥

---

(१) 'इनित्रिकट्यकश्च' (४।२।५१) 'खलादिभ्य इनिर्वक्तव्यः' (वा०) 'ब्राह्मणमाणववाडवाद्यत्' (४।२।४१) 'गणिकाया यञ् इति वक्तव्यम्' (वा०) इति पा०मतेनात्रानुशासनानि द्रष्टव्याणि।

(२) 'ग्रामजनबन्धुभ्यस्तल्' (४।२।४३) 'गजसहाभ्यां चेति वक्तव्यम्' (वा०) पृष्ठादुपसंख्यानम्' (वा०) 'चरणेभ्यो धर्मवत्' (४।२।४६) इति पा०सूत्रोदाहरणान्याह गजतेति।

(३) 'तदधीते तद्वेद' (४।२।५९) 'क्रतूक्थादिसूत्रान्ताट्ठक्' (४।२।६०) इति पा०सूत्रद्वयानुसारेण लक्ष्यमाह तद्वेत्ति इति।

**विद्यान्तादङ्गधर्मत्रिक्षत्रानुत्तरवार्त्तिनः ।**
**तथैकण् शत-षष्टिभ्यां परस्य तु पथष्ठिकः ॥ १३४ ॥**

(१)वायसविद्यां वेत्त्यधीते वा 'वायसविद्यिकः, सर्पविद्यिकः, चारविद्यिकः' । अङ्गाद्यनुत्तरवार्त्तिनः किम् ? 'आङ्गविद्यः, ज्योतिर्विद्यः, गान्धर्वविद्यः, धार्मविद्यः, क्षात्रविद्यः' इत्यथवा विद्या त्रिविद्या, तां वेत्ति अधीते वा 'त्रैविद्य' इति कर्मधारयादण् । 'त्रैविद्या मां सोमपाः पूतपापा' इति गीता । तिस्रो विद्या वेत्तीत्याद्यर्थे तु द्विगुतस्तद्धितस्य लुकि 'त्रिविद्य' इत्येवम् । शतपथं षष्टिपथं वेत्तीत्याद्यर्थे ठिकः—'शतपथिकः, षष्टिपथिकः' । स्त्रियान्तु 'शतपथिकी'त्यादि ॥ १३४ ॥

**क्रमादिभ्यः क एव स्यात् पदात् कः स्यादिकस्तथा ।**
**सर्वादेरथ साद्यादेर्वेत्तीत्याद्यर्थकस्य लुक् ॥ १३५ ॥**

क्रमं वेत्तीत्याद्यर्थे क्रमादिभ्यः क एव, यथा (२)'क्रमकः, सामकः, शिक्षकः, मीमांसक' इत्यादौ । पदात्तु कः स्यादिकोऽपि, यथा 'पदकः, पादिकः' । सर्वादेः साद्यादेश्च शब्दाद्विहितस्य वेत्त्यधीते वेत्यर्थकस्य तद्धितस्य लुगेव, यथा सर्वं वेदं वेत्तीत्याद्यर्थे विहितस्याण्प्रभृतेः, 'सर्ववेदः, सर्वतन्त्र' इत्यादौ, 'सादिवार्तिक' इत्यादौ चेति ॥ १३५ ॥

**(३)अष्टाध्यायादितः कः स्यादध्यायस्य च लुक् तथा ।**
**अध्यायसंख्यार्थककाद्वेत्त्याद्यर्थस्य लुक् परे ॥ १३६ ॥**

अष्टावध्याया यस्य 'तदष्टाध्यायं सूत्रम्' । तद्वेत्ति अधीते वेत्यर्थे कः, अध्यायपदस्य च लुक्, यथा 'अष्टकाः पाणिनीयाः, पञ्चकाः गौतमीयाः, दशकाः व्याघ्रपदीयाः, द्वादशका जैमिनीयाः' । परे पुनरष्टावध्यायसंख्या यस्य इत्यर्थे कप्रत्ययं कृत्वा तद्वेत्त्याद्यर्थकस्य तद्धितस्य लोपमाहुः । तद्वेत्त्यधीते वा ॥ १३६ ॥

---

(१) 'विद्यालक्षणकल्पान्ताच्चेति वक्तव्यम्' 'अङ्गक्षत्रधर्मत्रिपूर्वाद्विद्यान्तान्नेति वक्तव्यम्' 'इकन् पदोत्तरपदाच्छतषष्टेःष्ठिकन्पथः' इति पा०वार्तिकोदाहरणान्याह वायसेति ।

(२) 'क्रमादिभ्यो वुन्' (४।२।६१) 'सर्वादेः सादेश्च लुग्वक्तव्यः' (वा०) इति पा०मतेनोदाहरति क्रमक इति ।

(३) 'सूत्राच्च कोपधादिति' (४।२।६५) पा०सूत्रमुदाहरन्नाह अष्टेति ।

## ( ३ ) शैषिकप्रकरणम् ।

**(१)तस्येदमिति सम्बन्धिन्यपि तस्मादणो विधिः ।**
**स्व-राज-पर-देवेभ्यः कादिरीयो जनादपि ॥ १३७ ॥**

तस्येदमित्येवं तत्सम्बन्धिन्यर्थे तदर्थकादण् इत्युत्सर्गः, यथा वृक्षस्येदं 'वार्क्षम्' एवं 'दार्शदमि'त्यादि । स्वस्येदमित्याद्यर्थे तु स्वराजादिभ्यः कादिरीयः, यथा 'स्वकीयं, राजकीयं, परकीयं, देवकीयं, जनकीयमि'ति । स्वतः कस्यानित्यत्वम् , अत एव 'स्वीयं यदन्त्यभिन्नं पद'मिति मणिदीधितिरिति वदन्ति ॥ १३७ ॥

**ईयस्त्यदादेर्भवतस्तत्र तोद इकणणपि ।**
**परावरादितोऽप्यर्द्धात् यदिकणणपि दिक्परात् ॥१३८॥**

त्यस्येदमित्याद्यर्थे त्यदादिगणादीयः; यथा (२)'त्यदीयं, तदीयं, मदीयं, इदमीयमि'त्यादि । भवतस्तु त्यदादेरीये परतः तस्य दादेशोऽपि, यथा 'भवदीयम्' "न ये स्वरे तद्धित"इति एदान्तविधेर्निषेधादस्य विधिः, शत्रन्तस्य तु भवतस्तस्येदमित्यर्थे भावतमित्यणेव ।

पराद्युत्तरवर्त्तिनोऽर्द्धादपि न केवलाच्च तस्मात् परार्द्धस्येदमित्यर्थे यदेव, यथा 'परार्द्ध्यं, अवरार्द्ध्यं अर्द्ध्यम्, आदिपदात् उत्तरार्द्ध्यं, अधमार्द्ध्यम्' । दिग्वाचिपूर्वकात् पुनरर्द्धात् यदिकणणपि, यथा 'पूर्वार्द्ध्यं, पौर्वार्द्धिकं, दक्षिणार्द्ध्यं, दाक्षिणार्द्धिकमि'त्यादि ॥ १३८ ॥

**(३)युष्माकास्माकभावान्ते चाणीनण् युष्मदस्मदोः ।**
**तवेत्यस्मान्ममेत्यस्मादणीनणगपि कादिमः ॥१३९॥**

युवयोर्युष्माकं वा इदं, आवयोरस्माकं वा इदमित्यर्थे युष्मदस्मदोर्युष्माकास्माकभावोत्तरमणीनण् च वा स्यात् , यथा 'यौष्माकम् , यौ-

---

( १ ) 'तस्येदम्' ( ४।३।१२० ) इति पा०सूत्रानुसारेण लक्ष्यमाह तस्येदमिति । 'कुक् जनस्य परस्य च' 'देवस्य च' 'स्वस्य च' इति वार्त्तिकान्यप्यत्र द्रष्टव्यानि ।

( २ ) 'वृद्धाच्छः' (४।२।११४) 'भवतष्ठक्छसौ' (४।२।११५) 'अर्धाद्यत्' (४।३।४) 'परावराधमोत्तमपूर्वाच्च' ४।३।५ दिक्पूर्वपदाट्ठञ् च' ( ४।३।६ ) इति पा०सूत्रोदाहरणान्याह त्यदीयमिति ।

( ३ ) 'युष्मदस्मदोरन्यतरस्यां खञ्च' (४।३।१) 'तस्मिन्नणि च युष्माकास्माकौ' (४।३।२) तवकममकावेकवचने' ( ४।३।३ ) इति पा०सूत्रत्रयानुगामिलक्ष्यमाह युष्माकेति ।

ष्माकीणम्, आस्माकम्, आस्माकिनम्'। 'आस्माकदन्तिसान्निध्यवामनीभूतभूरुहः" (शि०स० २ श्लो०)। पक्षे त्यदादित्वादीयो, यथा 'युष्मदीयं, अस्मदीयमि'ति। तवेदं ममेदमित्यर्थे तव ममेत्यनयोरणणिण्णपि कादिकः स्यात्, यथा 'तावकं, तावकीनम्'स्वरूपानिर्देशान्न त्वदादेशः। अपिना त्यदादित्वादयोऽपि, यथा 'त्वदीयं, मदीयमि'ति ॥ १३९ ॥

**कण्णारण्याद्धस्तिवर्त्मविहाराध्यायमानुषे।**
**नित्यं वा गोमयेऽन्यत्र णः सदा स्यादिति स्थितिः॥१४०॥**

अरण्यस्यायं हस्तीत्याद्यर्थे अरण्यान्नित्यं कण्, यथा (१)'आरण्यकः करी, पन्थाः, विहारो, मानुषश्च'। अध्यायस्त्वरण्यगतित्वा'दारण्यकम्'। गोमये त्वरण्यस्येदमित्यर्थे 'आरण्यकम्, आरण्यं वा गोमयमि'ति द्विधा प्रयोगः। कथितेभ्योऽन्यस्मिन्नर्थेऽरण्यान्नित्यं णप्रत्यय एव, यथा अरण्यस्येयमित्यर्थे 'आरण्या लता, आरण्यः पशुरि'त्यादि। तस्येदम् ॥१४०॥

**(२)अण् तत्र भव इत्यर्थे पदादुत्सर्गतो भवेत्।**
**ग्रीवात एयण् वा तत्र ग्रैवं ग्रैवेयमित्यपि॥ १४१ ॥**

भव इत्यस्य उत्पत्ति–वर्त्तमानत्वे ह्यर्थौ यथायथम् ॥ १४१ ॥

**आदेर्मध्यात्तादृशार्थे मोऽधसः सस्य लुक् तथा।**
**डिमोऽग्रपश्चादन्तेभ्यः कालार्थात्तु पदादिकण्॥१४२॥**

आदौ भवः (३)'आदिमः' 'भवो–वर्त्तमान' इति वर्द्धमानवृत्तिः। 'मणिर्विराजते तन्वि तवायं हारमध्यमः'। अधो भव इत्यर्थेऽधसः सलोपा'दधमः', 'यदङ्गमधमं तस्य स्पर्शनं दुरितावह'मिति स्मृतेः। अग्रे भव इत्यर्थे 'डिमः अग्रिमः' एवं 'पश्चिमः, अन्तिमः'। कालार्थकान्मासादिशब्दात्तु तत्र भव इत्यर्थे इकण् यथा 'मासिकं, सांवत्स-

---

(१) अत्र 'अरण्यान्मनुष्ये' (४।२।१२९) इति सूत्रं 'अरण्याण्णः' 'पथ्याध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् वा गोमयेषु' इति वार्तिकानि च द्रष्टव्यानि।

(२) 'तत्र भवः' ४।३।५३ 'ग्रीवाभ्योऽण् च' ४।३।५७ इति पा०सूत्रद्वयलक्ष्यमाह अणिति।

(३) 'अन्तःपूर्वपदाट्ठञ्' इति (४।३।६०) पा०सूत्रस्थाध्यात्मादिगणानां काशिकाक्तोनां 'अन्ताच्च' वा० 'मध्यान्मः' (४।३।८) इति सूत्रस्य 'अग्रादिपश्चाड्डिमच्' चेति वार्तिकस्य चोदाहरणान्याह आदिम इति।

रिकं, मौहूर्त्तिकं, पौर्वाह्णिकम्, आपराह्णिकमि'त्यादि(१) ॥ १४२ ॥

**(२)शरदः श्राद्ध एवाऽयं वा तु रोगे तथातपे ।**
**निशातश्च प्रदोषाच्च वायं तादिस्तथा श्वसः ॥१४३॥**

अयमिकण्प्रत्ययः तथार्थे शरच्छब्दात् श्राद्ध एव साकाङ्क्षः, यथा 'शारदिकं श्राद्धम्', अन्यत्र 'शारदश्चन्द्रमाः'। रोगातपयोस्त्वर्थयोरयं वैकल्पिकः, यथा 'शारदः शारदिको ज्वरः, आतपश्च'। निशायां प्रदोषे वा भव इत्यर्थे 'नैशिकं नैशं वा, प्रादोषिकं प्रादोषं वा तम' इत्यादि । श्वसः श्वःपदात्तु तादिरयमिकण्प्रत्ययस्तथा विकल्पेनेत्यर्थः । तेन श्वोभवमित्यर्थे 'शौवस्तिकं, धनम्'। 'शौवस्तिकत्वं विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादि'ति भट्टिः । पक्षे 'श्वस्त्यं, श्वस्तनमि'ति स्य-तनौ वक्ष्येते ॥ १४३ ॥

**सन्ध्यादेर्ऋतुनक्षत्रप्रभेदाच्चाण् फले पुनः ।**
**संवत्सरात् पर्वणि च प्रावृषस्त्वेण्यमीरितम् ॥ १४४ ॥**

सन्ध्यादिगणात्तत्र भवमित्यर्थे अणेव, यथा (३)'सान्ध्यं, सन्धिवेलं, आमावस्यं, त्रायोदशं, चातुर्दशं, पाञ्चदशं, पौर्णमासं, प्रातिपदं वा तमः' इति । अत्र ऋतुभेदो ग्रीष्मादिः, तस्मात्तत्र भवमित्यर्थे 'ग्रैष्मं, शैशिरं' तदन्तविधिना पूर्वग्रैष्मम्, अवयवादृतूनामित्युत्तरस्य वृद्धिः । नक्षत्रभेदात्तु पुष्ये भवं 'पौषं औषधं, तैषं रौहिणमि'त्यादि । संवत्सरात्तु फले पर्वणि च भवार्थेऽणेव, यथा 'सांवत्सरं फलं, पर्व वा'। अन्यत्र तु कालार्थत्वादिकण्, यथा 'सांवत्सरिकं कर्म' । प्रावृषि भव इत्यर्थे एण्यः, यथा, 'प्रावृषेण्यं तृणम्'। 'प्रावृषेण्यं पयोवाह'मिति रघुकाव्यम् ॥१४४॥

---

(१) अत्र 'कालाट्ठञ्' (४।३।११) इति सूत्रं द्रष्टव्यम् ।

(२) 'श्राद्धे शरदः' (४।३।१२) 'विभाषा रोगातपयोः' (४।३।१३) 'निशाप्रदोषाभ्यां' (४।३।१४) 'श्वसस्तुट् च' (४।३।१५) इति पा०सूत्राणां लक्ष्यमाह शरद इति ।

(३) 'सन्धिवेलादृतुनक्षत्रेभ्यो अण्' (४।३।१६) 'संवत्सरात्फलकपर्वणोः (वा०) 'प्रावृष एण्यः' (४।३।१७) इति पा०सूत्राण्युदाहरति सान्ध्यमिति ।

**(१)वर्षात: स्यादिकण् हेमन्तादण्णप्यत्र वा तलुक् ।**
**सायं चिरं प्रगे प्राह्णे कालार्थाव्ययतस्तनट् ॥ १४५ ॥**

वर्षासु भवं 'वार्षिकं तृणम्' । हेमन्ताद्भवार्थे यथेकण् तथा अण्णपि, परस्त्वाणि तकारस्य वा लुक्, तेन 'हैमन्तिकं, हैमनं, हैमन्तमि'ति त्रिविधः प्रयोगः । तदन्तविधिना 'पूर्वहैमनमि'त्यादिरपि प्रयोगः । सायमादिभ्यस्तु 'सायन्तनं, चिरन्तनं, प्रगेतनं, प्राह्णेतनं, दिवातनं, दोषातनमि'त्यादौ भवार्थे तनट्, टानुबन्धत्वात् 'सायन्तनी तिथिः' ॥१४५॥

**परुतश्च परारेश्च चिराच्च त्नो विभाषया ।**
**पुराशब्दात्तथा नो वा मध्याह्नादेश्च वा तनट् ॥ १४६ ॥**

(२)'परुत्नं, परारित्नं, चिरत्नं, पक्षे परुत्तनं, परारितनं चिरतनम्' । पुराशब्दादपि भवार्थे वा नः, तेन 'पुराणं पुरातनमि'ति ॥ १४६ ॥

**(३)तदापद्भ्यान्तु कालात्स्यादिकण् ङीब्वा स्त्रियां ततः ।**
**मनुष्ये पर्वतादीयण्णीयोऽन्यत्र विभाषया ॥ १४७ ॥**

तत्काले भवमित्यर्थे तत्कालशब्दादिकण्, 'तात्कालिको बोधः', एव'मापत्कालिकः' । तदन्तस्य स्त्रियां वा ङीप्, यथा 'तात्कालिकी, तात्कालिका मतिरि'त्यादौ । पर्वते भवो मनुष्य इत्यर्थे पर्वतादीयण्, 'पार्वतीयो नरः' ततोऽन्यत्र तु 'पर्वतीयं, पार्वतं वा फलमि'त्यादावण्णपि ॥ १४७ ॥

**(४)दिगादिभ्यो यदेव स्याच्छरीरावयवादपि ।**
**दृति-बस्त्यस्थि-कुक्षिभ्य एयण् स्यात् कलसादृहेः ॥१४८॥**

---

(१) वर्षाभ्यष्ठक्' (४।३।१८) 'हेमन्ताच्च' (४।३।२१) 'सर्वत्राण् च तलोपश्च' (४।३।२२) 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च' (४।३।२३) इति पा०सूत्राणि लक्षयति वर्षात इति ।

(२) चिरपरुत्परारिभ्यस्त्नो वक्तव्यः' इत्यादिवार्तिकोदाहरणान्याह परुत्नमिति ।

(३) 'कालाट्ठञ्' (४।३।११) 'पर्वताच्च' (४।२।१४३) 'विभाषा मनुष्ये' (४।२।१४४) इति पा०सूत्रलक्ष्यमाह तदेति ।

(४) 'दिगादिभ्यो यत्' (४।३।५४) 'शरीरावयवाच्च' (४।३।५५) 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' (४।३।५६) इति पा०सूत्रोदाहरणानि लक्षयति दिगिति ।

दिशि भवमित्यर्थे 'दिश्यम्', एवं 'आद्यम्, अन्त्यं, रहस्यं, दिव्यं, उदर्यं, यूथ्यं, वश्यं, दण्ड्यमि'त्यादौ यत्। शरीरावयवादपि, यथा दन्ते भवमित्यर्थे 'दन्त्यम्', एवं 'कण्ठ्यम्, औष्ठ्यं, मूर्द्धन्यं, मुख्यम्, उरस्यम्' इत्यादौ। दृतौ भवमित्यर्थे तु दृत्यादेरेयण्णेव, यथा 'दार्तेयं, वास्तेयम्, अस्थेयं, कौक्षेयम्'। 'असिं कौक्षेयमुद्यम्य चकारापन्नसं मुख'मिति भट्टिः। 'कालसेयम्, आहेयमि'ति ॥ १४८ ॥

**चतुर्मासाद्यज्ञे यण्णव्ययीभावतस्तथा ।**
**अन्तःपूर्वादिकण्णेवं समानात्तत्परादपि ॥१४९॥**

(१)चतुर्मासेषु भवमित्यर्थे 'चातुर्मास्यं व्रतम्' चतुःपदस्याषाढादिचतुष्कत्वेन लक्षकत्वान्नात्र द्विगुरतः 'पञ्चकपालश्चरुरि'त्यत्रेव द्विगोस्तद्धितस्य न लुक्। यज्ञे तु 'चातुर्मासो यागः' इत्यण्णेव। अन्तःपूर्वादव्ययीभावाद्भवार्थे इकण्, यथा 'आन्तर्दैहिकम्, आन्तर्गणिकम्'। अव्ययीभावादित्येव, तेनान्तःकरणे भव'मान्तःकरणं दुःखमि'त्यण्णेव। समानात्तत्पराच्च, यथा समाने भवं 'सामानिकम्'। 'सामानिकोऽयं युवयोः प्रयासः'। समानदैशिकम् ॥ १४९ ॥

**(२)काद्यन्तवर्गादीयः स्याज्जिह्वामूलाङ्गुलेरपि ।**
**मित्राद्युत्तरतो वर्गात् यदीनावीय एव च ॥१५०॥**

कवर्गे भवः 'कवर्गीयो वर्णः' इतीयः। एवं 'चवर्गीयः, टवर्गीयः' इत्यादि। जिह्वामूलादङ्गुलेश्च 'जिह्वामूलीयः, अङ्गुलीयः'। मित्राद्युत्तरवर्गात् तु यत् ईन ईयश्च, यथा मित्रवर्गे भव इत्यर्थे 'मित्रवर्ग्यः, मित्रवर्गीणः, मित्रवर्गीयः' इत्यादि ॥ १५० ॥

**(३)स्त्रीपुंभ्यां नण्स्नणौ तत्र भवे भावे तु वा तयोः ।**

---

(१) 'चतुर्मासाद्ण्' (वा०) 'अन्तःपूर्वपदाट्ठञ् च' (४।३।६०) इति पा०सूत्रोदाहरणान्याह चातुर्मास्यमिति।

(२) 'वर्गान्ताच्च' [४।३।६३] 'जिह्वामूलाङ्गुलेश्छः' (४।३।६२) 'अशब्देयत्खावन्यतरस्याम्' [४।३।६४] इति पा०सूत्राणि लक्षयति वादीति।

(३) 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (४।१।८७) 'गोरजादिप्रसङ्गे यत्' (वा०) इति पाणिनीयमतेन लक्षयति स्त्रीपुंभ्यामिति।

**स्वरादौ ताद्धिते प्राप्ते गोर्यदेव विधीयते ॥१५१॥**

स्त्रियां भवः 'स्त्रैणः'। 'स्त्रैणेन नीता विकृतिं लघिम्ना' इति भट्टिः। पुंसि भवः "पौंस्नः"। स्त्रियाः पुंसश्च भावेऽर्थे तु नञ्-स्नञौ विकल्पेन स्याताम्, तेन स्त्रियो भावः 'स्त्रैणं, स्त्रीत्वञ्च'। गोपदात्तु यद्यदर्थे स्वरादितद्धितं प्रसक्तं तत्तदर्थे तदेव साकाङ्क्षम्, तेन गोरपत्यं, गौर्देवता यस्य, गवा चरति, गोः समूह इत्याद्यर्थे 'गव्यमि'त्येव प्रयोगः। गोत्वं गोवदित्यादौ तु त्वादिको न स्वरादिः। तत्र भवः॥ १५१ ॥

**ये भवार्थे यतः प्रोक्तास्ताद्धितप्रत्ययाः पुरा ।**
**जातेऽर्थेऽपि ततस्ते स्युर्विशेषविधिना विना ॥ १५२ ॥**

मथुरायां भव इत्यर्थे इव मथुरायां जात इत्यर्थेऽप्यणोऽतिदेशः। एवं 'स्त्रैणः पौंस्नः, ग्राम्यः, ग्रामीणः' इत्यादौ। गणादेरपि प्रावृष एण्य-प्राषाविकः, प्रदोषादेरिकण्णादिप्राप्तौ च कादिर्विशेषविधेर्वक्ष्यते ॥१५२॥

**(१)प्रावृषस्तत्र जातेऽर्थे स्यादिकः शरदस्त्वकञ् ।**
**संज्ञायां विहितः पूर्वाह्णापराह्णादितस्तु कः ॥ १५३ ॥**

प्रावृषि जातमित्यर्थे 'प्रावृषिकं पत्रं, प्रावृषिका वृष्टिः'। शरदि जातमित्यर्थे तु संज्ञायमिकण्, यथा शारदिकाः मुद्गप्रभेदाः, शारदमन्नम्'। पूर्वाह्णे जातमित्यर्थे तु पूर्वाह्णादिभ्यः कः, यथा 'पूर्वाह्णिकं, अपराह्णकं, मध्याह्नकमि'त्यादि। एवमार्द्रायां मूलायां जातमित्यर्थे 'आर्द्रकं, मूलकं' 'के सममस्ये'ति ह्रस्वः॥ १५३ ॥

**(२)अण्णकः स्यादमावास्याशब्दात्तद्धिकृतादपि ।**
**स्थानान्तादथ गोशालखरशालाच्च नित्यशः ॥१५४॥**
**जातार्थकस्य लुग्वा तु वत्सशालादितो भवेत् ।**

---

(१) 'प्रावृषष्ठप्' (४।३।२६) 'संज्ञायां शरदो वुञ्' (४।३।२७) 'पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करा-द्वुञ्' ४।३।२९ इति पा०सूत्रोदाहरणान्याह प्रावृषीति।

(२) 'अमावास्याया वा' [४।३।३०] 'अच' (४।३।३१] 'स्थानान्तगोशालखरशालाच्च' (४।३।३५) 'वत्सशालाभिजिदश्वयुक्छतभिषजो वा' [४।३।३६] इति पा०सूत्रोदाहरणानां लक्ष्यं निर्दिशति अण्णक इति।

अमावास्यायां जात इत्यर्थेऽण् अकश्च स्यात्, यथा 'आमावास्यः, अमावास्यको बालकः' । तद्धिकृतादमावास्याशब्दादपि, यथा च 'आमावास्यः, अमावास्यकः' । स्थानान्ताद्विहितस्य जातार्थकतद्धितस्य नित्यं लुक् स्यात्, यथा गोस्थानं जातमित्यर्थे 'गोस्थानं पत्रम्' । एव'मश्वस्थानं शशस्थानमि'त्यादौ । गोशालायां जातमित्यर्थे 'गोशालं, खरशालम्' इत्यत्राप्येवम् । नित्यममीषां क्लीबत्वम्, एभ्यो जातार्थस्य नित्यं लुग्विधानात् । अश्विन्यादितो जातार्थकस्य वा लुगिति प्रतीयते, अत एव "मघातोऽणो न लुग्भवेत् इत्यग्रे निषेधः सङ्गच्छते" इति निबन्धकारः । वत्सशालादितस्तु जातार्थस्य वा लुक्, यथा वत्सशालायां जात इत्यर्थे 'वत्सशालो, वातशालश्च वृक्षः'। एव'मभिजित् आभिजितो वा बालकः' ।

वत्सशालाभिजिच्चित्रा रेवती रोहिणी तथा ।
अश्वयुङ्मृगशीर्षश्च वत्सशालादिको गणः ॥

मृगशिरसि भवं जातम् इत्यर्थे तु न तद्धितमनभिधानात् ॥१५४॥

**अनुराधा तिष्यपुष्यौ हस्त-स्वाती पुनर्वसू ॥ १५५ ॥**
**विशाखाबहुलैतेभ्यो नित्यं जातार्थकस्य लुक् ।**
**श्रविष्ठाषाढयोरेयण् उण् वा शतभिषक्पदात् ॥ १५६ ॥**

(१)अनुराधायां जातो 'अनुराधः' स्त्रीप्रत्ययस्य लुक् तद्धितलुकीति लुक्। एवं 'तिष्यः, पुष्यः, हस्तः, स्वातिः, पुनर्वसुः, विशाखो, बहुलः' । कथं बाहुलेयस्तारकजिदिति? बहुलो कृत्तिका तत्र जात इति संज्ञायामेयण् ॥ १५६ ॥

इति महामहोपाध्यायश्रीजगदीश-तर्कालङ्कार-भट्टाचार्य्यकृतौ
शब्दशक्तिप्रकाशिकायां ।
तद्धितप्रकरणं समाप्तम् ।
समाप्तश्चायं ग्रन्थः ।
शिवम्

---

(१) 'श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक्' [४।३।३४] इति पा० सूत्रोदाहरणान्याह अनुराधायामिति ।

# शुद्धिपत्रम् ।

| अशुद्धं | शुद्धं | पृ० | पं० | अशु० | शु० | पृ० | पं० |
|---|---|---|---|---|---|---|---|
| सार्वभौम | सिद्धान्तवागीश | १ | १५ | नयाया | नपाया | ४५ | २५ |
| रधिकस्येति | रप्यधिकस्येति | ६ | १५ | वच्छिन्न | नवच्छिन्न | ५१ | १ |
| हेतुत्वसं | हेतुत्वासं | ६ | १७ | तत्स्थस्थल | तत्स्थल | ५२ | १७ |
| नैव | नेव | ८ | २ | परतयाः | परतायाः | ५५ | २६ |
| शब्दत्व | शाब्दत्व | ,, | ९ | स्यलक्ष्य | स्यालक्ष्य | ,, | ३२ |
| लभ्यस्येति | लब्धस्येति | ,, | २२ | विवेश्य | निवेश्य | ५६ | १२ |
| स्त्ववन्तरस्य | वस्त्वन्तरस्य | ९ | ३१ | वयर्थ्ये | वैयर्थ्ये | ,, | १५ |
| त्वव | त्वाव | १० | ४ | वतां जातौ | वत्यां जातौ | ५७ | १५ |
| त्वाकङ्क्षा | त्वाकाङ्क्षा | १२ | ४ | त्वादि | त्यादिः | ५७ | १८ |
| निश्चस्यैव | निश्चयस्यैव | ,, | २२ | तयानान्वय | तयाऽन्वय | ५९ | २७ |
| असिद्धे | असिद्धेः | १३ | ७ | तृत्वेत्यव | तृत्वव्यव | ६१ | २७ |
| चक्षुरादौ | चक्षुरादौ च | १४ | ४ | द्वय | द्वयी | ६४ | ३१ |
| वशेषिक | वैशेषिक | १६ | ८ | स्तथवो | स्तथैवो | ६७ | ७ |
| प्रतिवन्धकत्वात् | प्रतिवन्धकत्वाभावात् | १८ | १० | १३ | १४ | ६८ | ३ |
| यथाथति | यथार्थेति | २१ | २३ | काविशिष्टतया | कविशिष्टतया | ७१ | २७ |
| दि।यर्थः | दित्यर्थः | २२ | १५ | परणा | परेणा | ७८ | २२ |
| नवे | नैवे | ,, | १२ | गोत्वकर्म | गोत्वादिकर्म | ८० | १४ |
| शाब्दप्रा | शाब्दाप्रा | २३ | १९ | पत्तरिति | पत्तेरिति | ८४ | १३ |
| प्रकाढक | प्रकारक | २४ | २५ | मव | मेव | ८६ | २७ |
| मतर्भाव्य | मन्तर्भाव्य | २५ | २० | रान्वयनायनया | रानयनायन्वया | ९० | ३१ |
| प्रवेश्य | प्रवेशय | २८ | १५ | जर्मिक | धर्मिक | ९१ | २५ |
| यैवैति | यैवेति | ,, | १८ | तावच्छेदक | तानवच्छेदक | ९२ | ५ |
| वाक्यना | वाक्याना | २९ | १ | त्वाच्छिन्नं | त्वावच्छिन्नं | ९३ | ३ |
| नुभावो | नुभवो | ,, | ३ | व्यक्तीना | गोव्यक्तीना | ९४ | २५ |
| क्ताथ | क्तार्थे | ३१ | १८ | निर्वितकपकस्य | निर्विकल्पकस्य | ,, | २९ |
| शब्दाप्रयोज्य | शब्दप्रयोज्य | ३० | १३ | नैव | नैष | ,, | ३१ |
| रर्भेदेना | रभेदेना | ३९ | ५ | रूपरामर्श | रूपपरामर्श | १०० | ३० |
| स्यार्थ | स्वार्थ | ४० | ३७ | सामान्यजनक | सामान्याजनक | १०० | ३२ |
| विषयकताक | विषयताक | ४२ | ५ | षयति | वयति | १०३ | १३ |
| लक्षणथा | लक्षणया | ४४ | ७ | प्रकार | प्रकारक | १०४ | २३ |
| | | | | स्तिङ्न्य | स्तिङन्य | १०८ | २८ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| त्यादिना | त्यादीनां | १०७ | १० |
| न्यत्वा र्थम्य एव | न्यत्वार्थं एव | १०९ | २९ |
| षयत्था | षयत्या | ११० | ७ |
| तृयीय | तृतीय | ११२ | ६ |
| धिकश्चेति | धिकीश्चेति | ११७ | १४ |
| ऽहयि | ऽहनि | १२३ | ८ |
| गवयादिति | गवयादीति | ,, | १७ |
| यत्रार्थः | यत्रार्थे | ,, | १७ |
| त्री कृतेकारे | त्रीकृतेकारे | १२४ | २३ |
| दोषा न | दोषो न | १२५ | २० |
| तस्या | तस्य | ,, | २८ |
| तति | तित | १२६ | ६ |
| च्छेदत्व | च्छेदकत्व | १२७ | १२ |
| निदशो | निर्देशो | १२८ | ६ |
| त्युप्युक्तम् | त्यप्युक्तम् | ,, | १२ |
| नचवैशिष्ट्ये | वैशिष्ट्ये | ,, | २० |
| वशिष्ट्य | वैशिष्ट्य | ,, | २२ |
| शक्त्यत्वा र्थक | शक्यत्वा र्थक्य | १३१ | २५ |
| बोध | बोधे | १३२ | १३ |
| विष्णा | विष्ण्वा | ,, | १६ |
| जिह्रीर्षुले | जिह्रीर्षुणाल | ,, | २२ |
| शक्यंत्वेन | शक्यत्वेन | १३३ | ३ |
| घम | घर्मे | १३४ | २९ |
| तदव्याप्य | तद्व्याप्य | १३५ | २९ |
| प्रयुक्तम् | प्रत्युक्तम् | १३६ | २६ |
| वने | येने | ,, | ३० |
| क्षणकत्व | लक्षकत्व | १३७ | ४ |
| तेन | एतेन | १३७ | १४ |
| पाताच्च | पातात् | ,, | ५ |
| त्यापूर्व्या | त्यानुपूर्व्या | १३९ | १६ |
| वाक्यस्यापि | वाक्यमपि | १४० | ९ |
| अन्वयापत्तेः | अनन्वयापत्तेः | १४० | १८ |
| पकताऽन्वये | पकतयाऽन्वये | १४२ | ६ |
| काङ्क्षाश | काङ्क्षश | १४२ | २७ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| स्म | स्य | १४४ | १ |
| वात् चट | वात आह चट चटेति चट | १४४ | ८ |
| गोय | योग | १४५ | ३० |
| ग्राहककत्व | ग्राहकत्व | १४७ | १ |
| दग्धैर्विवि | दग्धैर्विंवि | ,, | १७ |
| वम्बन-मेत्र | वलम्बन-मेत्र | ,, | ३१ |
| तत्र ल | तत्तत्फल | ,, | ११ |
| का॥त् | कारात् | १४८ | २३ |
| शल | शैल | ,, | २५ |
| त्यावुः | त्याहुः | १५० | १८ |
| वाधिका | बोधिका | १५१ | १२ |
| र्लैलणा | लंक्षणा | १५४ | २२ |
| त्वेत | त्वेन | १५६ | २० |
| योधजनकं | यबोधजनकं | १६० | २२ |
| लपक्ष | लैयक्ष | १६२ | ११ |
| यत | गत | १६३ | ११ |
| णत्वमिति | णमिति | १६४ | ३५ |
| न्यतः पङ्कजप- दोत्तरपदोप- स्थाप्यत्वस्य | न्यतः पङ्कजपदोप- स्थाप्यार्थान्वयबोधं प्रति सामान्यतः पङ्कजपदोत्तरपदोप- स्थाप्यत्वस्य | १६४ | १९ |
| भक्तिपङ्क | भाक्तिकपङ्क | १६५ | ६ |
| पदयो | पद्मयो | १६८ | १३ |
| पङ्कजादि | पद्मादि | १६९ | ४ |
| पङ्कजादि | पद्मादि | १७० | ८ |
| रन्वय | रनन्वय | १७५ | ५ |
| तद्विषयितावत्व | तद्विषयिताव्यापक- विषयिताकत्व | १७७ | ३ |
| जनिकर्तृ | जननकर्तृ | १८० | ९ |
| तन्नापि | तत्रापि | १८१ | ८ |
| शक्यत्ति | शक्यवृत्ति | ,, | १७ |
| यत | यते | १८५ | ७ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| वप्रसङ्गो | नप्रसङ्गो | १९१ | २८ |
| तंणां | तॄणां | १९२ | ३१ |
| लक्षणाय | लक्षणया | १९६ | २४ |
| के इति | केऽद | १९६ | १४ |
| वजात्या | वैजात्या | १९७ | १० |
| सवं | सत्वं | १९८ | १२ |
| घनक्ष | जनक | २०४ | ३० |
| णप्रयु | णाप्रयु | २०८ | ३१ |
| विभक्त्यु | विभक्त्यु | २०९ | २६ |
| येति | येरिति | २१० | १७ |
| स्यानधि | स्यनाधि | २१३ | १५ |
| वृत्यैक | वृत्येक | २१४ | ५ |
| दाहो | राहो | २१६ | ११ |
| कन्निष्पन्नं | कॢन्निष्पन्नं | २१६ | १९ |
| नामोत्तर | पदोत्तर | २१७ | १५ |
| लीत्यात्यादिवाक्ष्णा | लीत्यादिवारणा | २२४ | २९ |
| वत्तयव | वत्तयैव | २२७ | १७ |
| गाम्भीर्योदि | गाम्भार्यादि | २२८ | ४ |
| नकारक | नाकारक | २२८ | २३ |
| सामान | समान | २२९ | १ |
| अत्र च्च | अत्र च | २३३ | २९ |
| गाढी | नाडी | २३४ | १४ |
| अधाने | आधाने | २३५ | १६ |
| पदोपदापस्था-<br>प्येन | पदोपस्थाप्येन | २३९ | ४ |
| मुक्तौ | भक्तौ | २५० | १५ |
| रूपव | रूपैव | २५० | ३० |
| ताया | तायां | २५१ | १२ |
| ाचत्र | चित्र | २५३ | १६ |
| वाह | माह | २५५ | १६ |
| निकृष्टार्थं | निष्कृष्टार्थं | २५७ | २४ |
| त्रिपदि | त्रिपद | २६० | १८ |
| त्वाद्वन्द्वा | त्वाद्द्वन्द्वा | २६६ | १८ |
| पुंस्त्व | पुंस्त्वं | २६७ | १० |
| द्वौ च चोभे | द्वौ च द्वेचेत्यत्र<br>द्वौ उभौ चोभे | २६८ | ८ |
| योधक | बोधक | २६८ | १८ |
| यात्वा | थात्वा | २६८ | २७ |
| पदन्य | पदान्य | २६९ | १३ |
| वशु | पशु | २६९ | २० |
| विति | इति | २७० | २५ |
| कस्ततत्पूर्व | कस्तत्पूर्व | २७१ | २३ |
| श्रत | स्रत | २७२ | १४ |
| श्रंस | स्रंस | २७२ | २९ |
| यादशा | यादृश | २७४ | ३० |
| विषता | विषयता | २७५ | १९ |
| क्षवि | अक्षवि | २७६ | १३ |
| भवोर्थ | भवार्थ | २७७ | ७ |
| ववितेन | वितेन | २८१ | २८ |
| शुरनाड् | श्रुरनाड् | २८३ | २३ |
| थमा | प्रथमा | २८६ | २१ |
| सुवेषु | सुवेव | २८८ | २ |
| धित्वकरणं | धिकरणत्वं | २९३ | २ |
| दिभ्रेत्य | दित्यभ्रे | २९३ | ११ |
| मापाय | मपाये | २९८ | ३० |
| समयसम्बन्ध | समयध्वंसानधिक-<br>रणसमयसम्बन्ध | ३०२ | ९ |
| सम्मवदीति | सम्भवादिति | ३०२ | २९ |
| स्तत्समय | स्तत्तत्समय | ३०२ | १८ |
| मति | यति | ३१७ | ८ |
| परम्पया | परम्परया | ३१७ | २९ |
| नन्वेवं | नचैवं | ३२२ | १० |
| कुट | कुत | ३२२ | २९ |
| म्यन्यत्वा | म्यन्तत्वा | ३२३ | १३ |
| नच्छिन्ने | व च्छिन्ने | ३२३ | १५ |
| त्याध्याहारे | त्यध्याहारे | ३२३ | १४ |
| मस्त | मतस्त | ३२८ | ९ |
| ती इत्यत्र | तीत्यत्र | ३३२ | ६ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| तथव | तथैव | ३३४ | १६ |
| तात्यादौ | तीत्या दौ | ३३५ | ८ |
| तत्तक्रिया | तत्तत्क्रिया | ३३७ | २५ |
| बोधत्ता | बोधकता | ३४२ | १५ |
| एवमप्रेपि | एवमप्रेपि । इचो- पीति | ३४२ | २४ |
| काकास्थ | कारिकास्थ | ३४२ | २६ |
| द्वयो | द्वययो | ३४५ | ८ |
| बग्रुाकांक्ष | शुबाकांक्षा | ३४५ | २७ |
| कन्नामि | कन्नापि | ३४६ | ५ |
| तरिति | तैरिति | ३४६ | १८ |
| प्रमी | गमी | ३४८ | १५ |
| चत्रेण | चैत्रेण | ३४८ | २५ |
| रजनानां | रजनीनां | ३५० | ११ |
| त्वयित्यर्थ | त्वमित्यर्थं | ३५३ | ११ |
| पदांत्तरं | पदोत्तरं | ३५५ | ११ |
| विषयित्वं | विषयत्वं | ३५७ | ११ |
| वावैशिष्ट्यं | ववैशिष्ट्यं | ३५७ | १९ |
| रणया | रणता | ३६० | ९ |
| सान्वयि | स्वान्वयि | ३६० | २१ |
| न्वनिनी | न्वयिनी | ३६० | २४ |
| विकृतत्वं चार्थः | विकृतित्वं वृत्तित्वं चार्थः | ३६१ | २० |
| णान्यः | णान्वयः | ३६३ | २० |
| ह्यगतः | हृगतः | ३६४ | ७ |
| मन्यया | मन्यथा | ३६७ | २९ |
| भपदलक्षितयूम | मपदलक्षिधूम | ३६८ | २७ |
| त्यावीना | त्यादिन | ३६९ | २५ |
| द्वयो | द्वययो | ३७० | ३ |
| सुकाल | सुक्तकाल | ३७३ | ९ |
| च्छशब्दा | च्छब्दा | ३७८ | २८ |
| च्छिम्न | च्छिन्न | ३८१ | १० |
| तृतीयाय ? | तृतीयाया ? | ३९१ | १७ |

| अशु० | शु० | पृ० | पं० |
|---|---|---|---|
| शपोद | शवादे | ३९३ | २९ |
| थमान्तरपद | थमान्तपद | ३९४ | १७ |
| काङ्क्षायायामाह | काङ्क्षायामाह | ३९६ | २४ |
| सहचारातितिङः | सहचरितातिङ. | ३९८ | २६ |
| संख्योरेवेति | संख्ययोरेवेति | ३९९ | १८ |
| सम्भववेना | सम्भवेना | ४०५ | १८ |
| योंजका | यांजका | ४०७ | २६ |
| विषेध | निषेध | ४११ | ८ |
| इत्यादि | इत्यादे | ४१२ | २५ |
| च्छायाश्चय | च्छायाच्च | ४१७ | २५ |
| घापः | भावः | ४१८ | २२ |
| शब्दबाघा | शाब्दबोधा | ४१८ | २७ |
| तेररि | तेरेदि | ४१९ | १५ |
| भेष्ट | नेष्ट | ४२० | २१ |
| अतएवेति | अत इति | ४२० | २४ |
| स्वर्गधनत्वस्य | स्वर्गसाधनत्वस्य | ४२५ | १२ |
| क्लृप्तत्वाति | क्लृप्तत्वादिति | ४३१ | २१ |
| नियह | नियम | ४३१ | २४ |
| मपज्ञात | मपक्षाता | ४३२ | १० |
| दायति | दावति | ४३४ | १९ |
| प्रतूयस्तयति | प्रतुस्तयति | ४४६ | २ |
| तीतीत्यादि | तीत्यादि | ४४६ | २१ |
| यिता | यिता | ४४७ | १४ |
| न्भ्यऽपि | न्भ्योऽपि | ४४८ | ७ |
| ताया | तीया | ४४८ | १३ |
| र्षदि तदो | र्षादेः तद्धो | ४४९ | ६ |
| आतु | धातु | ४५० | १८ |
| काह | माह | ४५० | २१ |
| नण | नण् | ४५८ | १ |
| कप्ना | कपघ्ना | ४६० | २० |
| ते वावाह | ते वाह | ४६१ | १८ |
| सोपपा | सोमपा | ४६२ | ६ |
| श्लो० ) । पं | श्लो० १९ ) पं | ४६४ | २ |
| गोशाख | गोशालख | ४३८ | २५ |

सीसकाक्षराणामत्यन्तं घृष्टत्वाद्दृष्टिपातमात्रबोध्यानामशुद्धीनामन्यत्र प्रायशः समावेशोतोऽशुद्धिबाहुल्यार्थं पाठकैः क्षन्तव्यम् ।

